श्रीविष्णुशर्मप्रणीतं

# पञ्चतन्त्रम्

## संस्कृत-हिन्दी-व्याख्यासंवलितम्

व्याख्याकारः
श्रीश्यामाचरणपाण्डेयः
व्याकरणाचार्यः, एम० ए०



[मो]तीलाल बनारसीदास
दिल्ली वाराणसी पटना
बंगलौर मद्रास

श्रीविष्णुशर्मप्रणीतं

# पञ्चतन्त्रम्

संस्कृत-हिन्दी-व्याख्यासंवलितम्

व्याख्याकारः
श्रीश्यामाचरणपाण्डेयः
व्याकरणाचार्यः, एम० ए०

मोतीलाल बनारसीदास
दिल्ली वाराणसी पटना
बंगलोर मद्रास

प्रथम संस्करण : वाराणसी, १९७५
पुनर्मुद्रण : दिल्ली, १९८०, १९८३, १९८८, १९९०


बंगलो रोड, जवाहरनगर, दिल्ली ११० ००७

शाखाएं : चौक, वाराणसी २२१ ००१
अशोक राजपथ, पटना ८०० ००४
२४ रेसकोर्स रोड, बंगलौर ५६० ००१
१२० रॉयपेट्टा हाई रोड, मैलापुर, मद्रास ६०० ००४

मूल्य : रु० ९० (सजिल्द)
रु० ५५ (अजिल्द)

नरेन्द्रप्रकाश जैन, मोतीलाल बनारसीदास, बंगलो रोड, जवाहरनगर,
दिल्ली ११० ००७ द्वारा प्रकाशित तथा जैनेन्द्रप्रकाश जैन, श्री जैनेन्द्र प्रेस,
ए-४५ नारायणा, फेज-१, नई दिल्ली-११० ०२८ द्वारा मुद्रित।

# कथानुक्रमणी

॥ श्रीः ॥

# पञ्चतन्त्रम्

## : मित्रभेदः :

### [ कथामुखम् ]

ब्रह्मा रुद्रः कुमारो हरिवरुणयमा वह्निरिन्द्रः कुबेर-
श्चन्द्रादित्यौ सरस्वत्युदधियुगनगा वायुरुर्वी भुजङ्गाः।
सिद्धा नद्योऽश्विनौ श्रीर्दितिरदितिसुता मातरश्चण्डिकाद्याः
वेदास्तीर्थानि यज्ञा गणवसुमुनयः पान्तु नित्यं ग्रहाश्च ॥ १ ॥

मनवे वाचस्पतये शुक्राय पराशराय ससुताय।
चाणक्याय च विदुषे नमोऽस्तु नयशास्त्रकर्तृभ्यः ॥ २ ॥

सकलार्थशास्त्रसारं जगति समालोक्य विष्णुशर्मेदम्।
तन्त्रैः पञ्चभिरेतच्चकार सुमनोहरं शास्त्रम् ॥ ३ ॥

तद्यथानुश्रूयते—अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम्। तत्र सकलार्थिकल्पद्रुमः प्रवरनृपमुकुटमणिमरीचिमञ्जरीचयचर्चितचरणयुगलः सकलकलापारङ्गतोऽमरशक्तिर्नाम राजा बभूव। तस्य त्रयः पुत्राः परमदुर्मेधसो बहुशक्तिरुग्रशक्तिरनन्तशक्तिश्चेति नामानो बभूवुः।

॥ श्रीगणेशाय नमः ॥

नत्वा साम्बं शिवं चाऽथ गुरोः पितृपदाम्बुजम्।
सुखाय शिशुबुद्धीनां व्याख्यानमिदमारभे ॥ १ ॥

अथ विष्णुशर्मा नाम कश्चिद्राजनीतिनिपुणो विपश्चिच्चिकीर्षितस्य पञ्चतन्त्राख्यस्य स्व-नीतिग्रन्थस्य समाप्तौ निर्विघ्नतासिद्ध्यर्थमाशीर्वादात्मकं मङ्गलं निबध्नाति—ब्रह्मेति। ब्रह्मा=प्रजापतिः, रुद्रः=शिवः, कुमारः=स्कन्दः, हरिः=विष्णुः, वरुणः=अप्पतिः, यमः=कृतान्तः, वह्निः=अग्निः, इन्द्रः=शक्रः, सुरपतिः, कुबेरः=धनदः, चन्द्रः=शशी, आदित्यः=सूर्यः (चन्द्रश्च आदित्यश्चेति द्वन्द्वः, चन्द्रादित्यौ), सरस्वती=शारदा, उदधिः=समुद्रः, युगानि=कृतत्रेताद्वापरकलिनामानि युगानि, नगाः=पर्वताः, वायुः=पवनः, उर्वी=पृथिवी, भुजङ्गाः=सर्पाः, सिद्धाः=सिद्धवर्गाः, नद्यः=गङ्गाद्याः (गङ्गा प्रभृति नदियाँ), अश्विनौ=अश्विनीकुमारौ, श्रीः=लक्ष्मीः, दितिः=कश्यपपत्नी दैत्यमाता, अदितिसुताः=देवाः, चण्डिकाद्याः

मातरः = चण्डिकाद्या देव्यः ( चण्डिका प्रभृति देवियाँ ), वेदाः = ऋग्यजुःसामाथर्वाख्याश्चत्वारो वेदाः, तीर्थानि = प्रयागादयः, यज्ञाः = इष्टयः ( दर्शपौर्णमासादि यज्ञ ), गणाः = शिवगणाः, वसवः = अष्टवसवः, मुनयः = महर्षयः, ग्रहाः = सूर्यादिग्रहाः, नित्यं = सदा, पान्तु = रक्षन्तु ॥ १ ॥ मनवे = मनुस्मृतिकाराय, वाचस्पतये = बृहस्पतये, शुक्राय = शुक्राचार्याय, ससुताय = पुत्रयुताय ( व्यासयुक्ताय ), पराशराय = पराशरमुनये, चाणक्याय = कौटिल्याय, विदुषे = पण्डिताय, नयशास्त्रकर्तृभ्यः = नीतिशास्त्रप्रणेतृभ्यः ( अन्य राजनीति शास्त्र के प्रवर्तकों को ) नमोऽस्तु = प्रणामोऽस्तु ॥ २ ॥ विष्णुशर्मा = ग्रन्थस्यास्य कर्ता, सकलार्थशास्त्रसारं = सर्वेषां नीतिशास्त्राणां तत्त्वं, समालोक्य = अधीत्य ज्ञात्वेत्यर्थः, जगति = विश्वेऽस्मिन्, स्वयमनुभूय च, इदम् = तत्तत्व-भूतं वस्तु पञ्चभिः तन्त्रैः = पञ्चभिः प्रकरणैः, प्रविभज्य एतत् = पञ्चतन्त्राख्यन्, सुमनोहरं = रमणीयम्, शास्त्रं = राजनीतिशास्त्रं, चकार = कृतवान् ॥ ३ ॥

तद्यथाऽनुश्रूयते = येन प्रकारेण कर्णपरम्परयाकर्ण्यते ( जैसा कि सुना जाता है ), दाक्षिणात्ये = दक्षिणदेशे, जनपदे = विषये, तत्र = नगरे, सकलार्थिसार्थकल्पद्रुमः = निखिलयाचकसमूहकल्पतरुः, प्रवरनृपमुकुटमणिमरीचिमञ्जरीचयचर्चितचरणयुगलः = सार्वभौमः, सकलराजमान्यो वा ( प्रवरनृपाणां = श्रेष्ठराज्ञां, ये मुकुटमणयः = किरीटरत्नानि, तेषां मरीचिमञ्जरीभिः = मरीचयः = कान्तय एव मञ्जर्यः ताभिः, चर्चितं = पूजितं, चरणयुगलं यस्य सः ), सकलकलापारङ्गतः = सकलकलादक्षः सकलानां कलानां विद्यानां च पारङ्गतः = पारगः, अमरशक्तिर्नाम = एतन्नामा, तस्य = राज्ञः, पुत्राः = कुमाराः, परमदुर्मेधसः = परमदुष्टबुद्धयः ( दुष्टा मेधा = बुद्धिः येषां ते दुर्मेधसः ), बभूवुः = जाताः ।

हिन्दी—ब्रह्मा, शिव, स्कन्द, विष्णु, वरुण, यम, अग्नि, इन्द्र कुबेर, चन्द्रमा, सूर्य, सरस्वती, समुद्र, चारों युग, पर्वत, वायु, पृथ्वी, सर्प, सिद्ध, नदियां, अश्विनीकुमार, लक्ष्मी, दिति, देवता, चण्डिका आदि देवियाँ, वेद, तीर्थ, यज्ञ, शिव के समस्त गण, अष्टवसु, महर्षिगण तथा नवग्रह सर्वदा सबकी रक्षा करें ॥ १ ॥

मनु, बृहस्पति, शुक्र, व्यास, पराशर, चाणक्य, विद्वद्वर्ग तथा राजनीतिशास्त्र के प्रवर्तक अन्य जनों को मेरा प्रणाम है ॥ २ ॥

सम्पूर्ण राजनीतिशास्त्रों के तत्त्वों का पर्यालोचन करके तथा विश्व में प्रचलित परम्पराओं एवं व्यवहारों का स्वयं अनुभव करने के पश्चात् विष्णुशर्मा ने पाँच भागों में विभक्त इस पञ्चतन्त्र नाम के परम उपादेय राजनीतिशास्त्र का प्रणयन किया है ॥ ३ ॥

जैसा कि सुना जाता है, दक्षिण के किसी राज्य में महिलारोप्य नाम का एक नगर था। उसमें समस्त याचकों के लिये कल्पवृक्ष के समान अत्यन्त उदार, राजाओं में श्रेष्ठ नरपतियों के मुकुट मणियों की कान्ति रूपी मञ्जरियों द्वारा पूजित और सम्पूर्ण कलाओं में निपुण अमरशक्ति नाम का एक राजा शासन करता था। उसके बहुशक्ति, उग्रशक्ति तथा अनन्तशक्ति नाम के तीन पुत्र थे, किन्तु तीनों ही परम अविनीत एवं अशिक्षित थे।

अथ राजा तान्छास्त्रविमुखानालोक्य सचिवानाहूय प्रोवाच—"भोः! ज्ञातमे-वद्भिर्यन्ममैते पुत्राः शास्त्रविमुखाः, विवेकरहिताश्च। तदेतान्पश्यतो मे महदपि राज्यं सौख्यमावहति। अथवा साध्विदमुच्यते—

अजातमृतमूर्खेभ्यो मृताजातौ सुतौ वरम्।
यतस्तौ स्वल्पदुःखाय यावज्जीवं जडो दहेत् ॥ ४॥

वरं गर्भस्रावो वरमृतुषु नैवाऽभिगमनं
वरं जातः प्रेतो वरमपि च कन्यैव जनिता।
वरं वन्ध्या भार्या वरमपि च गर्भेषु वसति-
र्न चाविद्वान् रूपद्रविणगुणयुक्तोऽपि तनयः ॥ ५॥

किं तया क्रियते धेन्वा या न सूते न दुग्धदा।
कोऽर्थः पुत्रेण जातेन यो न विद्वान्न भक्तिमान् ॥ ६॥

वरमिह वा सुतमरणं मा मूर्खत्वं कुलप्रसूतस्य।
येन विबुधजनमध्ये जारज इव लज्जते मनुजः ॥ ७॥

गुणिगणगणनारम्भे न पतति कठिनी ससंभ्रमा यस्य।
तेनाम्बा यदि सुतिनी वद वन्ध्या कीदृशी भवति ॥ ८॥

व्याख्या—शास्त्रविमुखान्=विद्यापराङ्मुखान् (अशिक्षित), आलोक्य=दृष्ट्वा, सचिवान्=मन्त्रिगणान् (मन्त्रियों को), आहूय=आकार्य (बुलाकर), विवेकरहिताः= विचारशून्याः (अविवेकी), महदपि=विस्तृतमपि, सौख्यं=सुखम्, न आवहति=न धत्ते, अजातमृतमूर्खेभ्यः=अजनितमृतजडेभ्यः (न जातः अजातः), सुतौ=पुत्रौ, यतः=यस्मात्कार-णात्, तौ=मृताजातौ, स्वल्पदुःखाय=अल्पक्लेशाय, (अल्पक्लेशकारकौ) भवतः। जडः= मूर्खः, यावज्जीवं=यावज्जीवनं, दहेत्=सन्तापयेत् ॥ ४॥ गर्भस्रावः=गर्भपातः, ऋतुषु=ऋतु-कालेषु, अभिगमनम्=भार्यया सह प्रसङ्गादिकम्, न=न भवेदिति, जातः प्रेतः=जातोऽपि मृत उत वा मृत एव जातः स्यादिति (मृत पैदा हो या पैदा होते ही मर जाय), वन्ध्या= अपुत्रवती, गर्भेषु वसतिः=गर्भे एव बालस्तिष्ठतु मा बहिरागच्छेदिति, अविद्वान्=मूर्खः, रूप-द्रविणगुणयुक्तः=रूपधनादिगुणयुक्तो मूर्खः, तनयः=पुत्रः, मा भूयादिति ॥ ५॥ तया धेन्वा= गवा, किं क्रियते=किं फलमस्ति, या=धेनुः, न सूते=वत्सान् न जनयति, न दुग्धदा=दुग्ध-मपि न ददाति, कोऽर्थः=को लाभः, जातेन=उत्पन्नेन, पुत्रेण, यः, न विद्वान्=न विज्ञः, न भक्तिमान्=न च श्रद्धायुक्तः ॥ ६॥ कुलप्रसूतस्य=कुले जातस्य, विबुधजनमध्ये=विदुषां मध्ये, मनुजः=मनुष्यः, लज्जते=जिहेति, लज्जामनुभवतीति भावः ॥ ७॥ गुणिगणगणनारम्भे= विद्वज्जनगणनाप्रसङ्गे, यस्य=यस्य पुत्रस्य नामोच्चारणकाले, कठिनी=कठिनिका (खड़िया या कानी अँगुली), न पतति=नोत्तिष्ठति, लेखनपट्टे न चलति, तेन=तादृशेन पुत्रेण, अम्बा= तस्य माता, सुतिनी=पुत्रवती स्वात्मानं वदति, तदा वद=कथय, वन्ध्या=अपुत्रवती, कीदृशी भवति=का भविष्यति ॥ ८॥

हिन्दी—राजा ने उन्हें अशिक्षित समझकर अपने मन्त्रियों को बुलाकर उनसे कहा—'आप लोग तो यह जानते ही हैं कि मेरे तीनों पुत्र अशिक्षित और अविवेकी हैं। इनके अशिक्षित रहते हुए मेरा यह विशाल साम्राज्य मुझे सुखकर नहीं प्रतीत होता है।' अथवा किसी ने ठीक ही कहा है कि—

अजात, मृत तथा मूर्ख, इन तीनों में से अजात और मृत पुत्र अच्छे हैं, क्योंकि अजात एवं मृत पुत्रों से केवल अल्पकालिक ही कष्ट होता है, किन्तु मूर्ख पुत्र जीवनपर्यन्त कष्ट पहुँचाता है॥ ४॥

मूर्ख पुत्र के पैदा होने से पूर्व ही गर्भ का गिर जाना अच्छा है। ऋतु काल में स्त्री-प्रसङ्ग न करना उत्तम है, बालक मरा हुआ पैदा हो या पैदा होकर मर जाय, यह भी उत्तम है अथवा गर्भ होने के बाद भी जन्म न हो और बच्चा मातृगर्भ में ही पड़ा रहे, यह भी सर्वोत्तम है; किन्तु रूपवान्, धनवान् और भाग्यवान् होनेपर भी अविद्वान् पुत्र का जन्म ग्रहण करना उत्तम नहीं होता है॥ ५॥

वह गाय किस काम की कही जा सकती है, जो न तो गर्भ ही धारण करती है और न दूध ही देती है। वैसे ही उस पुत्र के जन्म ग्रहण करने से लाभ ही क्या है, जो न तो विद्वान् हुआ और न भक्तिमान् ही हुआ॥ ६॥

कुल में उत्पन्न होनेवाला पुत्र मर जाय, यह उत्तम है; किन्तु मूर्ख पुत्र उत्पन्न हो, यह अच्छा नहीं है; क्योंकि मूर्ख पुत्र के कारण पिता को विद्वानों की सभा में जारज पुत्र को उत्पन्न करने के समान ही लज्जित होना पड़ता है॥ ७॥

गुणियों या विद्वानों की गणना के समय में जिस व्यक्ति का नाम आनेपर खड़िया नहीं चलती है या संभ्रमपूर्वक कानी अँगुली नहीं उठती है, उस व्यक्ति की माता भी यदि अपने को पुत्रवती कहती है, तो बताओ वन्ध्या कौन-सी स्त्री कही जायगी?॥ ८॥

तदेतेषां यथा बुद्धिप्रकाशो भवति तथा कोऽप्युपायोऽनुष्ठीयताम्। अत्र च मद्दत्तानां वृत्तिं भुञ्जानानां पण्डितानां पञ्चशती तिष्ठति। ततो यथा मम मनोरथाः सिद्धिं यान्ति तथाऽनुष्ठीयताम्" इति।

तत्रैकः प्रोवाच—"देव! द्वादशभिर्वर्षैर्व्याकरणं श्रूयते, ततो धर्मशास्त्राणि मन्वादीनि, अर्थशास्त्राणि चाणक्यादीनि, कामशास्त्राणि वात्स्यायनादीनि। एवं च ततो धर्मार्थकामशास्त्राणि ज्ञायन्ते, ततः प्रतिबोधनं भवति।"

अथ तन्मध्यतः सुमतिर्नाम सचिवः प्राह—"अशाश्वतोऽयं जीवितव्यविषयः। प्रभूतकालज्ञेयानि शब्दशास्त्राणि। तत्संक्षेपमात्रं शास्त्रं किञ्चिदेतेषां प्रबोधनार्थं चिन्त्यताम् इति। उक्तं च यतः—

अनन्तपारं किल शब्दशास्त्रं स्वल्पं तथायुर्बहवश्च विघ्नाः।
सारं ततो ग्राह्यमपास्य फल्गु हंसैर्यथा क्षीरमिवाम्बुमध्यात्॥ ९॥

तदत्रास्ति विष्णुशर्मा नाम ब्राह्मणः सकलशास्त्रपारङ्गमः, छात्रसंसदि लब्ध-
कीर्तिः। तस्मै समर्पयत्वेतान्। नूनं स एतान् द्राक् प्रबुद्धान् करिष्यति" इति।

व्याख्या—यथा=येन प्रकारेण, बुद्धिप्रकाशः=बुद्धिविकासः, अनुष्ठीयताम्=विधीय-
ताम्, मद्दत्तां=मयाऽर्पितां, वृत्तिं=जीविकां, वेतनं वा, भुञ्जानानाम्=उपभोक्तॄणाम्,
पञ्चशती=पण्डितानां पञ्चशतं, तिष्ठति=अत्र विद्यते। मनोरथाः=अभिप्रायाः, सिद्धिं यान्ति=
सफलतां प्रयान्ति, अनुष्ठीयताम्=क्रियतामिति। तत्रैकः=कोऽपि मन्त्री, श्रूयते=गुरुमुखा-
दभ्यस्यते=पठ्यते इति श्रूयते। मन्वादिप्रणीतानि मनुस्मृत्यादीनि, धर्मार्थकामशास्त्राणि=
धर्मार्थकामप्रतिपादकानि, धर्मार्थकामविषयकशास्त्राणि वा, ज्ञायन्ते=बुध्यन्ते, ततः=तदनन्तरं,
प्रतिबोधनं=मननादिना तेषां तत्त्वतो ज्ञानं भवति। तन्मध्यतः=तेषां मध्यात्, अशाश्वतः
अनिश्चितः, क्षणिकः (अस्थायी), जीवितव्यविषयः=जीवनसमयः, प्रभूतकालज्ञेयानि=समय-
साध्यानि, शब्दशास्त्राणि=व्याकरणादिशास्त्राणि, संक्षेपमात्रं=यथावश्यकं संक्षिप्तम् (आवश्यक-
मात्र), प्रबोधनार्थं=ज्ञानार्थं, चिन्त्यताम्=विचार्यतामिति। अनन्तपारम्=अनन्तमतिगभीरञ्च,
आयुः=जीवनम्, स्वल्पम्=अत्यल्पं भवति। तत्रापि, बहवो विघ्नाः=प्रत्यवायाः, ततः=
तस्मात्कारणात्, फल्गु=साररहितम्, अपास्य=विहाय, सारं=तत्त्वमात्रम्, यथा=येन प्रकारेण,
अम्बुमध्यात्=जलमध्यात्, क्षीरमिव=दुग्धमिव ग्राह्यम्=स्वीकरणीयम्, ॥ ९ ॥ सकलशास्त्र-
पारङ्गमः=सर्वशास्त्रपारगः, संसदि=परिषदि, लब्धकीर्तिः=ख्यातयशाः (प्रख्यात), द्राक्=
त्वरितं, प्रबुद्धान्=सुबुद्धान्, करिष्यति।

हिन्दी—अतः जैसे भी इनकी बुद्धि का विकास हो, उस प्रकार का कोई उपाय आप
लोग करें। मेरी सभा में इस समय मेरे द्वारा प्रदत्त वृत्ति का उपभोग करने वाले विद्वानों में से
पाँच सौ विद्वान् उपस्थित हैं। आप सभी लोगों से मेरी प्रार्थना है कि मेरी अभिलाषाओं की पूर्ति
जिस प्रकार भी हो सके, उस प्रकार का उपाय आप लोग करें।"

राजा के उक्त वचन को सुनकर उन मन्त्रियों में से एक ने कहा—"देव! यह सुना
जाता है कि—व्याकरण का ज्ञान बारह वर्षों में होता है। इसके बाद, मनुप्रभृति विद्वानों के
बनाये हुये धर्मशास्त्र, चाणक्य प्रभृति विद्वानों के बनाये हुये अर्थशास्त्र तथा वात्स्यायन आदि
महर्षियों के बनाये हुये कामशास्त्र अभी पढ़ने को शेष रह जाते हैं। बारह वर्ष तक व्याकरण
शास्त्र का अध्ययन करने के पश्चात् इन धर्म, अर्थ तथा काम के प्रतिपादक शास्त्रों का भी ज्ञान
कराना होगा, पुनः मनन आदि के द्वारा उनका सम्यग् अवबोध होगा और तब कहीं इनकी बुद्धि
का विकास हो सकता है।

तदनन्तर उन मन्त्रियों में से सुमति नाम के एक मन्त्री ने कहा—"मनुष्य का यह
जीवन अनिश्चित होता है और व्याकरण शास्त्र के ही ज्ञान में बहुत दिन लग जायेंगे। अतएव
इन राजकुमारों के प्रबोध के लिये किसी सुबोध एवं संक्षिप्त शास्त्र की व्यवस्था होनी चाहिये।
क्योंकि कहा भी गया है कि—

व्याकरण शास्त्र अत्यन्त गहन एवं अनन्त होता है और मनुष्य की आयु अत्यन्त कम

होती है। उसमें भी विभिन्न प्रकार के विघ्न उपस्थित होते रहते हैं। अतः सारहीन विषयों को छोड़कर केवल तत्त्व मात्र को ग्रहण करना चाहिये, जैसे—हंस जल से दूध मात्र को ग्रहण कर लेते हैं॥९॥

मैं तो यह समझता हूँ कि विष्णुशर्मा नाम के वे विद्वान् आप की इस सभा में ही उपस्थित हैं, जो सम्पूर्ण शास्त्रों के ज्ञाता और छात्रसमुदाय में अध्यापन के लिये सुविख्यात हैं। इन राजकुमारों को उन्हीं की देख रेख में देना चाहिये। मुझे यह पूर्ण विश्वास है कि वे इन राजकुमारों को अतिशीघ्र ही सुशिक्षित बना देंगे।"

स राजा तदाकर्ण्य विष्णुशर्माणमाहूय प्रोवाच—"भो भगवन्! मदनुग्रहार्थमेतानर्थशास्त्रं प्रति द्राग्यथाऽनन्यसदृशान्विदधासि तथा कुरु, तदाऽहं त्वां शासनशतेन योजयिष्यामि।"

अथ विष्णुशर्मा तं राजानमूचे—"देव! श्रूयतां मे तथ्यवचनं, नाहं विद्याविक्रयं शासनशतेनाऽपि करोमि। पुनरेतांस्तव पुत्रान्मासषट्केन यदि नीतिशास्त्रज्ञान्न करोमि, ततः स्वनामत्यागं करोमि। किं बहुना, श्रूयतां ममैष सिंहनादः। नाऽहमर्थलिप्सुर्ब्रवीमि। ममाऽशीतिवर्षस्य व्यावृत्तसर्वेन्द्रियार्थस्य न किञ्चिदर्थेन प्रयोजनम्। किन्तु त्वत्प्रार्थनासिद्ध्यर्थं सरस्वतीविनोदं करिष्यामि। तल्लिख्यतामद्यतनो दिवसः। यद्यहं षड्मासाऽभ्यन्तरे तव पुत्रान्नयशास्त्रं प्रत्यनन्यसदृशान्न करिष्यामि, ततो नार्हति देवो देवमार्गं संदर्शयितुम्।"

व्याख्या—तदाकर्ण्य = मन्त्रिवचनं श्रुत्वा, मदनुग्रहार्थं = ममानुग्रहार्थम्, अनन्यसदृशान् = अनुपमेयान् (न अन्यैः सदृशाः, अनन्यसदृशास्तान्) (सर्वश्रेष्ठ), विदधासि = करोषि, शासनशतेन = ग्रामशताधिपत्येन ग्रामशतस्य वृत्तिदानेन वा, योजयिष्यामि = नियोजयिष्यामि (एक सौ ग्रामों का अधिपति बना दूँगा)। तथ्यवचनं = यथार्थवाक्यम् (सच्ची बात), नीतिशास्त्रज्ञान् = राजनीतिनिपुणान्, स्वनामत्यागं = विष्णुशर्मेति नामत्यागं, करोमि (अपना नाम ही बदल दूँगा)। सिंहनादः = सिंहघोषः, अर्थलिप्सुः = धनलोलुपः व्यावृत्तसर्वेन्द्रियार्थस्य = त्यक्तेन्द्रियसुखस्य, विषयपराङ्मुखस्य वा, अर्थेन = धनेन, प्रयोजनम् = कार्यम्, त्वत्प्रार्थनासिद्ध्यर्थं = तवाऽभ्यर्थनासिद्ध्यर्थं (केवल आप की इच्छा पूर्ति के लिये), सरस्वतीविनोदं = विद्याविनोदं, देवः = भवान् धर्मराजो वा, देवमार्गं = स्वर्गलोकं, सन्दर्शयितुम् = दर्शयितुम्, दातुमित्यर्थः, (भवान् शूलमारोप्यासद्गतिप्रदानेन, धर्मराजश्च नरकप्रदानेनेत्यर्थः)।

हिन्दी—राजा ने उस मन्त्री के कथनानुसार विष्णुशर्मा को अपने पास बुलाकर कहा—"भगवन्! मुझ पर अनुग्रह करने के लिये कृपया आप जितना शीघ्र मेरे पुत्रों को नीतिशास्त्र में अद्वितीय बना सकें, बनाने का कष्ट स्वीकार करें। इनके नीतिनिपुण हो जाने के बाद मैं आपको एक सौ ग्रामों का अधिकार प्रदान करूँगा।"

राजा के उक्त वचन को सुनकर विष्णुशर्मा ने कहा—"देव! मेरे यथार्थ कथन पर आप ध्यान दें। एक सौ ग्रामों का आधिपत्य प्राप्त करने पर भी मैं विद्या का विक्रय नहीं करूँगा।

फिर भी यदि मैंने आपके पुत्रों को छः मास के भीतर नीतिशास्त्र में निपुण नहीं बना दिया तो मैं अपना नाम बदल दूँगा। मैं आपसे अधिक क्या कहूँ, किन्तु मेरी यही सिंह-घोषणा है। मैं अर्थलोलुप नहीं हूँ। अस्सी वर्ष की अवस्था हो जाने के कारण मैं इन्द्रियसुखों से विरत हो चुका हूँ। मुझे इस समय अर्थ की आवश्यकता नहीं है। केवल आपकी इच्छापूर्ति के लिये, मैं विद्या से अपना मनोरञ्जन करूँगा। आप आज की तिथि अङ्कित कर लें। आज से छः मास के भीतर यदि मैंने आपके पुत्रों को नीतिशास्त्र में अद्वितीय नहीं बना दिया तो आप मुझे मृत्युदण्ड देकर मेरी सद्गति के मार्ग को अवरुद्ध कर सकते हैं ( अथवा, धर्मराज मुझे स्वर्ग का मार्ग भी न देखने देंगे )।

अथाऽसौ राजा तां ब्राह्मणस्याऽसंभाव्यां प्रतिज्ञां श्रुत्वा ससचिवः प्रहृष्टः, विस्मयान्वितस्तस्मै सादरं तान्कुमारान्समर्प्य परां निर्वृतिमाजगाम। विष्णुशर्माऽपि तानादाय तदर्थं मित्रभेद-मित्रप्राप्ति-काकोलूकीय-लब्धप्रणाशापरीक्षितकारकाणि चेति पञ्चतन्त्राणि रचयित्वा पाठितास्ते राजपुत्राः। तेऽपि तान्यधीत्य मासषट्केन यथोक्ताः संवृत्ताः। ततः प्रभृत्येतत्पञ्चतन्त्रकं नाम नीतिशास्त्रं बालावबोधनार्थं भूतले प्रवृत्तम्। किं बहुना—

अधीते य इदं नित्यं नीतिशास्त्रं शृणोति च।
न पराभवमाप्नोति शक्रादपि कदाचन॥ १०॥

॥ इति कथामुखम्॥

व्याख्या—असंभाव्याम्=असंभवाम्, अतर्किंतामित्यर्थः, विस्मयान्वितः=आश्चर्यचकितः, परां=नितरां, निर्वृतिं=शान्तिं, समाधानं वेति, पञ्च तन्त्राणि=पञ्च प्रकरणानि, राजनीतिशास्त्रस्य पञ्चतत्त्वप्रतिपादकानि पञ्चतन्त्राणीति यावत्। यथोक्ताः=अनन्यसदृशाः, नीतिशास्त्रकुशलाः, संवृत्ताः=जाताः। भूतले=पृथिव्यां, जगति, प्रवृत्तम्=प्रचलितमभूदिति। पराभवम्=पराजयं तिरस्कारं वा, शक्रादपि=इन्द्रादपि, न आप्नोति=न प्राप्नोति॥ १०॥

हिन्दी—मन्त्रियों सहित वह राजा ब्राह्मण की उस अत्यन्त कठिन प्रतिज्ञा को सुनकर आश्चर्यचकित हो उठा और विनम्रतापूर्वक राजकुमारों को विष्णुशर्मा की सेवा में लगाकर निश्चिन्त हो गया।

विष्णुशर्मा ने उन राजकुमारों को सुबुद्ध बनाने के लिये मित्रभेद, मित्रसंप्राप्ति, काकोलूकीय, लब्धप्रणाश तथा अपरीक्षितकारक नामक नीतिशास्त्र के पाँच प्रकरणों को बनाकर उन्हें पढ़ाया और वे राजकुमार उन प्रकरणों को पढ़कर छः मास के भीतर ही अप्रतिम विद्वान् हो गये।

तभी से यह पञ्चतन्त्र नाम का नीतिशास्त्र बालकों को सुबुद्ध एवं व्यवहारपटु बनाने के लिये इस संसार में चल पड़ा और शनैः शनैः इसकी पर्याप्त ख्याति हो गयी। अधिक क्या कहा जाय, इस नीतिशास्त्र का जो अनवरत अध्यन करता है और इसको सुनता है वह व्यक्ति इन्द्र से भी पराभूत ( तिरस्कृत ) नहीं हो सकता है॥ १०॥

॥ कथामुख समाप्त॥

# ॥ प्रथमं तन्त्रम् ॥

[ प्रस्तावना-कथा ]

अथातः प्रारभ्यते मित्रभेदो नाम प्रथमं तन्त्रं, यस्यायमादिमः श्लोकः—

वर्धमानो महान् स्नेहः सिंहगोवृषयोर्वने ।
पिशुनेनाऽतिलुब्धेन जम्बुकेन विनाशितः ॥ १ ॥

तद्यथानुश्रूयते—अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम्। तत्र धर्मोपार्जितभूरिविभवो वर्धमानको नाम वणिक्पुत्रो बभूव। तस्य कदाचिद्रात्रौ शय्यारूढस्य चिन्ता समुत्पन्ना, यत् प्रभूतेऽपि वित्तेऽर्थोपायाश्चिन्तनीयाः, कर्तव्याश्चेति। यत उक्तं च—

नहि तद्विद्यते किञ्चिद्यदर्थेन न सिद्ध्यति ।
यत्नेन मतिमांस्तस्मादर्थमेकं प्रसाधयेत् ॥ २ ॥
यस्याऽर्थास्तस्य मित्राणि, यस्याऽर्थास्तस्य बान्धवाः।
यस्याऽर्थाः स पुमांल्लोके, यस्याऽर्थाः स च पण्डितः ॥ ३ ॥
न सा विद्या न तद्दानं न तच्छिल्पं न सा कला ।
न तत्स्थैर्यं हि धनिनां याचकैर्यन्न गीयते ॥ ४ ॥
इह लोके हि धनिनां परोऽपि सुजनायते ।
स्वजनोऽपि दरिद्राणां सर्वदा दुर्जनायते ॥ ५ ॥

व्याख्या—अथातः=अथशब्दो मङ्गलार्थकः। अतः=अस्मात्परतः, इतोऽनन्तरं वा, प्रारभ्यते=आरभ्यते, मित्रभेदो नाम=तन्नामकं, मित्राणां भेदो यस्मिंस्तत् मित्रभेदनामकं, प्रथमम्=आदिमम्, तन्त्रं=प्रकरणम्, यस्य=मित्रभेदस्य, आदिमः=प्रथमः, श्लोकः—अतिलुब्धेन=लोभान्वितेन, पिशुनेन=खलेन, जम्बुकेन=शृगालेन, वने=कानने, सिंहगोवृषयोः=हरिवृषभयोः (गोवृषः=गोश्रेष्ठो बलीवर्दः) वर्धमानः=प्रवर्धमानः, स्नेहः=प्रेम, विनाशितः=नाशितः। जनपदे=विषये, धर्मोपार्जितभूरिविभवः=नीत्यादिसदुपायेनार्जितप्रचुरविभवः (धर्मेण उपार्जितो भूरिविभवो येन सः), कदाचित्=एकदा, शय्यारूढस्य=प्रसुप्तस्य, पर्यङ्कगतस्यैति भावः, प्रभूतेऽपि=प्रचुरेऽपि, वित्ते=धने, अर्थोपायाः=धनार्जनोपायाः, कर्तव्याः=विधेयाश्च। हि=यतः, तत्किञ्चित्=विश्वे तत्किञ्चिद्वस्तु, यत् अर्थेन=धनेन, न सिद्ध्यति=सिद्धिं नाधिगच्छति, मतिमान्=धीमान्, एकं=केवलम्, अर्थं=धनमेव, प्रसाधयेत्=उपार्जयेत् ॥ २ ॥ यस्यार्थाः=यस्य विभवाः सन्ति, पुमान्=पुरुषः, पण्डितः=विद्वान् ॥३॥ स्थैर्यं=स्थायित्वं, स्थितिः, याचकैः=भिक्षुकैः, न गीयते=न कीर्त्यते ॥ ४ ॥ परोऽपि=अन्योऽपि, शत्रुरपीति भावः, सुजनायते=सज्जनवदाचरति (सुजनमिवाचरति सुजनायते) स्वजनः=आत्मीयोऽपि, दुर्जनायते=दुष्टवदाचरति ॥ ५ ॥

हिन्दी—विष्णुशर्मा ने राजपुत्रों से कहा—अब मैं मित्रभेद नाम के प्रथम प्रकरण को प्रारम्भ करता हूँ, जिसका प्रथम श्लोक यह है—वन में निवास करने वाले सिंह और वृषभ के बढ़ते हुये प्रेम को एक लोभी तथा दुष्ट शृगाल ने नष्ट कर दिया था ॥ १ ॥

जैसा कि सुना जाता है (कथा इस प्रकार है) कि—दक्षिण के किसी राज्य में महिलारोप्य नाम का एक नगर था। उस नगर में वर्धमान नाम का एक वैश्य (वणिक्-पुत्र) रहता था, जिसने सदुपायों द्वारा प्रचुर सम्पत्ति एकत्र कर रखी थी। किसी दिन रात्रि में सोते समय उसके मन में यह विचार आया कि प्रचुर सम्पत्ति के रहने पर भी मुझे धनोपार्जन का कोई और अन्य उपाय सोचना चाहिये तथा तदनुसार प्रयत्न भी करना चाहिये। क्योंकि कहा गया है कि—इस विश्व में ऐसी कोई भी वस्तु नहीं होती, जो धन के द्वारा प्राप्त नहीं की जा सकती है। अतएव बुद्धिमान् व्यक्ति को प्रयत्नपूर्वक धन का ही उपार्जन करना चाहिये ॥ २ ॥

धनवान् व्यक्ति से सभी मित्रता करना चाहते हैं, धन के रहने पर बन्धु-बान्धव भी आत्मीयता का व्यवहार करते हैं, धनवान् व्यक्ति की ही उत्तम पुरुषों में गणना होती है और वही विद्वान् भी माना जाता है ॥ ३ ॥

इस विश्व में, ऐसी कोई विद्या, ऐसा कोई दान, ऐसा कोई शिल्प, ऐसी कोई कला एवं ऐसी कोई दृढ़ता, शूरता या स्थिति नहीं है जिसका वर्णन याचकगण धनिकों की प्रशंसा करते समय न करते हों ॥ ४ ॥

इस संसार में सम्पन्न व्यक्तियों के शत्रु भी उनके साथ सज्जनता का ही व्यवहार करते हैं और दरिद्र व्यक्तियों के आत्मजन भी उनके प्रति दुर्जनता का ही व्यवहार करते हैं ॥ ५ ॥

अर्थेभ्योऽतिप्रवृद्धेभ्यः संवृत्तेभ्यस्ततस्ततः ।
प्रवर्तन्ते क्रियाः सर्वाः पर्वतेभ्य इवापगाः ॥ ६ ॥
पूज्यते यदपूज्योऽपि यदगम्योऽपि गम्यते ।
वन्द्यते यदवन्द्योऽपि स प्रभावो धनस्य च ॥ ७ ॥
अशनादिन्द्रियाणीव स्युः कार्याण्यखिलान्यपि ।
एतस्मात्कारणाद्वित्तं सर्वसाधनमुच्यते ॥ ८ ॥
अर्थार्थी जीवलोकोऽयं श्मशानमपि सेवते ।
त्यक्त्वा जनयितारं स्वं निःस्वं गच्छति दूरतः ॥ ९ ॥
गतवयसामपि पुरुषां येषामर्था भवन्ति ते तरुणाः ।
अर्थेन तु ये हीना वृद्धास्ते यौवनेऽपि स्युः ॥ १० ॥

स चाऽर्थः पुरुषाणां षड्भिरुपायैर्भवति—भिक्षया, नृपसेवया, कृषिकर्मणा, विद्योपार्जनेन, व्यवहारेण, वणिक्कर्मणा वा । सर्वेषामपि तेषां वाणिज्येनाऽतिरस्कृतोऽर्थ-लाभः स्यात् ।

**व्याख्या**—पर्वतेभ्यः=नगेभ्यः, आपगाः=नद्य इव (जैसे पर्वतों से नदियाँ स्वयं निकलती हैं) ततस्ततः संवृत्तेभ्यः=विभिन्नोपकरणैः सञ्चितेभ्यः, विभिन्नमार्गैरर्जितेभ्य इत्यर्थः, अतएव, अतिप्रवृद्धेभ्यः=अतिवर्धितेभ्यः, अर्थेभ्यः=धनेभ्यः, क्रियाः=कार्याणि, प्रवर्तन्ते=सम्पद्यन्ते, स्वयमेव जायन्ते इत्यर्थः ॥ ६ ॥ अपूज्यः=असत्कार्यः, अनभिवन्द्य इति। अगम्यः=असेव्यः, अवन्द्यः=अनमस्कार्यः ॥ ७ ॥ अशनात्=भोजनात्, इन्द्रियाणि=शरीरावयवानि, अखिलानि=निखिलानि, सर्वसाधनम्=सर्वोपायभूतमित्यर्थः ॥ ८ ॥ अर्थार्थी=धनार्थी, धनलुब्धः, श्मशानम्=शवभूमिम्, निःस्वं=धनरहितं, जनयितारं=पितरं, त्यक्त्वा गच्छति ॥९॥ गतवयसाम्=विगतवयसाम्, वृद्धानामित्यर्थः (गतं वयो येषां ते गतवयसः तेषाम्)। यौवनेऽपि=तारुण्येऽपि, वृद्धाः स्युः=जरा भवन्ति ॥ १० ॥ व्यवहारेण=कुसीदवृत्त्या, (सूदपर ऋण देने से), वणिक्कर्मणा=वाणिज्येन, अतिरस्कृतः=तिरस्कारादिरहितः।

**हिन्दी**—विभिन्न स्रोतों से जलसञ्चयन के द्वारा समस्त नदियाँ जैसे पर्वत से स्वयं निकलती हैं, उसी प्रकार विभिन्न उपायों के द्वारा एकत्रित धन से मनुष्य के सम्पूर्ण कार्य स्वतः सम्पन्न हो जाते हैं ॥ ६ ॥

धन का ही यह प्रभाव है कि अपूज्य मनुष्य भी पूज्य, अगम्य स्थान भी गम्य, और अवन्द्य व्यक्ति भी वन्द्य हो जाता है ॥ ७ ॥

भोजन से सशक्त इन्द्रियाँ जिस प्रकार शरीर के सम्पूर्ण कार्यों को स्वतः करती रहती हैं, उसी प्रकार मनुष्य की समस्त आवश्यकतायें भी धन से स्वतः पूर्ण होती रहती हैं। अतएव धन को साधनों में प्रधान साधन कहा गया है ॥ ८ ॥

धन के प्रति आसक्त व्यक्ति श्मशान की भी उपासना करता है और निर्धन माता पिता को छोड़कर अन्यत्र चला जाता है ॥ ९ ॥

धनसम्पन्न व्यक्ति वृद्ध होने पर भी तरुण बना रहता है, और तरुण व्यक्ति भी निर्धनता के कारण वृद्ध हो जाता है। (दरिद्र व्यक्ति विभिन्न दुश्चिन्ताओं से आक्रान्त होकर जर्जर हो जाता है) ॥ १० ॥

धनोपार्जन के लिये कुल छः उपाय हैं—भिक्षा, सेवावृत्ति (नौकरी), कृषि, विद्या, सूद पर ऋण देना तथा व्यापार। इनमें से व्यापार ही एक ऐसा है कि जिससे विना किसी तिरस्कार के धन कमाया जा सकता है।

**उक्तं च—**

हता भिक्षा भेकैर्वितरति नृपो नोचितमहो
कृषिः क्लिष्टा, विद्या गुरुविनयवृत्त्याऽति विषमा।
कुसीदाद्दारिद्र्यं परकरगतग्रन्थिशमना-
न्न मन्ये वाणिज्यात्किमपि परमं वर्तनमिह ॥ ११ ॥

उपायानाञ्च सर्वेषामुपायः पण्यसङ्ग्रहः।



धनार्थं शस्यते ह्येकस्तदन्यः संशयात्मकः ॥ १२ ॥

तच्च वाणिज्यं सप्तविधमर्थागमाय स्यात्। तद्यथा—गान्धिकव्यवहारः, निक्षेपप्रवेशः, गौष्ठिककर्म, परिचितग्राहकागमः, मिथ्याक्रयकथनम्, कूटतुलामानम्, देशान्तराद् भाण्डानयनञ्चेति।

व्याख्या—भेकैः = नीचैः, क्षुद्रजनैरिति, उचितं = यथेच्छितं, न वितरति = न ददाति, क्लिष्टा = कठिना (कष्टसाध्य), गुरुविनयवृत्या = गुरुशुश्रूषादिवृत्या, अति असामान्या, विषमा = दुःसाध्येति, परकरगतग्रन्थिशमनात् = अन्यहस्तगतत्वान्मूलस्यापि विनाशात्, दारिद्र्यं = निर्धनत्वं (भवति), परमं = श्रेष्ठं, वर्तनम् = जीवनम्, न मन्ये = न स्वीकरोमि ॥ ११ ॥ धनार्थं = धनलाभार्थं (धन कमाने के लिए), पण्यसङ्ग्रहः = विक्रेयवस्तुसंग्रहः, शस्यते, संशयात्मकः = अनिश्चितात्मकः ॥ १२ ॥ अर्थागमाय = धनलाभाय, निक्षेपप्रवेशः = अलङ्कारादिस्थापनम् (आभूषण आदि बन्धक रखना), गौष्ठिककर्म (मोदीपना), कूटतुलामानम् = कपटतोलनम्, भाण्डानयनं = विक्रयपदार्थानामानयनम्।

हिन्दी—यतः कहा गया है कि—भिक्षावृत्ति कपटी एवं नीच प्रवृत्ति के भिक्षुकों के कारण विनष्ट हो चुकी है, राजसेवा में राजा श्रम का उचित मूल्य (वेतन) नहीं देता है, कृषि अत्यन्त कष्टसाध्य होती है, विद्या गुरु की सेवा एवं उसके प्रति विनयभाव आदि के आचरण से कठिन होती हैं और ब्याज पर ऋण देना, दूसरों के हाथ में गये हुये मूलधन के भी डूब जाने के कारण ऋणदाता को दरिद्र बना देता है। अतः व्यापार से श्रेष्ठ और सुखद जीविका का साधन मैं अन्य किसी को नहीं मानता हूँ ॥ ११ ॥

अर्थोपार्जन के लिये बताये गये उपायों में एक वाणिज्य ही सबसे श्रेष्ठ है, अन्य सभी उपाय संशय में रखने वाले होते हैं ॥ १२ ॥ धनोपार्जन के लिये प्रशस्त वाणिज्य भी सात प्रकार का होता है, जैसे—१—गान्धिकव्यवहार तैल और इत्र आदि बेचना, २—दूसरों का आभूषण आदि बन्धक रखना, ३—मोदीपना करना, ४—परिचित ग्राहकों को ठगकर उनके हाथ सौदा बेचना, ५—वस्तु का झूठ मूल्य बताकर मुनाफाखोरी करना, ६—कम तौलना और ७—विदेश से विक्रेय वस्तुओं का आयात-निर्यात करना।

उक्तं च—

पण्यानां गान्धिकं पण्यं किमन्यैः काञ्चनादिभिः।
यत्रैकेन च यत्क्रीतं तच्छतेन प्रदीयते ॥ १३ ॥
निक्षेपे पतिते हर्म्ये श्रेष्ठी स्तौति स्वदेवताम्।
निक्षेपी म्रियते तुभ्यं प्रदास्याम्युपयाचितम् ॥ १४ ॥
गौष्ठिककर्मनियुक्तः श्रेष्ठी चिन्तयति चेतसा हृष्टः।
वसुधा वसुसम्पूर्णा मयाऽद्य लब्धा किमन्येन ॥ १५ ॥
परिचितमागच्छन्तं ग्राहकमुत्कण्ठया विलोक्यासौ।
हृष्यति तद्धनलुब्धो यद्वत्पुत्रेण जातेन ॥ १६ ॥

अन्यच्च—

पूर्णाऽपूर्णैर्मानैः परिचितजनवञ्चनं तथा नित्यम् ।
मिथ्याक्रयस्य कथनं प्रकृतिरियं स्यात्किराटानाम् ॥ १७ ॥

अन्यच्च—

द्विगुणं त्रिगुणं वित्तं भाण्डक्रयविचक्षणाः ।
प्राप्नुवन्त्युद्यमाल्लोका दूरदेशान्तरं गताः ॥ १८ ॥

व्याख्या—पण्यानां=विक्रेयपदार्थानाम्, गान्धिकं पण्यं=सुगन्धिद्रव्यादि विक्रयरूपम्, श्रेष्ठमस्ति ॥ १३ ॥ हर्म्ये=भवने, पतिते=निक्षिप्ते, श्रेष्ठी=धनिकः, स्वदेवतां=स्वेष्टदेवं, स्तौति=प्रार्थयति (मनाता है), निक्षेपी=निक्षेपकारकः, उपयाचितम्=उपहारं यथेप्सितां पूजामिति भावः ॥ १४ ॥ चेतसा=मनसा, चिन्तयति=विचारयति, वसुसंपूर्णा=धनयुक्ता, वसुधा=पृथ्वी, लब्धा=प्राप्ता ॥ १५ ॥ उत्कण्ठया=औत्सुक्येन, असौ=वणिक्, पुत्रेण जातेन=पुत्रोत्पत्त्या यथा हृष्यतीति भावः ॥ १६ ॥ मिथ्या क्रयस्य कथनम्=असत्यमूल्यकथनं, परिचितजनवञ्चनं=विश्वस्तजनानां लुण्ठनम् (विश्वस्त व्यक्तियोंको ठगना) किराटानाम्=वणिजाम्, प्रकृतिः=स्वभावो भवति ॥ १७ ॥ भाण्डक्रयविचक्षणाः=आयातपटवः, लोकाः=जनाः, दूरदेशान्तरं गताः=विदेशं गताः, उद्यमात्=परिश्रमेण प्रयत्नेनेति भावः, प्राप्नुवन्ति=अर्जयन्ति ॥ १८ ॥

हिन्दी—कहा भी गया है कि—व्यापार में गान्धिक कर्म सबसे श्रेष्ठ होता है। चल जाने पर इसके सामने सोने चाँदी आदि का व्यापार भी व्यर्थ हो जाता है। क्योंकि एक रुपये में खरीदे हुए माल को इसमें एक सौ रुपये में बेच देना अत्यन्त सरल होता है ॥ १३ ॥

बन्धक (धरोहर) के अपने घर में आ जाने पर व्यापारी सतत अपने इष्टदेव से यही प्रार्थना करता रहता है कि, यदि धरोहर को रखने वाला व्यक्ति मर जायगा तो मैं आपको सविधि पूजा चढ़ाऊँगा ॥ १४ ॥

मोदी का काम करने वाला व्यापारी जब किसी राजकीय सेना आदि को रसद पहुँचाने का कार्य पा जाता है तो प्रसन्न होकर अपने मन में सोचता है कि आज मैंने पृथ्वी का सम्पूर्ण धन ही प्राप्त कर लिया है। पुनः वह निश्चिन्त होकर लूटता है ॥ १५ ॥

किसी विश्वस्त ग्राहक को दूकान की ओर आते हुये देखकर व्यापारी सन्तुष्ट होकर सोचता है कि आज तो लूटने का अच्छा मौका मिला। वह उस ग्राहक के आगमन से इतना प्रसन्न होता है कि जैसे उसके घर में पुत्र उत्पन्न हो गया हो ॥ १६ ॥

दूकान पर आये हुए परिचित ग्राहक को न्यूनाधिक तौल के द्वारा ठगना और कम मूल्य में खरीदे हुए सामान का अधिक मूल्य बताना व्यापारियों का स्वभाव होता है ॥ १७ ॥

सामानों का आयात-निर्यात करने में पटु व्यापारी विदेश में जाकर कभी-कभी अपने उद्योग के कारण दूने और तीनगुने लाभ को प्राप्त कर लेता है ॥ १८ ॥

इत्येवं सम्प्रधार्य मथुरागामीनि भाण्डानि आदाय शुभायां तिथौ गुरुजनानुज्ञातः सुरथाधिरूढः प्रस्थितः। तस्य च मंगलवृषभौ सञ्जीवकनन्दकनामानौ गृहोत्पन्नौ धूर्वोढारौ स्थितौ। तयोरेकः सञ्जीवकाभिधानो यमुनाकच्छमवतीर्णः सन् पङ्कपूरमासाद्य कलितचरणो युगभङ्गं विधाय निषसाद। अथ तं तदवस्थमालोक्य वर्द्धमानः परं विषादमगमत्। तदर्थं च स्नेहार्द्रहृदयः त्रिरात्रं प्रयाणभङ्गमकरोत्। अथ तं विषण्णमालोक्य सार्थिकैरभिहितम्—"भोः श्रेष्ठिन्! किमेवं वृषभस्य कृते सिंहव्याघ्रसमाकुले बह्वपायेऽस्मिन् वने समस्तसार्थः त्वया सन्देहे नियोजितः।

उक्तं च—

न स्वल्पस्य कृते भूरि नाशयेन्मतिमान्नरः।
एतदेवात्र पाण्डित्यं यत्स्वल्पाद् भूरिरक्षणम्" ॥ १९॥

व्याख्या—सम्प्रधार्य = निश्चयं कृत्वा, मथुरागामीनि = मथुरायां विक्रेतुं योग्यानि, भाण्डानि = द्रव्याणि, गुरुजनानुज्ञातः = श्रेष्ठजनैरादिष्टः, सुरथाधिरूढः = सुरथे स्थितः, धूर्वोढारौ = भारवाहकौ, यमुनाकच्छं = यमुनानद्यास्तटं, पङ्कपूरम् = आनूपदेशं, कलितचरणः = भग्नपादः, युगभङ्गं विधाय = रथस्य युगतो दूरीभूय, स्नेहार्द्रहृदयः = स्नेहेन क्लिन्नचित्तः, त्रिरात्रं = रात्रित्रयपर्यन्तं, प्रयाणभङ्गं = यात्रावसानं, सार्थिकैः = सहयोगिभिः, सिंहव्याघ्रसमाकुले = सिंहव्याघ्रादिहिंस्रजन्तुयुक्ते, बह्वपाये = बहुविघ्नवति, समस्तसार्थः = सर्वः सहयोगिवर्गः, भूरि = बहु, मतिमान् = बुद्धिमान्, भूरिरक्षणं = अधिकांशस्य रक्षा, पाण्डित्यं = बुद्धिमत्ता ॥ १९॥

हिन्दी—बहुत देर तक विचार करने के पश्चात् मथुरा में बिकने योग्य वस्तुओं को गाड़ी पर लदवाकर उसने श्रेष्ठ जनों की आज्ञा से शुभ मुहूर्त में मथुरा की ओर प्रस्थान किया। उसकी गाड़ी को खींचने वाले सञ्जीवक और नन्दक नाम के दो बैल थे जो उसके घर में ही जन्मे और पाले पोषे गये थे। उनमें से एक सञ्जीवक नाम का वृषभ और यमुना के कछार में पहुँचते ही दलदल में फँस जाने के कारण जूए को तोड़ कर वहाँ बैठ गया।

उसकी इस अवस्था को देखकर वर्धमान नाम का वह व्यापारी बहुत दुःखी हुआ और करुणा से द्रवित होकर तीन दिन तक उसने अपनी यात्रा स्थगित रखी।

उसकी इस खिन्नता को देखकर उसके अन्य साथियों ने कहा—"सेठ! एक बैल के लिये सिंह तथा व्याघ्र आदि हिंस्र पशुओं से युक्त इस सापद वन में रुक कर आपने सभी व्यक्तियों को प्राणसङ्कट में क्यों डाल रखा है? कहा भी है कि—

बुद्धिमान् व्यक्ति को किसी छोटी वस्तु के लिये बहुत बड़ी वस्तु की हानि नहीं करनी चाहिये। इस संसार में व्यक्ति की बुद्धिमत्ता इसी में समझी जाती है कि वह छोटी वस्तु को सहर्ष त्यागकर बड़ी वस्तु की रक्षा कर ले" ॥ १९॥

अथाऽसौ तदवधार्य सञ्जीवकस्य रक्षापुरुषान्निरूप्याऽशेषसार्थं नीत्वा प्रस्थितः। अथ रक्षापुरुषा अपि बह्वपायं तद्वनं विदित्वा सञ्जीवकं परित्यज्य पृष्ठतो गत्वाऽन्येद्युस्तं सार्थवाहं मिथ्याऽऽहुः—"स्वामिन्! मृतोऽसौ सञ्जीवकः। अस्माभिस्तु सार्थवाहस्याऽ-

भीष्ट इति मत्वा वह्निना संस्कृतः"—इति। तच्छ्रुत्वा सार्थवाहः कृतज्ञतया स्नेहार्द्र-हृदयस्तस्यौर्ध्वदेहिकक्रिया वृषोत्सर्गादिकाः सर्वाश्चकार।

सञ्जीवकोऽप्यायुःशेषतया यमुनासलिलमिश्रैः शिशिरतरवातैराप्यायितशरीरः कथञ्चिदप्युत्थाय यमुनातटमुपपेदे। तत्र मरकतसदृशानि बालतृणाग्राणि भक्षयन्कतिपयैरहोभिर्हरवृषभ इव पीनः ककुद्मान् बलवांश्च संवृत्तः, प्रत्यहं वल्मीकशिखराग्राणि शृङ्गाभ्यां विदारयन्प्रगर्जंश्चास्ते। साध्विदमुच्यते—

अरक्षितं तिष्ठति दैवरक्षितं, सुरक्षितं दैवहतं विनश्यति।
जीवत्यनाथोऽपि वने विसर्जितः, कृतप्रयत्नोऽपि गृहे विनश्यति॥ २०॥

व्याख्या—असौ = वणिक् वर्धमानः, तदवधार्य = साथिकवचनं स्वीकृत्य, रक्षापुरुषान् = रक्षकान्, निरूप्य = नियुज्य, अशेषसार्थम् = निखिलं संघमिति भावः, सार्थवाहं = नैगमं (वणिक्सङ्घाधिपमिति यावत्, 'वैदेहकः सार्थवाहो नैगमो वणिजो वणिक्' इत्यमरः), सार्थवाहस्याभीष्टः = वणिक्प्रमुखस्य प्रियः, संस्कृतः = दग्धः, और्ध्वदेहिकक्रिया = पिण्डदानादिक्रिया, शिशिरतरवातैः = शीतलसमीरैः (ठण्डी हवा से), उपपेदे = प्राप्तवान्, मरकतसदृशानि (गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः, इत्यमरः) बालतृणाग्राणि = नूतनतृणाग्राणि (नयी जमी हुई मुलायम घासों की फुनगी) हरवृषभ इव = शिववृषभ इव, नन्दिसदृशः, पीनः = स्थूलः, ककुद्मान् = अङ्गमान्, मांसल इत्यर्थः (वृषाङ्गे ककुदोऽस्त्रियामित्यमरः) वल्मीकशिखराग्राणि = वामलूराग्राणि। दैवरक्षितं = भाग्येन रक्षितम्, अरक्षितम् = अकृतरक्षाविधानम्, वने विसर्जितः = कानने त्यक्तः, अनाथः = अस्वामिकः, कृतप्रयत्नः = कृतरक्षाविधानः, विनश्यति = नश्यति॥ २०॥

हिन्दी—साथियों के आग्रह करने पर उस व्यापारी ने उनकी बात को स्वीकार करके सञ्जीवक के लिये कुछ रक्षकों को नियुक्त कर दिया और शेष साथियों को लेकर वहाँ से वह चल दिया।

रक्षकों ने भी उस जङ्गल को भयानक तथा सापद समझकर सञ्जीवक को वहीं छोड़ दिया और वे सार्थवाह के पास चले गये। दूसरे दिन उसके पास उपस्थित होकर उन लोगों ने कहा—"स्वामिन्! सञ्जीवक तो मर गया। आपका प्रिय समझकर हमने उसको जला दिया है।"

उनकी इस बात को सुनकर सार्थवाह ने उसके प्रति स्नेह के कारण कृतज्ञता व्यक्त करने लिए उस वृषभ की और्ध्वदेहिक क्रिया, वृषोत्सर्ग आदि सभी कृत्य पूर्ण किया।

इधर अपनी आयु के शेष होने के कारण सञ्जीवक भी यमुना के जल से मिश्रित शीतल-वायु के लगने से थोड़ा स्वस्थ होकर किसी प्रकार उठा और धीरे-धीरे यमुना के तट पर पहुँच गया। वहाँ मरकतमणि के समान हरी-हरी नवीन एवं कोमल घासों को खाकर कुछ ही दिनों में वह भगवान् शङ्कर के वृषभ की तरह स्थूल, मांसल तथा पुष्ट हो गया। प्रतिदिन वह आसपास में दीमकों द्वारा निर्मित टीलों को (उखाड़ कर) गिराने के बाद इधर-उधर दहाड़ता फिरता था। ठीक ही कहा गया है कि—भाग्य द्वारा संरक्षित वस्तु अरक्षित होने पर भी बची रहती है और सुरक्षित रहने पर भी भाग्य के प्रतिकूल होने पर विनष्ट हो जाती है। वन में अनाथ छोड़ा

हुआ व्यक्ति भाग्य की अनुकूलता से जीता रहता है और कोई भाग्य की प्रतिकूलता से घर में रक्षा के सभी उपायों को करने के बाद भी नष्ट हो जाता है ॥ २० ॥

अथ कदाचित्पिङ्गलको नाम सिंहः सर्वमृगपरिवृतः पिपासाकुल उदकपानार्थं यमुनातटमवतीर्णः सञ्जीवकस्य गम्भीरतररावं दूरादेवाऽश्रृणोत्। तच्छ्रुत्वा अतीव व्याकुलहृदयः ससाध्वसमाकारं प्रच्छाद्य वटतले चतुर्मण्डलावस्थानेनाऽवस्थितः। चतुर्मण्डलावस्थानं त्विदम्–सिंहः, सिंहानुयायिनः, काकरवाः, किंवृत्ताश्चेति।

अथ तस्य करटकदमनकनामानौ द्वौ शृगालौ मन्त्रिपुत्रौ भ्रष्टाधिकारौ सदानुयायिनावास्ताम्। तौ च परस्परं मन्त्रयतः। तत्र दमनकोऽब्रवीत्–"भद्र करटक! अयं तावदस्मत्स्वामी उदकग्रहणार्थं यमुनाकच्छमवतीर्य स्थितः। स किं निमित्तं पिपासाकुलोऽपि निवृत्य व्यूहरचनां विधाय, दौर्मनस्येनाऽभिभूतोऽत्र वटतले स्थितः?"

करटक आह–"भद्र! किमावयोरनेन व्यापारेण? उक्तञ्च यतः–

अव्यापारेषु व्यापारं यो नरः कर्तुमिच्छति।
स एव निधनं याति कीलोत्पाटीव वानरः" ॥ २१ ॥

दमनक आह–कथमेतत्? सोऽब्रवीत्–

व्याख्या–सर्वमृगपरिवृतः=सपरिजनः, पिपासाकुलः=तृष्णापीडितः, गम्भीरतररावम्=अतिगम्भीरं शब्दं, व्याकुलहृदयः=उद्विग्नमनाः, चिन्तितः सन्, ससाध्वसं=सभयम्, आकारं=स्वरूपं, प्रच्छाद्य=आच्छाद्य, चतुर्मण्डलावस्थानेन=चतुर्मण्डलाख्येन व्यूहेन (चत्वारि मण्डलानि यस्मिंस्तच्चतुर्मण्डलम्) अवस्थितः=स्थितः। काकरवाः=भृत्यवर्गः, किंवृत्ताः=गुप्तचराः सीमापालाश्च, भ्रष्टाधिकारौ=पदच्युतौ, अनुयायिनौ=अनुगौ, दौर्मनस्येनाभिवृतः=दुश्चित्तेन ग्रस्तः, अनेन व्यापारेण=व्यर्थजिज्ञासितेन, अव्यापारेषु=अनधिकृतविषयेषु, व्यापारं=चेष्टादिकं, कीलोत्पाटी=शङ्कूत्पाटनपरायणः, निधनं=मरणं, याति=गच्छति ॥ २१ ॥

हिन्दी–किसी दिन पिङ्गलक नाम का एक सिंह अपने अनुयायियों के साथ प्यास से व्याकुल होकर जल पीने के लिये यमुना के किनारे आया। जब उसने सञ्जीवक की गम्भीर दहाड़ को दूर से ही सुना तो भय से व्याकुल होकर अपने स्वरूप को छिपाता हुआ एक वटवृक्ष के नीचे चतुर्मण्डल-व्यूह बनाकर वह बैठ गया। उसके इस चतुर्मण्डल व्यूह में वह सिंह, उसका अनुयायिवर्ग, भृत्यवर्ग और अन्य सेवक सम्मिलित थे। (चतुर्मण्डल व्यूह की प्रथम परिधि में राजा बैठता है। उसके बाद राजा के अनुयायी विश्वस्त मन्त्री तथा सामन्तगण रहते हैं। तदनन्तर तृतीय पंक्ति में राजा के सैनिक रहते हैं और चतुर्थ पंक्ति में गुप्तचर सीमारक्षक तथा शेष भृत्यादिवर्ग रहते हैं।)

उस सिंह के करटक और दमनक नाम के दो मन्त्रिपुत्र थे, जो पदच्युत किये जा चुके थे किन्तु पुनः प्रतिष्ठित होने के लिए राजा का अनुगमन किया करते थे। सिंह को बैठे हुए देखकर उन दोनों ने आपस में परामर्श करना प्रारम्भ कर दिया। उनमें से दमनक ने कहा–"मित्र करटक! हमारा स्वामी यह सिंह जल पीने के लिए यमुना के किनारे आया था। क्या बात है

कि यह प्यास से व्याकुल होते हुए भी यमुना के किनारे से लौट आया है और यहां चतुर्मण्डल व्यूह बनाकर चिन्ताग्रस्त सा बैठा है ?"

यह सुनकर करटक ने कहा—"भद्र ! हमें इन सब बातों से क्या लेना देना है ? क्योंकि कहा भी गया है—जो व्यक्ति विना कार्य के कार्य को करने की इच्छा करता है, वह कील को उखाड़ने वाले वानर की तरह विनाश को प्राप्त हो जाता है ॥ २१ ॥

यह सुनकर दमनक ने पूछा—कैसे ? करटक ने कहा—

[ १ ]

## ( कीलोत्पाटि-वानरकथा )

कस्मिंश्चिन्नगराभ्याशे केनापि वणिक्पुत्रेण तरुषण्डमध्ये देवतायतनं कर्तुमारब्धम् । तत्र च ये कर्मकराः स्थपत्यादयस्ते मध्याह्नवेलायामाहारार्थं नगरमध्ये गच्छन्ति ।

अथ कदाचिदानुषङ्गिकं वानरयूथमितश्चेतश्च परिभ्रमदागतम् । तत्रैकस्य कस्यचिच्छिल्पिनोऽर्धस्फाटितोऽर्जुनवृक्षदारुमयः स्तम्भः खदिरकीलकेन मध्यनिहितेन तिष्ठति । एतस्मिन्नन्तरे ते वानरास्तरुशिखरप्रासादश्रृङ्गदारुपर्यन्तेषु यथेच्छया क्रीडितुमारब्धाः ।

एकश्च तेषां प्रत्यासन्नमृत्युश्चापल्यात्तस्मिन्नर्धस्फोटितस्तम्भे उपविश्य पाणिभ्यां कीलकं संगृह्य यावदुत्पाटयितुमारेभे, तावत्तस्य स्तम्भमध्यगतवृषणस्य स्वस्थानाच्चलितकीलकेन यद्वृत्तं तत्प्रागेव निवेदितम् । अतोऽहं ब्रवीमि "अव्यापारेषु" इति ।

व्याख्या—नगराभ्याशे=नगरसन्निधौ, तरुषण्डमध्ये=वृक्षसमाकुले स्थाने, कानने, देवायतनं=देवमन्दिरं, स्थपत्यादयः=शिल्पिप्रमुखाः, आनुषङ्गिकम्=अकस्माद्यथाकामं, यूथम्=समूहः, आगतम्=आयातम् । अर्धस्फाटितः=अर्धविदारितः, दारुमयः=काष्ठमयः । खदिरकीलकेन=खदिरकाष्ठनिर्मितेन कीलकेन, मध्यनिहितेन=मध्यस्थापितेन, क्रीडितुं=खेलितुं, प्रत्यासन्नमृत्युः=आसन्नमृत्युकालः, चापल्यात्=औत्कण्ठ्यात्, संगृह्य=धृत्वा, यद्वृत्तं=यज्जातं, प्रागेव=पूर्वमेव, निवेदितम्=प्रार्थितम्, कथितमिति भावः ।

हिन्दी—किसी बनिये ने नगर के समीप के एक वन में देवमन्दिर बनवाना प्रारम्भ किया । उसमें कार्य करने वाले मजदूर तथा कारीगर दोपहर के समय भोजन करने के लिये नगर में चले जाया करते थे ।

एक दिन अकस्मात् वानरों का एक झुण्ड इधर-उधर से घूमता हुआ उस वन में आ पहुँचा । उन कारीगरों में से किसी एक ने आधे चीरे हुए अर्जुनवृक्ष के एक खम्भे में बीचों-बीच खैर का एक खूँटा गाड़कर छोड़ दिया था । वानरों ने वहाँ पहुँचकर वृक्षों, मकानों, लकड़ियों एवं खंभों आदि पर स्वच्छन्द खेलना प्रारम्भ कर दिया ।

उन वानरों में से कोई एक मृत्यु के सन्निकट आ जाने के कारण उस आधे चीरे हुए खंभे पर बैठकर अपने दोनों हाथों से उसमें गड़े हुए खदिर के खूँटे को उखाड़ने लगा । उस खूँटे को

पकड़कर हिलाने के कारण उसके निकल जाने से खम्भे के मध्य में लटका हुआ उसका अण्डकोष दब गया। पुनः जो घटना घटी, उसका वर्णन मैं पीछे कर चुका हूँ। अतएव मैं कहता हूँ कि व्यर्थ का कार्य करने के परिणामस्वरूप वानर की सी दशा होती है।

आवयोर्भक्षितशेष आहारोऽस्त्येव, तत्किमनेन व्यापारेण ?" दमनक आह—"भवानाहारार्थी केवलमेव ! तन्न युक्तम्। उक्तं च—

सुहृदामुपकारकारणाद्, द्विषदामप्यपकारकारणात्।
नृपसंश्रय इष्यते बुधैर्जठरं को न बिभर्ति केवलम्॥ २२॥

किञ्च—

यस्मिञ्जीवति जीवन्ति बहवः सोऽत्र जीवतु।
वयांसि किं न कुर्वन्ति चञ्च्वा स्वोदरपूरणम् ?॥ २३॥

तथा च—

यज्जीव्यते क्षणमपि प्रथितं मनुष्यैर्विज्ञानशौर्यविभवार्यगुणैः समेतम्।
तन्नाम जीवितमिह प्रवदन्ति तज्ज्ञाः, काकोऽपि जीवति चिराय बलिञ्च भुङ्क्ते॥२४॥
यो नात्मना न च परेण च बन्धुवर्गे, दीने दयां न कुरुते न च भृत्यवर्गे।
किं तस्य जीवितफलं हि मनुष्यलोके, काकोऽपि जीवति चिराय बलिञ्च भुङ्क्ते॥२५॥

व्याख्या—भक्षितशेषः=भुक्तावशिष्टः, आहारार्थी=भोजनार्थी, न युक्तम्, उपकारकारणात्=उपकाराय, सुहृदाम्=मित्राणाम्, द्विषतां=शत्रूणां, बुधैः=पण्डितैः, नृपसंश्रयः=भूपाश्रयः, नृपसेवा, जठरम्=उदरम्॥२२॥ वयांसि=पक्षिणः, स्वोदरपूरणम्=उदरपूर्तिम्, कुर्वन्ति॥२३॥ विज्ञानैः=शिल्पादिभिः, शौर्यैः=वीरोचितकार्यैः, विभवैः=धनैः, आर्यगुणैः=श्रेष्ठगुणैः, समेतं=युक्तम्, प्रथितं=कीर्तितं, क्षणमपि=मुहूर्त्तमपि, तज्ज्ञाः=जीवनज्ञाः, विद्वांसः, तन्नाम जीवितम्=तदेव जीवनम् इति, प्रवदन्ति=कथयन्ति, चिराय=चिरकालं यावत्, जीवति॥२४॥ आत्मना=स्वात्मना, परेण=अन्येन, दीने=असहाये, जीवितफलं=जीवनस्य फलम्॥२५॥

हिन्दी—"राजा के भोजन से अवशिष्ट भोजन जब हम को मिल ही जाता है तो व्यर्थ के प्रपञ्च में पड़ने क्या लाभ है ?"

करटक के उक्त वचन को सुनकर दमनक ने कहा—"जान पड़ता है कि आप केवल भोजन के लिए ही जीते हैं। यह बात ठीक नहीं है, क्योंकि बुद्धिमान् व्यक्ति मित्रों के उपकारार्थ और शत्रुओं के अपकारार्थ राजा का आश्रय ग्रहण करते हैं। अपने पेट को कौन नहीं भर लेता है, किन्तु जीने का अर्थ पेट भरना मात्र नहीं है॥ २२॥

पक्षी भी अपनी चोंच से पेट को भर लेते हैं। क्या उनका जीवन कोई महत्त्व रखता है ? इस विश्व में उसी व्यक्ति को दीर्घायु होना चाहिये जिसके जीने से अनेक व्यक्तियों का जीवन चलता है॥ २३॥

शिल्पादि कला, शूरता, सम्पत्ति तथा अन्य श्रेष्ठ गुणों से युक्त और समुदाय के लोगों से प्रशंसित होकर क्षणमात्र का जीवन ही विद्वानों द्वारा जीवन की कोटि में गिना जाता है। बिना किसी गुण एवं प्रशंसा के काक भी बहुत दिनों तक जीता है और अपने पेट को भरता रहता है। क्या उसका जीवन जीवन कहा जा सकता है? ॥ २४ ॥

जिस व्यक्ति ने अपने द्वारा या दूसरों के द्वारा स्वजनों का उपकार नहीं किया, दीनों के प्रति दयाभाव नहीं दिखाया और सेवकों के प्रति सहानुभूति का प्रदर्शन नहीं किया, उस व्यक्ति के जीने से इस विश्व को क्या लाभ हुआ? काक की तरह केवल पेट-पालने के लिए जीवित रहना व्यर्थ है ॥ २५ ॥

सुपूरा स्यात्कुनदिका, सुपूरो मूषिकाञ्जलिः।
सुसन्तुष्टः कापुरुषः स्वल्पकेनापि तुष्यति ॥ २६ ॥

किञ्च—

किं तेन ज्ञातु जातेन मातुर्यौवनहारिणा?।
आरोहति न यः स्वस्य वंशस्याऽग्रे ध्वजो यथा ॥ २७ ॥
परिवर्तिनि संसारे मृतः को वा न जायते।
जातस्तु गण्यते सोऽत्र यः स्फुरेच्च श्रियाधिकः ॥ २८ ॥

किञ्च—

जातस्य नदीतीरे तस्यापि तृणस्य जन्मसाफल्यम्।
यत्सलिलमज्जनाकुलजनहस्तालम्बनं भवति ॥ २९ ॥

तथा च—

स्तिमितोन्नतसञ्चारा जनसन्तापहारिणः।
जायन्ते विरला लोके जलदा इव सज्जनाः ॥ ३० ॥
निरतिशयं गरिमाणं तेन जनन्याः स्मरन्ति विद्वांसः।
यत्कमपि वहति गर्भं महतामपि यो गुरुर्भवति ॥ ३१ ॥
अप्रकटीकृतशक्तिः शक्तोऽपि जनस्तिरस्क्रियां लभते।
निवसन्नन्तर्दारुणि लङ्घ्यो वह्निर्न तु ज्वलितः ॥ ३२ ॥

व्याख्या—कुनदिका = क्षुद्रसरित्, सुपूरा = अल्पजलेनैव पूरयितुं योग्या भवति, (सुखेन पूर्यते या सा), कापुरुषः = उद्योगरहितः पुमान्, स्वल्पकेन = अल्पेन, तुष्यति = प्रसीदति (प्रसन्न हो जाता है) ॥ २६ ॥ मातुर्यौवनहारिणा = मातुस्तारुण्यहारिणा, जातेन = पुत्रेण, वंशस्याग्रे = कुलस्याग्रे, करीरस्याग्रे वा, ध्वजः = केतनमिव, न आरोहति ॥ २७ ॥ परिवर्तिनि = परिवर्तनशीले, संसारे = विश्वे, जातः = समुत्पन्नः, श्रियाधिकः = श्रियया अधिकः = सर्वेभ्योऽधिक इत्यर्थः, स्फुरेत् = प्रसिद्धिं गच्छेत् (ख्याति लाभ करे) ॥ २८ ॥ नदीतीरे = नदीतटे, जातस्य = उत्पन्नस्य, जन्मसाफल्यम् = जीवनसाफल्यं भवति, सलिलमज्जनाकुलजनहस्तालम्बनं = सलिले = जले, मज्जनाकुलजनस्य = निमज्जनातुरस्य, हस्तालम्बनं = करालम्बनं भवति ॥ २९ ॥ स्तिमितो-

न्नतसञ्चाराः=स्थिरोन्नतगतयः, (स्तिमितः=दयादाक्षिण्यादिना स्थिरः) जलभरमन्थरो वा (स्थिर या जल के भार से मन्द गमनशील), उन्नतः=समुन्नतः, सञ्चरः=आचारः, गतिर्वा (स्तिमितोन्नतसञ्चाराः, येषां ते), जनसन्तापहारिणः=लोककष्टनिवारकाः, जलदाः=मेघा इव, सज्जनाः=सत्पुरुषा अपि, विरला जायन्ते=विरला एव भवन्तीति भावः ॥ ३० ॥ तेन=तेनैव कारणेन, जनन्याः=मातुः, निरतिशयं=सर्वातिशयं, गरिमाणं=गौरवम्, स्मरन्ति=स्मरणं कुर्वन्ति, कमपि=एकं विशिष्टं, वहति=धारयति, यः=गर्भः, महतामपि=विदुषां, प्रख्यातयशसां वा, गुरुः=शिक्षकः, भवति ॥ ३१ ॥ अप्रकटीकृतशक्तिः=अप्रकटितपराक्रमः, शक्तोऽपि=सबलोऽपि जनः, तिरस्क्रियां=तिरस्कारं, लभते=प्राप्नोति, यतो हि अन्तर्दारुणि=काष्ठमध्ये, निवसन्=स्थितः सन्, वह्निः=अग्निः, लङ्घ्यः=लङ्घयितुं शक्यः, ज्वलितः=प्रज्वलितः, प्रकटितपराक्रमो, न=नहि भवति (उलङ्घन योग्य नहीं होता है) ॥ ३२ ॥

हिन्दी—केवल वर्षा काल में उबलने वाली छोटी-छोटी नदियां जैसे थोड़े ही जल से भर जाती हैं और चूहों की अञ्जलि भी जैसे थोड़े ही खाद्यान्न से भर जाती है, उसी प्रकार उद्योगहीन लघु व्यक्ति भी थोड़े ही धन से सन्तुष्ट हो जाता है और पुनः उद्योग करना छोड़ देता है ॥ २६ ॥

माता की युवावस्था को विनष्ट करनेवाले उस पुत्र से क्या लाभ है ? जिसने केवल कभी जन्ममात्र ग्रहण किया था, पुनः कभी कोई महत्त्व का कार्य नहीं कर सका। अपने कुल रूपी स्तम्भ पर, जो ध्वज की तरह नहीं चढ़ सका, उसका जन्म व्यर्थ ही समझना चाहिये। (जो पुत्र जन्म लेकर यशस्वी एवं पराक्रमी नहीं हुआ, वह केवल माता के सौन्दर्य को विनष्ट करने के लिये ही जन्म ग्रहण करता है) ॥ २७ ॥

परिवर्तनशील इस विश्व में कौन जन्म नहीं लेता है और जन्म लेने के बाद कौन मरता नहीं है ? किन्तु उसी व्यक्ति का जन्म सार्थक माना जाता है, जो अपने पौरुष द्वारा अर्जित सम्पत्ति से विश्व में यश और प्रतिष्ठा प्राप्त करता है) ॥ २८ ॥

नदी के तट पर उत्पन्न होने वाले उस तृण का भी जन्म सफल हो जाता है, जब कि वह जल में डूबते हुए आर्तजन के हाथ को अवलम्बन बनकर उसको डूबने से बचा लेता है ॥ २९ ॥

स्थिर एवं उदार चरित के सज्जन व्यक्ति, जो विश्व के कष्टों को दूर करने का प्रयत्न करते हैं, इस संसार में विरले ही उत्पन्न होते हैं। जैसे—जब के भार से मन्द गमनशील, उन्नत गगन में विचरने वाले और लोककष्ट को दूर करने में समर्थ मेघ कभी-कभी ही आकाश में दिखाई पड़ते हैं ॥ ३० ॥

विद्वान् व्यक्ति माता के सर्वातिशायी गौरव का इसीलिए स्मरण करते हैं कि उसके गर्भ में कभी कोई ऐसा भी पुरुष निवास करता है, जो इस विश्व में जन्म लेकर श्रेष्ठतम व्यक्तियों का भी शिक्षक बनता है। (मातृत्व का गौरव तभी बढ़ता है, जब कि उससे उत्पन्न व्यक्ति लोक पट पर अपने आदर्श चरित की एक छाप डाल देता है) ॥ ३१ ॥

शक्ति के रहते हुए भी जो व्यक्ति उसका उपयोग नहीं करता है और उसको तिरोहित रखने का प्रयत्न करता है, उसी को अपमानित भी होना पड़ता है, क्योंकि काष्ठ के भीतर

रहनेवाली अग्नि का लोग सामान्यतया उल्लङ्घन कर जाते हैं, किन्तु प्रज्वलित अग्नि को उल्लङ्घित करने का साहस कोई भी नहीं करता है ॥ ३२ ॥

करटक आह—"आवां तावदप्रधानौ, तत्किमावयोरनेन व्यापारेण ?

उक्तञ्च—

अपृष्टोऽत्राप्रधानो यो ब्रूते राज्ञः पुरः कुधीः ।
न केवलमसंमानं, लभते च विडम्बनम् ॥ ३३ ॥

तथा च—

वचस्तत्र प्रयोक्तव्यं यत्रोक्तं लभते फलम् ।
स्थायी भवति चात्यन्तं, रागः शुक्लपटे यथा" ॥ ३४ ॥

दमनक आह—"मा मैवं वद !

अप्रधानः प्रधानः स्यात् सेवते यदि पार्थिवम् ।
प्रधानोऽप्यप्रधानः स्याद्यदि सेवाविवर्जितः ॥ ३५ ॥

यत उक्तञ्च—

आसन्नमेव नृपतिर्भजते मनुष्यं, विद्याविहीनमकुलीनमसंस्कृतं च ।
प्रायेण भूमिपतयः प्रमदा लताश्च, यत्पार्श्वतो भवति तत्परिवेष्टयन्ति ॥ ३६ ॥

व्याख्या—अत्र = विश्वे, यः कुधीः = कुमतिः, अप्रधानः = अप्रमुखः अनधिकृतो, राज्यात् पदच्युतो वा, अपृष्टः = अनापृष्टः ब्रूते = वदति, असंमानम् = तिरस्कारं, विडम्बनम् = उपहासमपि, लभते ॥ ३३ ॥ तत्र = स्थाने, प्रयोक्तव्यं = वक्तव्यम्, स्थायी = सार्थकम्, शुक्लपटे = श्वेतवस्त्रे, रागः = वर्णः, यथा स्थायी भवति ॥ ३४ ॥ पार्थिवम् = नृपतिम्, सेवाविवर्जितः = सेवारहितः, प्रधानः = प्रमुखोऽपि, अप्रधानो भवति ॥ ३५ ॥ नृपतिः = भूपतिः, अकुलीनम् = हीनवंशजं पुरुषम्, असंस्कृतम् = असंभ्यम्, आसन्नम् = सन्निकटस्थं, भजते = सेवते सत्करोति वा, प्रमदा = स्त्रियः, लताः = वल्लीः, पार्श्वतो भवति = यः सन्निकटस्थो भवति, परिवेष्टयन्ति = स्नेहभाजनं कुर्वन्ति, समालिङ्गन्ति ॥ ३६ ॥

हिन्दी—दमनक की बात को सुनकर करटक ने कहा—"जब हम दोनों अनधिकारी तथा पदच्युत हैं, तो हमें राजा के विषय में जानने की चेष्टा करने से क्या लाभ है ? यतः, कहा गया है कि—जो मूर्ख, अनधिकारी एवं पदच्युत होते हुए भी राजा के समक्ष कुछ कहता है, वह न केवल अपमानित ही होता है, अपितु उपहास का भी पात्र बनता है ॥ ३३ ॥

और भी—मनुष्य को अपनी वाणी का प्रयोग उसी स्थान पर करना चाहिये जहाँ उसके प्रयोग से कुछ लाभ होता हो, और उसकी वाणी के प्रयोग का कोई स्थायी प्रभाव पड़ता हो । जैसे—श्वेतवस्त्र पर पड़ा हुआ रंग ही अमिट एवं पूर्ण प्रभावकारी होता है, उसी प्रकार उचित स्थान पर प्रयुक्त वाणी ही सार्थक होती है" ॥ ३४ ॥

करटक के उक्त वाक्यों को सुनकर दमनक ने कहा—"नहीं भाई ! यह मत कहो ।

क्योंकि—राजा की सेवा में तत्पर रहने वाला अप्रधान व्यक्ति भी प्रधान बन जाता है और राजा की सेवा से विमुक्त होने पर प्रधान भी अप्रधान हो जाता है" ॥ ३५ ॥

यतः, कहा गया है कि—राजा अपने सन्निकटस्थ व्यक्ति से ही प्रेम करता है, चाहे वह व्यक्ति, मूर्ख, अकुलीन तथा असभ्य ही क्यों न हो। राजाओं का यह स्वभाव होता है कि वे स्त्रियों और लताओं की तरह सन्निकटस्थ व्यक्ति या वस्तु को ही अपना स्नेहभाजन बनाते हैं। (स्त्रियों का यह स्वभाव होता है कि वे सम्पर्क में रहने वाले व्यक्ति को ही अपना प्रेम प्रदान करती हैं चाहे वह कुरूप तथा अकुलीन ही क्यों न हो। लताएँ भी सन्निकटस्थ वस्तु पर ही चढ़ती हैं) ॥ ३६ ॥

तथा च—

कोपप्रसादवस्तूनि ये विचिन्वन्ति सेवकाः।
आरोहन्ति शनैः पश्चाद् धुन्वन्तमपि पार्थिवम् ॥ ३७ ॥
विद्यावतां महेच्छानां शिल्पविक्रमशालिनाम्।
सेवावृत्तिविदां चैव नाश्रयः पार्थिवं विना ॥ ३८ ॥
ये जात्यादिमहोत्साहान्नरेन्द्रान्नोपयान्ति च।
तेषामामरणं भिक्षा प्रायश्चित्तं विनिर्मितम् ॥ ३९ ॥
ये च प्राहुर्दुरात्मानो दुराराध्या महीभुजः।
प्रमादालस्यजाड्यानि ख्यापितानि निजानि तैः ॥ ४० ॥
सर्पान्व्याघ्रान्गजान्सिंहान् दृष्ट्वोपायैर्वशीकृतान्।
राजेति कियती मात्रा धीमतामप्रमादिनाम् ॥ ४१ ॥
राजानमेव संश्रित्य विद्वान्याति परां गतिम्।
विना मलयमन्यत्र चन्दनं न प्ररोहति ॥ ४२ ॥
धवलान्यातपत्राणि वाजिनश्च मनोरमाः।
सदा मत्ताश्च मातङ्गाः प्रसन्ने सति भूपतौ ॥ ४३ ॥"

व्याख्या—कोपप्रसादवस्तूनि=कोपप्रसादोपयोगीनि वस्तूनि (कोपः=क्रोधः, प्रसादः=प्रसन्नता, तयोः विषयभूतानि वस्तूनि), विचिन्वन्ति=ज्ञात्वा व्यवह्रियन्ते, ते, धुन्वन्तमपि=अवमानयन्तमपि, आरोहन्ति=अधिरोहन्ति अनुकूलयन्तीति भावः ॥ ३७ ॥ महेच्छानां=महत्त्वाभिकांक्षिजनानां, शिल्पविक्रमशालिनां=कलावीर्यादियुक्तानां (शिल्पेन, विक्रमेण च शालन्ते=शोभन्ते ये तेषाम्), सेवावृत्तिविदां=सेवावृत्तिकुशलानां, पार्थिवं=राजानं, विना, आश्रयः=अवलम्बः, न=अन्यत्र न भवतीति भावः ॥ ३८ ॥ जात्यादिमहोत्साहात्=स्वकुलजात्यादिगर्वात्, नरेन्द्रान्=भूपेन्द्रान्, नोपयान्ति=नैवोपगच्छन्ति, आमरणम्=आजीवनम्, भिक्षा=दारिद्र्यात्परिभ्रमणं, भिक्षाटनं वा, विनिर्मितम्=विहितमिति ॥ ३९ ॥ महीभुजः=राजानः, दुराराध्याः=कष्टेनाराध्याः, निजानि=स्वकीयानि, प्रमादालस्यजाड्यानि=प्रमादालस्यमौर्ख्यादीनि, ख्यापितानि=प्रदर्शितानि ॥ ४० ॥ उपायैः=साधना-

दिभिः, वशीकरणोपायैः, वशीकृतान् = नियन्त्रितान्, वशमागतान् दृष्ट्वा = विलोक्य, इदं सुस्पष्टमेवेति यत्-अप्रमादिनाम् = सोत्साहानाम्, धीमतां = बुद्धिमतां, कियती मात्रा = वशीकरणं किं नाम महत्कार्यं यत् कर्तुमशक्यमिति भावः ॥ ४१ ॥ संश्रित्य = समाश्रित्य, परां = श्रेष्ठां, मलयं = मलयपर्वतं, विना न प्ररोहति = नोत्पद्यते ॥ ४२ ॥ प्रसन्ने = सन्तुष्टे सति, आतपत्राणि = छत्राणि, ( छत्र-चामर ), वाजिनः = अश्वाः, मातङ्गाः = गजाः, लभ्यन्ते इति भावः ॥ ४३ ॥

हिन्दी—और भी—जो राज-सेवक राजा के कुपित तथा प्रसन्न होने में कारण भूत तत्त्वों को जानकर तदनुसार आचरण करता है वह बाद में अवसर आने पर असन्तुष्ट राजा को वशीभूत कर ही लेता है ॥ ३७ ॥

विद्वान्, महत्त्वाकांक्षी, शिल्पादि कलाओं में निपुण, वीर, तथा कुशल व्यक्तियों के लिये राजा को छोड़कर अन्य आश्रयस्थान नहीं होता है। राजा के अतिरिक्त दूसरा कोई भी व्यक्ति इनका उचित सम्मान नहीं कर सकता है ॥ ३८ ॥

जो व्यक्ति अपने कुल और जाति आदि के अभिमान में पड़कर राजा की सेवा नहीं करते हैं, उनके लिये आजन्म भिक्षाटन करना ही एकमात्र प्रायश्चित होता है। राजा की सेवा के अभाव में उनका जीवन-निर्वाह भी कठिन हो जाता है ॥ ३९ ॥

जिन व्यक्तियों ने यह कहा है कि—राजा को प्रसन्न रखना बहुत कठिन कार्य होता है, उन्होंने प्रमाद, आलस्य एवं मूर्खता आदि अपनी अयोग्यताओं का ही प्रख्यापन किया है ॥४०॥

उपायों द्वारा वशीभूत सर्पों, व्याघ्रों, गजों एवं सिंहों को देखकर यह बात अत्यन्त स्पष्ट हो जाती है कि उत्साही, अध्यवसायी तथा बुद्धिमान् व्यक्तियों के लिये राजा को वशीभूत करना कोई कठिन कार्य नहीं होता है। ( हिंस्र पशुओं को वशीभूत कर लेने वाले बुद्धिमान् व्यक्तियों के लिये मनुष्योचित गुणों से युक्त राजा को अनुकूल कर लेना अत्यन्त सरल कार्य होता है ) ॥ ४१ ॥

राजा का आश्रय प्राप्त करने के अनन्तर ही विद्वान् व्यक्तियों की ख्याति आदि होती है। राजाश्रय के अभाव में उनका उचित विकास नहीं हो पाता है, जैसे—मलय पर्वत के अभाव में चन्दन का विकास नहीं हो पाता ॥ ४२ ॥

राजा को प्रसन्न कर लेने पर श्वेत छत्र, चामर, सुन्दर घोड़े और मत्त हाथी आदि उपभोग्य वस्तुओं का सुख अनायास ही मिलता रहता है" ॥ ४३ ॥

करटक आह—"अथ भवान् किं कर्तुमनाः ?"

सोऽब्रवीत्—"अद्याऽस्मत्स्वामी पिङ्गलको भीतो, भीतपरिवारश्च वर्तते। तदेनं गत्वा भयकारणं विज्ञाय, सन्धिविग्रहयानासनसंश्रयद्वैधीभावानामेकतमेन संविधास्ये।"

करटक आह—"अथ कथं वेत्ति भवान्, यद्भयाविष्टोऽयं स्वामी ?"

सोऽब्रवीत्—"ज्ञेयं किमत्र ? यत उक्तञ्च—

उदीरितोऽर्थः पशुनाऽपि गृह्यते, हयाश्च नागाश्च वहन्ति चोदिताः।
अनुक्तमप्यूहति पण्डितो जनः, परेङ्गितज्ञानफला हि बुद्धयः ॥ ४४ ॥

है ? इधर कुछ क्षीण जैसे लग रहे हैं ? सकुशल हैं ? आपके इस दर्शन से मुझे बड़ी प्रसन्नता हुई है'। स्मार्तग्रन्थों में गृहस्थों के लिये यह स्वर्ग को देनेवाला एवं सबसे लघुधर्म कहा गया है ॥ २७६ ॥

अपरं, मयाऽनेकमानुषाणामनेकविधानि रुधिराण्यास्वादितान्याहारदोषात् कटुतिक्तकषायाऽम्लरसास्वादानि। न च मया कदाचिन्मधुररक्तं समास्वादितम्। तद्यदि त्वं प्रसादं करोषि, तदस्य नृपतेर्विविधव्यञ्जनान्नपानचोष्यलेह्यस्वाद्वाहारवशाच्छरीरे यन्मिष्टं रक्तं सञ्जातं, तदास्वादनेन सौख्यं संपादयामि जिह्वायाः" इति। उक्तञ्च—

रङ्कस्य नृपतेर्वापि जिह्वासौख्यं समं स्मृतम्।
तन्मात्रं च स्मृतं सारं यदर्थं यतते नरः॥ २७७ ॥
यद्येवं न भवेल्लोके कर्म जिह्वाप्रतुष्टिदम्।
तदा भृत्यो भवेत् कश्चित्कस्यचिद्वशगोऽथवा॥ २७८ ॥
यदसत्यं वदेन्मर्त्यो यद्वाऽसेव्यं च सेवते।
यद् गच्छति विदेशं च तत्सर्वमुदरार्थतः॥ २७९ ॥

तन्मया गृहागतेन बुभुक्षया पीड्यमानेन त्वत्सकाशाद्भोजनमर्थनीयम्, तत्र त्वयैकाकिन्याऽस्य भूपते रक्तभोजनं कर्तुं युज्यते।"

व्याख्या—रङ्कस्य = दरिद्रस्य, जिह्वासौख्यं = जिह्वायाः पदार्थभोगेच्छा, समं = तुल्यं, तन्मात्रं = जिह्वासौख्यमात्रम्, सारं = तत्त्वं, यतते = प्रयतते ॥ २७७ ॥ जिह्वाप्रतुष्टिदं = जिह्वासौख्यप्रदं, कर्म, लोके न स्यात् तदा कोऽपि कस्यापि वशगो न भवेत् ॥ २७८ ॥ मर्त्यः = मनुष्यः, असत्यं = मिथ्याभाषणादिकं करोति, असेव्यम् = असेवनीयं च, सेवते, विदेशं वा गच्छति, सर्वम् उदरार्थतः करोति ॥ २७९ ॥ अर्थनीयं = प्रार्थनीयम्।

हिन्दी—इसके अतिरिक्त एक बात यह भी है कि—मैंने अनेक प्रकार के मनुष्यों के विविध स्वादवाले रक्तों का आस्वादन किया है। किन्तु वे सभी तत्तत्पुरुषों के आहारदोष के कारण कटु, तिक्त, कषाय एवं अम्ल ( खट्टे ) थे। आजतक मैंने कभी भी मीठे खून का आस्वादन नहीं किया है। यदि तुम कृपा करो तो विविधप्रकार के व्यञ्जनों, अन्नों, पेयपदार्थों और चूसकर तथा चाटकर खाने योग्य वस्तुओं आदि सुस्वादु पदार्थों को खाने से इस राजा के शरीर में जो मधुर रक्त उत्पन्न हुआ है, उसको खाकर अपनी जिह्वा की तृप्ति कर लूँ। कहा भी गया है कि—

जिह्वा के स्वाद का आनन्द लेना राजा और रङ्क दोनों के लिये समान होता है। दोनों की इच्छायें समान होती हैं। इस विश्व में जिह्वा का स्वादमात्र ही सार भी होता है। मनुष्य अपना सम्पूर्ण उद्योग इसी के लिये करता है ॥ २७७ ॥

यदि, जिह्वा को सन्तुष्ट करने वाला कार्य इस संसार में ऐसा ( सारभूत ) नहीं होता तो न कोई किसी की दासता करता और न किसी के वशीभूत ही होता ॥ २७८ ॥

मनुष्य यदि असत्य बोलता है, असेव्य की सेवा करता है अथवा विदेश गमन करता है, तो केवल पेट के लिये। पेट के लिये ही मनुष्य को सारा प्रपञ्च करना पड़ता है ॥ २७९ ॥

अतः, जब कि मैं अभ्यागत के रूप में तुम्हारे यहाँ आकर तुमसे भोजन माँग रहा हूँ, उस समय एकाकी राजा के रक्त का आस्वादन करना तुम्हारे लिये उचित नहीं है।"

तच्छ्रुत्वा मन्दविसर्पिण्याह—"भो मत्कुण! अहमस्य नृपतेर्निद्रावशं गतस्य रक्तमास्वादयामि। पुनस्त्वमग्निमुखश्चपलश्च। तद्यदि मया सह रक्तपानं करोषि तत्तिष्ठ, अभीष्टतरं रक्तमास्वादय।"

सोऽब्रवीत्—"भगवति! एवं करिष्यामि। यावत्त्वं नास्वादयसि प्रथमं नृपरक्तं, तावन्मम देवगुरुकृतः शपथः स्यात् यदि तदास्वादयामि।"

एवं तयोः परस्परं वदतोः, स राजा तच्छयनमासाद्य प्रसुप्तः। अथाऽसौ मत्कुणो जिह्वालौल्यप्रकृष्टौत्सुक्याज्जाग्रतमपि तं महीपतिमदशत्। अथवा साध्विदमुच्यते—

स्वभावो नोपदेशेन शक्यते कर्तुमन्यथा।
सुतप्तमपि पानीयं पुनर्गच्छति शीतताम्॥ २८०॥

यदि स्याच्छीतलो वह्निः शीतांशुर्दहनात्मकः।
न स्वभावोऽत्र मर्त्यानां शक्यते कर्तुमन्यथा॥ २८१॥

व्याख्या—अभीष्टतरं = यथाभिलषितं, देवगुरुकृतः = देवकृतो गुरुकृतश्च। जिह्वालौल्यात् = जिह्वाचापल्यात्, प्रकृष्टौत्सुक्यात् = अत्यौत्कण्ठयात्, उपदेशेन = उपदेशवाक्येन, स्वभावः = व्यक्तेः स्वाभाविको गुणः, अन्यथाकर्तुं = परिवर्तयितुं, न शक्यते। यतः सुतप्तं, पानीयं = जलं, स्वभावदोषात् पुनः शीतलतां प्रयाति॥ २८०॥ वह्निः = अग्निः, शीतांशुः = चन्द्रः (शीतरश्मिः), दहनात्मकः = प्रदाहवान्, स्यात्तथापि मर्त्यानां = मनुष्याणां, स्वभावो न शक्यतेऽन्यथाकर्तुमिति॥ २८१॥

हिन्दी—मत्कुण के आग्रह को सुनकर मन्दविसर्पिणी ने कहा—"अरे मत्कुण! मैं तो राजा के सो जाने पर उसके रक्त का आस्वादन करती हूँ। तुम तो अग्निमुख हो और साथ ही चपल भी हो। यदि तुमको भी मेरे साथ ही रक्तपान करना हो, तब तो ठहरो और मनोभिलषित रक्त का आस्वादन करो।"

उसने कहा—"देवि! ऐसा ही करूँगा। जबतक तुम पहले उनके रक्त का आस्वादन नहीं कर लोगी तबतक, मुझे गुरु और देवों का शपथ है, मैं उनका रक्त ग्रहण नहीं करूँगा"।

इसप्रकार, अभी दोनों के मध्य में वार्ता चल ही रही थी कि राजा शयनकक्ष में आकर सो गया।

जिह्वाचापल्य और अत्यधिक उत्कण्ठा के कारण वह मत्कुण अपने को अधिक देर तक रोक नहीं सका और जाकर जागते हुये राजा को ही उसने काट दिया। अथवा ठीक ही कहा गया है कि—

किसी के स्वभाव को उपदेश के द्वारा बदला नहीं जा सकता है। जल को चाहे जितना भी खौला दिया जाय, आग से उतारने के बाद वह ठण्डा हो ही जाता है॥ २८०॥

यदि अग्नि शीतल हो जाय और चन्द्रमा तप उठे (प्रकृति विपरीत हो जाय) तब भी इस विश्व में मनुष्यों के स्वभाव को बदलना संभव नहीं हो सकता है॥ २८१ ॥

अथासौ महीपतिः सूच्यग्रविद्ध इव तच्छयनं त्यक्त्वा तत्क्षणादेवोत्थितः, प्राह च—"अहो, ज्ञायतामत्र प्रच्छादनपटे मत्कुणो यूका वा नूनं तिष्ठति, येनाहं दष्टः" इति।

अथ ये कञ्चुकिनस्तत्र स्थितास्ते सत्वरं प्रच्छादनपटं गृहीत्वा सूक्ष्मदृष्ट्या वीक्षाञ्चक्रुः। अत्रान्तरे स मत्कुणश्चापल्यात्खट्वान्तं प्रविष्टः। सा मन्दविसर्पिण्यपि वस्त्रसन्ध्यन्तर्गता तैर्दृष्टा, व्यापादिता च। अतोऽहं ब्रवीमि—"न ह्यविज्ञातशीलस्य"—इति।

एवं ज्ञात्वा त्वयैष वध्यः नो चेत्त्वां व्यापादयिष्यति। उक्तञ्च—

त्यक्ताश्चाभ्यन्तरा येन बाह्याश्चाभ्यन्तरीकृताः।
स एव मृत्युमाप्नोति मूर्खश्चण्डरवो यथा" ॥ २८२ ॥

पिङ्गलक आह—"कथमेतत्"? सोऽब्रवीत्—

व्याख्या—सूच्यग्रविद्धः=सूच्यग्रभागेन विद्धः (सूई का नोक चुभाने के समान), प्रच्छादनपटे=शयनाच्छादनपटे (चद्दर में), वीक्षां चक्रुः=निरीक्षितवन्तः, वध्यः=हन्तव्यः। येन, आभ्यन्तराः=आत्मीयाः, अन्तरङ्गाः, बाह्याः=अविश्वस्ताः, बहिःस्थाः, आभ्यन्तरीकृताः=आप्तस्थाने नियोजिताः, स एव मृत्युमाप्नोति=प्राप्नोति॥ २८२ ॥

हिन्दी—सूई का नोंक गड़ने के समान खटमल का दंश होते ही राजा शयन को छोड़कर उठ गया और बोला—"देखो तो, चद्दर में मत्कुण या यूका है, जिसने मुझे अभी काटा है।"

राजा की आज्ञा को सुनते ही जो कञ्चुकी वहाँ उपस्थित थे वे तत्काल उस चद्दर को लेकर उसको सूक्ष्म दृष्टि से देखने लगे। इसी बीच में अवसर पाकर वह खटमल अपनी चञ्चलता के कारण चारपाई के भीतर चला गया। किन्तु कपड़े की सन्धि में बैठी हुई उस मन्दविसर्पिणी को कञ्चुकियों ने देख लिया और वह मार डाली गयी।"

उक्त कहानी को कहने के बाद दमनक ने सिंह से कहा—"इसीलिये मैं कहता हूँ कि—जिस व्यक्ति के स्वभाव की जानकारी न हो, उसे आश्रय नहीं देना चाहिये।" कहा भी गया है कि—

जो व्यक्ति अन्तरङ्गजनों को छोड़ देता है और अन्य बाहरी जनों को अन्तरङ्ग बनाकर अधिकार सम्पन्न कर देता है, वह मूर्ख चण्डरव की तरह कष्टकर मृत्यु को प्राप्त होता है॥ २८२ ॥

पिङ्गलक ने पूछा—"कैसे"? उसने उत्तर दिया—

[ १० ]

## ( चण्डरवशृगालकथा )

कस्मिंश्चिद्वनप्रदेशे चण्डरवो नाम शृगालः प्रतिवसति स्म। स कदाचित्क्षुधाविष्टो जिह्वालौल्यान्नगरान्तरे प्रविष्टः। अथ तं नगरवासिनः सारमेया अवलोक्य सर्वतः

शब्दायमानाः परिधाव्य तीक्ष्णदंष्ट्राग्रैर्भक्षितुमारब्धाः। सोऽपि तैर्भक्ष्यमाणः प्राणभयात् प्रत्यासन्नं रजकगृहं प्रविष्टः। तत्र च नीलीरसपरिपूर्णं महाभाण्डं सज्जीकृतमासीत्। तत्र सारमेयैराक्रान्तो भाण्डमध्ये पतितः।

अथ यावन्निष्क्रान्तस्तावन्नीलवर्णः सञ्जातः। तत्रापरे सारमेयास्तं शृगालमजानन्तो यथाभीष्टां दिशं जग्मुः। चण्डरवोऽपि दूरतरं प्रदेशमासाद्य काननाभिमुखं प्रतस्थे। न च नीलवर्णेन कदाचिन्निजरङ्गस्त्यज्यते। उक्तञ्च—

वज्रलेपस्य मूर्खस्य नारीणां कर्कटस्य च।
एको ग्रहस्तु मीनानां नीलीमद्यपयोरपि॥ २८३॥

व्याख्या—क्षुधाविष्टः=बुभुक्षितः, जिह्वालौल्यात्=जिह्वाचापल्यात्, नगरान्तरं=नगरमध्ये, सारमेयाः=श्वानः, परिधाव्य=अनुधावन्तः, प्रत्यासन्नं=निकटस्थं, महाभाण्डं=बृहद्भाण्डमेकम्, निष्क्रान्तः=बहिर्निर्गतः, काननाभिमुखं=वनाऽभिमुखं, प्रतस्थे=प्रचलितः। वज्रलेपस्य=लेपविशेषस्य, एको ग्रहः=एकग्रहत्वं सुप्रसिद्धमेवेति, यद् गृह्णन्ति न पुनस्त्यजन्ति॥ २८३॥

हिन्दी—किसी वन में चण्डरव नाम का एक शृगाल रहता था। एक दिन भूख से व्याकुल होकर लोभ के कारण वह किसी नगर के बीच में चला गया। उसको देखते ही नगरवासी कुत्तों ने भोंकते हुये उसे चारों ओर से दौड़ाकर अपने तेज दाँतों से उसको काटना प्रारम्भ कर दिया। उनके द्वारा काटे जाने के कारण वह अपना प्राण बचाने के उद्देश्य से किसी रजक के निकटस्थ गृह में घुस गया। वहाँपर नील से सुसज्जित एक बहुत बड़ा भाण्ड (कुण्डा) रखा हुआ था। कुत्तों के द्वारा आक्रान्त होने के कारण वह शृगाल उस भाण्ड में कूद पड़ा।

उसमें से जब वह बाहर निकला तो नीला हो गया था। उसे नीलवर्ण का देखकर कुत्तों ने समझा कि यह शृगाल नहीं है, अतः वे वहाँ से चले गये। चण्डरव भी वहाँ से बेतहासा भागता हुआ जब कुछ दूर निकल गया तब कुछ शान्त हुआ और जङ्गल की ओर चल दिया। नील अपना रङ्ग तो कभी छोड़ता नहीं है। कहा भी गया है कि—

वज्रलेप (एक प्रकार का लेप जिसे देशी सीमेंट कहते हैं और प्राचीन इमारतों पर जिसका लेप आज भी मिलता है), मूर्ख, स्त्री, कर्कट, मीन, नील तथा मद्यप का ग्रह (पकड़) समान और एक होता है। वे जिस वस्तु को पकड़ लेते हैं उसको छोड़ते नहीं, और यदि बलात् छुड़ाया जाय तो मर ही जाते हैं॥ २८३॥

अथ तं हरगलगरलतमालसमप्रभमपूर्वं सत्त्वमवलोक्य, सर्वे सिंहव्याघ्रद्वीपिवृकवानरप्रभृतयोऽरण्यनिवासिनो भयव्याकुलचित्ताः समन्तात्पलायनक्रियां कुर्वन्ति।

कथयन्ति च—"न ज्ञायतेऽस्य कीदृग् विचेष्टितं, पौरुषं च। तद् दूरतरं गच्छामः। उक्तञ्च—

न यस्य चेष्टितं विद्यान्न कुलं न पराक्रमम्।
न तस्य विश्वसेत्प्राज्ञो यदीच्छेच्छ्रियमात्मनः"॥ २८४॥

चण्डरवोऽपि तान्भयव्याकुलितान्विज्ञायेदमाह—"भो भोः श्वापदाः! किं यूयं मां दृष्ट्वैव सन्त्रस्ता व्रजथ? तन्न भेतव्यम्। अहं ब्रह्मणाऽद्य स्वयमेव सृष्ट्वाऽभिहितः—यच्छ्वापदानां मध्ये कश्चिद्राजा नास्ति। त्वं मयाद्य सर्वश्वापदप्रभुत्वेऽभिषिक्तः ककुद्द्रुमाभिधः, ततो गत्वा क्षितितले तान् सर्वान् परिपालय" इति। ततोऽहमत्रागतः। तन्मम छत्रच्छायायां सर्वैरेव श्वापदैर्वर्तितव्यम्। अहं ककुद्द्रुमो नाम राजा त्रैलोक्येऽपि सञ्जातः।"

तच्छ्रुत्वा सिंहव्याघ्रपुरःसराः श्वापदाः—"स्वामिन्! प्रभो! समादिश" इति वदन्तस्तं परिवव्रुः। अथ तेन सिंहस्याऽमात्यपदवी प्रदत्ता। व्याघ्रस्य शय्यापालकत्वम्। द्वीपिनस्ताम्बूलाधिकारः। वृकस्य द्वारपालकत्वम्। ये ये चात्मीयाः शृगालास्तैः सहालापमात्रमपि न करोति। शृगालाः सर्वेऽप्यर्धचन्द्रं दत्त्वा निःसारिताः। एवं तस्य राज्यक्रियायां वर्तमानस्य ते सिंहादयो मृगान् व्यापाद्य तत्पुरतः प्रक्षिपन्ति। सोऽपि प्रभुधर्मेण सर्वेषां तान् प्रविभज्य प्रयच्छति।

व्याख्या—हरगलगरलप्रभं = शिवकण्ठस्थगरलसदृशं, तमालपत्रोपमं च, सत्त्वं = जीवं, भयव्याकुलचित्ताः = भयत्रस्ताः, विचेष्टितं = कृत्यं स्वभावश्च, पौरुषं = बलं, श्वापदाः = सिंहादयो मृगाः, सन्त्रस्ताः = भयभीताः, अभिहितः = आज्ञप्तः, श्वापदप्रभुत्वे = श्वापदराज्ये, आलापमात्रं = वार्ताप्रसङ्गमपि, राज्यक्रियायां = राज्यसञ्चालनव्यवस्थायां, मृगान् = वन्यजीवान्, प्रविभज्य = भागादिकं विधाय, प्रयच्छति = ददाति।

हिन्दी—शिवकण्ठस्थ गरल के समान एवं तमालपत्रोपम उस अपूर्व सत्त्व को देखते ही सिंह, व्याघ्र, द्वीपी (चीता), वृक (भेड़िया), वानर आदि अरण्य के निवासी जीव भयभीत होकर भाग जाया करते थे और आपस में यह कहा करते थे कि "हम लोगों को इसके स्वभाव का पता नहीं है और इसकी शक्ति का भी ज्ञान नहीं है, इसीलिये हम लोग इससे दूर रहें। कहा भी गया है कि—

जो व्यक्ति अपनी सम्पत्ति और अपने संमान को सुरक्षित रखना चाहता हो उसे—जिसके स्वभाव की जानकारी न हो, जिसके कुलका ज्ञान न हो और जिसकी शक्ति का भी ज्ञान न हो, उस व्यक्ति पर कभी भी विश्वास नहीं करना चाहिये॥ २८४॥

चण्डरव ने उन वन्यप्राणियों को भय से व्याकुल देखकर उन्हें सम्बोधित करते हुए कहा—"भो श्वापदों! क्यों तुम लोग मुझे देखने मात्र से भयभीत होकर भाग रहे हो? डरने की कोई बात नहीं है। प्रजापति ने आज मुझे बनाकर स्वयं आदेश दिया है कि श्वापदों का कोई राजा नहीं है। अतः मैंने आज श्वापद-राज्य पर तुम्हारा अभिषेक किया है। तुम्हारा नाम ककुद्द्रुम होगा। तुम पृथ्वीपर जाकर समस्त श्वापदों की रक्षा करो। प्रजापति के इस आदेश से ही मैं यहाँ आया हूँ। अतः तुम सभी लोग मेरी छत्रछाया में रहकर आनन्द लो। मैं महाराज ककुद्द्रुम के नाम से तीनों लोकों में पशुओं का राजा विख्यात हो चुका हूँ"।

उसकी बात को सुनकर सिंह, व्याघ्र आदि प्रमुख श्वापदों ने—"स्वामिन्! प्रभो! आज्ञा दीजिये।" इसप्रकार विनीत वाक्यों का प्रयोग करते हुए उसे चारों ओर से घेर लिया।

सिंह को उसने अपना मन्त्री बनाया, व्याघ्र को शय्यापालक बनाया, चीते को ताम्बूल-वाहक का पद दिया, भेड़िये को द्वारपाल नियुक्त किया। जो स्वजातीय तथा आत्मीय वर्ग के लोग थे उनसे वह बात भी नहीं करता था। उसने शृगालों को तो गले में हाथ लगाकर राज्य से बाहर कर देने का आदेश दे दिया था और वे निकाल भी दिये गये थे। इसप्रकार, इसके राज्यसञ्चालन में सिंह आदि शिकारी जानवर वन्यपशुओं को मारकर उसके सामने ले आकर रखा करते थे और वह राजा की हैसियत से (राजा के कर्तव्यानुसार) उसे बाँटकर सबको दिया करता था।

एवं गच्छति काले कदाचित्तेन सभागतेन दूरदेशे शब्दायमानस्य शृगालवृन्दस्य कोलाहलोऽश्रावि। तं शब्दं श्रुत्वा पुलकिततनुरानन्दाश्रुपरिपूर्णनयन उत्थाय, तारस्वरेण विरोतुमारब्धवान्।

अथ ते सिंहादयस्तं तारस्वरमाकर्ण्य "शृगालोऽयमि"ति मत्वा सलज्जमधोमुखाः क्षणमेकं स्थित्वा मिथः प्रोचुः—"भोः, वाहिता वयमनेन क्षुद्रशृगालेन, तद्वध्यताम्" इति।

सोऽपि तदाकर्ण्य पलायितुमिच्छँस्तत्र स्थाने सिंहादिभिः खण्डशः कृतो, मृतश्च। अतोऽहं ब्रवीमि "त्यक्ताश्चाभ्यन्तरा येन—" इति।

तदाकर्ण्य पिङ्गलक आह—"भो दमनक! कः प्रत्ययोऽत्र विषये यत्स ममोपरि दुष्टबुद्धिरिति?"

स आह—"यदद्य ममाग्रे तेन निश्चयः कृतो यत्प्रभाते पिङ्गलकं वधिष्यामि। तदत्रैष प्रत्ययः, प्रभातेऽवसरवेलायामारक्तमुखनयनः स्फुरिताधरो दिशोऽवलोकयन्ननुचितस्थानोपविष्टस्त्वां क्रूरदृष्ट्या विलोकयिष्यति। एवं ज्ञात्वा यदुचितं तत्कर्तव्यम्।" इति कथयित्वा सञ्जीवकसकाशं गतस्तं प्रणम्योपविष्टः।

व्याख्या—सभागतेन = सभामध्यस्थितेन, कोलाहलः = शब्दः, पुलकिततनुः = रोमाञ्चित-शरीरः, आनन्दाश्रुपरिपूर्णनयनः = हर्षाश्रुपूर्णनेत्रः, तारस्वरेण = तीव्रस्वरेण, विरोतुं = शब्दं कर्तुं, मत्वा = विनिश्चित्य, वाहिताः = प्रवञ्चिताः, प्रत्ययः = विश्वासार्थं प्रमाणम्, अवसरवेलायां = राजदर्शनोचिते समये, आरक्तमुखनयनः = क्रोधारुणमुखनयनः, स्फुरिताधरः = प्रकम्पितोष्ठः, दिशोऽवलोकयन् = इतस्ततोऽवलोकयन्।

हिन्दी—इसप्रकार शृगाल को राज्य करते जब कुछ दिन बीत गये, तो किसी दिन सभा के मध्य में बैठे हुए उसने दूर पर कुछ शृगालों के द्वारा किये जाने वाले "हुआँ हुआँ" शब्द को सुना। उस शब्द को सुनते ही वह पुलकित हो उठा और उसके नेत्र हर्षाश्रु से डबडबा उठे। वह तत्काल उठकर खड़ा हो गया और जोर से "हुआँ-हुआँ" करने लगा।

सिंह आदि उसके निकटवर्ती पशुओं ने जब उसके उक्त शब्द को सुना तो वे तत्काल

समझ गये कि "यह शृगाल है"। उसको शृगाल समझकर वे बहुत लज्जित हुए और कुछ देर तक नीचे मुख करके शान्त खड़े रहने के बाद उन सबों ने आपस में यह कहा—"अरे! अबतक हम लोग इस तुच्छ शृगाल की प्रवञ्चना में पड़े रहे, अब इसको मार डालना चाहिये।"

उनकी उपर्युक्त बात को सुनकर वह भागना ही चाहता था कि सिंह आदि पशुओं ने घेरकर उसको उसी स्थानपर मार डाला और उसके शरीर के टुकड़े-टुकड़े कर दिये।" दमनक ने उक्त कथा को समाप्त करने के बाद कहा—"इसीलिए मैं कहता हूँ कि जो आत्मीय जनों को छोड़कर दूसरे बाहरी जनों को आत्मीय बनाता है उसकी बड़ी दुःखद मृत्यु होती है।"

उसकी बात को सुनकर पिङ्गलक ने कहा—"दमनक! आखिर इसमें प्रमाण क्या है कि वह मुझपर दुष्ट बुद्धि रखता है?"

उसने कहा—"उसने जो आज मेरे सामने यह निश्चय किया है कि 'कल प्रातःकाल होते ही मैं पिङ्गलक को मार डालूँगा।' यही सबसे बड़ा प्रमाण है कि—कल प्रातःकाल श्रीमान् के दर्शनकाल में वह क्रोध से लालमुख और नेत्र करके अपने अधरों को फड़फड़ाता हुआ अपने चारों ओर (इधर-उधर) दृष्टि फैलाते हुए अनुचित स्थान में बैठकर श्रीमान् को क्रूर दृष्टि से देखेगा। उसके उक्त चिह्न को देखकर आप समझ लीजियेगा कि वह आपके प्रति विद्रोह-भाव रखता है। पुनः जैसा आपको उचित प्रतीत होगा कीजियेगा।" यह कहकर वह (दमनक) वहाँ से उठ गया और सञ्जीवक के यहाँ जा पहुँचा। वहाँ पहुँचकर सञ्जीवक को प्रणाम करने के बाद वह शान्त बैठ गया।

सञ्जीवकोऽपि सोद्वेगाकारं मन्दगत्या समायान्तं तमुद्वीक्ष्य सादरतरमुवाच—"भो मित्र! स्वागतम्। चिराद् दृष्टोऽसि। अपि शिवं भवतः? तत्कथय येनादेयमपि तुभ्यं गृहागताय प्रयच्छामि। उक्तञ्च—

ते धन्यास्ते विवेकज्ञास्ते सभ्या इह भूतले।
आगच्छन्ति गृहे येषां कार्यार्थं सुहृदो जनाः" ॥ २८५ ॥

दमनक आह—"भोः! कथं शिवं सेवकजनस्य?

सम्पत्तयः परायत्ताः सदा चित्तमनिर्वृतम्।
स्वजीवितेऽप्यविश्वासस्तेषां ये राजसेवकाः ॥ २८६ ॥

तथा च—

सेवया धनमिच्छद्भिः सेवकैः पश्य यत्कृतम्।
स्वातन्त्र्यं यच्छरीरस्य मूढैस्तदपि हारितम् ॥ २८७ ॥
तावज्जन्मापि दुःखाय ततो दुर्गतता सदा।
तत्रापि सेवया वृत्तिरहो! दुःखपरम्परा ॥ २८८ ॥

व्याख्या—सोद्वेगाकारं = सोद्वेगं, व्याकुलचित्तं, तमुद्वीक्ष्य = दमनकं दृष्ट्वा, अदेयमपि = दातुमशक्यमपि, गृहागताय = अभ्यर्थिनेऽभ्यागताय, विवेकज्ञाः = सदसद्विवेकशीलाः, सभ्याः = सज्जनाः, येषां गृहे, सुहृदः = मित्राणि, आगच्छन्ति ॥ २८५ ॥ येषां हि सम्पत्तयः = सम्पदः,

परायत्ताः=पराधीनाः, चित्तं=मनः, अनिर्वृत्तम्=अशान्तम्, क्लेशयुक्तमेवेति भावः, स्वजीविते=स्वजीवनेऽपि, पराधीनत्वादविश्वासः=अप्रत्यय एव तेषां हृदि भवति ॥ २८६ ॥ धनमिच्छद्भिः सेवकैः=भृत्यैः, सेवया यत्कृतं तत्पश्य, यत् मूढैः=मूर्खैः, तैः स्वशरीरस्य स्वातन्त्र्यमपि हारितम् ॥ २८७ ॥ मनुष्यस्य तावज्जन्म एव दुःखाय भवति, ततश्च दुर्गतता=दरिद्रता, पुनश्च तस्य सेवया वृत्तिः, अहो, दुःखपरम्परा एव तेषां भवति ॥ २८८ ॥

हिन्दी—सञ्जीवक ने उसको ( दमनक को ) उद्विग्न एवं मन्दगति से आते हुये देखकर अत्यन्त नम्रभाव से कहा—"आओ मित्र! तुम्हारा स्वागत है। बहुत दिनों के बाद दिखाई पड़े। सकुशल हो? कहो, क्या आदेश है कौन ऐसी वस्तु है जिसके अदेय होने पर भी उसे मैं अपना अतिथि होने के कारण तुम्हें दे सकता हूँ? कहा भी गया है कि—इस संसार में वे ही पुरुष धन्य होते हैं तथा वे ही विवेकी और सज्जन भी कहे जाते हैं, जिनके यहाँ कार्यार्थी के रूप में सुहृद्गण आया करते हैं" ॥ २८५ ॥

दमनक बोला—"सेवकजन की कुशलता होती ही कहाँ है? राजसेवकों की सम्पत्ति दूसरों के ( राजा के ) आधीन होती है, चित्त सदा अशान्त बना रहता है और अपने जीवन के प्रति भी उन्हें सन्देह ही बना रहता है ॥ २८६ ॥

और भी—सेवा से धन कमाने की इच्छा रखने वाले सेवकों ने सेवा से जो लाभ उठाया है, उसे यदि कहा जाय तो यही कहना पड़ेगा कि उन मूर्खों ने अपनी शारीरिक स्वतन्त्रता को भी दूसरों के हाथ में बेच डाला है ॥ २८७ ॥

एक तो मनुष्य का जन्म ही कष्ट से भरा हुआ होता है, दूसरे यदि आजन्म दरिद्रता ही बनी रही तो जीवन और अधिक कष्टकारक हो जाता है। और अभाग्य से कहीं दूसरे की दासता करके जीवन-निर्वाह करना पड़ा तो समझो कि कष्ट का अन्त ही हो गया। इस प्रकार सेवकों के जीवन में तो कष्ट की परम्परा सी ही बनी रहती है ॥ २८८ ॥

जीवन्तोऽपि मृताः पञ्च व्यासेन परिकीर्तिताः।
दरिद्रो, व्याधितो, मूर्खः, प्रवासी, नित्यसेवकः ॥ २८९ ॥
नाश्नाति स्वेच्छयौत्सुक्याद्विनिद्रो न प्रबुध्यते।
न निःशङ्कं वचो ब्रूते सेवकोऽप्यत्र जीवति? ॥ २९० ॥
सेवा श्ववृत्तिराख्याता यैस्तैर्मिथ्या प्रजल्पितम्।
स्वच्छन्दं चरति श्वाऽत्र सेवकः परशासनात् ॥ २९१ ॥
भूशय्या ब्रह्मचर्यञ्च कृशत्वं लघुभोजनम्।
सेवकस्य यतेर्यद्वद्विशेषः पापधर्मजः ॥ २९२ ॥
शीतातपादिकष्टानि सहते यानि सेवकः।
धनाय तानि चाल्पानि यदि धर्माय मुच्यते ॥ २९३ ॥
मृदुनापि सुवृत्तेन सुमिष्टेनापि हारिणा।
मोदकेनापि किं तेन निष्पत्तिर्यस्य सेवया ॥ २९४ ॥

**व्याख्या**—व्याधितः=रोगवान्, प्रवासी=विदेशगः, नित्यसेवकः=नित्यं सेवा-परायणश्च ॥ २८९ ॥ यः, स्वेच्छया=निजेच्छया, औत्सुक्यात्=औत्कण्ठ्याद्वा नाश्नाति=न खादति, विनिद्रः=विगतनिद्रश्च, न प्रबुध्यते=न जागर्ति, निःशङ्कं वचो न ब्रूते सोऽप्यत्र जीवति, अहो, आश्चर्यमेतत् ॥ २९० ॥ श्ववृत्तिः=कुक्कुरवृत्तिः, यैः=शास्त्रज्ञैः, उक्तं तैः=मन्वादिभिः, मिथ्या=असत्यं, प्रजल्पितं=कथितं, यतो हि श्वा=कुक्कुरः, स्वच्छन्दं चरति, सेवकश्च परशासनात्=परादेशात् परतन्त्रश्चरतीति विशेषः ॥ २९१ ॥ कृशत्वं=दुर्बलत्वं, लघुभोजनम्=अत्यल्पाहारकरणं, यतेः=कृतसंन्यासस्य जनस्य, यद्वत्कर्म भवति तथैव सेवकस्यापि। तयोरेतावान् विशेषोऽस्ति यत् सेवकः तत्पापाय करोति, यतिश्च धर्माय आचरतीति ॥ २९२ ॥ धनाय, यानि शीतातपकष्टानि सेवकः सहते, अल्पानि अपि तानि यदि धर्माय=धर्मोपार्जनार्थं सहते चेत्, मुच्यते=कष्टान्मुच्यते ( कष्ट से मुक्त ही हो जाता ) ॥ २९३ ॥ तेन सर्वगुणयुक्तेन मोदकेन=मिष्टान्नविशेषेण ( लड्डू से ) किं, यस्य निष्पत्तिः=प्राप्तिः, सेवया भवति ॥ २९४ ॥

**हिन्दी**—भगवान् व्यास का कहना है कि दरिद्र, रोगी, मूर्ख, प्रवासी तथा सेवक ये पाँचों जीवित रहने पर भी मरे हुये के ही समान होते हैं ॥ २८९ ॥

जो व्यक्ति कभी भी अपनी इच्छा से भर पेट भोजन नहीं कर पाता है और ( नींद भर सोने के बाद ) निद्रा के टूटने पर नहीं जगाया जाता है तथा निःशङ्क होकर अपनी मनोगत बातको नहीं कह पाता है, वह सेवक भी जीवित रहता है यह बड़े आश्चर्य की बात है। ( कारण कि उसे सर्वदा दूसरे की इच्छा के अनुसार ही भोजन करना और सोना पड़ता है ) ॥ २९० ॥

सेवा को श्वानवृत्ति (कुत्ते की जीविका) कहने वाले आचार्यों ने भ्रम से असत्य कह दिया है। क्योंकि कुत्ता फिर भी स्वतन्त्र होता है और अपनी इच्छा के अनुसार घूमता फिरता है किन्तु सेवापरायण व्यक्ति घमता फिरता भी है तो दूसरे की ही आज्ञा से। उसे एक क्षण की भी स्वतन्त्रता नहीं मिलती ॥ २९१ ॥

भूमिपर शयन करना, ब्रह्मचर्य का पालन करना, दुर्बल होना और अल्प आहार करना, ये सभी कार्य सेवकों और यतियों के समान होते हैं। दोनों में अन्तर केवल पाप और धर्म का ही होता है। सेवक जो कुछ करता है वह पाप के लिये करता है और यति-धर्म के नियमों में आबद्ध होकर करता है ॥ २९२ ॥

धन कमाने के लिये सेवक जिन शीत और आतप आदि कष्टों को सहता है, यदि उनसे थोड़े कम कष्टों को ही धर्मोपार्जन के हेतु सहे तो कष्ट से सर्वदा के लिये मुक्ति मिल जाय ॥ २९३ ॥

उन मृदु, गोल, मीठे तथा मनोहर लड्डुओं से क्या लाभ है जो दूसरों की परिचर्या से ही प्राप्त होते हैं। ( स्वतन्त्र रहकर यदि सूखी रोटी भी मिले तो उसे उत्तम समझना चाहिये ) ॥ २९४ ॥

सञ्जीवक आह—"अथ भवान्किं वक्तुमनाः ?"

सोऽब्रवीत्—मित्र ! सचिवानां मन्त्रभेदं कर्तुं न युज्यते । उक्तञ्च—

यो मन्त्रं स्वामिनो भिन्द्यात्साचिव्ये संनियोजितः ।
स हन्ति नृपकार्यं तत्स्वयं च नरकं व्रजेत् ॥ २९५ ॥
येन यस्य कृतो भेदः सचिवेन महीपतेः ।
तेनाशस्त्रवधस्तस्य कृत इत्याह नारदः ॥ २९६ ॥

तथापि मया तव स्नेहपाशबद्धेन मन्त्रभेदः कृतः । यतस्त्वं मम वचनेनात्र राजकुले विश्वस्तः प्रविष्टः । उक्तञ्च—

विश्रम्भाद्यस्य यो मृत्युमवाप्नोति कथञ्चन ।
तस्य हत्या तदुत्था सा प्राहेदं वचनं मनुः ॥ २९७ ॥

व्याख्या—मन्त्रभेदं=रहसि कृतस्य परामर्शस्योद्घाटनं, साचिव्ये=मन्त्रिपदे, स्वामिनः=राज्ञः, नरकं=यमलोकं, व्रजति ॥ २९५ ॥ अशस्त्रवधः=शस्त्रप्रयोगरहितो वधः ॥२९६॥ स्नेहपाशबद्धेन=स्नेहाधिक्येन, प्रविष्टः=स्थितः, समागतः । यस्य, विश्रम्भात्=विश्वासकारणात्, तदुत्था=तेनोत्पादिता, तेन कृतेति यावत् ॥ २९७ ॥

हिन्दी—दमनक की बात को सुनकर सञ्जीवक ने पूछा—"आखिर आप कहना क्या चाहते हैं ?"

उसने कहा—"मित्र ! सचिवों के लिये गुप्त मन्त्रणा का उद्घाटन करना अच्छा नहीं होता । कहा भी गया है कि—मन्त्री के पद पर नियुक्त होने के बाद भी जो व्यक्ति राजा की रहस्यात्मक बातों को प्रकाशित कर देता है, वह राजकार्य को हानि करता है । और उक्त अपराध के कारण वह नरकगामी होता है ॥ २९५ ॥

ब्रह्मर्षि नारद का कहना है कि—जो सचिव अपने राजा की गुप्त बातों को खोल देता है, वह शस्त्र के विना ही राजा की हत्या करता है ॥ २९६ ॥

फिर भी, मैं तुम्हारे स्नेहपाश में आबद्ध होने के कारण इसे प्रकाशित कर रहा हूँ । क्योंकि मेरे ही कथन पर विश्वास करके तुम इस राजकुल में आये हो और इसपर विश्वास किये हो । कहा भी गया है कि—

"जिस व्यक्ति के विश्वास के कारण जो मारा जाता है, उसकी हत्या का अपराधी विश्वास दिलाने वाला व्यक्ति ही होता है" इस वचन को स्वयं मनु ने कहा है ॥ २९७ ॥

तत्त्वोपरि पिङ्गलकोऽयं दुष्टबुद्धिः । कथितञ्चाद्यानेन मत्पुरतश्चतुष्कर्णतया, यत् प्रभाते सञ्जीवकं हत्वा समस्तमृगपरिवारं चिरात्तृप्तिं नेष्यामि" ।

ततः स मयोक्तः—स्वामिन् ! न युक्तमिदं, यन्मित्रद्रोहेण जीवनं क्रियते । उक्तञ्च—

अपि ब्रह्मवधं कृत्वा प्रायश्चित्तेन शुध्यति ।
तदर्हेण विचीर्णेन, न कथञ्चित्सुहृद्द्रुहः ॥ २९८ ॥

ततस्तेनाहं सामर्षेणोक्तः—"भो दुष्टबुद्धे ! सञ्जीवकस्तावच्छष्पभोजी, वयं मांसाशिनः। तदस्माकं वैरमिति कथं रिपुरुपेक्ष्यते ? तस्मात्सामादिभिरुपायैर्हन्यते। न च हते तस्मिन्दोषः स्यात्। उक्तञ्च—

दत्त्वापि कन्यकां वैरी निहन्तव्यो विपश्चिता।
अन्योपायैरशक्यो यो हते दोषो न विद्यते॥ २९९॥
कृत्याकृत्यं न मन्येत क्षत्रियो युधि सङ्गतः।
प्रसुप्तो द्रोणपुत्रेण धृष्टद्युम्नः पुरा हतः॥ ३००॥

**व्याख्या**—चतुष्कर्णतया=एकान्ततया, ममाग्रे, ब्रह्मवधं कृत्वा=ब्राह्मणमपि हत्वा, तदर्हेण=तद्योग्येन, विचीर्णेन=आचरणेन, प्रायश्चित्तेन=पापशामकोपायेन, शुद्ध्यति। किन्तु सुहृद्द्रुहः=मित्रद्रोही, केनाप्युपायेन शुद्धिं नार्हति ॥ २९८॥ सामर्षेण=सकोपेन, स्वाभाविकं=सहजं, साधारणमित्यर्थः, विपश्चिता=धीमता, अन्योपायैरशक्यः=अन्यवधोपायैर्हन्तुमयोग्यः (जब शत्रु अन्य उपायों से मारने योग्य न हो तो), कन्यकां=स्वपुत्रीं, दत्वापि तं, निहन्तव्यः=हन्तव्यः ॥ २९९॥ युधि सङ्गतः=युद्धक्षेत्रे प्राप्तः, कृत्याकृत्यं=कर्तव्याकर्तव्यं, द्रोणपुत्रः=अश्वत्थामा ॥ ३००॥

**हिन्दी**—पिङ्गलक तुम्हारे ऊपर दुष्ट बुद्धि रखता है। उसने आज एकान्त में मुझसे कहा भी है कि—मैं कल प्रातःकाल होते ही सञ्जीवक को मारकर पुनः बहुत दिनों के बाद सम्पूर्ण मृग-कुल को तृप्त करूँगा।"

मैंने उसकी बात का विरोध करते हुये कहा भी था कि—"स्वामिन्! आपका यह कृत्य उचित नहीं होगा, क्यों व्यर्थ में मित्रद्रोह से अपने जीवन को कलङ्कित करना चाहते हैं। कहा भी गया है कि—

ब्रह्महत्या करने के पश्चात् उसके योग्य आचरण और प्रायश्चित्त करने से शुद्धि हो भी जाती है, पर मित्रद्रोही की शुद्धि किसी भी प्रकार से नहीं होती। (मित्र-द्रोहरूपी पाप का कोई भी प्रायश्चित नहीं होता) ॥ २९८॥

मेरे उक्त कथन को सुनते ही वह क्रुद्ध हो उठा और बोला—"अरे दुष्टबुद्धे! सञ्जीवक शष्पभोजी है और हम लोग मांसाशी हैं। हमारा उससे स्वाभाविक (जातिगत) वैर है। शत्रु की उपेक्षा कैसे की जा सकती है ? अतः मैं सामादि उपायों के द्वारा उसे अवश्य मारूँगा। उसको मारने से मुझे कोई दोष नहीं लगेगा। कहा भी गया है कि—

बुद्धिमान् व्यक्ति को—जब शत्रु किसी भी उपाय से मारने योग्य न हो, तो उसे अपनी कन्या देकर भी मार डालना चाहिये। शत्रु को किसी भी उपाय से मारने पर पाप नहीं होता है ॥ २९९॥

युद्धक्षेत्र में उतरे हुये क्षत्रियगण कृत्याकृत्य का विवेचन नहीं करते हैं। महाभारत के समय अश्वत्थामा ने अपने शत्रु धृष्टद्युम्न को सोते समय मारा था ॥ ३००॥

तदहं तस्य निश्चयं ज्ञात्वा त्वत्सकाशमिहागतः। साम्प्रतं मे नास्ति विश्वासघातकदोषः। मया सुगुप्तमन्त्रस्तव निवेदितः। अथ यत्ते प्रतिभाति तत्कुरुष्व" इति।

अथ सञ्जीवकस्तस्य तद्वज्रपातदारुणं वचनं श्रुत्वा मोहमुपगतः। अथ चेतनां लब्ध्वा सवैराग्यमिदमाह—"भोः! साध्विदमुच्यते—

दुर्जनगम्या नार्यः प्रायेणास्नेहवान् भवति राजा।
कृपणानुसारि च धनं मेघो गिरिदुर्गवर्षी च॥ ३०१॥
"अहं हि संमतो राज्ञो" य एवं मन्यते कुधीः।
बलीवर्दः स विज्ञेयो विषाणपरिवर्जितः॥ ३०२॥
वरं वनं वरं भैक्ष्यं वरं भारोपजीवनम्।
वरं विपन्मनुष्याणां नाधिकारेण सम्पदः॥ ३०३॥

तदयुक्तं मया कृतं, यदनेन सह मैत्री विहिता। उक्तञ्च—

ययोरेव समं वित्तं ययोरेव समं कुलम्।
तयोर्मैत्री विवादश्च न तु पुष्टविपुष्टयोः॥ ३०४॥

**व्याख्या**—प्रतिभाति=रोचते, वज्रपातदारुणं=वज्रपातसमं कठोरम्, अस्नेहवान्=स्नेहरहितः, कृपणानुसारि=कृपणगं, गिरिदुर्गवर्षी=गिरिदुर्गेष्वेव वर्षति॥३०१॥ राज्ञः, संमतः=प्रियः, अनुमतः, विषाणपरिवर्जितः=शृङ्गविहीनः॥ ३०२॥ भारोपजीवनं=भारोपवहनं कृत्वा जीविकोपार्जनम् (बोझ ढोकर जीवन चलाना), विपत्=दारिद्र्यम्, अधिकारेण=राजसेवया॥ ३०३॥ समं=तुल्यम्, विवादः=कलहः, पुष्टविपुष्टयोः=संबल-अबलयोः॥ ३०४॥

**हिन्दी**—उसके अभिप्राय को जानकर ही मैं यहाँ तुम्हारे पास आया हूँ। अब मेरे ऊपर विश्वासघात का दोष नहीं रहा। सुगुप्त रहस्य को भी मैंने तुम्हारे समक्ष प्रकाशित कर दिया है। अब जो तुम्हें अच्छा लगे, करो।

उस वज्रपात के समान दारुण वचन को सुनते ही सञ्जीवक चेतनाशून्य होकर गिर पड़ा। कुछ देर के बाद जब पुनः उसकी चेतना लौटी तो विरक्त होकर वह बोला—'मित्र! ठीक ही कहा गया है कि—स्त्रियाँ प्रायः दुष्टों के साथ रहना अधिक पसन्द करती हैं। राजा प्रायः स्नेहरहित होता है। धन कृपण के ही पास रहता है और मेघ प्रायः गिरिदुर्गों पर ही बरसता है॥ ३०१॥

जो व्यक्ति अपनी मूर्खता से यह समझता है कि "मैं ही राजा का प्रिय हूँ" उसको शृङ्गविहीन बलीवर्द (साँड) के ही समान समझना चाहिये॥ ३०२॥

वन में निवास करना, भिक्षा मागकर जीवन निर्वाह कर लेना, बोझ ढोकर जीविकोपार्जन करना अथवा आजन्म दरिद्र रहकर आपत्तियों को झेलना अच्छा होता है, किन्तु राजा की सेवा में रहकर सम्पत्तियों का उपभोग करना अच्छा नहीं होता॥ ३०३॥

मैंने जो पिङ्गलक के साथ मैत्री की थी वह मेरी सबसे बड़ी भूल थी। मैंने वह बहुत अनुचित कार्य किया था। कहा भी गया है कि—

जिनका वित्त और कुल दोनों समान हो, उन्हीं को परस्पर में मित्रता या शत्रुता करनी चाहिये। बली और निर्बल की मैत्री या शत्रुता अच्छी नहीं होती ॥ ३०४ ॥

तथा च—

मृगा मृगैः सङ्गमनुव्रजन्ति, गावश्च गोभिस्तुरगास्तुरङ्गैः।
मूर्खाश्च मूर्खैः सुधियः सुधीभिः, समानशीलव्यसनेषु सख्यम् ॥ ३०५ ॥

तद्यदि गत्वा तं प्रसादयामि, तथापि न प्रसादं यास्यति।

उक्तञ्च—

निमित्तमुद्दिश्य हि यः प्रकुप्यति, ध्रुवं स तस्यापगमे प्रशाम्यति।
अकारणद्वेषपरो हि यो भवेत्, कथं नरस्तं परितोषयिष्यति ? ॥ ३०६ ॥

अहो, साधु चेदमुच्यते—

भक्तानामुपकारिणां परहितव्यापारयुक्तात्मनां
सेवासंव्यवहारतत्त्वविदुषां द्रोहच्युतानाम् प।
व्यापत्तिः स्खलितान्तरेषु नियता सिद्धिर्भवेद्वा न वा
तस्मादम्बुपतेरिवावनिपतेः सेवा सदाशङ्किनी ॥ ३०७ ॥

व्याख्या—तुरगाः = अश्वाः, सुधियः = विद्वांसः, समानशीलव्यसनेषु = तुल्यशीलाचारेषु (समानं शीलं व्यसनञ्च येषां ते, तेषु), सख्यं = मैत्री ॥ ३०५ ॥ यः, निमित्तं = कारणम्, उद्दिश्य = उपलक्ष्य, प्रकुप्यति = क्रोधं करोति, स ध्रुवं = निश्चयेन, तस्य = कारणस्य, अपगमे = विनाशे प्रशाम्यति = शान्ति लभते, परञ्च–यः, अकारणद्वेषपरः = कारणं विनैव द्वेषबुद्धिर्भवति, तं, नरः = मनुष्योऽन्यः, कथं = केन प्रकारेण, परितोषयिष्यति = प्रसादयिष्यति ॥ ३०६ ॥ भक्तानां = पूजादिकार्येषु प्रवृत्तानां जनानाम्, उपकारिणां = परोपकारानुरक्तानां, परहितव्यापार-युक्तात्मनां = परहितानुरक्तानां, सेवासंव्यवहारतत्त्वविदुषां = सेवातत्त्वविदां, व्यवहारतत्त्वज्ञानां च, द्रोहच्युतानां = द्रोहभावरहितानां, सिद्धिः = कार्यसिद्धिः (स्वार्थ की सिद्धि) भवेद्वा न भवेत्, परन्तु स्खलितान्तरेषु = त्रुटौ सत्यां, व्यापत्तिः = विपत्तिः, नियता = सुनिश्चिता भवति। अतः, अम्बुपतेरिव = समुद्रस्येव, अवनिपतेः = भूपतेरपि, सेवा, सदा आशङ्किनी = विशङ्कनीया भवतीति भावः ॥ ३०७ ॥

हिन्दी—और भी—मृग मृगों के ही साथ सङ्गति करते हैं और चलते-फिरते हैं। गाय, गायों के ही साथ रहती हैं। अश्व अश्वों के ही साथ मित्रता करते हैं। मूर्ख मूर्खों की ही सङ्गति पसन्द करता है। विद्वान् विद्वानों की ही समिति चाहता है। इसप्रकार समान स्वभाव और आचरण के ही व्यक्तियों की मैत्री उत्तम होती है ॥ ३०५ ॥

यदि मैं जाकर उसे प्रसन्न करूँ, तो भी वह प्रसन्न नहीं होगा। कहा भी गया है कि—

जो व्यक्ति किसी विशेष कारण से क्रुद्ध होता है, वह उस कारण के हट जाने पर पुनः सन्तुष्ट हो भी जाता है, किन्तु जो विना किसी कारण के ही द्वेष करता है उसको कौन सन्तुष्ट कर सकता है? (अकारणद्वेषी व्यक्ति को कोई भी सन्तुष्ट नहीं कर सकता) ॥ ३०६ ॥

किसी ने ठीक ही कहा है कि—भक्तों, परोपकारीजनों, परहितचिन्तकों, सेवापरायणों, व्यवहारनिपुणों और रागद्वेषविवर्जित व्यक्तियों के स्वार्थ की सिद्धि उनके कार्यों से हो या न हो, किन्तु उनसे यदि थोड़ी भी त्रुटि हो जाती है, तो उन्हें विपत्ति निश्चित ही झेलनी पड़ती है। अतएव समुद्र की सेवा की तरह राजाओं की भी सेवा शङ्का से रहित नहीं होती है। (जैसे समुद्र का यात्री चाहे जितना भी सज्जन और विज्ञ क्यों न हो, यदि जरा भी असावधानी हुई तो लहरों के थपेड़ में आ ही जाता है, उसी प्रकार राजसेवक भी थोड़ी सी असावधानी के कारण बहुत बड़े दण्ड का भागी बन जाता है, भले ही वह बहुत बड़ा राजभक्त ही क्यों न हो) ॥ ३०७ ॥

तथा च—

भावस्निग्धैरुपकृतमपि द्वेष्यतां याति किञ्चि-
च्छाठ्यादन्यैरपकृतमपि प्रीतिमेवोपयाति ।
दुर्ग्राह्यत्वान्नृपतिमनसां नैकभावाश्रयाणां,
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ ३०८ ॥

तत्परिज्ञातं मया यत्प्रसादमसहमानैः समीपवर्तिभिरेष पिङ्गलकः प्रकोपितः, तेनायं ममादोषस्याप्येवं वदति ।

उक्तञ्च—

प्रभोः प्रसादमन्यस्य न सहन्तीह सेवकाः ।
सपत्न्य इव सङ्क्रुद्धाः सपत्न्याः सुकृतैरपि ॥ ३०९ ॥

भवति चैवं यद्गुणवत्सु समीपवर्तिषु गुणहीनानां न प्रकाशो भवति ।

गुणवत्तरपात्रेण छाद्यन्ते गुणिनां गुणाः ।
रात्रौ दीपशिखाकान्तिर्न भानावुदिते सति" ॥ ३१० ॥

**व्याख्या**—भावस्निग्धैरुपकृतमपि = स्नेहभावैरुपकृतमपि, राज्ञां मनः किञ्चिद् द्वेष्यतां = द्वेषभावं, याति । अन्यैः, शाठ्यात् = क्रूरभावात्, अपकृतमपि प्रीतिं = स्नेहभावं याति । नैकभावाश्रयाणां = विविधभावाश्रितानां, नृपतिमनसां, दुर्ग्राह्यत्वात् = ग्रहणाशक्यत्वात्, सेवाधर्मः = सेवाकर्म, परमगहनः = ज्ञानागम्यं, योगिनां योगदृष्ट्यापि द्रष्टुमशक्यमेव भवति ॥ ३०८ ॥ प्रसादमसहमानैः = राज्ञः कृपामसहमानैः, समीपवर्तिभिः = तस्यान्तेवासिभिर्जनैः, वदति = कथयति । यतः सेवकाः, अन्यस्य = राजभृत्यस्य, प्रभोः प्रसादं = राजकृपाम्, न सहन्ते ॥ ३०९ ॥ प्रकाशः = गुणस्य प्रसारः, गुणवत्तरपात्रेण = विशेषगुणयुक्तेन पुरुषेण, गुणिनां = सामान्यगुणयुक्तानां पुरुषाणां, गुणाः, अन्यैः छाद्यन्ते । दीपशिखाकान्तिः = दीपशिखायाः प्रकाशः, रात्रौ = निशायामेव भवति, न तु भानौ = सूर्ये, उदिते सति ॥ ३१० ॥

**हिन्दी**—और भी—कभी-कभी तो, अत्यन्त स्नेहयुक्त भाव से उपकार करने पर भी राजा अप्रसन्न ही रहता है, और कभी दूसरे क्रूर व्यक्तियों के द्वारा अपकृत होने पर भी परम प्रसन्न हो जाता है। विभिन्न भावों में रहने वाले राजा के अस्थिर मन को समझ लेना बहुत कठिन

कार्य होता है। अतएव राजाओं का सेवाधर्म अत्यन्त गहन कहा गया है। योगियों की समाधिगत सूक्ष्म दृष्टि द्वारा भी वह अगम्य होता है ॥ ३०८ ॥

मैंने समझ लिया कि मेरे ऊपर रहने वाली राजकृपा को न सह सकने वाले राजा के समीपस्थ-भृत्यों ने समझा बुझाकर उन्हें मेरे प्रतिकूल बना दिया है। अतएव वह मुझ जैसे निरपराध व्यक्ति के विषय में भी इसप्रकार की बातें करता है। कहा भी गया है कि—

राज-भृत्य दूसरों पर होनेवाली राजकृपा को सहन नहीं कर सकते हैं। जैसे सपत्नी यदि अपने अच्छे व्यवहार के द्वारा दूसरी सपत्नी का भला भी करती है, तो भी वह नहीं चाहती है कि उसके पति का प्रेम उसकी दूसरी सपत्नी को भी प्राप्त हो ॥ ३०९ ॥

ऐसा तो होता ही है कि—अधिक गुणवान् व्यक्ति के रहते हुये सामान्य गुणियों का कोई प्रभाव नहीं होता है। कहा भी गया है कि—

'गुणज्ञों के प्रभाव से निर्गुणों का प्रभाव दब (ढक) जाता है। क्योंकि दीपशिखा की कान्ति रात्रि के अन्धकार में जितनी सुशोभित होती है उतनी ही सूर्योदय के हो जाने पर नहीं होती है ॥ ३१० ॥

दमनक आह—"भो मित्र ! यद्येवं तन्नास्ति ते भयम्। प्रकोपितोऽपि स दुर्जनैस्तव वचनरचनया प्रसादं यास्यति।"

स आह—"भोः ! न युक्तमुक्तं भवता। लघूनामपि दुर्जनानां मध्ये वस्तुं न शक्यते। उपायान्तरं विधाय ते नूनं घ्नन्ति। उक्तञ्च—

बहवः पण्डिताः क्षुद्राः सर्वे मायोपजीविनः।
कुर्युः कृत्यमकृत्यं वा उष्ट्रे काकादयो यथा" ॥ ३११ ॥

दमनक आह—"कथमेतत्" ? सोऽब्रवीत्—

व्याख्या—दुर्जनैः=दुष्टैः, वचनरचनया=वाक्चातुर्येण, वस्तुं=निवसितुं, घ्नन्ति=मारयन्ति। पण्डिताः=बुद्धिमन्तः, (धूर्ताः), मायोपजीविनः, प्रवञ्चकाः, समवेताः सन्तः सर्वे कृत्यमकृत्यं वा कुर्वन्ति, यथा काकादयः उष्ट्रे अकुर्वन् ॥ ३११ ॥

हिन्दी—दमनक बोला—"मित्र ! यदि यही बात है, तो तुम्हें डरने की कोई आवश्यकता नहीं है। दूसरों (दुष्टों) के द्वारा प्रोत्साहित होने से क्रुद्ध होने पर भी वह तुम्हारी वाक्चातुरी से तुझपर प्रसन्न हो ही जायगा।"

उसने कहा—"मित्र ! तुम्हारा यह कथन यथार्थ नहीं है। क्योंकि दुष्ट यदि छोटे हों तब भी उनके मध्य में भले आदमी का रहना कठिन होता है। किसी न किसी उपाय के द्वारा वे उसे मार ही डालते हैं। कहा भी गया है कि—



बहुत से धूर्त, क्षुद्र तथा मायावी जीव जब एकत्र हो जाते हैं, तो कुछ न कुछ करते

ही हैं, चाहे वह उचित हो या अनुचित। इसी प्रकार काक आदि क्षुद्रजीवों ने एकत्र होकर उष्ट्र को मार डाला था ॥ ३११ ॥

दमनक ने पूछा—"यह कैसे"? उसने कहा—

[ ११ ]

## ( उष्ट्र-काकादिकथा )

**कस्मिंश्चिद्वनोद्देशे मदोत्कटो नाम सिंहः प्रतिवसति स्म। तस्य चानुचरा अन्ये द्वीपिवायसगोमायवः सन्ति। अथ कदाचित्तैरितस्ततो भ्रमद्भिः सार्थभ्रष्टः क्रथनको नामोष्ट्रो दृष्टः। अथ सिंह आह—"अहो, अपूर्वमिदं सत्त्वं, तज्ज्ञायतां किमेतदारण्यकं ग्राम्यं वा? इति तच्छ्रुत्वा वायस आह—"भोः स्वामिन्! ग्राम्योऽयमुष्ट्रनामा जीवविशेषस्तव भोज्यः, तद्व्यापाद्यताम्।".**

**सिंह आह—"नाहं गृहमागतं हन्मि। उक्तञ्च—**

**गृहे शत्रुमपि प्राप्तं विश्वस्तमकुतोभयम्।**
**यो हन्यात्तस्य पापं स्याच्छतब्राह्मणघातजम् ॥ ३१२ ॥**

**तदभयप्रदानं दत्त्वा मत्सकाशमानीयतां, येनास्यागमनकारणं पृच्छामि।"**

**व्याख्या**—वनोद्देशे=वनप्रदेशे, द्वीपिः=व्याघ्रः, वायसः=काकः, गोमायुः=शृगालः, सार्थभ्रष्टः=वणिक्समूहैः परिच्युतः, सत्त्वं=जीवम्, आरण्यकं=वन्यं, ग्राम्यं=ग्रामवास्तव्यं वा, विश्वस्तं=विश्वासयुक्तं, शतब्राह्मणघातजं=शतविप्रवधजं, पापं स्यात् ॥ ३१२ ॥

**हिन्दी**—किसी वन में मदोत्कट नाम का एक सिंह रहता था। उसके व्याघ्र, वायस तथा शृगाल ये तीन अनुचर थे। एक दिन उन लोगों ने एक क्रथनक नामक उष्ट्र को देखा जो सार्थवाहों से वियुक्त हो जाने से इधर उधर वन में भटक रहा था। उसको देखकर सिंह ने कहा—"अहो, यह तो कोई अपूर्व ही जीव है। जाकर देखो कि वह वन्य प्राणी है या ग्राम्य जीव है!"

सिंह की बात को सुनकर वायस ने उत्तर दिया—"स्वामिन्! यह उष्ट्र नाम का ग्राम्य जीव है। यह आपका भक्ष्य है। आप इसको मार डालिये।"

सिंह ने कहा—"मैं गृहागत अतिथि को नहीं मारता हूँ। कहा भी गया है कि—

विश्वस्त एवं निर्भय होकर अपने घर आये हुए शत्रु को भी मारना उचित नहीं होता है। यदि कोई उसे मारता है, तो वह शत ब्राह्मणवध के पाप का भागी होता है ॥ ३१२ ॥

अतः उसको अभय देकर यहाँ ले आओ, जिससे मैं उसके यहाँ आने का कारण उससे पूछ सकूँ।"

**अथाऽसौ सर्वैरपि विश्वास्याभयप्रदानं दत्त्वा मदोत्कटसकाशमानीतः प्रणम्योपविष्टश्च। ततस्तस्य पृच्छतस्तेनात्मवृत्तान्तः सार्थभ्रंशसमुद्भवो निवेदितः। सिंहेनोक्तं—**

"भोः क्रथनक ! मा त्वं ग्रामं गत्वा भूयोऽपि भारोद्वहनकष्टभागी भूयाः। तदत्रैवारण्ये निर्विशङ्को मरकतसदृशानि शष्पाग्राणि भक्षयन्मया सह सदैव वस।"

सोऽपि "तथा" इत्युक्त्वा, तेषां मध्ये विचरन् कुतोऽपि भयमिति सुखेनास्ते।

अथाऽन्येद्युर्मदोत्कटस्य महागजेनारण्यचारिणा सह युद्धमभवत्। ततस्तस्य दन्तमुसलप्रहारैर्व्यथा सञ्जाता। व्यथितः कथमपि प्राणैर्न वियुक्तः। अथ शरीरासामर्थ्यान्न कुत्रचित्पदमपि चलितुं शक्नोति। तेऽपि सर्वे काकादयोऽप्रभुत्वेन क्षुधाविष्टाः परं दुःखं भेजुः। अथ तान् सिंहः प्राह—भोः ! अन्विष्यतां कुत्रचित्किञ्चित्सत्त्वं, येनाहमेतामपि दशां प्राप्तस्तद्धत्वा युष्मद्भोजनं सम्पादयामि।"

व्याख्या—विश्वास्य = विश्वासप्रदानेन भृशं परितोष्य, सार्थभ्रंशसमुद्भवः = वणिग्जनसमूहोद्भवो वियोगः, निर्विशङ्कः = विगतशङ्कः (निर्भय होकर), मरकतसदृशानि = मरकततुल्यानि, सुखेनास्ते = यथासुखं न्यवसत्। अरण्यचारिणा = वनचारिणा, दन्तमुसलप्रहारैः = मुसलसदृशदन्तप्रहारैः, प्राणैर्न वियुक्तः = मृतिं न गतः। अप्रभुत्वेन = प्रभुसामर्थ्याभावेन, क्षुधाविष्टाः = बुभुक्षिताः।

हिन्दी—सिंह के आदेश से वह उष्ट्र उन काकादिकों के द्वारा अभय प्रदान पूर्वक विश्वास दिलाकर ले आया गया और मदोत्कट को प्रणाम करके बैठ गया। सिंह के पूछने पर उसने सार्थवाह से हुए वियोगसम्बन्धी अपने सम्पूर्ण वृत्तान्त को बता दिया। उसकी बात को सुनकर सिंह ने कहा—"क्रथनक ! ग्राम में जाकर पुनः भार ढोने वाले कष्टकारक कार्य को अब तुम मत करो। इसी वन में निर्भय होकर मरकत के समान कोमल घासों को चरो और मेरे साथ निवास करो।"

"आपकी जैसी आज्ञा" कहकर वह उनके बीच में निर्भय होकर सुख से विचरण करने लगा।

एक दिन मदोत्कट का किसी वनचारी महागज के साथ अत्यन्त भीषण युद्ध हुआ। गज के मुसलोपम दाँतों के प्रहार से सिंह को बहुत कष्ट हुआ और भयङ्कर वेदना को सहकर भी वह किसी प्रकार जीवित बचा रहा। शरीर के शक्तिहीन हो जाने के कारण वह चलने फिरने में अशक्त हो चुका था। उसके पराक्रम के अभाव में काक आदि उसके अनुचरगण भूख से व्याकुल होकर छटपटाने लगे। उनकी उक्त अवस्था को देखकर सिंह ने कहा—"किसी ऐसे जीव की खोज करो कि जिसको इस अवस्था में भी मार कर मैं तुम लोगों के भोजन का प्रबन्ध कर सकूँ।"

अथ ते चत्वारोऽपि भ्रमितुमारब्धाः। यावन्न किञ्चित्सत्त्वं पश्यन्ति तावद्वायसश्रृगालौ परस्परं मन्त्रयतः। श्रृगाल आह—"भो वायस ! किं प्रभूतेन भ्रान्तेन। अयमस्माकं प्रभोः क्रथनको विश्वस्तस्तिष्ठति। तदेनं हत्वा प्राणयात्रां कुर्मः।"

वायस आह—"युक्तमुक्तं भवता, परं स्वामिना तस्याभयप्रदानं दत्तमास्ते—"न वध्योऽयम्" इति।

शृगाल आह—"भो वायस! अहं स्वामिनं विज्ञाप्य तथा करिष्ये यथा स्वामी वधं करिष्यति। तत्तिष्ठन्तु भवन्तोऽत्रैव, यावदहं गृहं गत्वा, प्रभोराज्ञां गृहीत्वा चागच्छामि।" एवमभिधाय सत्वरं सिंहमुद्दिश्य प्रस्थितः।

अथ सिंहमासाद्येदमाह—स्वामिन्! समस्तं वनं भ्रान्त्वा वयमागताः, न किञ्चित्सत्त्वमासादितम्। तत्किं कुर्मो वयम्? सम्प्रति वयं बुभुक्षया पदमेकमपि प्रचलितुं न शक्नुमः। देवोऽपि पथ्याशी वर्तते तद्यदि देवादेशो भवति, तदा क्रथनकपिशितेनाऽद्य पथ्यक्रिया क्रियते।"

व्याख्या—प्रभूतभ्रान्तेन = बहुभ्रमणेन, प्राणयात्रां = शरीरधारणक्रियां, विज्ञाप्य = प्रबोधयित्वा, भ्रान्त्वा = भ्रमणं विधाय, पथ्याशी = पथ्यभोजी, पिशितेन = मांसेन, पथ्यक्रिया = भवतः पथ्यकार्यं, क्रियते = विधीयते।

हिन्दी—सिंह की आज्ञा से वे चारों शिकार की खोज में घूमने लगे। जब उनको कोई भी जीव नहीं मिला, तो वायस और शृगाल ने आपस में मिलकर एक सलाह की। शृगाल ने कहा—"मित्र वायस! बहुत भटकने से क्या लाभ है? यह क्रथनक तो हमारे स्वामी पर विश्वास करके रहता ही है। आज इसी को मारकर भोजनक्रिया की जाय।"

वायस ने कहा—"आपका कथन ठीक है। किन्तु स्वामी ने तो उसे अभय प्रदान किया है कि "इसको कोई मार नहीं सकता है।"

शृगाल ने कहा—"मित्र वायस! मैं स्वामी को समझाकर इस बात के लिये राजी कर सकता हूँ कि वह इसको मारने के लिये प्रस्तुत हो जाय। आपलोग यहीं ठहरिये, मैं स्वामी के पास जाकर उसकी आज्ञा लेकर अभी आता हूँ।" यह कहकर वह शीघ्रता से सिंह की ओर चल पड़ा। सिंह के पास पहुँचकर उसने कहा—"स्वामिन्! संपूर्ण वन को घूमकर हम लोग वापस लौट चुके हैं। एक भी जीव नहीं मिला। अब क्या किया जाय? इस समय हमलोग भूख से इसप्रकार व्यथित हैं कि एक भी पद चलना हम लोगों की शक्ति से बाहर हो गया है। आप भी इस समय पथ्याहार ही कर रहे हैं। ऐसी स्थिति में यदि आपका आदेश हो तो आज क्रथनक के ही मांस से आपके पथ्य का प्रबन्ध किया जाय।"

अथ सिंहस्तस्य तद्दारुणं वचनमाकर्ण्य सकोपमिदमाह—"धिक् पापाधम! यद्येवं भूयोऽपि वदसि, ततस्त्वां तत्क्षणमेव वधिष्यामि। यतो मया तस्याभयप्रदानं प्रदत्तं, तत्कथं स्वयमेव व्यापादयामि? उक्तञ्च—

न गोप्रदानं न महीप्रदानं, न चान्नदानं हि तथा प्रधानम्।
यथा वदन्तीह बुधाः प्रधानं सर्वप्रदानेष्वभयप्रदानम्॥ ३१२॥

तच्छ्रुत्वा शृगाल आह—"स्वामिन्! यद्यभयप्रदानं दत्त्वा वधः क्रियते, तदैष ते दोषो भवति। पुनर्यदि देवपादानां भक्त्या स आत्मनो जीवितव्यं प्रयच्छति, ततो न दोषः। तद्यदि स स्वयमेवात्मानं वधाय नियोजयति तदा वध्यः। अन्यथाऽस्माकं मध्यादेकतमो वध्य इति। यतो देवपादाः पथ्याशिनः क्षुन्निरोधादन्त्यां दशां यास्यन्ति।

तत्किमेतैः प्राणैरस्माकं ये स्वाम्यर्थं न यास्यन्ति। अपरं यदि स्वामिपादानां किञ्चिद्-निष्टं भविष्यति तदा पश्चादप्यस्माभिर्वह्निप्रवेशः कार्यं एव। उक्तञ्च—

यस्मिन्कुले यः पुरुषः प्रधानः, स सर्वयत्नैः परिरक्षणीयः।
तस्मिन्विनष्टे हि कुलं विनष्टं, न नाभिभङ्गे ह्यरका वहन्ति॥" ३१४॥

व्याख्या—दारुणं=हृदयविदारकं, प्रधानं=श्रेष्ठं, वदन्ति=कथयन्ति॥ ३१३॥ देव-पादानां=भवतां, जीवितव्यं=जीवनं, नियोजयति=ददाति, क्षुन्निरोधात्=बुभुक्षाया निरोधात्, अन्त्यां=प्राणान्तां, प्राणैः=जीवनैः, न यास्यन्ति=गमिष्यन्तीति भावः। अनिष्टं=मरणादिकं, यः प्रधानः=मुख्यः, सः, सर्वप्रयत्नैः=सर्वोपायैः, परिरक्षणीयः=रक्षणीयः। यतो हि तस्मिन्=मुख्ये, विनष्टे=विनाशं गते सति, कुलमेव विनष्टं भवति। यथा—नाभि-भङ्गे=रथचक्रस्य मध्यभागे विनष्टे सति, अरकाः=चक्रदण्डाः, रथं न वहन्ति, तथैव मुख्ये नष्टे सति तत्कुलमपि न चलति। अत्र "न नाभिपङ्गे ह्यरयो वहन्ति" इति पाठभेदः। तत्र—अभिपङ्गे व्यसने प्राप्ते सति, अरयः=रिपवः, न वहन्ति=नाक्रमणं कुर्वन्तीति न, इत्यर्थः कृतः, स चास्माभिरुपेक्षितः॥ ३१४॥

हिन्दी—श्रृगाल से उक्त दारुण वचन को सुनकर सिंह ने क्रुद्ध होकर कहा—"धिक्पापाधम! यदि पुनः ऐसी बात कहोगे तो तुम्हें उसी क्षण मार डालूँगा। मैंने उसको अभय प्रदान किया है। अतः स्वयं कैसे उसे मार सकता हूँ? कहा भी गया है कि—

गोदान, भूमिदान अथवा अन्नदान उतना महत्वपूर्ण नहीं होता है जितना कि अभयदान होता है। इसीलिये विद्वानों ने अभयदान को अन्य दानों से श्रेष्ठ कहा है"॥ ३१३॥

उक्त वचन को सुनकर श्रृगाल ने कहा—"स्वामिन्! यदि अभयदान देकर पुनः उसका वध किया जायगा तभी तो वह दोष आप को लगेगा। यदि आपकी भक्ति के कारण वह स्वयं अपने जीवन को प्रदान कर देता है, तब तो उक्त दोष नहीं लगेगा। यदि वह स्वयं अपना जीवन प्रदान कर देता है तभी आप उसका वध कीजियेगा। यदि वह प्रस्तुत न हुआ तो हममें से ही किसी को मारकर अपना पथ्य कीजियेगा। क्योंकि आप इस समय पथ्य कर रहे हैं। क्षुधा के निरोध से अशुभ स्थिति भी आ सकती है। हम लोगों के इस जीवन से क्या लाभ है जो स्वामी के लिये इतना भी नहीं हो सकेगा। दूसरी बात यह है कि यदि दैवदुर्योग से स्वामी का किसी प्रकार से कोई अनिष्ट हुआ तो भी बाद में हम लोगों को अग्निप्रवेश करना ही पड़ेगा। कहा भी गया है कि—

जिस कुल में जो व्यक्ति प्रधान होता है, उसकी रक्षा सभी प्रयत्नों से करनी आवश्यक होती है। क्योंकि प्रधान व्यक्ति के निधन से उस कुल का ही निधन हो जाना समझा जाता है। जैसे—रथ के पहिये के मध्य भाग (नाभि) के नष्ट हो जाने पर उसमें लगे हुये दण्ड रथ को नहीं चला सकते हैं, उसी प्रकार प्रमुख व्यक्ति के अभाव में कुल का सञ्चालन ही कठिन हो जाता है"॥ ३१४॥

तदाकर्ण्य मदोत्कट आह—"यद्येवं तत्कुरुष्व यदोचते।"

तच्छ्रुत्वा स सत्वरं गत्वा तानाह—"भोः ! स्वामिनो महत्यवस्था वर्तते। तत्किं पर्यटितेन ? तेन विना कोऽत्रास्मान् रक्षयिष्यति ? तद्गत्वा तस्य क्षुद्रोगात्परलोकं प्रस्थितस्य स्वयं गत्वात्मशरीरदानं कुर्मः, येन स्वामिप्रसादस्याऽनृणतां गच्छामः।

उक्तञ्च—

आपदं प्राप्नुयात्स्वामी यस्य भृत्यस्य पश्यतः।
प्राणेषु विद्यमानेषु स भृत्यो नरकं व्रजेत्" ॥ ३१५॥

तदनन्तरं ते सर्वे बाष्पपूरितदृशो मदोत्कटं प्रणम्योपविष्टाः। तान्दृष्ट्वा मदोत्कट आह—"भोः ! प्राप्तं, दृष्टं वा किञ्चित्सत्त्वम् ?"

अथ तेषां मध्यात्काकः प्रोवाच-"स्वामिन् ! वयं तावत्सर्वत्र पर्यटिताः परं न किञ्चित्सत्त्वमासादितं, दृष्टं वा। तदद्य मां भक्षयित्वा प्राणान्धारयतु स्वामी, येन देवस्याश्वासनं भवति, मम पुनः स्वर्गप्राप्तिरिति।

उक्तञ्च—

स्वाम्यर्थे यस्त्यजेत् प्राणान् भृत्यो भक्तिसमन्वितः।
परं स पदमाप्नोति जरामरणवर्जितम् ॥ ३१६ ॥

व्याख्या—महत्यवस्था=कष्टतरावस्था, अन्तिमावस्थेति यावत्, पर्यटितेन=वृथाभ्रमणेन, क्षुद्रोगात्=क्षुधारूपरोगात्, प्रस्थितस्य=प्रचलितस्य, अनृणताम्=ऋणान्मुक्ततां, पश्यतः= विलोकयतः, स्वामी=राजा, आपदम्=विपत्तिम्, आप्नुयात्=प्राप्नुयात्, तस्य प्राणेषु विद्यमानेष्वपि स नरकं याति ॥ ३१५ ॥ बाष्पपूरितदृशः=बाष्पपूरितनयनाः, पर्यटिताः=भ्रमणं कृतवन्तः, प्राणान् धारयतु=स्वप्राणानां रक्षां करोतु, आश्वासनं=जीवननिर्वाहः, भक्तिसमन्वितः =भक्तियुक्तचित्तः, यः प्राणान् त्यजेत्, स जरामरणवर्जितं=जरामृत्युविवर्जितं, परं=परमं, पदं=स्थानं, प्राप्नोति ॥ ३१६ ॥

हिन्दी—शृगाल की बात को सुनकर मदोत्कट ने कहा—"जैसी तुम्हारी इच्छा हो, करो।"

राजा की आज्ञा पाते ही उसने तत्काल जाकर अपने अन्य साथियों से कहा—"मित्रो ! स्वामी की अवस्था चिन्तनीय है, ऐसी स्थिति में व्यर्थ भ्रमण करने से क्या लाभ है ?

उसके अभाव में कौन हम लोगों की रक्षा करेगा ? अतः भूख से व्याकुल होकर प्राण-त्याग की स्थिति को प्राप्त स्वामी की सेवा में हमलोगों को अपना शरीर अर्पण कर देना चाहिये, जिससे स्वामी के अनुग्रह से हमलोग अनृण हो जाय। कहा भी गया है कि—

जिस भृत्य के देखते हुये उसका स्वामी विपद्ग्रस्त हो जाता है और सेवक अपने प्राण के रहते हुए भी उसकी रक्षा नहीं करता है, वह (सेवक) नरकगामी होता है" ॥ ३१५ ॥

शृगाल की बात को सुनकर वे सभी मदोत्कट के पास लौट आये और उसको प्रणाम करके बैठ गये। उनको देखकर मदोत्कट (सिंह) ने पूछा—"तुम लोगोंको कुछ मिला ? क्या कोई जीव दिखाई पड़ा ?"

उनमें से वायस ने उत्तर दिया—"स्वामिन्! हमलोग संपूर्ण वन घूम आये, किन्तु न तो कोई जीव मिला, न दिखाई ही पड़ा। अतः आज मुझे ही खाकर स्वामी अपने प्राणों की रक्षा करें, जिससे आपको थोड़ा आश्वासन ( बल ) भी मिल जाय और मेरी सद्गति भी हो जाय। कहा भी गया है कि—

जो भृत्य भक्ति से ओत-प्रोत होकर स्वामी के लिये अपने प्राणों का परित्याग कर देता है, वह ज़रा और मृत्यु से रहित होकर परम पद को प्राप्त करता है" ॥ ३१६ ॥

तच्छ्रुत्वा श्रृगाल आह—"भोः! स्वल्पकायो भवान्! तव भक्षणात् स्वामिनस्तावत् प्राणयात्रा न भवति, अपरो दोषश्च तावत् समुत्पद्यते।

उक्तञ्च—

काकमांसं शुनोच्छिष्टं स्वल्पं तदपि दुर्लभम्।
भक्षितेनापि किं तेन तृप्तिर्येन न जायते ॥ ३१७ ॥

तद्दर्शिता स्वामिभक्तिर्भवता। गतं चानृण्यं भर्तृपिण्डस्य। प्राप्तश्चोभयलोके साधुवादः, तदपसराग्रतः येनाहमपि स्वामिनं विज्ञापयामि।"

तथानुष्ठिते, श्रृगालः सादरं प्रणम्य प्रोवाच—"स्वामिन्! मां भक्षयित्वाऽद्य प्राणयात्रां विधाय, ममोभयलोकप्राप्तिं कुरु। उक्तञ्च—

स्वाम्यायत्ताः सदा प्राणा भृत्यानामर्जिता धनैः।
यतस्ततो न दोषोऽस्ति तेषां ग्रहणसम्भवः ॥ ३१८ ॥"

व्याख्या—स्वल्पकायः=अल्पकायः, दोषः=जीववधदोषः। शुनोच्छिष्टं=कुक्कुरोच्छिष्टं, तृप्तिः=सन्तोषः, न जायते=न भवतीति ॥ ३१७ ॥ आनृण्यम्=अनृणतां, भर्तृपिण्डस्य=राजान्नस्य, उभयलोके=इहलोके परलोके च, साधुवादः=आशंसावादः। अपसर=दूरं गच्छ, विज्ञापयामि=निवेदयामि, यतश्च धनैः=वित्तादिभिः, अर्जिताः=लब्धाः ( क्रीताः ) भृत्यानां प्राणाः=असवः, स्वाम्यायत्ताः=स्वाम्यधीनाः, भवन्ति, ततः=तस्मात्कारणात्, तेषां ग्रहण-संभवः=ग्रहणजन्यः, दोषः, नास्ति=न भवति ॥ ३१८ ॥

हिन्दी—काक की बात को सुनकर श्रृगाल ने कहा—"एक तो आप स्वतः अल्पकाय हैं, और आपके मांस को खाने से स्वामी की क्षुन्निवृत्ति भी नहीं होगी, प्रत्युत जीववध का पाप ही लगेगा। कहा भी गया है कि—

एक तो कौवे का मांस, कुत्ते का जुठाया हुआ, अत्यल्प, फिर वह भी दुर्लभ हो तो उसको खाने से लाभ ही क्या है कि जिससे तृप्ति भी नहीं हो सकती है ( पेट भी नहीं भर सकता है ) ॥ ३१७ ॥

आपने अपनी स्वामिभक्ति को दिखा दिया। स्वामी के अन्न को ग्रहण करने का ऋण आपने चुका दिया। दोनों लोकों में आपकी प्रशंसा भी हो चुकी। अब आप आगे से हट जाइये, जिससे मैं स्वामी के समक्ष अपने निवेदन को कह सकूँ।"

वायस के हट जाने पर श्रृगाल ने आगे बढ़कर प्रणाम करने के बाद कहा—"स्वामिन्!

आज मेरे ही शरीर को भक्षण करके अपना जीवन-निर्वाह किया जाय और मुझे ही दोनों लोकों के यश का भागी होने दिया जाय। यतः कहा गया है कि—

सेवकों का प्राण सम्पत्ति के बदले में अर्जित होने के कारण स्वामी के ही अधीन होता है। यदि समय पड़ने पर स्वामी उसको ले भी लेता है तो वह पाप का भागी नहीं होता है" ॥ ३१८ ॥

अथ तच्छ्रुत्वा द्वीप्याह—"भोः ! साधूक्तं भवता। पुनर्भवानपि स्वल्पकायः स्वजातिश्च। नखायुधत्वादभक्ष्य एव। उक्तञ्च—

नाभक्ष्यं भक्षयेत्प्राज्ञः प्राणैः कण्ठगतैरपि।
विशेषात्तदपि स्तोकं लोकद्वयविनाशकम् ॥ ३१९ ॥

तद्दर्शितं त्वयात्मनः कौलीन्यम्। अथवा साधु चेदमुच्यते—

एतदर्थं कुलीनानां नृपाः कुर्वन्ति सङ्ग्रहम्।
आदिमध्यावसानेषु न ते गच्छन्ति विक्रियाम् ॥ ३२० ॥

तदपसराऽग्रतः, येनाहमपि स्वामिनं विज्ञापयामि।"

तथानुष्ठिते द्वीपी प्रणम्य मदोत्कटमाह—"स्वामिन् ! क्रियतामद्य मम प्राणैः प्राणयात्रा। दीयतामक्षयो वासः स्वर्गे, मम विस्तार्यतां क्षितितले प्रभूततरं यशः। तन्नाऽत्र विकल्पः कार्यः। उक्तञ्च—

मृतानां स्वामिनः कार्ये भृत्यानामनुवर्तिनाम्।
भवेत् स्वर्गेऽक्षयो वासः कीर्तिश्च धरणीतले ॥ ३२१ ॥

व्याख्या—द्वीपी=व्याघ्रः, स्वजातिः=सजातीयः, नखायुधः=नखायुधजीवी, अभक्ष्यम्=अखाद्यम्, स्तोकम्=अल्पम् ॥ ३१९ ॥ कौलीन्यम्=आभिजात्यम्, आदिमध्यावसानेषु=मध्यान्तप्रारम्भेषु, सर्वकालेषु (सुख तथा दुःख के समय), विक्रियां=विकृतिं, न गच्छन्ति=नाप्नुवन्ति ॥ ३२० ॥ क्षितितले=भूमौ, विकल्पः=सन्देहः, अन्यथाभावः, अनुवर्तिनाम्=अनुयायिनाम् ॥ ३२१ ॥

हिन्दी—शृगाल की बात को सुनकर व्याघ्र ने कहा—"मित्र ! आपने ठीक कहा है, किन्तु आप भी तो सजातीय एवं अल्पकाय ही हैं। नखायुधजीवी होने के कारण आप भी अभक्ष्य ही हैं। कहा गया है कि विज्ञजनों को प्राणान्त काल में भी अभक्ष्य-भक्षण नहीं करना चाहिये। वह भी यदि अल्प हो और उससे क्षुधा की निवृत्ति भी न हो सके तो लोक तथा परलोक को नष्ट करनेवाला अभक्ष्य-भक्षण व्यर्थ ही है ॥ ३१९ ॥

आपने अपनी कुलीनता का परिचय दे दिया। अथवा ठीक ही कहा गया है कि राजा लोग कुलीन व्यक्तियों का सङ्ग्रह इसीलिये करते हैं कि वे सुख तथा दुःख के समय विकृत नहीं होते हैं (सुख तथा दुःख दोनों ही समयों में समान भाव से राजा का सहयोग करते हैं) ॥ ३२० ॥

अतः आप भी आगे से हट जायं, जिससे मैं भी स्वामी के समक्ष अपना निवेदन कह सकूँ।"

शृगाल के हट जानेपर व्याघ्र ने प्रणाम करके मदोत्कट से कहा—"स्वामिन्! आज मेरे ही शरीर से अपनी जीवन-वृत्ति की जाय। मुझे स्वर्ग में अक्षय वास दिया जाय और पृथ्वीपर मेरे यश का विस्तार किया जाय। इस विषय में किसी प्रकार विकल्प न सोचा जाय। कहा भी गया है कि—

स्वामी के लिये प्राण देनेवाले अनुयायी सेवक का स्वर्ग में अक्षयवास तो होता ही है, साथ ही भूमण्डल में भी उसकी कीर्ति फैल जाती है॥ ३२१ ॥

तच्छ्रुत्वा क्रथनकश्चिन्तयामास—"एतैस्तावत् सर्वैरपि शोभनानि प्रोक्तानि, न चैकोऽपि स्वामिना विनाशितः। तदहमपि प्राप्तकालं विज्ञापयामि, येन मम वचनमेते त्रयोऽपि समर्थयन्ति"। इति निश्चित्य प्रोवाच—"भोः! सत्यमुक्तं भवता, परं भवानपि नखायुधः। तत्कथं भवन्तं स्वामी भक्षयति? उक्तञ्च—

मनसापि स्वजात्यानां योऽनिष्टानि प्रचिन्तयेत्।
भवन्ति तस्य तान्येव इह लोके परत्र च॥ ३२२ ॥

तदपसराऽग्रतः, येनाहं स्वामिनं विज्ञापयामि।"

तथानुष्ठिते क्रथनकोऽग्रे स्थित्वा, प्रणम्योवाच—"स्वामिन्! एते तावदभक्ष्या भवताम्। तन्मम प्राणैः प्राणयात्रा विधीयतां, येन ममोभयलोकप्राप्तिर्भवति। उक्तञ्च—

न यज्वानोऽपि गच्छन्ति तां गतिं नैव योगिनः।
यां यान्ति प्रोज्झितप्राणाः स्वाम्यर्थे सेवकोत्तमाः" ॥ ३२३ ॥

व्याख्या—प्राप्तकालं=यथावसरं कालोचितम्, समर्थयन्ति=प्रशंसन्ति, स्वजात्यानां, स्वजातीयानां, तस्य=अनिष्टचिन्तकस्य, तानि=अनिष्टानि भवन्ति॥ ३२२ ॥ यज्वानः=यज्ञकर्तारः, योगिनः योगपरायणाः साधकाः, प्रोज्झितप्राणाः=व्यक्तजीवनाः, सेवकाः=यान्ति॥३२३॥

हिन्दी—व्याघ्र की बात को सुनकर क्रथनक (ऊँट) सोचने लगा—"इन सभी जीवों ने मृदु वाक्यों का प्रयोग करके स्वामी की दृष्टि में अपना स्थान बना लिया है। स्वामी ने इनमें से एक को भी नहीं मारा है, अतः समयानुसार मैं भी निवेदन कर दूँ। मेरी बात को सुनकर ये तीनों मेरी भी प्रशंसा करेंगे।' उक्त प्रकार से निवेदन करने का निश्चय करने के बाद उसने कहा—"महाशय! आपने ठीक कहा है, किन्तु आप भी तो नखायुधजीवी हैं। आपके मांस को स्वामी कैसे खा सकते हैं। कहा भी गया है कि जो व्यक्ति मन से भी अपनी जाति का अनिष्ट चाहता है, उसको इस लोक में भी और उस लोक में भी प्रतिफलस्वरूप अनिष्ट होता है॥ ३२२ ॥

अतः आप आगे से हट जाय, जिससे मैं भी अपना निवेदन कह सकूँ। व्याघ्र के हट जानेपर क्रथनक ने सिंह के आगे जाकर प्रणाम करने के बाद कहा—"स्वामिन्! ये सभी आपके लिए अभक्ष्य हैं, अतः आज मेरे शरीर से ही अपनी जीविका चलायी जाय, जिससे मुझे भी दोनों

लोकों की प्राप्ति हो सके, क्योंकि कहा गया है—यज्ञकर्त्ता एवं साधकगण भी उस गति को नहीं प्राप्त करते हैं, जिस गति को एक श्रेष्ठ सेवक स्वामी के लिये अपने प्राण को देकर प्राप्त कर लेता है ॥ ३२३ ॥

एवमभिहिते सिंहानुज्ञाताभ्यां शृगालचित्रकाभ्यां विदारितोभयकुक्षिः क्रथनकः प्राणानत्याक्षीत्। ततश्च तैः क्षुद्भारपीडितैः सर्वैर्भक्षितः।"

अतोऽहं ब्रवीमि—"बहवः पण्डिताः क्षुद्राः" इति।

तद्भद्र ! क्षुद्रपरिवारोऽयं ते राजा मया सम्यग्ज्ञातः सतामसेव्यश्च। उक्तञ्च—

अशुद्धप्रकृतौ राज्ञि जनता नानुरज्यते।
यथा गृध्रसमासन्नः कलहंसः समाचरेत् ॥ ३२४ ॥

तथा च—

गृध्राकारोऽपि सेव्यः स्याद्धंसाकारैः सभासदैः।
हंसाकारोऽपि सन्त्याज्यो गृध्राकारैः स तैर्नृपः ॥ ३२५ ॥

तन्नूनं ममोपरि केनचिद् दुर्जनेनायं प्रकोपितः, तेनैवं वदति। अथवा भवत्येतत्। उक्तञ्च—

मृदुना सलिलेन हन्यमानान्यवघृष्यन्ति गिरेरपि स्थलानि।
उपजापविदां च कर्णजापैः किमु चेतांसि मृदूनि मानवानाम् ॥ ३२६ ॥

व्याख्या—चित्रकः=व्याघ्रः, विदारितोभयकुक्षिः=स्फारितोदरपार्श्वयुगलः, क्षुद्भारपीडितैः=बुभुक्षितैः, भक्षितः=खादितः। सम्यग्ज्ञातः=सम्यक्परीक्षितः, सताम्=साधुपुरुषाणाम्, असेव्यः=अनाश्रयणीयः। अशुद्धप्रकृतौ=दूषितान्तःकरणे, दुष्टमात्यादिनिसेविते वा, राज्ञि=नृपतौ, जनता=प्रजा, गृध्रसमासन्नः=गृध्रैः परिवृतः, कलहंसः; यथा चरति तथा राजापि चरतीति भावः ॥ ३२४ ॥ गृध्राकारः=दुष्प्रकृतिः, हंसाकारैः=साधुस्वभावैः, सेव्यः=समाश्रयणीयः ॥ ३२५ ॥ मृदुना=कोमलान्तःकरणेन, सलिलेन जलेन, हन्यमानानि=ताड्यमानानि, गिरेः=पर्वतस्य, स्थलानि=कठोराणि स्थलानि, अवघृष्यन्ति=सङ्घर्षणेन हीयन्ते, उपजापविदां=परिवादकर्मकुशलानां (चुगलखोरी करने में दक्ष), कर्णजापैः=परोक्षनिन्दावाक्यैः, मृदूनि=कोमलानि स्थलानि=अन्तःकरणानि, किमु=विक्रियां नाप्नुवन्ति किम् ? ॥ ३२६ ॥

हिन्दी—क्रथनक के निवेदन को सुनकर सिंह की आज्ञा से शृगाल तथा व्याघ्र ने मिलकर उसके उदर को फाड़ डाला और क्रथनक का प्राणान्त हो गया। भूख से पीड़ित सिंह तथा उसके अनुयायियों ने क्रथनक के शरीर को खा डाला।

उक्त कथा को समाप्त करने के पश्चात् सञ्जीवक ने कहा—"इसीलिए मैं कहता हूँ कि क्षुद्र विचारवाले धूर्त जीवों ने मिलकर उष्ट्र को मार डाला था।

मित्र ! आपका यह राजा भी क्षुद्रजनों से ही आवृत है, इस बात को मैं भलीभाँति जान लिया हूँ। यह भद्रपुरुषों द्वारा सेवनीय नहीं है। कहा भी गया है कि—

असद् विचारवाले अनुचरों द्वारा परिवृत राजा में प्रजा सन्तुष्ट नहीं हो सकती है। क्योंकि दुष्ट व्यक्तियों के सम्पर्क के कारण वह बुरा कार्य करने को विवश हो जाता है, जैसे गृध्रों के समाज में पड़ा हुआ राजहंस अपने साधुस्वभाव को छोड़ने के लिये विवश हो जाता है॥ ३२४॥

और भी—गृध्रों के समान नीच प्रकृति का भी राजा यदि हंस के समान शुद्ध आचरण के सभासदों से अन्वित हो, तो वह सेवनीय होता है, किन्तु गृध्रों के समान नीच स्वभाव वाले सदस्यों से युक्त हंस के समान साधु प्रकृति का भी नृपति त्याज्य ही होता है॥ ३२५॥

ऐसा प्रतीत हो रहा है कि किसी दुष्ट प्रकृति वाले सभासद के ही समझाने के कारण वह मुझ से रुष्ट हुआ है, और क्रुद्ध होकर इस प्रकार की बातें कर रहा है। अथवा उसका ऐसा होना स्वाभाविक ही है। क्योंकि—

जैसे मृदु सलिल के भी प्रपात से पर्वतीय भूमि घिस कर कट जाती है, उसी तरह से चुगलखोरी में निपुण व्यक्तियों की सतत चुगली के कारण मनुष्य का कोमल हृदय क्या (पिघलकर) विकृत नहीं हो सकता है? (यदि होता है तो इसमें आश्चर्य ही क्या है)॥ ३२६॥

कर्णविषेण च भग्नः किं किं न करोति बालिशो लोकः?
क्षपणकतामपि धत्ते पिबति सुरां नरकपालेन॥ ३२७॥

अथवा साध्विदमुच्यते—

पादाहतोऽपि दृढदण्डसमाहतोऽपि,
यं दंष्ट्रया स्पृशति तं किल हन्ति सर्पः।
कोऽप्येष एव पिशुनोऽस्त्यमनुष्यधर्मा,
कर्णे परं स्पृशति हन्ति परं समूलम्॥ ३२८॥

तथा च—

अहो खलभुजङ्गस्य विपरीतो वधक्रमः।
कर्णं लगति चैकस्य प्राणैरन्यो वियुज्यते॥ ३२९॥

तदेवं गतेऽपि किंकर्तव्यमित्यहं त्वां सुहृद्भावात्पृच्छामि।"

दमनक आह—'तद्देशान्तरगमनं युज्यते, नैवंविधस्य कुस्वामिनः सेवां विधातुम्।

उक्तञ्च—

गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः।
उत्पथप्रतिपन्नस्य परित्यागो विधीयते॥ ३३०॥

व्याख्या—कर्णविषेण भग्नः = उपजापेन विकृतिं गतः (चुगलखोरी से बहकाया हुआ) बालिशः = मूर्खः, किं किं पापं न करोति। वञ्चितः सन् क्षपणकतां = नग्नतां, धत्ते, नरकपालेन सुरां = मदिरामपि, पिबति॥ ३२७॥ पादाहतः = पादेन ताडितः, दृढदण्डसमाहतः =

दण्डेन ताडितः, सर्पः=भुजङ्गः, यं स्पृशति=दशति, तं हन्ति=विनाशयति। किन्तु, पिशुनः=खलः, मनुष्यधर्मा=मनुष्यधर्मादतिरिक्तसामर्थ्ययुक्तः, कोऽपि अन्य एव भवति, यः कर्णे स्पृशति, समूलं=सान्वयं,=परम्=अन्यं, हन्ति ॥ ३२८ ॥ खलभुजङ्गस्य=पिशुनरूपस्य सर्पस्य, वधक्रमः=परविनाशोपायः, विपरीतः=व्यतिरिक्तः, विरुद्ध एव भवति। यतः— एकस्य कर्णे लगति=स्पृशति, दशतीति, प्राणैः, अन्यः=कोऽपि द्वितीयो जनः, वियुज्यते ॥ ३२९ ॥ सुहृद्भावात्=मित्रभावात्। अवलिप्तस्य=विकृतिभावं गतस्य, कार्याकार्यमजानतः=विवेकशून्यस्य, उत्पथप्रतिपन्नस्य=कुमार्गाश्रितस्य, गुरोः, परित्यागः=त्यागः, विधीयते ॥३३०॥

हिन्दी—कान में विष के समान लगने वाली चुगली के कारण विकृत होकर मूर्खजन क्या क्या नहीं कर डालता है ?, दूसरे के बहकावे में ही आकर मनुष्य संन्यास ग्रहण कर लेता है, नग्न भी हो जाता है और नर-कपाल में सुरा भी पीता है ॥ ३२७ ॥

अथवा, ठीक ही कहा गया है कि—पादाघात के कारण, अथवा लाठी के प्रहार से आहत होकर सर्प उसी व्यक्ति को काटता है जो उसका स्पर्श करता है। किन्तु असाधारण शक्तिसम्पन्न खल कुछ और ही होता है, जो अन्य व्यक्ति के कान में लगने पर भी किसी द्वितीय व्यक्ति का ही समूल विनाश करता है। ( स्पर्श अन्य का करता है और विनाश किसी दूसरे का ही होता है ) ॥ ३२८ ॥

और भी—खलरूपी भुजङ्ग के मारने का उपाय ही कुछ विचित्र होता है। वह कान में एक के लगता है और दूसरे को अपना प्राण खोना पड़ता है ॥ ३२९ ॥

ऐसी स्थिति में मुझे क्या करना चाहिये, कृपया निर्देश दें। मैं मित्रता के कारण ही आपसे पूछ रहा हूँ।"

दमनक ने कहा—"मेरे विचार से ऐसे स्वामी की सेवा करने से, विदेश गमन करना ही उचित प्रतीत होता है। कहा भी गया है कि—

दुष्टमति, अविवेकी तथा कुमार्गगामी गुरु का भी परित्याग कर दिया जाता है" ॥३३०॥

सञ्जीवक आह—"अस्माकमुपरि स्वामिनि कुपिते गन्तुं न शक्यते। न चान्यत्र गतानामपि निर्वृतिर्भवति। उक्तञ्च—

महतां योऽपराध्येत दूरस्थोऽस्मीति नाश्वसेत्।
दीर्घौ बुद्धिमतो बाहू ताभ्यां हन्ति स हिंसकम् ॥ ३३१ ॥

तद्युद्धं मुक्त्वा मे नान्यदस्ति श्रेयस्करम्। उक्तञ्च—

न यान्ति तीर्थैस्तपसा च लोकान्, स्वर्गैषिणो दानशतैः सुवृत्तैः।
क्षणेन यान् यान्ति रणेषु धीराः, प्राणान् समुज्झन्ति हि ये सुशीलाः ॥ ३३२ ॥

मृतैः सम्प्राप्यते स्वर्गो जीवद्भिः कीर्तिरुत्तमा।
तदुभावपि शूराणां गुणावेतौ सुदुर्लभौ ॥ ३३३ ॥

ललाटदेशे रुधिरं स्रवत्तु शूरस्य यस्य प्रविशेच्च वक्त्रे।
तत्सोपमानेन समं भवेच्च सङ्ग्रामयज्ञे विधिवत्प्रदिष्टम् ॥ ३३४ ॥

होमार्थैर्विधिवत्प्रदानविधिना सद्विप्रवृन्दार्चनै-
र्यज्ञैर्भूरिसुदक्षिणैः सुविहितैः संप्राप्यते यत्फलम्।
सत्तीर्थाश्रमवासहोमनियमैश्चान्द्रायणाद्यैः कृतैः
पुम्भिस्तत्फलमाहवे विनिहतैः सम्प्राप्यते तत्क्षणात्॥ ३३५॥

व्याख्या—निर्वृतिः=सुखम्। यः महतां=श्रेष्ठजनानां, बलवताम्, अपराध्येत, सः, दूरस्थोऽहम्=दूरदेशस्थोऽहम्, इति नाश्वसेत्। यतः=बुद्धिमतः दीर्घौ, बाहू=करौ, भवतः। सः=बुद्धिमान्, ताभ्यां=कराभ्यां, दूरस्थमपि हिंसकं=स्वशत्रुं, हन्ति॥ ३३१॥ हि=यतः स्वर्गैषिणः, तीर्थैः, तपसा, दानशतैः, सुवृत्तैः=सुष्ठ्वाचारादिभिः, तान् लोकान् न यान्ति, यान् सुशीलाः ये धीराः रणेषु प्राणान् समुज्झन्ति=त्यजन्ति, ते यान्=लोकान्, क्षणेन यान्ति॥ ३३२॥ उत्तमा श्रेष्ठतरा, कीर्तिः=यशः, शूराणां=वीराणां, सुदुर्लभौ=दुष्प्रापौ, गुणौ भवतः॥ ३३३॥ वक्त्रे=मुखे, तद्=रुधिरं, प्रदिष्टं=कथितम्॥ ३३४॥ पुरुषैः होमार्थैः=होमादिकर्मभिः, विधिवत् प्रदानं विधिना=विधिवत्प्रदत्तेन दानेन, सद्विप्रवृन्दार्चनैः=सद्ब्राह्मणपूजनादिभिः, यज्ञैः, भूरिसुदक्षिणैः=विपुलदक्षिणाप्रदानादिभिः, चान्द्रायणाद्यैः=चान्द्रायणादिव्रतैः, यत्फलं सम्प्राप्यते, आहवे विनिहतैः=हतैः, पुम्भिः=पुरुषैः, तत्फलं तत्क्षणात्=आहवे विनाशकाले एव, सम्प्राप्यते=लभ्यते॥ ३३५॥

हिन्दी—सञ्जीवक ने कहा—"ऐसी स्थिति में जब कि स्वामी मेरे ऊपर क्रुद्ध हैं, मेरा बाहर जाना ठीक नहीं होगा। क्योंकि अन्यत्र गमन से भी मुझे शान्ति नहीं मिल सकती; कहा भी गया है कि—

जो व्यक्ति बड़ों के साथ वैर करता है (बड़ों के प्रति अपराध करता है) उसे यह सोचकर विश्वस्त नहीं होना चाहिये कि मैं उससे दूर रहता हूँ। बुद्धिमानों की भुजायें बहुत बड़ी होती हैं। वे उन भुजाओं के द्वारा दूरस्थ शत्रु को भी पकड़ लेते हैं और उसे मार ही डालते हैं॥ ३३१॥

अतः युद्ध के अतिरिक्त और कोई श्रेयस्कर मार्ग मेरे लिये नहीं है। कहा भी गया है कि—

तीर्थ करने से, तपस्या करने से, सैकड़ों प्रकार के दान देने से एवं सदाचरण करने से भी स्वर्ग की कामना करने वाले मनुष्य को उन लोकों की प्राप्ति नहीं हो पाती, जिन लोकों को रण में अपने प्राणों को त्याग देने वाले सुशील तथा वीर पुरुष प्राप्त करते हैं॥ ३३२॥

मरने के बाद स्वर्ग की प्राप्ति और जीवित रहने पर लोक में कीर्ति का होना ये दोनों ही दुष्प्राप्य गुण वीर पुरुषों को अनायास मिलते हैं॥ ३३३॥

युद्ध-क्षेत्र में ललाट प्रदेश से बहकर शूरों के मुख में प्रवेश करने वाले रक्त को यज्ञीय सोमरस के समान कहा गया है। सोमरस के पान से जो पुण्य प्राप्त होते हैं वे ही रण में ललाट प्रदेश से बहकर मुख में पड़ने वाले रक्त से भी होते हैं॥ ३३४॥

और भी—होम, विधिवत् दान, विप्रार्चन, यज्ञ, प्रभूतदक्षिणा, सत्तीर्थों का वास, होमादि तीर्थकृत्य, चान्द्रायणादिव्रत तथा अन्य सत्कृत्यों से जो फल प्राप्त होता है, उस फल को वीर पुरुष युद्ध में तत्काल प्राप्त कर लेते हैं ॥ ३३५ ॥

तदाकर्ण्य दमनकश्चिन्तयामास—"युद्धाय कृतनिश्चयोऽयं दृश्यते दुरात्मा। तद्यदि कदाचित्तीक्ष्णशृङ्गाभ्यां स्वामिनं प्रहरिष्यति तन्महाननर्थः सम्पत्स्यते। तदेनं भूयोऽपि स्वबुद्धया प्रबोध्य तथा करोमि, यथा देशान्तरगमनं करोति। आह च—"भो मित्र! सम्यगभिहितं भवता, किन्तु कः स्वामिभृत्ययोः सङ्ग्रामः ?। उक्तञ्च—

बलवन्तं रिपुं दृष्ट्वा नैवात्मानं प्रकोपयेत्।
बलवद्भिश्च कर्तव्या शरच्चन्द्रप्रकाशता ॥ ३३६ ॥

अन्यच्च—

शत्रोर्विक्रममज्ञात्वा वैरमारभते हि यः।
स पराभवमाप्नोति समुद्रष्टिट्टिभाद्यथा" ॥ ३३७ ॥

सञ्जीवक आह—"कथमेतत्" ?; सोऽब्रवीत्—

व्याख्या—दुरात्मा = दुष्टः, तीक्ष्णशृङ्गाभ्यां = तीव्रविषाणाभ्याम्, अनर्थः = अनिष्टः, बलवद्भिः = शक्तिमद्भिः, शरच्चन्द्रप्रकाशता = शीतलता, शान्तिभावावगाहनमिति यावत् ॥ ३३६ ॥ वैरं = शत्रुभावं, पराजयं, तिरस्कारं, यथा टिट्टिभात् समुद्रः प्राप्तवान् ॥ ३३७ ॥

हिन्दी—सञ्जीवक की बात को सुनकर दमनक ने सोचा—"यह दुष्ट तो युद्ध के लिये प्रस्तुत जान पड़ता है। यदि इसने अपने तीक्ष्ण शृङ्गों से स्वामी पर प्रहार किया, तो महान् अनर्थ हो जायगा। अतएव मैं अपनी बुद्धि के द्वारा इसको समझा कर ऐसा बना दूँ कि यह यहाँ से अन्यत्र चला जाय।" उक्त बात को सोचकर उसने कहा—"मित्र आप ठीक कहते हैं। परन्तु स्वामी और भृत्य के मध्य में सङ्ग्राम होना उचित नहीं है। कहा भी गया है कि—

बलवान् शत्रु को देखकर उत्तेजित होना ठीक नहीं होता है। बलवान् शत्रु के साथ शान्ति का ही अवलम्बन करना चाहिये ॥ ३३६ ॥

और भी—शत्रु की शक्ति को विना जाने ही जो वैर बढ़ाता है, वह शत्रु के सामने उसी प्रकार अपमानित ( पराजित ) होता है जैसे कि टिट्टिभ के सामने समुद्र को होना पड़ा था ॥ ३३७ ॥"

सञ्जीवक ने पूछा—"यह कैसे" ?; दमनक ने कहा—

## [ १२ ]

## ( टिट्टिभ-समुद्रकथा )

कस्मिंश्चित्समुद्रतीरैकदेशे टिट्टिभदम्पती प्रतिवसतः स्म। ततो गच्छति काले ऋतुसमयमासाद्य टिट्टिभी गर्भमाधत्त। अथासन्नप्रसवा सती सा टिट्टिभमूचे—"भोः

कान्त! मम प्रसवसमयो वर्तते, तद्विचिन्त्यतां किमपि निरुपद्रवं स्थानं, येन तत्राहमण्डकविमोक्षणं करोमि।"

टिट्टिभः प्राह—"भद्रे! रम्योऽयं समुद्रप्रदेशः। तदत्रैव प्रसवः कार्यः।" साह—"अत्र पूर्णिमादिने समुद्रवेला चरति। सा मत्तगजेन्द्रानपि समाकर्षति, तद् दूरमन्यत्र किञ्चित्स्थानमन्विष्यताम्।"

तच्छ्रुत्वा विहस्य टिट्टिभः प्राह—"भद्रे! न युक्तमुक्तं भवत्या। का मात्रा समुद्रस्य, यो मम प्रसूतिं दूषयिष्यति? किं न श्रुतं भवत्या—

रुद्धाम्बरचरमार्गं व्यपगतधूमं सदा महद्भयदम्।
मन्दमतिः कः प्रविशति हुताशनं स्वेच्छया मनुजः॥ ३३८॥

व्याख्या—ऋतुसमयम्=गर्भाधानकालम्, आसन्नप्रसवा=प्रसवकालमुपगता, निरुपद्रवं=निर्विघ्नं, शान्तमिति भावः, अण्डविमोक्षणं=गर्भविमोक्षणं, समुद्रवेला=समुद्रतरङ्गः (ज्वार-भाटा), मात्रा=शक्तिः, प्रसूतिं=जन्यम्, दूषयिष्यति=समाहरिष्यति। रुद्धाम्बरचरमार्गं=नभचरजीवानां मार्गमवरुध्य विस्फुरन्तं (नभचर वर्ग के मार्ग को रोककर आकाश में फैलनेवाले), व्यपगतधूमं=धूमरहितं प्रज्वलन्तं महद्भयदं=भयावहं, भीतिप्रदम्, हुताशनं=दावाग्निम्, कः प्रविशति॥ ३३८॥

हिन्दी—किसी समुद्र के किनारे एक भाग में टिटिहरी का एक जोड़ा निवास करता था। कुछ दिनों के बाद, गर्भाधान का समय हो जाने पर टिट्टिमी ने गर्भ धारण किया। जब उसके प्रसव का समय सन्निकट आ गया तो उसने अपने पति से कहा—"कान्त! मेरे प्रसव का समय पूर्ण हो चुका है। अतः आप किसी ऐसे स्थान का अन्वेषण करें जो निर्विघ्न हो और जहाँपर मैं शान्तिपूर्वक अपना अण्डा दे सकूँ।"

टिट्टिभी की बात को सुनकर टिट्टिभ ने कहा—"प्रिये! समुद्र का यह भाग अत्यन्त रमणीय है। तुम्हारे प्रसव के लिए यह स्थान अधिक उपयुक्त होगा। तुम्हें यहीं पर प्रसव करना चाहिये।"

टिट्टिभी ने कहा—"यहाँ, पूर्णिमा के दिन समुद्र में बाढ़ आया करती है। वह बड़े बड़े गजेन्द्रों को भी बहा सकती है। अतः यहाँ से दूर किसी अन्य स्थान का अन्वेषण कीजिये।"

उसकी बात को सुनकर टिट्टिभ ने कहा—"भद्रे! तुम्हारा यह कहना ठीक नहीं है। समुद्र की क्या शक्ति है कि वह मेरे बच्चों को बहा ले जाय। क्या तुमने नहीं सुना है—कौन ऐसा मूर्ख जीव है, जो नभचर जीवों के मार्ग को रोककर आकाश में फैलनेवाले निर्धूम एवं भीषण दावाग्नि में प्रवेश करने का साहस कर सकता है॥ ३३८॥

मत्तेभकुम्भविदलनकृतश्रमं सुप्तमन्तकप्रतिमम्।
यमलोकदर्शनेच्छुः सिंहं बोधयति को नाम?॥ ३३९॥

को गत्वा यमसदनं स्वयमन्तकमादिशत्यजातभयः ।
प्राणानपहर मत्तो यदि शक्तिः काचिदस्ति तव ? ॥ ३४० ॥
प्रालेयलेशमिश्रे मरुति प्राभातिके च वाति जडे ।
गुणदोषज्ञः पुरुषो जलेन कः शीतमपनयति ? ॥ ३४१ ॥

तस्माद्विश्रब्धाऽत्रैव गर्भं मुञ्च । उक्तञ्च—

यः पराभवसन्त्रस्तः स्वस्थानं सन्त्यजेन्नरः ।
तेन चेत्पुत्रिणी माता तद्वन्ध्या केन कथ्यते ॥ ३४२ ॥

व्याख्या—मत्तेभकुम्भविदलनकृतश्रमं = प्रमत्तकरिकुम्भविमर्दनाच्छ्रान्तम्, अतएव सुप्तं = प्रसुप्तम्, अन्तकप्रतिमम् = महाकालसदृशं, सिंहं, को नाम यमलोकदर्शनेच्छुः = मुमूर्षुः, बोधयति ? ॥ ३३९ ॥ अजातभयः = विगतभयः यमसदनं = यमालयं, गत्वा = प्राप्य, अन्तकं = यमं, "यदि तव काचिच्छक्तिरस्ति तर्हि मत्तः प्राणान् अपहर" इति आदिशति ? ॥ ३४० ॥ प्रालेयलेशमिश्रे = हिमकणमिश्रिते, प्राभातिके = प्रातःकालिके शीतले, मलयजसमीरणे, शीतं = शैत्यम्, अपनयति = दूरीकरणार्थं स्नानमाचरतीति ॥ ३४१ ॥ विश्रब्धा = विगतभया, निश्चिन्ता सती, सन्त्रस्तः = भीतः ॥ ३४२ ॥

हिन्दी—यमलोक को देखने का इच्छुक वह कौन ऐसा पुरुष है जो प्रमत्त गजराजों के कुम्भस्थल को विदीर्ण करने के कारण श्रान्त, सोये हुये काल के समान भयानक सिंह को जगाने का साहस कर सकता है ? ॥ ३३९ ॥

यमपुरी में जाकर निर्भीकतापूर्वक कौन साक्षात् यम से यह कहने का साहस कर सकता है कि—यदि तुम्हारे में शक्ति हो तो मेरे प्राण का अपहरण कर लो ॥ ३४० ॥

शीतलहरी के गुण और दोषों को जाननेवाला कौन ऐसा बुद्धिमान् पुरुष है, जो हिम-कणों से युक्त प्रातःकालीन हवा की भयङ्कर शीतलता में ठण्डे जल से स्नान करके अपने शरीर के शीत को दूर करने का साहस कर सकता है ? ॥ ३४१ ॥

अतएव निश्चिन्त होकर तुम यहीं पर प्रसव करो । कहा भी गया है कि—

पराजय या तिरस्कार के डर से अपने स्थान को त्याग देनेवाले कायर व्यक्ति को जन्म देकर यदि उसकी माता अपने को पुत्रिणी समझती है, तो वन्ध्या कौन-सी स्त्री कही जायेगी ?" ॥ ३४२ ॥

तच्छ्रुत्वा समुद्रश्चिन्तयामास—अहो गर्वः पक्षिकीटस्यास्य ! अथवा साध्विद-मुच्यते—

उत्क्षिप्य टिट्टिभः पादावास्ते भङ्गभयाद्दिवः ।
स्वचित्तकल्पितो गर्वः कस्य नात्रापि विद्यते ? ॥ ३४३ ॥

तन्मयास्य प्रमाणं कुतूहलादपि द्रष्टव्यं, किं ममैषोऽण्डापहारे कृते करिष्यति ?" इति चिन्तयित्वा स्थितः ।

अथ प्रसवानन्तरं प्राणयात्रार्थं गताायाष्टिट्टिभ्याः समुद्रो वेलाव्याजेनाण्डान्यपजहार। अथायाता सा टिट्टिभी प्रसवस्थानं शून्यमवलोक्य, प्रलपन्ती टिट्टिभमूचे— "भो मूर्ख ! कथितमासीन्मया ते यत्समुद्रवेलयाऽण्डानां विनाशो भविष्यति, तद् दूरतर व्रजावः। परं मूढतयाहङ्कारमाश्रित्य मम वचनं न करोषि। अथवा साध्विदमुच्यते—

सुहृदां हितकामानां न करोतीह यो वचः।
स कूर्म इव दुर्बुद्धिः काष्ठाद् भ्रष्टो विनश्यति" ॥ ३४४ ॥

टिट्टिभ आह—"कथमेतत्" ? साब्रवीत्—

व्याख्या—पक्षिकीटस्य = क्षुद्रखगस्य। दिवः = आकाशस्य, भङ्गभयात् = पतनभयात्, पादौ = चरणौ, उत्क्षिप्य = ऊर्ध्वं विधाय, आस्ते = तिष्ठति। स्वचित्तकल्पितः = स्वमनसि चिन्तितः, गर्वः = दर्पः, कस्य न विद्यते = अस्ति, भवतीति ॥ ३४३ ॥ प्रमाणं = शक्तेः स्वरूपं प्राणयात्रार्थं = जीविकोपार्जनार्थं, वेलाव्याजेन = तरङ्गव्याजेन, प्रलपन्ती = विलपन्ती, मूढतया = स्वमूर्खतया, अहङ्कारमाश्रित्य = गर्वमाश्रित्य, न करोषि = नाकार्षीः, हितकामानां = हितचिन्तकानां, सुहृदां = मित्राणाम्, दुर्बुद्धिः = मूर्खः, विनश्यति = नाशमेति ॥ ३४४ ॥

हिन्दी—टिट्टिभ के वचन को सुनकर समुद्र ने सोचा—"इस तुच्छ पक्षी को कितना अधिक घमण्ड है। अथवा ठीक ही कहा गया है कि—आकाश के गिरने के भय से टिट्टिभ अपने दोनों पैरों को ऊपर उठाकर पड़ा रहता है। वह सोचता है कि गिरते हुए आकाश को मैं अपने पैरों पर रोक लूँगा। यह सत्य है कि अपने मन में ही अपनी श्रेष्ठता को सोचकर किसको गर्व नहीं हो जाता है ॥ ३४३ ॥

अतः कुतूहल के लिये मुझे भी इसकी शक्ति को देखना है कि मेरे द्वारा अण्डों का अपहरण किये जाने के बाद यह क्या करता है ?" यह सोचकर वह शान्त पड़ा रहा।

प्रसव के बाद किसी दिन टिट्टिभी अपनी जीविका की खोज में निकल गयी तो समुद्र ने तरङ्गों के बहाने से उसके अण्डों को अपहृत कर लिया। जीविकोपार्जन के पश्चात् जब उसने प्रसव-स्थान को शून्य देखा तो वह विलख कर रोने लगी। रोती हुई वह अपने पति से बोली—"अरे मूर्ख ! मैंने तुमसे पहले ही यह कह दिया था कि समुद्र की तरङ्गों से मेरे अण्डों का विनाश हो जायगा। अतः हम लोग यहाँ से दूर निकल चलें। किन्तु अपनी मूर्खता और घमण्ड के कारण तुमने मेरी बात पर ध्यान नहीं दिया। अथवा ठीक ही कहा गया है कि—

हितचिन्तकों और मित्रों की बात को जो नहीं मानता है, वह अपनी मूर्खता के कारण उसी प्रकार विनष्ट हो जाता है जैसे कि वह मूर्ख कूर्म काष्ठ से गिरकर मर गया था" ॥ ३४४ ॥



टिट्टिभ ने पूछा—"यह कैसे" ? टिट्टिभी ने कहना आरम्भ किया—

[ १३ ]

## ( मूर्खकच्छपकथा )

अस्ति कस्मिंश्चिज्जलाशये कम्बुग्रीवो नाम कच्छपः। तस्य च सङ्कटविकटनाम्नी मित्रे हंसजातीये परमस्नेहकोटिमाश्रिते, नित्यमेव सरस्तीरमासाद्य तेन सहानेकदेवर्षिमहर्षीणां कथाः कृत्वास्तमनवेलायां स्वनीडसंश्रयं कुरुतः। अथ गच्छता कालेनानावृष्टिवशात्सरः शनैः शनैः शोषमगमत्। ततस्तद्दुःखदुःखितौ तावूचतुः—"भो मित्र! जम्बालशेषमेतत्सरः सञ्जातं, तत्कथं भवान्भविष्यतीति व्याकुलत्वं नो हृदि वर्तते।"

तच्छ्रुत्वा कम्बुग्रीव आह—"भो साम्प्रतं नास्त्यस्माकं जीवितव्यं जलाभावात्। तथाप्युपायश्चिन्त्यतामिति। उक्तञ्च—

त्याज्यं न धैर्यं विधुरेऽपि काले, धैर्यात्कदाचित्स्थितिमाप्नुयात्सः।
जाते समुद्रेऽपि च पोतभङ्गे, सांयात्रिको वाञ्छति तर्तुमेव॥ ३४५॥

अपरञ्च—

मित्रार्थे बान्धवार्थे च बुद्धिमान् यतते सदा।
जातास्वापत्सु यत्नेन जगादेदं वचो मनुः॥ ३४६॥

व्याख्या—परमस्नेहकोटिमाश्रिते = परमप्रीतिभावमुपगते, अस्तमनवेलायां = सायंकाले, स्वनीडसंश्रयं = स्वनिवासाश्रयणं, शोषं = शुष्कताम्, तद्दुःखदुःखितौ = कूर्मस्य दुःखेन दुःखितौ, जम्बालशेषं = कर्दममात्रावशेषम्, भविष्यति = स्वजीवनं धारयिष्यति, जीवितव्यं = जीवनधारणोपायः, विधुरे = विपत्तिकाले, स्थितिं = स्थानं, विपत्तेः स्थानं वा, पोतभङ्गे = तरणिविनाशे जाते सति, सांयात्रिकः = पोतवणिक्, तर्तुं = उदधेः पारं गन्तुं, वाञ्छति = इच्छतीति॥ ३४५॥ आपत्सु = विपत्सु, जातासु = समागतास्वपि, बुद्धिमान् यतते = ताभ्यः त्राणार्थं प्रयत्नं करोति॥ ३४६॥

हिन्दी—किसी जलाशय में कम्बुग्रीव नाम का एक कूर्म रहता था। उसके साथ संकट और विकट नाम के दो हंस अत्यधिक स्नेह रखते थे। वे नित्य तालाब के किनारे बैठकर उस कूर्म के साथ गोष्ठी किया करते थे और अनेक देवर्षि, महर्षियों की कथा आदि कहकर सूर्यास्त के समय अपने निवासस्थान को लौट जाया करते थे। कुछ दिनों के बाद अनावृष्टि के कारण वह तालाब धीरे-धीरे सूखने लगा। कच्छप के दुःख से दुःखित होकर हंसों ने कहा—"मित्र! यह तालाब तो सूख चुका है। अब तो इसमें कीचड़ मात्र ही बच गया है। जल के अभाव में आप कैसे जीवित रहेंगे, इस चिन्ता से हम लोगों को अत्यन्त व्याकुलता हो रही है।"

हंसों की उपर्युक्त बात को सुनकर कच्छप ने कहा—"इस समय, यद्यपि जल के अभाव

में मेरा जीना सम्भव नहीं है तथापि आप लोगों को मेरे बचने का कोई उपाय अवश्य सोचना चाहिये। कहा भी गया है कि—

आपत्तिकाल में भी धैर्य का परित्याग नहीं करना चाहिये। सम्भव है, धैर्य धारण करने से ही आपत्ति से छुटकारा मिल जाय। समुद्र के मध्य में पोत के टूट जाने पर भी पोत का स्वामी वणिक् अपना धैर्य नहीं छोड़ता है, प्रत्युत धैर्यपूर्वक समुद्र को पार करने का ही उपाय सोचता है॥ ३४५॥

और भी—मनु ने कहा है कि—आपत्तिकाल में बुद्धिमान् व्यक्ति को अपने मित्रों तथा बन्धुबान्धवों को उस आपत्ति से बचाने का सतत प्रयत्न करते रहना चाहिये। क्योंकि—सतत प्रयत्न से सम्भव है कि आपत्ति दूर हो जाय॥ ३४६॥

**तदानीयतां काचिद् दृढरज्जुर्लघुकाष्ठं वा। अन्विष्यतां च प्रभूतजलसनाथं सरः, येन मया मध्यप्रदेशे दन्तैर्गृहीते सति युवां कोटिभागयोस्तत्काष्ठं मया सहितं संगृह्य तत्सरो नयथः।"**

**तावूचतुः—"भो मित्र! एवं करिष्यावः। परं भवता मौनव्रतेन स्थातव्यम्, नो चेत्तव काष्ठात्पातो भविष्यति।"**

**तथानुष्ठिते, गच्छता कम्बुग्रीवेणाधोभागे व्यवस्थितं किञ्चित्पुरमालोकितम्। तत्र ये पौरास्ते तथा नीयमानं विलोक्य, सविस्मयमिदमूचुः—"अहो, चक्राकारं किमपि पक्षिभ्यां नीयते, पश्यत! पश्यत!।**

**अथ तेषां कोलाहलमाकर्ण्य कम्बुग्रीव आह—"भोः! किमेष कोलाहलः"? इति वक्तुमना अर्धोक्त एव पतितः, पौरैः खण्डशः कृतश्च। अतोऽहं ब्रवीमि—"सुहृदां हितकामानाम् इति। तथा च—**

**अनागतविधाता च प्रत्युत्पन्नमतिस्तथा।**
**द्वावेतौ सुखमेधेते यद्भविष्यो विनश्यति"॥ ३४७॥**

**टिट्टिभ आह—"कथमेतत्"? साऽब्रवीत्—**

**व्याख्या**—प्रभूतजलसनाथं = प्रचुरजलं, कोटिभागयोः = प्रान्तद्वयभागयोः, मौनव्रतेन = शान्तेन, पातः = पतनम्, अधोभागे = निम्नभागे, व्यवस्थितं = स्थितं, पौराः = नागरिकाः, सविस्मयं = साश्चर्यं, चक्राकारं = वर्तुलं, कोलाहलं = शब्दं, अर्धोक्तिपतितः = उच्चारितार्धवचनमात्रेणैव पतितः (अभी आधा ही कह पाया था कि गिर पड़ा)। अनागतविधाता = भविष्यचिन्तकः, प्रत्युत्पन्नमतिः = प्रतिभासम्पन्नो मेधावी, सुखमेधेते = सुखेन वर्धेते। यद्भविष्यः = यद्भविष्यति तद्द्रक्ष्यामीति भविष्यवादी, भाग्यवादी वा विनश्यति = नाशमेति॥ ३४७॥

**हिन्दी**—आप लोग एक मजबूत रस्सी अथवा कोई छोटा सा एक काठ ले आइये और जल से परिपूर्ण किसी दूसरे तालाब को खोज डालिये। काष्ठ या रज्जु के मध्य भाग को जब मैं अपने दांतों से पकड़ लूँगा तो आप लोग उसके दोनों छोरों को पकड़ कर उड़ चलियेगा और इस प्रकार मुझे उस तालाब में पहुँचा दीजियेगा।"

कम्बुग्रीव की बात को सुनकर हंसों ने कहा—मित्र ! हमलोग आप के कथनानुसार सब प्रबन्ध कर देंगे, किन्तु आपको उस स्थिति में शान्त रहना पड़ेगा। यदि आप शान्त नहीं रहे तो काष्ठ से गिर जाइयेगा।"

आवश्यक प्रबन्ध के बाद जब हंस उस कच्छप को लेकर आकाश में उड़ रहे थे तो कम्बुग्रीव ने अपने नीचे बसे हुये किसी नगर को देखा। नागरिक गण उसको उक्त प्रकार से ले जाते हुए देखकर आपस में आश्चर्यपूर्वक कह रहे थे कि—"देखो, देखो ! चक्राकार किसी वस्तु को लेकर दो पक्षी उड़े जा रहे हैं।"

नागरिकों के कोलाहल को सुनकर कम्बुग्रीव ने कहा—"मित्रो ! यह कैसा कोलाहल हो रहा है ? "अभी वह आधा भी नहीं कह पाया था कि आकाश से गिर पड़ा और नागरिकों ने उसको काट कर खण्ड-खण्ड कर डाला।"

उक्त कथा को समाप्त करने के बाद टिट्टिभी ने कहा—"इसीलिये मैं कहती हूँ कि जो व्यक्ति अपने हितैषियों और मित्रों की बात को नहीं मानता है, वह कूर्म की तरह काष्ठ से गिरकर मध्य में ही मर जाता है।

और भी—जो व्यक्ति अपने भविष्य के विषय में सदा सावधान होकर सोचता रहता है और जो समय आने पर अपनी प्रतिभा के द्वारा अपने बचने का उपाय सोच लेता है, वे दोनों ही सुखपूर्वक सानन्द बढ़ते रहते हैं और जो यह सोचता है कि भाग्य में जो लिखा होगा वही होगा, अथवा समय आने पर देखा जायेगा" वह आपत्ति के समय तड़फड़ाकर विनष्ट हो जाता है ॥ ३४७ ॥

टिट्टिभ ने कहा—"यह कैसे" ? वह बोली—

[ १४ ]

## ( मत्स्यत्रयकथा )

कस्मिंश्चिज्जलाशयेऽनागतविधाता प्रत्युत्पन्नमतिर्यद्भविष्यश्चेति त्रयो मत्स्याः प्रतिवसन्ति स्म। अथ कदाचित्तं जलाशयं दृष्ट्वा गच्छद्भिर्मत्स्यजीविभिरुक्तं यत्—अहो, बहुमत्स्योऽयं ह्रदः, कदाचिदपि नास्माभिरन्वेषितः। तदद्य तावदाहारवृत्तिः सञ्जाता, सन्ध्यासमयश्च संवृत्तः। ततश्च प्रभातेऽत्रागन्तव्यमिति निश्चयः।

अतस्तेषां तत्कुलिशपातोपमं वचः समाकर्ण्यानागतविधाता सर्वान्मत्स्यानाहूयेदमूचे—अहो, श्रुतं भवद्भिर्मत्स्यजीविभिरभिहितं, तद्रात्रावेव गम्यतां किञ्चिन्निकटं सरः। उक्तञ्च—

अशक्तैर्बलिनः शत्रोः कर्तव्यं प्रपलायनम्।
श्रयितव्योऽथवा दुर्गो नान्या तेषां गतिर्भवेत् ॥ ३४८ ॥

व्याख्या—मत्स्यजीविभिः=धीवरैः, नास्माभिरन्वेषितः=इतः पूर्वं न कदाचिदपि दृष्टः। आहारवृत्तिः=प्राणयात्रा, संवृत्तः=दिवसावसानकालश्च सञ्जातः। कुलिशपातोपमं=वज्रपात-

तुल्यं, रात्रावपि = रात्रिकाले एव, बलिनः शत्रोः = सशक्तरिपोराक्रमणावसरे, अशक्तैः = असमर्थैः, प्रपलायनं कर्तव्यम्। अथवा दुर्गः समाश्रयणीयः॥ ३४८॥

हिन्दी—किसी जलाशय में अनागतविधाता, प्रत्युत्पन्नमति तथा यद्भविष्य नाम के तीन मत्स्य रहा करते थे। कभी उस जलाशय के तीर से जाने वाले केवटों ने उस तालाब को देखकर आपस में कहा—"यह तालाब तो मछलियों से भरा हुआ है। हम लोगों ने इससे पूर्व कभी भी इसको देखा नहीं था। आज की जीविका तो सम्पन्न हो चुकी है, और दिन भी डूब चुका है। अतः कल प्रातः काल यहाँ आया जायगा, यही निश्चय रहा।"

उन केवटों के वज्रोपम उस निर्णय को सुनकर अनागतविधाता ने सभी मछलियों को एकत्र करके कहा—"सज्जनों! केवटों के वार्तालाप को तो आप लोगों ने सुन ही लिया होगा। अतः आज की ही रात्रि में हम लोगों को इस तालाब से निकल कर किसी पार्श्ववर्ती तालाब में पहुँच जाना चाहिये। कहा भी गया है कि—

जब बलवान् शत्रु का आक्रमण हो तो निर्बल व्यक्तियों को भागकर या तो अपना प्राण बचा लेना चाहिये अथवा दुर्ग का आश्रयण कर लेना चाहिये। निर्बलों के लिये, इन दो उपायों के अतिरिक्त कोई तृतीय उपाय नहीं होता है॥ ३४८॥

तन्नूनं प्रभातसमये मत्स्यजीविनोऽत्र समागत्य मत्स्यसंक्षयं करिष्यन्ति, एतन्मम मनसि वर्तते। तन्न युक्तं साम्प्रतं क्षणमप्यत्रावस्थातुम्। उक्तञ्च—

विद्यमाना गतिर्येषामन्यत्रापि सुखावहा।
ते न पश्यन्ति विद्वांसो देशभङ्गं कुलक्षयम्"॥ ३४९॥

तदाकर्ण्य प्रत्युत्पन्नमतिः प्राह—"अहो सत्यमभिहितं भवता। ममाप्यभीष्टमेतत्। तदन्यत्र गम्यताम् इति। उक्तञ्च—

परदेशभयाद्भीता बहुमाया नपुंसकाः।
स्वदेशे निधनं यान्ति काकाः कापुरुषाः मृगाः॥ ३५०॥

यस्यास्ति सर्वत्र गतिः स कस्मात्, स्वदेशरागेण हि याति नाशम्।
तातस्य कूपोऽयमिति ब्रुवाणाः, क्षारं जलं कापुरुषाः पिबन्ति"॥ ३५१॥

व्याख्या—नूनं = निश्चयेन, मत्स्यसंक्षयं = मत्स्यविनाशं, साम्प्रतम् = अधुना, अवस्थातुं = स्थातुम्, येषां = पुरुषाणां, सुखावहा = सुखकारिणी, देशभङ्गः = स्वदेशनाशं, कुलक्षयं = कुलस्य विनाशं च, न पश्यन्ति॥ ३४९॥ सत्यमभिहितं = युक्तं कथितं, ममाप्यभीष्टं = ममाप्यनुमतम्, मह्यमपि रोचते। बहुमायाः = बहुममतायुक्ताः, नपुंसकाः = कातराः, निधनं = मरणं, यान्ति = प्राप्नुवन्ति॥ ३५०॥ यस्य, सर्वत्र = अन्यत्रापि, गतिः = गमनं, स्थानं वा स्वदेशरागेण, कस्मान्नाशं = केन हेतुना, कस्माद्धेतोर्वा विनाशं, याति। 'तातस्य = मम पितुः पूर्वपुरुषस्य वा अयं कूपः' इति ब्रुवाणाः = कथयन्तस्तस्य प्रशंसापरायणाः, क्षारं = कटुतरं जलं पिबन्ति॥ ३५१॥

हिन्दी—यह निश्चित है कि कल प्रातःकाल वे केवट यहाँ आकर मछलियों का विनाश

कर ही डालेंगे, यह धारणा मेरे मन में प्रबलतर होती जा रही है। अतः एक भी क्षण यहाँ का रहना उचित नहीं है। कहा भी गया है कि—

जिन व्यक्तियों के लिये अन्यत्र भी सुखकारक स्थान मिल सकता है, वे स्थिर रहकर अपने देश एवं कुटुम्ब का विनाश नहीं देख सकते हैं" ॥ ३४९ ॥

अनागतविधाता की उपर्युक्त बात को सुनकर प्रत्युपन्नमति ने कहा—"मित्र! आपका कथन यथार्थ है। मेरा भी यही मत है। यहाँ से अन्यत्र चलना ही उचित होगा। अतः शीघ्र निकल चलना चाहिये। कहा भी गया है कि—

विदेश गमन से डरने वाले, ममतायुक्त और कायर लोग ही कौवों, कापुरुषों तथा हिरण की तरह अपने देशमें रह कर विनष्ट होते हैं ॥ ३५० ॥

जिस व्यक्ति के लिये अन्यत्र स्थान मिलना संभव है, वह अपने देश के अनुराग में पड़कर व्यर्थ में अपना विनाश करना क्यों चाहेगा। 'यह कूप मेरे पूर्वजों का है' यह कहने वाले कायर पुरुष ही कूएँ के क्षारयुक्त कटु जल को पीते हैं" ॥ ३५१ ॥

अथ तत्समाकर्ण्य प्रोच्चैर्विहस्य यद्भविष्यः प्रोवाच—"अहो! न भवद्भ्यां मन्त्रितं सम्यगेतदिति। यतः किं वाङ्मात्रेणापि तेषां पितृपैतामहिकमेतत्सरस्त्यक्तं युज्यते? यद्यायुःक्षयोऽस्ति, तदन्यत्र गतानामपि मृत्युर्भविष्यत्येव। उक्तञ्च—

अरक्षितं तिष्ठति दैवरक्षितं, सुरक्षितं दैवहतं विनश्यति।
जीवत्यनाथोऽपि वने विसर्जितः, कृतप्रयत्नोऽपि गृहे विनश्यति ॥ ३५२ ॥

तदहं न यास्यामि। भवद्भ्यां च यत्प्रतिभाति तत्कर्तव्यम्।"

अथ तस्य तं निश्चयं ज्ञात्वाऽनागतविधाता प्रत्युत्पन्नमतिश्च निष्क्रान्तौ सह परिजनेन। अथ प्रभाते तैर्मत्स्यजीविभिर्जालैस्तज्जलाशयमालोड्य यद्भविष्येण सह तत्सरो निर्मत्स्यतां नीतम्। अतोऽहं ब्रवीमि—"अनागतविधाता च" इति।

व्याख्या—मन्त्रितं = विचारितं, सम्यग् = उचितम् युक्तमेवेति, वाङ्मात्रेण = वचनमात्रेण, पितृपैतामहिकं = वंशक्रमादगतं, त्यक्तुं परित्यक्तुम्। दैवरक्षितं = दैवेन रक्षितम्, अरक्षितमपि वस्तु तिष्ठति, दैवहतं = दैवेन विनाशितं, सुरक्षितमपि विनश्यति। वने विसर्जितः = त्यक्तः, अनाथोऽपि जीवति, कृतप्रयत्नः = विहितविविधोपायश्च जीवनाय, गृहेऽपि, विनश्यति = न जीवतीति ॥३५२॥ प्रतिभाति = रोचते, निष्क्रान्तौ = निर्गतौ, सहपरिजनेन = अनुयायिवर्गेण सह। आलोड्य = परितः समालोड्य ( छानकर ) निर्मत्स्यतां = मत्स्यैर्हीनतां, नीतं = प्रापितमिति।

हिन्दी—प्रत्युत्पन्नमति की बात को सुनकर यद्भविष्य ने उच्चाट्टहास पूर्वक हँसते हुये कहा—"मित्रो! आपलोगों ने यह कोई उचित निर्णय नहीं किया है। उन केवटों के वचन मात्र से ही भयभीत होकर पितृ-पितामहों के निवासभूत इस तालाब को छोड़ देना क्या उचित होगा! यदि आयु की क्षीणता के कारण सबका विनाश होना ही होगा तो वह अन्यत्र गमन करने के बाद भी होगा ही; क्योंकि मृत्यु तो टलती नहीं है। कहा भी गया है कि—

भाग्य जिसकी रक्षा करता है वह वस्तु अरक्षित रहने पर भी सुरक्षित रहती है और भाग्य जिसको नष्ट करना चाहता है वह वस्तु सुरक्षित रहते हुये भी विनष्ट हो जाती है। जङ्गल में अनाथ छोड़ा हुआ व्यक्ति भी भाग्य द्वारा संरक्षित होने पर जीवित रहती है और जीने के लिये विविध उपाय करने पर भी भाग्य के प्रतिकूल होने पर मर ही जाता है ॥ ३५२ ॥

अतएव मैं नहीं जाऊँगा। आप लोगों को जो उचित प्रतीत हो, करें।"

यद्भविष्य के उक्त निश्चय को जानकर अनागतविधाता तथा प्रत्युत्पन्नमति अपने-अपने अनुयायियों के साथ उस तालाब से निकलकर दूसरे तालाब में चले गये।

दूसरे दिन प्रातःकाल उन केवटों ने आकर जालों से उस तालाब को छान डाला (मथ डाला) और यद्भविष्य के साथ ही अन्य मछलियों को भी मारकर उस तालाब को मत्स्यहीन बना दिया।"

उक्त कथा को कहने के बाद टिट्टिभी ने कहा—"इसीलिए मैं कहती हूँ कि अनागत विधाता तथा प्रत्युत्पन्नमति सानन्द रहते हैं, और यद्भविष्य मारा जाता है ॥"

तच्छ्रुत्वा टिट्टिभ आह—"भद्रे ! किं मां यद्भविष्यसदृशं संभावयसि ? तत्पश्य मे बुद्धिप्रभावं, यावदेनं दुष्टसमुद्रं स्वचञ्च्वा शोषयामि।

टिट्टिभ्याह—"अहो, कस्ते समुद्रेण सह विग्रहः ? तन्न युक्तमस्योपरि कोपं कर्तुम्।

उक्तञ्च—

पुंसामसमर्थानामुपद्रवायात्मनो भवेत्कोपः।
पिठरं ज्वलदतिमात्रं निजपार्श्वानेव दहतितराम् ॥ ३५३ ॥

तथा च—अविदित्वात्मनः शक्तिं परस्य च समुत्सुकः।
गच्छन्नभिमुखो नाशं याति वह्नौ पतङ्गवत् ॥ ३५४ ॥

टिट्टिभ आह—"प्रिये ! मा मैवं वद। येषामुत्साहशक्तिर्भवति ते स्वल्पा अपि गुरून्विक्रमन्ते। उक्तञ्च—

विशेषात्परिपूर्णस्य याति शत्रोरमर्षणः।
आभिमुख्यं शशाङ्कस्य यथाद्यापि विधुन्तुदः ॥ ३५५ ॥

व्याख्या—संभावयसि=वितर्कयसि, विग्रहः=युद्धः, असमर्थानां=बलविहीनानां, पुंसां=जनानां, कोपः=क्रोधः, आत्मनः उपद्रवाय=कष्टाय, भवेत्। पिठरं=प्रतप्ता स्थाली, निजपार्श्वान् एव दहति, नतु अन्यमित्यर्थः ।। ३५३ ।। समुत्सुकः=युद्धोत्साहयुक्तः, आत्मनः परस्य=शत्रोः, शक्तिमविदित्वा पतङ्गवत् नाशमेव याति ॥३५४॥ स्वल्पाः=लघवः, शक्तिरहिताः, गुरून्=सशक्तान्, परिपूर्णस्य=वैभवादिना परिपूर्णस्य शत्रोरेव वैभवमसहमाना वीरास्तेभ्यः क्रुध्यन्ति, यथा—अमर्षणः विधुन्तुदः=राहुः, विशेषात्परिपूर्णस्य=पूर्णरूपेण विकसितस्य शशाङ्कस्य=चन्द्रस्य, एवाभिमुख्यं=युद्धाय तस्याभिमुखं याति=गच्छति ॥ ३५५ ॥

हिन्दी—टिट्टिभी की कथा को सुनने के पश्चात् टिट्टिभ ने कहा—"भद्रे! क्या मुझे भी तुम यद्भविष्य की ही तरह से समझ रही हो? अच्छा तो, मेरे बुद्धिबल को देखो। मैं अपनी चोंच से इस दुष्ट समुद्र को ही सोख डालता हूँ।"

टिट्टिभी ने कहा—"लेकिन, समुद्र के साथ तुम्हारी समता ही क्या है जो उसके साथ युद्ध करने जा रहे हो। तुम्हारा उसपर क्रोध करना उचित नहीं है। कहा भी गया है कि—

शक्तिहीन व्यक्ति का कोप उसी को कष्ट प्रदान करता है। क्योंकि—आग से लाल होनेवाली स्थाली (बटलोई) अपने ही पार्श्वभाग को जलाती है, दूसरों को नहीं ॥ ३५३ ॥

और भी—अपनी तथा शत्रु की शक्ति को जाने बिना ही जो युद्ध के लिए प्रस्तुत हो जाता है, वह आग की ओर बढ़नेवाले पतङ्ग की तरह स्वयं विनाश की ओर बढ़ने का कार्य करता है" ॥ ३५४ ॥

टिट्टिभी की उपर्युक्त बात को सुनकर टिट्टिभ ने कहा—"प्रिये ऐसी बात न कहो। जिनके पास उत्साहरूपी शक्ति विद्यमान हैं वे शक्तिहीन होते हुए भी अपने शक्तिमान् शत्रुओं का मुकाबला करने में समर्थ होते हैं। कहा भी गया है कि—

वीर पुरुष अपने शत्रु के वैभव को ही न देख सकने के कारण उसपर आक्रमण करते हैं। क्योंकि राहु पूर्णिमा के विकसित चन्द्रमा को देखकर उसके वैभव को न सह सकने के कारण ही आज भी उसपर आक्रमण करता रहता है ॥ ३५५ ॥

तथा च—

प्रमाणादधिकस्यापि गण्डश्याममदच्युतेः।
पदं मूर्ध्नि समाधत्ते केसरी मत्तदन्तिनः ॥ ३५६ ॥

तथा च—

बालस्यापि रवेः पादाः पतन्त्युपरि भूभृताम्।
तेजसा सह जातानां वयः कुत्रोपयुज्यते ॥ ३५७ ॥

हस्ती स्थूलतरः स चाङ्कुशवशः किं हस्तिमात्रोऽङ्कुशो,
दीपे प्रज्वलिते प्रणश्यति तमः किं दीपमात्रं तमः।
वज्रेणापि हताः पतन्ति गिरयः किं वज्रमात्रो गिरि-
स्तेजो यस्य विराजते स बलवान् स्थूलेषु कः प्रत्ययः ॥ ३५८ ॥

तदनया चञ्च्वाऽस्य सकलं तोयं शुष्कस्थलतां नयामि!"

व्याख्या—केसरी = सिंहः, प्रमाणादधिकस्य = कायप्रमाणादीर्घस्य, गण्डश्याममदच्युतेः = श्याममदप्रवाहयुक्तगण्डस्थलस्य, (गण्डात् श्याममदस्य च्युतिर्यस्यासौ तस्य) मत्तदन्तिनः = मत्तगजस्य, मूर्ध्नि = शिरसि, पदं स्वमाधत्ते ॥ ३५६ ॥ तेजसा सह जातानां तेजस्विनाम्, वयः कुत्रोपयुज्यते? कुत्रापि नोपयुज्यते, इति भावः। बालस्यापि रवेः = बालसूर्यस्यापि, पादाः = रश्मयः, भूभृतां = पर्वतानाम्, उपरि पतन्ति ॥ ३५७ ॥ प्रणश्यति = नश्यति, तमः = अन्धकारः,

गिरयः=पर्वताः, यस्य तेजो विराजते स एव बलवान् भवति ॥ ३५८ ॥ अस्य=समुद्रस्य, सकलं=सम्पूर्णं, तोयं=जलं, पीत्वा एनं शुष्कस्थलतां=शुष्कभूमिसदृशतां, नयामि=प्रापयामि ॥

हिन्दी—सिंह शरीर से छोटा होने पर भी आकार में अपने से बड़े तथा असित वर्ण के मदस्राव से जिनका गण्डस्थल श्याम हो चुका है ऐसे मत्त गजों के शिर पर ही अपना पैर रखता है ॥ ३५७ ॥

और भी—तेजस्वी पुरुषों के लिए अवस्थागत श्रेष्ठता की आवश्यकता नहीं होती। वे अवस्था के कारण नहीं, अपने तेज के ही कारण कीर्तिलाभ करते हैं। बालसूर्य भी अपने किरण-रूपी पैरों को विशाल पर्वतों के शिखर पर ही रखता है ॥ ३५७ ॥

यदि देखा जाय तो हाथी का शरीर कितना विशाल होता है, किन्तु वह एक छोटे से अंकुश से वशीभूत हो जाता है। क्या वह अंकुश भी हाथी के ही बराबर होता है? दीप के जलने पर अन्धकार स्वतः विनष्ट हो जाता है, क्या वह दीप आकार में अन्धकार के ही समान होता है? वज्र से आहत होकर बड़े बड़े पर्वत धराशायी हो जाते हैं तो क्या पर्वतों के समान ही वह वज्र भी बड़ा ही होता है? अतएव यह सिद्ध है कि शरीर का बड़ा होना ही शक्ति का परिचायक नहीं होता। जिसके पास तेज होता है, वही शक्तिमान् होता है, चाहे वह बड़ा हो अथवा छोटा। शारीरिक विशालता का कोई विशेष महत्त्व नहीं होता ॥ ३५८ ॥

अतः मैं अपनी इसी चोंच के द्वारा इसके सम्पूर्ण जल को पीकर इसे स्थल के समान शुष्क बना दूँगा।"

टिट्टिभ्याह—"भोः कान्त ! यत्र जाह्नवी नवनदीशतानि गृहीत्वा नित्यमेव प्रविशति, तथा सिन्धुश्च। तत्कथं त्वमष्टादशनदीशतैः पूर्यमाणं तं विप्रुषवाहिन्या चञ्च्वा शोषयिष्यसि; तत्किमश्रद्धेयेनोक्तेन ?"

टिट्टिभ आह—"प्रिये !

अनिर्वेदः श्रियो मूलं चञ्चूर्मे लोहसन्निभा।
अहोरात्राणि दीर्घाणि समुद्रः किं न शुष्यति ॥ ३५९ ॥

दुरधिगमः परभागो यावत्पुरुषेण पौरुषं न कृतम्।
जयति तुलामधिरूढो भास्वानिह जलदपटलानि ॥ ३६० ॥

टिट्टिभ्याह—"यदि त्वयाऽवश्यं समुद्रेण सह विग्रहानुष्ठानं कार्यं, तदन्यानपि विहङ्गमानाहूय सुहृज्जनसहित एवं समाचर। उक्तञ्च—

बहूनामप्यसाराणां समवायो हि दुर्जयः।
तृणैरावेष्ट्यते रज्जुर्येन नागोऽपि बद्ध्यते ॥ ३६१ ॥

तथा च—

चटका काष्ठकूटेन मक्षिका दर्दुरैस्तथा।
महाजनविरोधेन कुञ्जरः प्रलयं गतः" ॥ ३६२ ॥

टिट्टिभ आह—"कथमेतत् ?" सा प्राह—

व्याख्या—जाह्नवी = गङ्गा, सिन्धुः = सिन्धुनदः। विप्रुषवाहिन्या = विन्दुमात्रधारिण्या, अश्रद्धेयेन = विश्वासानर्हेण, उक्तेन = कथितेन। अनिर्वेदः = अनौदासीन्यम् (उत्साह, हिम्मत न हारना), श्रियः = लक्ष्म्याः, लोहसन्निभा = लौहसदृशीं दृढतरा ॥ ३५९ ॥ यावत्पुरुषेण पौरुषं = पुरुषार्थं साहसमिति भावः, न कृतं तावदेव परभागः = श्रेष्ठत्वं, दुरधिगमः = दुष्प्राप्यो भवति। तुलामधिरूढः = तुलाराशिमधिरूढ एव, भास्वान् = सूर्यः, जलदपटलानि = मेघसमूहान् जयति। तथैव पराक्रमयुक्तो नरः स्वशरीरं तुलयन् विजयं लभते ॥ ३६० ॥ विहङ्गमान् = खगान्। यतो हि—असाराणां = निस्तत्त्वानां शक्तिहीनानां, समवायः = समूहः, दुर्जयो भवति यथा रज्जुः, तृणैरावेष्ट्यते = तृणैर्निर्मीयते, तया, नागः = गजः, बद्ध्यते, तेन दुर्जेया एव सा भवतीति ॥ ३६१ ॥ दर्दुरैः = मेकैः महाजनविरोधेन = जनसमूहस्य विरोधेन, कुञ्जरः = गजः, प्रलयं = नाशं, गतः = प्राप्तः ॥ ३६२ ॥

हिन्दी—टिट्टिभ की बात को सुनकर टिट्टिभी ने कहा—"हे कान्त ! नौ सौ नदियों को लेकर गङ्गा जिसमें संतत मिलती रहती है और सिन्धु नद भी अपनी नौ सौ सहायक नदियों को लेकर मिलता रहता है, उन अठारह सौ नदियों द्वारा सतत भरे जाने वाले समुद्र को तुम अपनी विन्दुमात्रवाहिनी चञ्चु से कैसे सुखा सकोगे ? अतः विश्वासहीन निरर्थक बात करने से क्या लाभ है।"

टिट्टिभ ने कहा—"प्रिये ! निर्वेद न करने से ही लक्ष्मी की प्राप्ति होती है। मेरी चोंच लोहे को तरह दृढ है। ये दिन और रात्रि बहुत बड़े होते हैं (दिन और रात्रि का समय पर्याप्त होता है) क्या इतने पर भी वह समुद्र सूख नहीं सकेगा ? ॥ ३५९ ॥

जबतक हिम्मत के साथ अपने प्राण की बाजी लगाकर कोई पुरुषार्थ नहीं करता है तभी तक बड़ाई दुष्प्राप्य रहती है। हिम्मतपूर्वक पुरुषार्थ के करने पर वह मिल ही जाती है। सूर्य जबतक तुलाराशि में नहीं चला जाता है तभी तक वह मेघों से आच्छन्न रहता है। तुलाराशि का होते ही वह मेघ-समूहों को जीत लेता है। इसी तरह से अपने प्राण को कार्य के साथ तौल देनेवाले पुरुष कीर्तिलाभ कर ही लेते हैं" ॥ ३६० ॥

टिट्टिभ की बात को सुनकर टिट्टिभी ने कहा—यदि तुमने समुद्र के साथ विग्रह करने का निश्चय ही कर लिया हो तो अन्य पक्षियों को भी बुला लो और अपने इष्ट मित्रों को साथ में लेकर ही उसके साथ युद्ध करो। कहा भी गया है कि—

अशक्त (अकिञ्चित्कर) व्यक्तियों का भी समूह यदि हो तो वह दुर्जेय होता है। क्योंकि तुच्छ घासों द्वारा निर्मित रज्जु इतनी दृढ हो जाती है कि उससे हाथी भी बाँध दिया जाता है ॥ ३६१ ॥

तथा च—चटका काष्ठकुट्ट के साथ मिली थी और मक्खी मेढकों से मिली थी। पुनः उन लघुजनों ने अपने पारस्परिक संगठन के द्वारा हाथी को मार डाला था ॥ ३६२ ॥"

टिट्टिभ ने पूछा—"यह कैसे" ? टिट्टिभी ने कहा—

[ १५ ]

## ( चटक-कुञ्जर-कथा )

कस्मिंश्चिद्वनोद्देशे चटकदम्पती तमालतरुकृतनिलयौ प्रतिवसतः स्म। अथ तयो-र्गच्छता कालेन सन्ततिरभवत्। अन्यस्मिन्नहनि प्रमत्तो वनगजः कश्चित्तं तमालवृक्षं घर्मार्तश्छायार्थी समाश्रितः। ततो मदोत्कर्षात्तां तस्य शाखां चटकाश्रितां पुष्कराग्रेणा-कृष्य बभञ्ज। तस्या भङ्गेन चटकाण्डानि सर्वाणि विशीर्णानि। आयुःशेषतया च चटकौ कथमपि प्राणैर्न वियुक्तौ।

अथ चटका स्वाण्डभङ्गाभिभूता प्रलापान्कुर्वाणा न किञ्चित्सुखमाससाद। अत्रा-न्तरे तस्यास्तान् प्रलापाञ्छ्रुत्वा काष्ठकुट्टो नाम पक्षी तस्याः परमसुहृत्तद्दुःखदुःखितोऽ-भ्येत्य तामुवाच—"भगवति! किं वृथा प्रलापेन? उक्तञ्च—

> नष्टं मृतमतिक्रान्तं नानुशोचन्ति पण्डिताः।
> पण्डितानां च मूर्खाणां विशेषोऽयं यतः स्मृतः॥ ३६३॥

व्याख्या—तमालतरुकृतनिलयौ = तमालवृक्षाश्रितनीडौ, गच्छता कालेन = कतिपयकाले व्यतीते सति, सन्ततिः = प्रसूतिः, प्रमत्तः = मदोन्मत्तः, घर्मार्तः = निदाघपीडितः, छायार्थी = छायायां विश्रामेच्छुकः, समाश्रितः = निसेवितः। मदोत्कर्षात् = मदातिशयात् चटकाश्रितां = चटकनीडयुक्तां, पुष्कराग्रेण = शुण्डाग्रेण, बभञ्ज = खण्डितवान्। तस्याः शाखायाः, विशीर्णानि = विकीर्णानि ( इधर-उधर बिखर गये ), प्राणैर्न वियुक्तौ = न मृतौ। अण्डभङ्गाभिभूता = अण्डानां विनाशेन शोकाकुला सती, प्रलापान् कुर्वाणा = प्रलपन्ती, सुखं, नाससाद = न प्राप। काष्ठ-कुट्टः = पक्षिविशेषः, (कठफोड़वा) तस्याः = चटकायाः, अभ्येत्य = तत्रागत्य, प्रलापेन = रोदनेन। अतिक्रान्तं = व्यपगतम्, अतीतमिति भावः, नानुशोचन्ति = तदर्थमनुतापं न कुर्वन्ति, पण्डि-तानां = बुद्धिमतां, मूर्खाणां = मूढधियाम्, अयमेव विशेषः स्मृतः॥ ३६३॥

हिन्दी—किसी वन के एक भाग में तमालतरु पर घोंसला बनाकर चटक-दम्पती निवास करते थे। कुछ दिनों के बाद एकदिन उनको सन्तति उत्पन्न हुई। और दूसरे ही दिन एक मदोन्मत्त वन-गज धूप से व्याकुल होकर छाया की खोज में आकर उस तमाल-वृक्ष के नीचे खड़ा हो गया। अपनी प्रमत्तता के कारण उसने चटकदम्पती द्वारा निसेवित शाखा को ही अपने शुण्ड से खींचकर तोड़ डाला। उस शाखा के टूटने से उनके सभी अण्डे इधर-उधर बिखर गये। आयु के अवशेष रहने के कारण किसी प्रकार वे चटकदम्पती जीवित बचे रहे।

अण्डों के विनष्ट हो जाने से शोकाकुल होकर वह चटका विलाप करने लगी। शोका-कुलता के कारण उसे शान्ति नहीं मिल पाती थी। इसी मध्य में उसके विलाप को सुनकर उसका एक परम हितैषी काष्ठकुट्ट ( कठफोड़वा ) आ पहुँचा और चटका के दुःख से दुःखित होकर बोला—"भगवति! अब वृथा प्रलाप करने से क्या लाभ है? कहा भी गया है कि

विनष्ट, मृत अथवा अतीत की चिन्ता से बुद्धिमान् व्यक्ति दुःखित नहीं होते हैं। वे उनके विषय में सोचते तक भी नहीं हैं। पण्डितों और मूर्खों के मध्य में यही अन्तर कहा गया है। बुद्धिमान् व्यक्ति किसी वस्तु के नष्ट हो जाने पर अनुताप नहीं करता है जब कि मूर्ख व्यक्ति उसके शोक में दिन रात रोया करता है ॥ ३६३ ॥

तथा च—

अशोच्यानीह भूतानि यो मूढस्तानि शोचति।
स दुःखे लभते दुःखं द्वावनर्थौ निषेवते ॥ ३६४ ॥

अन्यच्च—

श्लेष्माश्रुबान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः।
तस्मान्न रोदितव्यं हि क्रियाः कार्याश्च शक्तितः ॥ ३६५ ॥

चटका प्राह—"अस्त्येतत्। परं दुष्टगजेन मदान्मम सन्तानक्षयः कृतः। तद्यदि मम त्वं सुहृत्सत्यस्तदस्य गजापसदस्य कोऽपि वधोपायश्चिन्त्यतां, यस्यानुष्ठानेन मे सन्ततिनाशदुःखमपसरति। उक्तञ्च—

आपदि येनापकृतं येन च हसितं दशासु विषमासु।
अपकृत्य तयोरुभयोः पुनरपि जातं नरं मन्ये" ॥ ३६६ ॥

काष्ठकुट्ट आह—"भगवति! सत्यमभिहितं भवत्या। उक्तञ्च—

स सुहृद् व्यसने यः स्यादन्यजात्युद्भवोऽपि सन्।
वृद्धौ सर्वोऽपि मित्रं स्यात्सर्वेषामेव देहिनाम् ॥ ३६७ ॥

व्याख्या—यः, अशोच्यानि भूतानि शोचति सः दुःखे दुःखमेव लभते। द्वौ=शोक-वियोगौ, अनर्थौ=कष्टौ, निषेवते=सहते ॥ ३६४ ॥ प्रेतः=मृतव्यक्तिः, अवशः=विवशः सन्, बान्धवैर्मुक्तं श्लेष्माश्रु=कफयुक्तमश्रुजलं, भुङ्क्ते=खादति तस्मान्न रोदितव्यं परञ्च-शक्तितः=सामर्थ्यानुसारेण, क्रियाः=तस्य प्रेतत्वविमुक्तये क्रियाः, कार्याः=कर्तव्याः ॥३६५॥ सुहृत्सत्यः=वास्तविको हितेच्छुः, गजापसदस्य नीचगजस्य, अनुष्ठानेन=कृतेन, सन्ततिनाश-दुःखं=सन्तानक्षयाज्जातं दुःखम्, अपसरति=दूरं गच्छति=नाशमेति। आपदि=विपत्तिकाले, येनापकृतं, विषमासु दशासु हसितं च तयोरुभयोः=द्वयोः, अपकृत्य यो वसति तमेव नरं जातं मन्ये ॥ ३६६ ॥ व्यसने=विपत्तिकाले, यः स्यात्=यः सहायको भवति, अन्यजातिसमुद्भवोऽपि स एव सुहृत्। वृद्धौ=सम्पत्तौ, सर्वोऽपि मित्रं स्यात् ॥ ३६७ ॥

हिन्दी—तथा च—जो मूर्ख होते हैं, वे ही इस संसार में अशोच्य की चिन्ता करते हैं। ऐसे व्यक्ति दुःख में एक अन्य दुःख को बढ़ाने के अतिरिक्त और कुछ नहीं करते हैं। वे एक साथ ही दो दुःखों को पालते हैं ॥ ३६४ ॥

और भी प्रेतजन विवश होकर अपने बन्धुबान्धवों द्वारा विमुक्त कफयुक्त अश्रुजल को भक्षण करते हैं। अतः रोना नहीं चाहिये। मृतात्मा की विमुक्ति के लिए अपने सामर्थ्यानुसार उसकी और्ध्वदेहिक क्रिया को ही करना चाहिये" ॥ ३६५ ॥

उक्त वचन को सुनकर चटका ने कहा—"आपका कथन यथार्थ है। किन्तु उस दुष्ट गज ने मदान्ध होकर मेरी सन्तति का विनाश किया है। मुझे इसी बात का दुःख है। अतः यदि आप मेरे सच्चे मित्र हैं तो उस नीच गज को मारने का कोई उपाय सोचकर बतायें, जिसको सम्पन्न करने से मेरी सन्तति के विनाश का दुःख दूर हो जाय। कहा भी गया है कि—

विपत्ति के समय जिसने अपकार किया हो और विषम परिस्थिति में देख कर जिसने उपहास किया हो, यदि उन दोनों ही व्यक्तियों का अपकार करने में कोई समर्थ है तो मैं उसीको जीवित समझती हूँ" ॥ ३६६ ॥

चटक की बात को सुनकर काष्ठकुट्ट ने कहा—"देवि! आपका कथन ठीक है। कहा भी गया है कि—

विपत्ति काल में जो बना रहता है वही वास्तविक मित्र होता है, चाहे वह अन्य जाति का ही क्यों न हो। मनुष्य के अच्छे दिनों में तो सभी लोग मित्रता करते ही हैं ॥ ३६७ ॥

स सुहृद् व्यसने यः स्यात्स पुत्रो यस्तु भक्तिमान्।
स भृत्यो यो विधेयज्ञः सा भार्या यत्र निर्वृतिः ॥ ३६८ ॥

तत्पश्य मे बुद्धिप्रभावं, परं ममापि सुहृद्भूता वीणारवा नाम मक्षिकास्ति। तत्त माहूयागच्छामि, येन स दुरात्मा दुष्टगजो वध्यते।"

अथासौ चटकया सह मक्षिकामासाद्य प्रोवाच—"भद्रे! ममेष्टेयं चटका केनचिद् दुष्टगजेन पराभूताऽण्डस्फोटेन। तत्तस्य वधोपायमनुतिष्ठतो मे साहाय्यं कर्तुमर्हसि।"

मक्षिकाप्याह—"भद्र! किमुच्यतेऽत्र विषये। उक्तञ्च—

पुनः प्रत्युपकाराय मित्राणां क्रियते प्रियम्।
यत्पुनर्मित्रमित्रस्य कार्यं मित्रैर्न किं कृतम्? ॥ ३६९ ॥

सत्यमेतत्। परं ममापि भेको मेघनादो नाम मित्रं तिष्ठति। तमप्याहूय यथोचितं कुर्मः। उक्तञ्च—

हितैः साधुसमाचारैः शास्त्रज्ञैर्मतिशालिभिः।
कथञ्चिन्न विकल्पन्ते विद्वद्भिश्चिन्तिता नयाः" ॥ ३७० ॥

व्याख्या—विधेयज्ञः=कर्तव्यपरायणः, यत्र=भार्यायां, निर्वृतिः=सुखं लभ्यते ॥ ३६८ ॥ आसाद्य=प्राप्य, मेलयित्वा, ममेष्टेयं=ममेष्टभूतेयं चटका। पराभूता=अपमानिता शोकाकुलीकृता, अण्डस्फोटनेन=अण्डानां विनाशनेन। मित्राणां प्रियं तु प्रत्युपकाराय क्रियते। यदि मित्रमित्रस्य=स्वमित्रभूतस्य जनस्य मित्रस्य कार्यं न कृतं तर्हि किं कृतम्? किमपि न कृतमिति भावः ॥ ३६९ ॥ भेकः=दर्दुरः, हितैः=हितचिन्तकैः, साधुसमाचारैः=शिष्टैः, शास्त्रज्ञैः=शास्त्रकुशलैः, मतिशालिभिः=बुद्धिमद्भिः, विद्वद्भिः=नीतिकुशलैः,

चिन्तिताः=विनिश्चताः, नयाः=उपायाः, न विकल्पन्ते=नान्यं विकल्पमर्हन्ति, विकल्पनया सन्देहेन वान्यथाकर्तुं न शक्यन्ते ॥ ३७० ॥

हिन्दी—सच्चा मित्र वही है जो आपत्ति काल में सहयोग करने के लिये प्रस्तुत रहे और सच्चा पुत्र वही होता है जो पिता के प्रति भक्तिमान् हो। सच्चा सेवक वही है जो आज्ञाकारी एवं कर्तव्यपरायण हो और स्त्री उसी को मानना चाहिये जिसके व्यवहार से अपने को सुख मिलता हो ॥ ३६८ ॥

अब, तुम मेरी बुद्धि के प्रभाव को देखो कि मैं क्या करता हूँ। किन्तु मेरी भी एक वीणारव नाम की मक्षिका मित्र है, मैं उसे बुलाकर अभी आता हूँ। उसके आ जाने पर हम लोग उस दुष्ट को मारने का उपाय सोचेंगे। मक्षिका को चटका से मिलाने के बाद उसने मक्षिका से कहा—"भद्रे! इस चटका के साथ मेरी मित्रता है। किसी दुष्ट गज ने इसके अण्डों को फोड़कर इसे शोकाकुल कर दिया है। अतः उस दुष्ट गज को मारने में तुम्हें भी मेरी सहायता करनी होगी।" मक्षिका ने भी कहा—"इस विषय में तो कहना ही क्या है? कहा भी गया है कि—

मित्रों का हित तो प्रत्युपकार की भावना से किया जाता है। यदि मित्र के किसी अन्य मित्र का उपकार नहीं किया तो मित्र का उपकार करना व्यर्थ है ॥ ३६९ ॥

यह तो ठीक ही है। किन्तु मेरा भी मेघनाद नामका एक मेंढक मित्र है। उसको भी बुला लेती हूँ। फिर जैसा उचित होगा, किया जायगा। कहा भी गया है कि—अपने हितचिन्तकों, शिष्टजनों, शास्त्रज्ञों, बुद्धिमानों तथा नीति-निपुण व्यक्तियों द्वारा सोचा हुआ उपाय कभी विफल नहीं होता। उसमें किसी अन्य विकल्प की आवश्यकता नहीं होती" ॥३७०॥

अथ ते त्रयोऽपि गत्वा मेघनादस्याग्रे समस्तमपि वृत्तान्तं निवेद्य तस्थुः। अथ स प्रोवाच—"कियन्मात्रोऽसौ वराको गजो महाजनस्य कुपितस्याग्रे? तन्मदीयो मन्त्रः कर्तव्यः। मक्षिके! त्वं गत्वा मध्याह्नसमये तस्य मदोद्धतस्य गजस्य कर्णे वीणारवसदृशं शब्दं कुरु येन श्रवणसुखलालसो निमीलितनयनो भवति। ततश्च काष्ठकुट्टचञ्च्वा स्फोटितनयनोऽन्धीभूतस्तृषार्तो मम गर्ततटाश्रितस्य सपरिकरस्य शब्दं श्रुत्वा जलाशयं मत्वा समभ्येति। ततो गर्तमासाद्य पतिष्यति, पञ्चत्वं यास्यति चेति। एवं समवायः कर्तव्यो यथा वैरसाधनं भवति।"

अथ तथानुष्ठिते स मत्तगजो मक्षिकागेयसुखान्निमीलितनेत्रः काष्ठकुट्टहृतचक्षुर्मध्याह्नसमये भ्राम्यन्मण्डूकशब्दानुसारी गच्छन् महतीं गर्तामासाद्य पतितो, मृतश्च। अतोऽहं ब्रवीमि—"चटका काष्ठकुट्टेन" इति।

व्याख्या—कियन्मात्रः=कियत्प्रमाणयुक्तः, वराकः=दीनः, महाजनस्य=जनसमूहस्य, मन्त्रः=कथितोपायः, मदोद्धतस्य=मदविह्वलस्य, वीणारवसदृशं तन्त्रीस्वरतुल्यम्, श्रवणसुखलालसः=श्रवणसुखलोलुपः, निमीलितनयनः=निमीलितनेत्रः, तृषार्तः=पिपासाकुलः, सपरि-

करस्य = परिवारयुतस्य, समभ्येति—आगमिष्यति, पञ्चत्वं = मृत्युं, समवायः = समूहः सम्मिलित-प्रयासः, वैरसाधनं भवति = तस्यापकारेणास्माकं वैरस्य प्रतिशोधो भविष्यति। गेयं = गानम्।

हिन्दी—चटका, काष्ठकुट्ट तथा मक्षिका ये तीनों उस मेंढक से सम्पूर्ण वृत्तान्त को कहने के बाद उसके सामने खड़े हो गये। मेंढक ने कहा—"कुपित जनसमूह के समक्ष वह दीन गज क्या चीज है। आप लोग मेरे कथनानुसार कार्य करें। मक्षिके! दोपहर के समय जाकर तुम उस मदोद्धत गज के कान में वीणा के स्वर के समान मधुर शब्द करना, जिसको सुनने के लोभ में वह अपने नेत्रों को बन्द कर लेगा। इसी बीच में काष्ठकुट्ट अपनी चोंच से उसके नेत्रों को फोड़ देगा और वह अन्धा हो जायगा। पुनः प्यास से व्याकुल होकर वह जल की खोज में निकलेगा। इधर मैं किसी गहरे गढ्ढे के किनारे अपने परिवारजनों के साथ शब्द करूँगा। मेरे शब्द को सुनकर वह किसी जलाशय के ख्याल से उस गढ्ढे के पास बढ़ेगा और उसी गढ्ढे में गिरकर मर जायगा। अतः हमलोगों को अपना एक सङ्घ बना लेना चाहिये। जिसके द्वारा हम उससे अपने वैर का प्रतिशोध ले सकें।

सभी जीवों के अपने-अपने कर्तव्य पर स्थिर हो जाने के बाद उस मदान्ध गज ने मक्षिका के मधुर रव को सुनकर आनन्दातिरेक के कारण जब अपने नेत्रों को बन्द कर लिया तो काष्ठकुट्ट ने जाकर उसके दोनों नेत्रों को फोड़ दिया। मध्याह्न के समय प्यास से व्याकुल होकर जलाशय की खोज में निकला हुआ वह गज, मेंढक के शब्द का अनुसरण करके उस गढ्ढे के पास गया और उसमें गिरकर मर गया।"

उस कथा को समाप्त करने के पश्चात् टिट्टिभी ने कहा—"इसलिये मैं कहती हूँ कि सङ्घ बना लेना तुम्हारे लिये अच्छा होगा। सङ्घ का निर्माण कर लेने के कारण ही चटका, काष्ठकुट्ट, मक्षिका तथा मेंढक आदि लघु जीवों ने उस मत्त गज को मार डाला था।

टिट्टिभ आह—"भद्रे! एवं भवतु। सुहृद्वर्गसमुदायेन समुद्रं शोषयिष्यामि।" इति निश्चित्य बकसारसमयूरादीन्समाहूय प्रोवाच—"भोः! पराभूतोऽहं समुद्रेणाण्डकापहारेण। तच्चिन्त्यतामस्य शोषणोपायः।"

ते संमन्त्र्य प्रोचुः—"अशक्ता वयं समुद्रशोषणे, तत्किं वृथा प्रयासेन? उक्तञ्च—

अबलः प्रोन्नतं शत्रुं यो याति मदमोहितः।
युद्धार्थं स निवर्तेत शीर्णदन्तो गजो यथा॥ ३७१॥

तदस्माकं स्वामी वैनतेयोऽस्ति, तत्तस्मै सर्वमेतत्परिभवस्थानं विनिवेद्यतां येन स्वजातिपरिभवकुपितो वैरानृण्यं गच्छति। अथवात्रावलेपं करिष्यति, तथापि नास्ति वो दुःखम्। उक्तञ्च—

सुहृदि निरन्तरचित्ते गुणवति भृत्येऽनुवर्तिनि कलत्रे।
स्वामिनि शक्तिसमेते निवेद्य दुःखं सुखी भवति॥ ३७२॥

व्याख्या—संमन्त्र्य = परस्परं विचार्य, वृथाप्रयासेन = व्यर्थप्रयत्नेन, यः, मदमोहितः = मदविह्वलः सन्, अबलः = निर्बलः, प्रोन्नतं = शक्तिसम्पन्नं, शीर्णदन्तः = भग्नदन्तः, निवर्तेत

॥ ३७१ ॥ वैनतेयः = गरुडः पराभवस्थानं = तिरस्कारविषयं, जातिपरिभवकुपितः = स्वजातेस्तिरस्कारेण क्रुद्धः सन् , वैरानृण्यं = वैरस्य प्रतिशोधं, किं वा अवलेपम् = उपेक्षामपि, यतः–निरन्तरचित्ते = अभिन्नहृदये, सुहृदि = मित्रे, गुणवति = भक्तियुक्ते, अनुवर्तिनि = अनुकूलगामिन्यां कलत्रे = भार्यायाम् , दुःख निवेद्य जनः सुखी भवति ॥ ३७२ ॥

हिन्दी—टिट्टिभ ने कहा—"प्रिये ! जो तुम कहती हो, वही करूँगा। अपने इष्टमित्रों के ही साथ समुद्र का शोषण करूँगा।" उक्त प्रकार से निश्चय करने के बाद बक, सारस तथा मयूर आदि पक्षियों को बुलाकर उसने कहा—"मित्रो ! मेरे अण्डों को बहाकर इस समुद्र ने मेरा अपमान किया है। अतः इसके शोषण का कोई उपाय सोचना आवश्यक है।"

आपस में विचार-विमर्श करने के बाद उन लोगों ने उत्तर दिया—"हम लोग समुद्र के शोषण में असमर्थ हैं, अतः व्यर्थ प्रयत्न करने से क्या लाभ होगा ? कहा भी गया है कि—

निर्बल होते हुए भी जो व्यक्ति अपने औद्धत्य के कारण बलवान् शत्रु पर आक्रमण करता है, वह सबल गज से युद्ध करने के कारण अपने दांतों को तोड़ लेने वाले निर्बल गज की तरह अपमानित होकर लौटने के अतिरिक्त और कुछ नहीं करता है ॥ ३७१ ॥

सो हमारा स्वामी गरुड है सो उसके निमित्त यह परिभव का स्थान निवेदन करें जिससे अपने जाति के पराभव से क्रोधित हुआ वैर की अनृणता को प्राप्त होगा। अथवा जो अवलेप ( गर्व ) करेगा तो भी तुम्हें दुःखी नहीं होना चाहिये। कहा भी गया है—

निरन्तर चित्तवाले सुहृद्, गुणवान् भृत्य, अनुवर्ती स्त्री या शक्तिमान् स्वामी से अपना दुःख निवेदन कर व्यक्ति सुखी होता है ॥ ३७२ ॥

तद्यामो वैनतेयसकाशं यतोऽसावस्माकं स्वामी।"

तथाऽनुष्ठिते सर्वे ते पक्षिणो विषण्णवदना बाष्पपूरितदृशो वैनतेयसकाशमासाद्य करुणस्वरेण फूत्कर्तुमारब्धाः—अहो, अब्रह्मण्यम्, अधुना सदाचारस्य टिट्टिभस्य भवति नाथे सति समुद्रेणाऽण्डान्यपहृतानि। तत्प्रनष्टमधुना पक्षिकुलम्। अन्येऽपि स्वेच्छया समुद्रेण व्यापाद्यन्ते। उक्तश्च—

एकस्य कर्म संवीक्ष्य करोत्यन्योऽपि गर्हितम्।
गतानुगतिको लोको न लोकः पारमार्थिकः ॥ ३७३ ॥

तथा च—

चाटुतस्करदुर्वृत्तैस्तथा साहसिकादिभिः।
पीड्यमानाः प्रजा रक्ष्याः कूटच्छद्मादिभिस्तथा ॥ ३७४ ॥

प्रजानां धर्मषड्भागो राज्ञो भवति रक्षितुः।
अधर्मादपि षड्भागो जायते यो न रक्षति ॥ ३७५ ॥

व्याख्या—यामः = गच्छामः, विषण्णवदनाः = खिन्नाननाः, बाष्पपूरितदृशः = अश्रुपूरितनयनाः, फूत्कर्तुमारब्धाः = रोदितुमारब्धाः, अब्रह्मण्यं = महदनौचित्यम् अधुना = इदानीम्, सदाचारस्य = निर्दोषस्य, नाथे = पालके रक्षके, भवति = गरुडे प्रनष्टं = विनष्टं, पक्षिकुलं =

तदा तैः किरातैरभिहितम्—भोः पान्थाः! पुरा कदापि ध्वाङ्क्षवचनमनृतं नासीत्, ततो भवतां संनिधौ क्वापि धनं विद्यते तदर्पयत, अन्यथा सर्वेषामपि वधं, विधाय, चर्म विदार्य प्रत्यङ्गं प्रेक्ष्य धनं नेष्यामः" इति।

व्याख्या—चटितं = हस्तगतं न जातम्। एभिः = विप्रैः, स्नेहपाशेन = प्रेमवरत्रेण धृतिं = धैर्यं शान्तिम्, अनुग्रहं = कृपां, करुणार्द्रचित्ताः = सञ्जातदयाः, अध्वनि = मार्गे, ध्वाङ्क्षाः = काकाः ("ध्वांक्षात्मघोषपरभृद्बलिभुग्वायसा अपी"त्यमरः), किराताः = शबराः, अरण्यचराः ("किरातशबरपुलिन्दा म्लेच्छजातयः" इत्यमरः), सपादलक्षधनिनः = सपादलक्षमुद्रायुताः, (सवालाख के धनी)।

हिन्दी—उसने सोचा—"इनका यह धन मेरे हाथ नहीं लग सका। अब मैं इनके साथ ही जाऊँगा और कहीं मार्ग में अवसर पाकर इनको विष खिला कर मार डालूँगा। पुनः इनके इन सभी रत्नों को ले लूँगा।" उक्त प्रकार से निश्चय करने के बाद उसने आगे जाकर करुण स्वर में रोते हुए कहा—"मित्रो! आप लोग आज मुझे एकाकी छोड़ कर जाने की तैयारी में लगे हैं। इससे मेरा मन आप लोगों के स्नेहपाश में आबद्ध होकर आपके विरह के नाम से ही अत्यन्त आकुल हो उठा है। किसी भी प्रकार कहीं शान्ति नहीं मिल रही है। अतः आप लोग अपने सहायक के रूप में मुझे भी अपने साथ लेते चलें तो आपकी मुझ पर बहुत बड़ी कृपा होगी।"

उसकी प्रार्थना को सुनकर दयार्द्र हो, उन लोगों ने उसको भी अपने साथ ले लिया और अपने निवासस्थान को चल दिये। कुछ दूर जाने के बाद जब वे पाँचों व्यक्ति पल्लीपुर नाम के किरातों की किसी बस्ती के पास से गुजरने लगे तो उनको देख कर कौओं ने जोर-जोर से यह चिल्लाना प्रारम्भ कर दिया—"अरे किरातो! दौड़ो-दौड़ो, सवा लाख के धनी व्यक्ति जा रहे हैं। इनको मारकर इनके धन को छीन लो।"

वायसों के उक्त वचन को सुनकर किरातों ने तत्काल आकर उन्हें घेर लिया और लाठियों के प्रहार से उनको जर्जरित करते हुए उनके सभी कपड़ों को उतरवा कर तलाशी लेनी शुरू कर दी। उन्होंने उनके सभी अङ्गों का निरीक्षण किया किन्तु उनके पास से कोई भी धन प्राप्त नहीं हुआ।

जब उनके पास से कोई भी धन नहीं मिला तो किरातों ने उन्हें संबोधित करते हुये कहा—"पथिको! इससे पूर्व कभी भी वायसों का कथन असत्य नहीं हुआ है। अतः तुम लोगों के पास यदि कहीं छिपाया हुआ कोई धन हो तो दे दो, अन्यथा तुम लोगों को मारकर तुम्हारा प्रत्येक अङ्ग चीर डाला जायगा और अङ्गों की तलाशी लेकर तुम्हारे छिपाये हुए धन को ले लिया जायगा।"

तदा तेषामीदृशं वचनमाकर्ण्य चौरविप्रेण मनसि चिन्तितम्—"यदैषां विप्राणां वधं विधायाङ्गं विलोक्य रत्नानि नेष्यन्ति, तदा मामपि वधिष्यन्ति। ततोऽहं पूर्वमेवात्मानमरत्नं समर्प्यैतान् मुञ्चामि। उक्तञ्च—

मृत्योर्बिभेषि किं बाल ! न स भीतं विमुञ्चति ।
अद्य वाऽब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः ॥४५२॥

तथा च—

गवार्थे ब्राह्मणार्थे च प्राणत्यागं करोति यः ।
सूर्यस्य मण्डलं भित्वा स याति परमां गतिम्" ॥४५३॥

इति निश्चित्याभिहितश्च—"भोः किराताः ! यद्येवं ततो मां पूर्वं निहत्य विलोकयत" इति । ततस्तैस्तथानुष्ठिते तं धनरहितमवलोक्यअपरे चत्वारोऽपि मुक्ताः । अतोऽहं ब्रवीमि—"पण्डितोऽपि वरं शत्रुः" इति ।

व्याख्या—अनृतम्=असत्यं, संनिधौ=पार्श्वे, अरत्नं=रत्नरहितं, मुञ्चामि=रक्षामि । भीतं=भययुक्तं, न विमुञ्चति=त्यजति, शतान्ते=शतवर्षान्तरे वा, मृत्युः ध्रुव एव ॥ ४५२ ॥ अपरे=अन्ये, मुक्ताः=परित्यक्ताः :

हिन्दी—उनके उक्त वचन को सुनकर उस ब्राह्मण-चोर ने अपने मन में सोचा—"यदि इनको मारकर इनके अङ्गों की तलाशी ली गयी और इनके द्वारा छिपाये हुए रत्नों को ये किरात पा गये तो मुझे भी मार ही डालेंगे । अतएव इनको धनरहित प्रमाणित करने के लिए मैं ही क्यों न अपना प्राण इन किरातों के हाथ में समर्पित कर दूँ, और अपने को रत्नरहित सिद्ध करके इनके प्राणों को बचा लूँ । कहा भी गया है कि—

अरे बालक ! तुम मृत्यु से क्यों डर रहे हो ? भयभीत व्यक्ति को भी मृत्यु छोड़ती नहीं है । आज अथवा एक सौ वर्ष के बाद, जब कभी हो प्राणियों की मृत्यु निश्चित है ॥ ४५२ ॥

और भी—जो व्यक्ति गौ और ब्राह्मणों के लिये अपना प्राण त्याग करता है, वह सूर्य-मण्डल को भेदकर परम पद को प्राप्त करता है ॥ ४५३ ॥

उक्त निश्चय करने के पश्चात् उसने किरातों से कहा—"किरातो ! यदि तुम्हारा यही निश्चय है, तो पहले मुझे ही मारकर देख लो ।"

किरातों ने उस ब्राह्मण को मारकर उसके प्रत्येक अङ्गों को देखा । जब उन्हें उसके पास से कोई भी धन नहीं मिला तो उन्होंने अन्य ब्राह्मणों को बिना मारे ही छोड़ दिया ।

इसीलिये मैं कहता हूँ कि—"पण्डित व्यक्ति यदि अपना शत्रु हो तो भी अच्छा ही होता है; किन्तु मूर्ख व्यक्ति का मित्र होना अच्छा नहीं होता है ।"

अथैवं संवदतोस्तयोः सञ्जीवकः क्षणमेकं पिङ्गलकेन सह युद्धं कृत्वा, तस्य खर-नखरप्रहाराभिहतो गतासुर्वसुन्धरापीठे निपपात ।

अथ तं गतासुमवलोक्य पिङ्गलकस्तद्गुणस्मरणार्द्रहृदयः प्रोवाच—"भो ! अयुक्तं मया पापेन कृतं सञ्जीवकं व्यापादयता । यतो विश्वासघातादन्यन्नास्ति पापतरं कर्म । उक्तञ्च—

मित्रद्रोही कृतघ्नश्च यश्च विश्वासघातकः।
ते नरा नरकं यान्ति यावच्चन्द्रदिवाकरौ॥ ४५४॥

भूमिक्षये राजविनाश एव, भृत्यस्य वा बुद्धिमतो विनाशे।
नो युक्तमुक्तं ह्यनयोः समत्वं, नष्टापि भूमिः सुलभा न भृत्याः॥ ४५५॥

तथा मया सभामध्ये स सदैव प्रशंसितः। तत्किं कथयिष्यामि तेषामग्रतः।
उक्तञ्च—

उक्तो भवति यः पूर्वं गुणवानिति संसदि।
न तस्य दोषो वक्तव्यः प्रतिज्ञाभङ्गभीरुणा॥ ४५६॥

व्याख्या—गतासुः=गतप्राणः, वसुन्धरापीठे=धरणीतले, अयुक्तम्=अनुचितम्, भूमिक्षये=पृथिव्या विनाशे, बुद्धिमतो भृत्यस्य वा विनाशे, राजविनाश एव भवति, किन्तु—अनयोः=भूमिसेवकयोः समत्वं=तुल्यत्वं, यदुक्तं तन्न युक्तमुक्तम्। यतो नष्टापि भूमिः सुलभा भवति, किन्तु नष्टा भृत्याः सुलभा न भवन्तीति॥ ४५५॥ तेषां=सभ्यानाम्, अग्रतः=पुरतः, संसदि=सभायां, प्रतिज्ञाभङ्गभीरुणा=प्रतिज्ञाभङ्गकातरेण॥ ४५६॥

हिन्दी—इधर करटक एवं दमनक उक्त प्रकार के वादविवाद में व्यस्त थे और उधर सञ्जीवक पिङ्गलक के साथ युद्ध कर रहा था। कुछ देर तक युद्ध करने के बाद पिङ्गलक के प्रखर नखों के आघात से आहत होने के कारण निर्जीव होकर सञ्जीवक पृथ्वी पर गिर पड़ा। उसको निर्जीव देखकर पिङ्गलक बहुत दुःखी हुआ और उसके गुणों को स्मरण करते हुये करुणा से आर्द्रहृदय होकर उसने कहा—"ओह! पापपरायण होकर मैंने सञ्जीवक की हत्या करके अच्छा नहीं किया। मैंने उसके साथ विश्वासघात किया है और विश्वासघात से बढ़कर कोई दूसरा पापकर्म नहीं होता है। कहा भी गया है कि—

मित्रद्रोही, कृतघ्न तथा विश्वासघाती व्यक्ति नरकगामी होते हैं और जब तक सूर्य और चन्द्रमा इस संसार में रहते हैं, तबतक वे नरक में ही निवास करते हैं॥ ४५४॥

भूमि अथवा कृतज्ञ एवं बुद्धिमान् सेवक के विनष्ट हो जाने पर राजा का ही विनाश समझना चाहिये। इस प्रकार राजा के लिए भूमि और कृतज्ञ सेवक को समान ठहराने वाले विद्वानों का उपर्युक्त कथन ठीक नहीं प्रतीत होता है, क्योंकि—भूमि के नष्ट हो जाने पर पराक्रम से भूमि पुनः प्राप्त हो सकती है, किन्तु कृतज्ञ सेवक सर्वदा नहीं मिलते॥ ४५५॥

मैं अपनी सभा में उसकी सदा प्रशंसा ही करता रहा हूँ। अब मैं उन सभासदों के समक्ष क्या उत्तर दूँगा! कहा भी गया है कि—

सभा के मध्य में जिस व्यक्ति की बार-बार प्रशंसा की गयी हो और जिसको सतत गुणवान् कहा गया हो, पुनः उसी व्यक्ति की निन्दा नहीं करनी चाहिये। क्योंकि प्रशंसा और

निन्दा दोनों के वर्णन से मनुष्य अविश्वस्त हो जाता है। अतः चतुर व्यक्ति जिसकी एक बार प्रशंसा कर चुका हो, पुनः उसकी निन्दा न करे तो अधिक अच्छा होता है ॥ ४५६ ॥

एवं बहुविधं प्रलपन्तं, दमनकः समेत्य सहर्षमिदमाह—"देव! कातरतमस्तवैष न्यायो यद् द्रोहकारिणं शष्पभुजं हत्वेत्थं शोचसि? तन्नैतदुपपन्नं भूभुजाम्। उक्तञ्च—

पिता वा यदि वा भ्राता पुत्रो भार्याथवा सुहृत्।
प्राणद्रोहं यदा गच्छेद्धन्तव्यो नास्ति पातकम् ॥ ४५७ ॥

तथा च—

राजा घृणी ब्राह्मणः सर्वभक्षी, स्त्री चाऽत्रपा दुष्टमतिः सहायः।
प्रेष्यः प्रतीपोऽधिकृतः प्रमादी, त्याज्या अमी यश्च कृतं न वेत्ति ॥ ४५८ ॥

अपि च—

सत्यानृता च परुषा प्रियवादिनी च,
हिंस्रा दयालुरपि चार्थपरा वदान्या।
भूरिव्यया प्रचुरवित्तसमागमा च,
वेश्याङ्गनेव नृपनीतिरनेकरूपा ॥ ४५९ ॥

अपि च—

अकृतोपद्रवः कश्चिन्महानपि न पूज्यते।
पूजयन्ति नरा नागान्न तार्क्ष्यं नागघातिनम् ॥ ४६० ॥

तथा च—

अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः" ॥ ४६१ ॥

एवं तेन सम्बोधितः, पिङ्गलकः सञ्जीवकशोकं त्यक्त्वा दमनकसाचिव्येन राज्यमकरोत्।

इति महामहोपाध्यायश्रीविष्णुशर्मविरचिते पञ्चतन्त्रे
मित्रभेदं नाम प्रथमं तन्त्रं समाप्तम् ॥

व्याख्या—समेत्य = अभ्येत्य, कातरतमः = भीरुतमः, न्यायः = नीतिः, उपपन्नं = युक्तम्, गच्छेत् = व्रजेत् ॥४५७॥ घृणी = दयालुः, सर्वभक्षी = सर्वभुक्, अत्रपा = लज्जारहिता, सहायः = सेवकः, मित्रं वा, प्रेष्यः = दूतः, प्रतीपः = विपरीतकारी, अधिकृतः = अधिकारी, अधिकारारूढो जनः (अधिकारी) प्रमादी = प्रमादयुक्तः, यः कृतं न वेत्ति = कृतघ्नश्च, अमी = एते, त्याज्या भवन्ति ॥ ४५८ ॥ सत्या = सत्यशीला, अनृता = असत्या, परुषा = कठोरा, हिंस्रा = घातपरा,

अर्थपरा = वित्तपरा, वदान्या = दानशीला, अङ्गना = स्त्री, अनेकरूपा = विविधरूपा भवतीति ॥ ४५९ ॥ महानपि श्रेष्ठोऽपि, अकृतोपद्रवः = शान्तः, उपद्रवादिरहितः, यतोहि—नराः नागान् = सर्पान्, पूजयन्ति = अर्चयन्ति, नागघातिनं = सर्पघातिनं, तार्क्ष्यं = गरुडं, न पूजयन्ति ॥ ४६० ॥ हे अर्जुन ! त्वं हि—अशोच्यान् अन्वशोचः, प्रज्ञावादान् = बुद्धिवादान्, पाण्डित्ययुक्तानर्थान्, भाषसे । पण्डिताः = ज्ञानवन्तो जनाः, गतासून् = गतप्राणान्, अगतासून् = स्थितप्राणांश्च, नानुशोचन्ति ॥ ४६१ ॥ सम्बोधितः, दमनकसाचिव्येन = दमनकस्य मन्त्रित्वेन, दमनकं मन्त्रिपदे नियोज्य तेनादिष्टोपायेनेत्यर्थः ।

हिन्दी—सञ्जीवक के शोक में प्रलाप करनेवाले पिङ्गलक के पास जाकर दमनक ने सहर्ष कहा—"देव आपकी यह नीति अत्यन्त कायरतापूर्ण है कि आप एक राजद्रोही और शष्पभोजी जीव को मारकर इस प्रकार का शोक कर रहे हैं। राजाओं के लिये यह बात शोभा नहीं देती। कहा भी गया है कि—

पिता, माता, भाई, पुत्र, स्त्री अथवा मित्र चाहे कोई भी हो, यदि वह प्राणद्रोह करता है तो उसको मार डालने पर कोई पातक नहीं होता ॥ ४५७ ॥

और भी—दयालु राजा (जो अपराधी को अपनी दया के कारण छोड़ दे), सर्वभोजी ब्राह्मण (जो आचार विचार का ध्यान न रखता हो), लज्जारहित स्त्री, दुष्ट मित्र या सेवक, विरुद्ध आचरण करने वाला दूत, प्रमादी अधिकारी और कृतघ्न व्यक्ति—ये सभी त्याग देने ही योग्य होते हैं ॥ ४५८ ॥

और भी—राजाओं की नीति भी वेश्याओं की ही तरह बहुरूपिणी होती है। कार्यानुसार उसे सत्याचरण भी करना पड़ता है और झूठ भी बोलना पड़ता है। कहीं वह अत्यन्त कठोर हो जाती है और कहीं प्रिय बोल कर भी अपना कार्य निकाल लेती है। उसे कभी दयालु होना पड़ता है तो कहीं हिंसा का भी अवलम्बन करना पड़ता है। कहीं वह उदार और दानपरायण हो जाती है तो कहीं कृपणता एवं लोलुपता को भी ग्रहण करना पड़ता है। कभी वह उदार होकर व्यय करती है और कभी धनसंग्रह के लिए व्यग्र भी हो उठती है। उसका स्वभाव यदि कभी बहुव्ययी हो जाता है तो कभी उसके आय के साधन भी बढ़ ही जाते हैं ॥ ४५९ ॥

और भी—महान् होने पर भी यदि मनुष्य सीधा-साधा और शान्त बना रहता है तो लोग उसकी पूजा नहीं ही करते हैं। शान्त व्यक्ति का आदर सत्कार कोई नहीं करता है और इसके विपरीत यदि वह उपद्रवी होता है तो लोग उसको देवता की तरह पूजने लग जाते हैं। उनके शान्त स्वभाव के ही कारण सर्पभक्षी गरुड की पूजा नहीं होती और उपद्रवकारी सर्पों की लोग पूजा किया करते हैं ॥ ४६० ॥

और भी—भगवान् कृष्ण ने गीता में अर्जुन को सम्बोधित करते हुये कहा है कि—हे अर्जुन ! जिनके विषय में शोक नहीं करना चाहिये, उनके विषय में तुम शोक भी

कर रहे थे और इधर आदर्शवादी पण्डितों की तरह तत्त्व की बातें भी करते जा रहे हो। हे धनञ्जय! यदि तुम पण्डितों की तरह तत्त्व की बातें कर रहे हो तो तुमको पण्डितों के अनुकूल ही आचरण भी करना चाहिये। पण्डितजन किसी के मरने या जीने का शोक नहीं करते" ॥ ४६१ ॥

उक्त प्रकार से दमनक के समझाने पर पिङ्गलक ने सञ्जीवक के मरणसम्बन्धी शोक को छोड़ दिया और दमनक के मन्त्रित्व में पूर्ववत् अपना राज्य-कार्य करने लगा।

निगद्य शब्दपर्यायं लोकदेवगिरा मया।
क्लिष्टभावयुतानर्थान् कृत्वा स्फुटतरानिह ॥ १ ॥
बालबुद्धे र्विबोधाय प्रथमं भेदसंज्ञकम्।
तन्त्रं च पञ्चतन्त्रस्य व्याख्यया परिभूषितम् ॥ २ ॥

इति श्री पं० श्यामाचरणपाण्डेयेन हिन्दी-संस्कृत-व्याख्याभ्यां विभूषितं
पञ्चतन्त्रस्याद्यं मित्रभेदसंज्ञकं तन्त्रं संपूर्णम् ॥

* शुभमस्तु *

—:*:—

॥ श्रीः ॥

# पञ्चतन्त्रे

## : मित्रसम्प्राप्तिः :

### ( द्वितीयं तन्त्रम् )

अथेदमारभ्यते मित्रसम्प्राप्तिर्नाम द्वितीयं तन्त्रं, यस्यायमाद्यः श्लोकः—

असाधना अपि प्राज्ञा बुद्धिमन्तो बहुश्रुताः।
साधयन्त्याशु कार्याणि काकाखुमृगकूर्मवत् ॥ १ ॥

तद्यथानुश्रूयते—अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम्। तस्य नातिदूरस्थो महोच्छ्रायवान् नानाविहङ्गोपभुक्तफलः कीटैरावृतकोटरश्छायाश्वासितपथिकजनसमूहो न्यग्रोधपादपो महान्। अथवा युक्तमुक्तम्—

छायासुप्तमृगः शकुन्तनिवहैर्विष्वग्विलुप्तच्छदः,
कीटैरावृतकोटरः कपिकुलैः स्कन्धे कृतप्रश्रयः।
विश्रब्धं मधुपैर्निपीतकुसुमः श्लाघ्यः स एव द्रुमः,
सर्वाङ्गैर्बहुसत्त्वसङ्गसुखदो भूभारभूतोऽपरः ॥ २ ॥

तत्र च लघुपतनको नाम वायसः प्रतिवसति स्म। कदाचित्प्राणयात्रार्थं पुरमुद्दिश्य प्रचलितो यावत्पश्यति, तावज्जालहस्तोऽतिकृष्णतनुः, स्फुटितचरणः, ऊर्ध्वकेशो यमकिङ्कराकारो नरः संमुखो बभूव।

या परा ब्रह्मणः शक्तिः परा वागनपायिनी।
चिदानन्दस्वरूपा या सा शिवा पातु सर्वतः ॥ १ ॥

व्याख्या—द्वितीयतन्त्रस्यामुखकथां प्रथयन् प्राह-अथेति। प्राज्ञाः=ज्ञानवन्तः, बहुश्रुताः=श्रुतसम्पन्नाः (बहु श्रुतं यैस्ते), असाधनाः=साधनहीनाः, काकाखुमृगकूर्मवत्=काकः=वायसः, आखुः=मूषकः, कूर्मः=कच्छपः, तैर्यथा कार्याणि साधितानि तथैव, आशु=शीघ्रं, स्वकार्याणि साधयन्ति=प्रसाधयन्ति ॥ १ ॥ अनुश्रूयते=आकर्ण्यते, महोच्छ्रायवान्=अतिविशालः, नानाविहङ्गोपभुक्तफलः=विभिन्नपक्षिसमूहैरास्वादितफलः (नानाविहङ्गैः=विविधपक्षिभिः, उपभुक्तानि फलानि यस्य सः), कीटैरावृतकोटरः=कृमिसमूहैः समाश्रितनिष्कुहः (कीटैरावृतानि कोटराणि यस्य सः), छायाश्वासितपथिकजनसमूहः=छायातोषितपथिकसमूहः

(छायया आश्वासितः=संतोषितः पथिकजनानां समूहो येन सः), न्यग्रोधपादपः=वटवृक्षः। छायासुप्तमृगः=छायाविश्रान्तमृगः (छायायां सुप्ता मृगा यस्य सः), शकुन्तनिवहैः=पक्षिसमूहैः, विष्वग्विलुप्तच्छदः=समन्ततो विलुप्तपर्णः (विलुप्ताः छदाः यस्यासौ), स्कन्धे=शाखायां, कृतप्रश्रयः=कृताश्रयः, मधुपैः=मधुकरैः, निपीतकुसुमः=निपीतपुष्परसः, सर्वाङ्गैः=स्वशरीरावयवैः, (शाखाप्रशाखादिभिः) बहुसत्त्वसङ्गसुखदः=अनेकजीवसङ्गसुखदः, द्रुमः=वृक्षः, श्लाघ्यः=प्रशंसार्हो भवति, अपरः=अन्यः, भूभारभूतः, एव भवतीति ॥२॥ प्राणयात्रार्थं=जीविकोपार्जनार्थम्। स्फुटितचरणः=विस्फुटितपादः (स्फुटितौ चरणौ यस्य सः), यमकिङ्कराकारः=यमदूताकारः (यमकिङ्करस्य आकारः=रूपमिवाकारो यस्यासौ)।

हिन्दी—विष्णुशर्मा ने राजपुत्रों से कहा—अब मित्रसम्प्राप्ति नाम का यह द्वितीय तन्त्र आरम्भ हो रहा है, जिसका प्रथम श्लोक यह है—

विद्वान्, बहुश्रुत एवं बुद्धिमान् जन साधनों के अभाव में भी अपने कार्यों को सिद्ध कर ही लेते हैं, जैसे–काक, मूषक, मृग तथा कूर्म ने मिलकर अपने कार्यों को सिद्ध कर लिया था ॥ १ ॥

जैसा कि सुना जाता है–दक्षिण के किसी जनपद में महिलारोप्य नामका एक नगर है। उस नगर से थोड़ी दूरपर अत्यन्त विशाल एक वटवृक्ष था, जिसके फलों को मुक्त रूप से विहङ्गमगण खाया करते थे और जिसके कोटरों में अनेक कीट निवास किया करते थे। उसकी शीतल छाया में दूर-दूर से आनेवाले पथिकजन सतत विश्राम किया करते थे और उसकी सुखद छाया से सन्तोष लाभ किया करते थे। किसी ने ठीक ही कहा है कि—

इस विश्व में उत्पन्न होने वाला वही वृक्ष प्रशंसार्ह समझा जाता है, जिसकी छाया में मृगकुल श्रान्त होकर विश्राम करता हो, पक्षिगण जिसके पत्रों और फलों का उपभोग किया करते हों, जिसके कोटरों में असङ्ख्य जीव निवास करते हों, जिसकी शाखाओं पर मर्कटगण निवास किया करते हों, भ्रमरगण जिसके पुष्परस का आस्वादन करके मधुर गुञ्जार किया करते हों, और जो अपने संसर्ग में आये हुये अनेक जीवों को अपने सम्पूर्ण अङ्गों के द्वारा सुख प्रदान करता हो। अन्य वृक्ष पृथ्वी के लिये भारभूत होने के अतिरिक्त और कुछ नहीं होते ॥ २ ॥

उक्त वृक्ष की किसी शाखापर लघुपतनक नाम का एक वायस निवास किया करता था। किसी दिन अपनी आजीविका के अन्वेषण में अभी वह इधर-उधर देख ही रहा था कि अत्यन्त कुरूप काला, ऊर्ध्वकेश, स्फुटितचरण और यमकिङ्कराकार एक व्यक्ति हाथ में जाल लिये हुए उसके सामने से आता हुआ दिखाई पड़ा।

**अथ तं दृष्ट्वा शङ्कितमना व्यचिन्तयत्–यत्—"अयं दुरात्माद्य ममाश्रयवटपादपसंमुखोऽभ्येति, तन्न ज्ञायते किमद्य वटवासिनां विहङ्गमानां सङ्क्षयो भविष्यति, न वा?" एवं बहुविधं विचिन्त्य तत्क्षणान्निवृत्य तमेव वटपादपं गत्वा सर्वान् विहङ्गमान्**

प्रोवाच—"भोः ! अयं दुरात्मा लुब्धको जालतण्डुलहस्तः समभ्येति, तत्सर्वथा तस्य न विश्वसनीयम्। एष जालं प्रसार्य तण्डुलान् प्रक्षेप्स्यति। ते तण्डुला भवद्भिः सर्वैरपि कालकूटसदृशा द्रष्टव्याः।"

एवं वदतस्तस्य स लुब्धकस्तत्र वटतले आगत्य, जालं प्रसार्य सिन्धुवार-सदृशांस्तण्डुलान् प्रक्षिप्य, नातिदूरं गत्वा निभृतः स्थितः। अथ ये पक्षिणस्तत्र स्थितास्ते लघुपतनकवाक्यार्गलया निवारितास्तांस्तण्डुलान् हालाहलाङ्कुरानिव वीक्षमाणा निभृतास्तस्थुः।

अत्रान्तरे चित्रग्रीवो नाम कपोतराजः सहस्रपरिवारः प्राणयात्रार्थं परिभ्रमंस्तांस्तण्डुलान् दूरतोऽपि पश्यँल्लघुपतनकेन निवार्यमाणोऽपि जिह्वालौल्याद्भक्षणार्थमपतत्, सपरिवारो निबद्धश्च।

व्याख्या—शङ्कितमनाः=आशङ्कितचित्तः, सङ्क्षयः=विनाशः, लुब्धकः=व्याधः, कालकूटसदृशाः=विषतुल्याः (कालकूटः पृथुमालिदैत्यरक्तोद्भवो विषभेदः), सिन्दुरवारसदृशान्=निर्गुण्डीसदृशान् (शुभ्रान्) निभृतः=गुप्तः सन्, तत्रस्थिताः=वटवृक्षाश्रिताः, वाक्यार्गलया=वचनरूपयार्गलया (कपाटस्यावष्टम्भकं मुसलमर्गलम्), हालाहलाङ्कुरानिव=हालाहलाख्यविषाङ्कुरानिव, वीक्षमाणाः=निरीक्षमाणाः, निभृताः=मौनव्रतमाश्रिताः, जिह्वालौल्यात्=जिह्वाचापल्यात्।

हिन्दी—उस यमकिङ्कराकार पुरुष को देखकर वायस ने अपने मन में सोचा—"यह दुष्ट व्याध आज यदि मेरे निवासभूत वटवृक्ष की ओर आ गया तो न जाने क्या होगा ? आज इन वटवासी पक्षियों का विनाश होगा, या ये जीवित ही बच जायेंगे ?"

उक्त प्रकार से अनेक बातों को सोचने के पश्चात् वह तत्काल लौट पड़ा और उस वटवृक्ष पर जाकर वहाँ के निवासी समस्त पक्षियों को एकत्र करके उसने कहा—"मित्रो ! यह दुष्ट व्याध अपने हाथ में जाल और चावलों को लेकर इधर ही आ रहा है। तुम लोग उसपर विश्वास न करना। जाल को जमीन पर फैलाने के बाद वह चावलों को उसपर बिखेर देगा। तुम लोग उन छींटे गये चावलों को कालकूट (विष) के समान समझकर उनपर दृष्टिपात न करना।"

अभी वह वटवासी पक्षियों को समझा ही रहा था कि वह व्याध उसी वृक्ष के नीचे आकर खड़ा हो गया और जाल को फैलाकर उसके ऊपर उसने निर्गुण्डी के पुष्पों की तरह सफेद चावलों को छींट दिया और वहाँ से थोड़ी दूर हटकर छिपकर बैठ गया।

उस वृक्षपर निवास करने वाले पक्षिगण लघुपतनक के वचनरूपी अर्गला से रोके जाने के कारण उन चावलों को हालाहल विष के दानों की तरह समझकर शान्त हो उसकी ओर देखते रहे, कोई भी उनके पास नहीं गया।

इसी बीच में चित्रग्रीव नाम का एक कपोतराज अपने सहस्रों पारिवारिक सदस्यों के साथ जीविका के अन्वेषण में इधर-उधर घूमता हुआ कहीं से आकर उन बिखरे हुए सफेद चावलों की ओर देखने लगा। लघुपतनक के बार-बार मना करने के बाद भी अपनी जिह्वा को

चपलता के कारण उनको खाने के प्रलोभन में आकर वह सपरिवार उन चावलों पर टूट पड़ा और सकुटुम्ब उस जाल में फँस गया।"

अथवा साध्विदमुच्यते—

जिह्वालौल्यप्रसक्तानां जलमध्यनिवासिनाम्।
अचिन्तितो वधोऽज्ञानां मीनानामिव जायते॥ ३॥

अथवा दैवप्रतिकूलतया भवत्येवम्। न तस्य दोषोऽस्ति। उक्तञ्च—

पौलस्त्यः कथमन्यदारहरणे दोषं न विज्ञातवान्,
रामेणापि कथं न हेमहरिणस्यासम्भवो लक्षितः।
अक्षैश्चापि युधिष्ठिरेण सहसा प्राप्तो ह्यनर्थः कथं,
प्रत्यासन्नविपत्तिमूढमनसां प्रायो मतिः क्षीयते॥ ४॥

तथा च—

कृतान्तपाशबद्धानां दैवोपहतचेतसाम्।
बुद्धयः कुब्जगामिन्यो भवन्ति महतामपि॥ ५॥

**व्याख्या**—जिह्वालौल्यप्रसक्तानां = जिह्वाचापल्ययुक्तानां (जिह्वायाः लौल्यं जिह्वालौल्यं, तस्मिन् प्रसक्ता ये तेषामित्यर्थः), जलमध्यनिवासिनां = जलमध्ये स्थितानाम्, अज्ञानां = मूढानां, मीनानां = मत्स्यानामिव, अचिन्तितः = अतर्कितः, वधो जायते = समुत्पद्यते॥ ३॥ दैवप्रतिकूलतया = भाग्यस्य विपरीततया, पौलस्त्यः = रावणः (पुलस्त्यस्य गोत्रापत्यं पुमान्), अन्यदारहरणे = परस्त्रीहरणे, दोषं = पापं, हेमहरिणस्य = स्वर्णमृगस्य, असंभवः = असम्भवोत्पत्तिः, अक्षैः = पाशैः, अनर्थः = विपत्, प्रत्यासन्नविपत्तिमूढमनसाम् = आसन्नापत्कालेन जाड्यं गतानाम्, मतिः = बुद्धिः, प्रायेण क्षीयते = क्षयमेव गच्छतीति भावः॥ ४॥ कृतान्तपाशबद्धानां = यमपाशबद्धानां (कृतान्तस्य पाशेन बद्धा ये तेषामिति) दैवोपहतचेतसां = भाग्यविनाशितमनसां (दैवेनोपहतं चेतो येषां तेषामिति), बुद्धयः, कुब्जगामिन्यः = कुटिलगतयो भवन्ति॥ ५॥

**हिन्दी**—जिह्वाचापल्ययुक्त (लोभी) मूर्ख व्यक्तियों का विनाश भी उसी प्रकार अतर्कित रूप से होता है, जैसे जलनिवासी मछलियों का, उनके जिह्वचापल्य के कारण विनाश हो जाता है॥ ३॥

अथवा, भाग्य की प्रतिकूलता से ऐसा हो ही जाता है कि व्यक्ति का लोभ बढ़ जाय और वह दूसरों के जाल में फँसकर छटपटाने लगे। अतः चित्रग्रीव का इसमें कोई दोष नहीं है। (महान् लोग भी दुर्भाग्य के कारण कभी-कभी सङ्कटग्रस्त हो जाया करते हैं)। कहा भी गया है कि—

परस्त्रीहरण करने में दोष होता है, इस बात को विद्वान् तथा विचारवान् होते हुये भी रावण ने क्यों नहीं समझा था?, राम ने अपने मन मे यह क्यों नहीं पहले ही सोच लिया कि स्वर्णमृग का होना ही असम्भव है? राजनीतिकुशल एवं धर्मविद् युधिष्ठिर ने "द्यूतकर्म को अधर्म समझते हुये भी उसमें फँसकर आपत्ति का भोग क्यों किया था? उक्त उदाहरणों से यह बात

सुतरां सिद्ध हो जाती है कि आपत्तिकाल के समीप आते ही मनुष्य जडवत् शून्य हो जाता है और उसकी बुद्धि भी प्रायः क्षीण हो जाती है ॥ ४ ॥

और भी—यमपाश में आबद्ध हुये प्राणियों और प्रतिकूल भाग्य के द्वारा प्रताडित-हृदययुक्त मनुष्यों की बुद्धि विपरीतगामिनी हो ही जाती है। मनुष्य कितना भी महान् क्यों न हो, आपत्तिकाल में उसकी बुद्धि स्थिर नहीं रह पाती ॥ ५ ॥

अत्रान्तरे लुब्धकस्तान्बद्धान् विज्ञाय प्रहृष्टमनाः प्रोद्यतयष्टिस्तद्वधार्थं प्रधावितः। चित्रग्रीवोऽप्यात्मानं सपरिवारं बद्धं मत्वा लुब्धकमायान्तं दृष्ट्वा तान् कपोतानूचे—"अहो, न भेतव्यम्। उक्तञ्च—

व्यसनेष्वेव सर्वेषु यस्य बुद्धिर्न हीयते।
स तेषां पारमभ्येति तत्प्रभावादसंशयम् ॥ ६ ॥
सम्पत्तौ च विपत्तौ च महतामेकरूपता।
उदये सविता रक्तो रक्तश्चास्तमये तथा ॥ ७ ॥

तत्सर्वे वयं हेलयोड्डीय सपाशजाला अस्यादर्शनं गत्वा मुक्तिं प्राप्नुमः। अथ चेद्भयविक्लवाः सन्तो हेलया समुत्पातं न करिष्यथ, ततो मृत्युमवाप्स्यथ। उक्तञ्च—

तनवोऽप्यायता नित्यं तन्तवो बहुलाः समाः।
बहून् बहुत्वादायासान् सहन्तीत्युपमा सताम् ॥ ८ ॥

व्याख्या—प्रोद्यतयष्टिः=उत्थापितदण्डः, तद्वधार्थं=चित्रग्रीवादिवधार्थं, मत्वा=स्वीकृत्य व्यसनेषु=आपत्सु, यस्य पुरुषस्य बुद्धिः, न हीयते=नावसीदति, तत्प्रभावात्=स्वबुद्धि-सामर्थ्यात्, सः, तेषां=व्यसनानां, पारमभ्येति=पारं गच्छतीति ॥ ६ ॥ सम्पत्तौ=समृद्धौ, विपत्तौ=विपत्तिकाले च, एकरूपता=समस्थितिः, भवति। यथा—सविता=सूर्यः, रक्तो भवति तथैव अस्तमये=अस्तमनवेलायां, च रक्तस्तिष्ठति ॥ ७ ॥ हेलया=लीलया (अवज्ञापूर्वक, खेल में जैसे किया जाता है), भयविक्लवाः=भयव्याकुलाः, समुत्पातम्=उड्डयनं, मृत्युं=मरणम्, अवाप्स्यथ=प्राप्स्यथ। तनवः=सूक्ष्माः, आयताः=विस्तृताः, बहुलाः=अनेके, तन्तवः=सूत्राणि, समाः=संयुक्ताः, संमिलिताः, बहुत्वात्=अनेकत्वात्; संमिलितत्वादित्यर्थः, बहून्=अनेकान्, आयासान्=कर्षणाद्यायासान्, भारादीन्, सहन्ति, तथैव सतामपि उपमा भवति=सज्जनाः संमिलिताः सन्तः प्रचुरान् कष्टान् सहन्ते ॥ ८ ॥

हिन्दी—चित्रग्रीवादि कबूतरों को जालमें आवद्ध देखकर वह बहेलिया अपने मन में बहुत प्रसन्न हुआ और अपनी लाठी को ऊपर उठाकर उन्हें मारने के लिये दौड़ पड़ा। चित्रग्रीव ने जब उस बहेलिये को अपनी ओर आते हुये देखा और सपरिवार अपने आपको उसके जाल में आवद्ध समझ लिया तो अपने अनुयायियों को सांत्वना प्रदान करते हुये कहा—"मित्रो! बहेलिए के आगमन से तुमलोगों को डरना नहीं चाहिये। कहा भी गया है कि—

अनेक प्रकार की आपत्तियों में घिर जाने पर भी जिस व्यक्ति की बुद्धि क्षीण नहीं होती

है, वह व्यक्ति अपनी बुद्धि के प्रभाव से उन आपत्तियों को अवश्य पार कर लेता है। (अतः आपत्तिकाल में मनुष्य को अपनी बुद्धि एवं साहस को छोड़ना नहीं चाहिये) ॥ ६ ॥

जैसे भगवान् सूर्य उदय और अस्त दोनों ही कालों में रक्त बने रहते हैं उसी प्रकार सज्जन व्यक्ति भी सम्पत्ति और विपत्ति में सदा एकरूप बने रहते हैं। [सुख और दुःख दोनों ही में समान बने रहना सज्जन पुरुषों का स्वाभाविक गुण होता है। वे अभ्युदयकाल में सुखी और विपत्ति काल में दुःखी नहीं होते] ॥ ७ ॥

अतः यदि हमलोग आपस में मिलकर बिना किसी आयास के ही (खेल-खेल में) बहेलिये के इस पाश और जाल को लेकर उड़ चलें तो इसकी दृष्टि से ओझल हो जाने पर संभव है कि इस बन्धन से मुक्त हो जाय। यदि भय से विकल और निराश होकर हम संमिलित रूप से इस पाश को लेकर उड़ नहीं चलेंगे तो हम सबकी मृत्यु निश्चित है। कहा भी गया है कि—

छोटे-बड़े सभी प्रकार के तन्तु जब आपस में संश्लिष्ट (संघटित) हो जाते हैं तो अपनी सामूहिक शक्ति के कारण वे अनेक बड़े-बड़े बोझों को भी अनायास ही सह लिया करते हैं। सज्जन व्यक्ति भी उन सूत्रों के ही सदृश संघटित हो जाने पर बड़ी-बड़ी आपत्तियों को भी अनायास ही झेल लिया करते हैं" ॥ ८ ॥

तथानुष्ठिते, लुब्धको जालमादायाकाशे गच्छतां तेषां पृष्ठतो भूमिस्थोऽपि पर्यधावत्। तत ऊर्ध्वाननः श्लोकमेनमपठत्—

जालमादाय गच्छन्ति संहताः पक्षिणोऽप्यमी।
यावच्च विवदिष्यन्ति पतिष्यन्ति न संशयः ॥ ९ ॥

लघुपतनकोऽपि प्राणयात्राक्रियां त्यक्त्वा किमत्र भविष्यतीति कुतूहलात्तत्पृष्ठतोऽनुसरति। अथ दृष्टेरगोचरतां गतान् तान् विज्ञाय लुब्धको निराशः श्लोकमपठत्, निवृत्तश्च।

"उक्तञ्च—

नाहि भवति यन्न भाव्यं भवति च भाव्यं विनापि यत्नेन।
करतलगतमपि नश्यति यस्य हि भवितव्यता नास्ति ॥ १० ॥

तथा च—

पराङ्मुखे विधौ चेत्स्यात्कथंचिद् द्रविणोदयः।
तत्सोऽन्यदपि संगृह्य याति शङ्खनिधिर्यथा ॥ ११ ॥

तदास्तां तावद्विहङ्गामिषलाभो यावत्कुटुम्बवर्त्तनोपायभूतं जालमपि मे नष्टम्।"

व्याख्या—तथानुष्ठिते=उड्डीयमानेषु तेषु, पर्यधावत्=अन्वधावत्। ऊर्ध्वाननः= ऊर्ध्वमुखस्तान्पश्यन्, अमी=एते, संहताः=सङ्घटिताः सन्तः, यावत्=यदा, विवदिष्यन्ति= विवादं करिष्यन्ति, (श्रान्ताः सन्तः कलहं विधास्यन्तीति भावः) ॥ ९ ॥ प्राणयात्राक्रियां= जीविकोपार्जनक्रियां, त्यक्त्वा=विहाय, कुतूहलात्=औत्सुक्यात्, अनुसरति=अनुधावति।

दृष्टिगोचरताम्=अदृश्यतां, गतान्=प्राप्तान्, निराशः=गतोत्साहः, निवृत्त=परावृत्तः। भाव्यं=भवितव्यं, भवितव्यता=भाग्यं, करतलगतमपि=हस्तगतमपि वस्तु, नश्यति=विनश्यति ॥१०॥ विधौ=भाग्ये, पराङ्मुखे=प्रतिकूले सति, कथंचित्=केनाप्युपायेन, द्रविणोदयः=अर्थोदयः (धनलाभः), अन्यदपि=पूर्वसञ्चितमपि, सङ्गृह्य=गृहीत्वा (समेट कर), याति=गच्छति ॥ ११ ॥ विहङ्गामिषलाभः=पक्षिमांसलाभः, कुटुम्बवर्तनोपायभूतं=कुलस्य जीविकार्जनोपायसाधनम्।

हिन्दी—जाल को लेकर आकाश में उड़ते हुए पक्षियों को देखकर वह बहेलिया भी उनके पीछे-पीछे भूमि पर दौड़ने लगा। कुछ दूर जाने के पश्चात् उसने आकाश की ओर देखकर इस श्लोक को पढ़ा—

पारस्परिक संघटन के कारण ये कबूतर मेरे जाल को लेकर उड़ तो रहे हैं किन्तु श्रान्त होकर जब ये आपस में विवाद करने लगेंगे तो पृथ्वी पर अवश्य गिरेंगे ॥ ९ ॥

उधर लघुपतनक उपर्युक्त घटना को साश्चर्य देखता रहा और आगे की घटना को देखने के उद्देश्य से कौतूहलवश वह उन पक्षियों के पीछे पीछे चलने लगा। पक्षियों के अदृश्य हो जाने पर बहेलिये ने निराश होकर अग्रिम श्लोक को पढ़ा और लौट गया—

"किसी ने ठीक ही कहा है कि—जो भाग्य में नहीं होता है, वह नहीं ही होता। जो भाग्य में होता है, वह बिना किसी प्रयत्न के भी हो जाता है। जिस पुरुष का भाग्य अनुकूल नहीं होता उसके हाथ में आयी हुई वस्तु भी नष्ट हो जाती है ॥ १० ॥

और भी—भाग्य के प्रतिकूल होने पर यदि किसी पुरुष को कथंचित् कुछ धनागम हो भी जाता है, तो वह शङ्खनिधि की भाँति स्वयं तो चला ही जाता है अपने साथ उसके पूर्वसञ्चित धन को भी समेटकर लेता जाता है। (शङ्खनिधि के विषय में यह प्रसिद्धि है कि वह किसी के पास ठहरता नहीं है। जिसके पास वह जाता है उसके पूर्वसञ्चित धन को भी नष्ट कर डालता है) ॥ ११ ॥

पक्षियों के मांस की आशा तो दूर ही रही, कौटुम्बिक जीविका के उपार्जन का साधन मेरा जाल भी इनके साथ ही चला गया।"

चित्रग्रीवोऽपि लुब्धकमदर्शनीभूतं ज्ञात्वा तानुवाच—"भोः! निवृत्तः स दुरात्मा लुब्धकः, तत्सर्वैरपि स्वस्थैर्गम्यतां महिलारोप्यस्य प्रागुत्तरदिग्भागे। तत्र मम सुहृद्धिरण्यको नाम मूषकः सर्वेषां पाशच्छेदं करिष्यति।

उक्तञ्च—

सर्वेषामेव मर्त्यानां व्यसने समुपस्थिते।
वाङ्मात्रेणापि साहाय्यं मित्रादन्यो न संदधे ॥१२॥

एवं ते कपोताश्चित्रग्रीवेण संबोधिता महिलारोप्ये नगरे हिरण्यकबिलदुर्गं प्रापुः।

व्याख्या—अदर्शनीभूतं=दृष्टेरगोचरतां गतं, तान्=कपोतान्, दुरात्मा=दुष्टहृदयः, स्वस्थैः=भयरहितैः (प्रकृतिस्थैः सद्भिः), प्रागुत्तरदिग्भागे=पूर्वोत्तरकोणे (ईशान कोण में)

पाशच्छेदं=बन्धनविमोक्षणं (जालकर्तनमिति यावत्)। मर्त्यानां=मनुष्याणां, व्यसने=विपदि, मित्रादन्यः=मित्रादतिरिक्तः कोऽपि, वाङ्मात्रेणापि=वचनेनापि, साहाय्यं=सहयोगं, न संदधे=न विधत्ते ॥ १२ ॥ सम्बोधिताः=समाश्वस्ताः, प्रापुः=जग्मुः।

हिन्दी—बहेलिये के दूर चले जाने के बाद चित्रग्रीव ने अपने अनुयायी कपोतों से कहा—'मित्रो! वह दुष्ट व्याध लौट गया। अब तुम लोग स्वस्थ होकर महिलारोप्य नगर के ईशान कोण की ओर चलो। वहाँ हिरण्यक नाम का एक चूहा मेरा मित्र है। वह तुम लोगों के इस बन्धन को काट देगा। कहा भी गया है कि—

मनुष्य पर जब किसी प्रकार की विपत्ति आ जाती है तो उसके मित्रों को छोड़कर दूसरा व्यक्ति वचनमात्र से भी उसकी सहायता नहीं करता ॥ १२ ॥

चित्रग्रीव के आदेशानुसार वे कबूतर महिलारोप्य नगर के पास रहने वाले हिरण्यक के विवर-दुर्गपर पहुँच गये।

हिरण्यकोऽपि सहस्रबिलदुर्गं प्रविष्टः सन्नकुतोभयः सुखेनास्ते। अथवा साध्विदमुच्यते—

अनागतं भयं दृष्ट्वा नीतिशास्त्रविशारदः।
अवसन्मूषकस्तत्र कृत्वा शतमुखं बिलम् ॥ १३ ॥
दंष्ट्राविरहितः सर्पो मदहीनो यथा गजः।
सर्वेषां जायते वश्यो दुर्गहीनस्तथा नृपः ॥ १४ ॥

व्याख्या—सहस्रमुखबिलदुर्गं=सहस्रमुखयुक्तं विवरदुर्गं, न कुतोभयः=निर्भयः सन्, आस्ते=वसति (तिष्ठतीति भावः)। नीतिशास्त्रविशारदः=नीतिशास्त्रकुशलः, अनागतम्=अप्राप्तं (भाविनमिति यावत्), भयं=भीतिप्रदं कष्टं, दृष्ट्वा=समालोच्य, अवसत्=न्यवसत् ॥ १३ ॥ यथा दंष्ट्राविरहितः=दन्तविहीनः, मदहीनः=मदरहितः, गजः, वश्यो भवति तथैव दुर्गहीनो नृपः=राजापि सर्वेषां वशगो भवति ॥ १४ ॥

हिन्दी—हिरण्यक भी अपने सहस्रमुखवाले विवर-दुर्ग में निर्भय होकर सुखसे निवास करता था। किसी ने ठीक ही कहा है कि—

भविष्य में आ सकने वाली आपत्ति के भय से नीतिकुशल वह हिरण्यक नाम का चूहा शतमुख-विवर का निर्माण करके सुखसे वहाँ निवास करता था ॥ १३ ॥

क्यों कि—जैसे-जहरीले दांतों के अभाव में सर्प और मद के अभाव में गज अशक्त होकर सबके वशीभूत हो जाते हैं। उसीप्रकार दुर्गहीन राजा भी शक्तिहीन होकर शत्रुओं के अधीन हो जाता है। आत्मरक्षा के अभाव में वह शत्रु का यथोचित प्रतीकार नहीं कर सकता ॥ १४ ॥

तथा च—

न गजानां सहस्रेण न च लक्षेण वाजिनाम्।
तत्कर्म साध्यते राज्ञां दुर्गेणैकेन यद्रणे ॥ १५ ॥

शतमेकोऽपि संधत्ते प्राकारस्थो धनुर्धरः।
तस्माद् दुर्गं प्रशंसन्ति नीतिशास्त्रविदो जनाः॥ १६॥

व्याख्या—वाजिनाम्=अश्वानां, साध्यते=क्रियते ॥ १५॥ प्राकारस्थः=प्राचीरस्थः (दुर्ग के परकोटे पर स्थित), एकोऽपि धनुर्धरः=एकोऽपि धानुष्कः, शतं=शतसङ्ख्यकान्, संधत्ते=संहरति (लक्ष्य बना सकता है)॥ १६॥

हिन्दी—और भी—युद्धभूमि में हजारों हाथियों और लाखों घोड़ों से भी राजाओं का जो काम नहों किया जा सकता है, वह कार्य केवल एक दुर्ग से किया जा सकता है। (युद्ध-काल में राजाओं के लिये दुर्ग का होना हजारों हाथियों और लाखों अश्वारोहियों से भी महत्त्वपूर्ण होता है)॥ १५॥

दुर्ग के परकोटे पर स्थित केवल एक ही धनुर्धर सैकड़ों योद्धाओं को अपना लक्ष्य बना सकता है। अतएव नीतिविदों ने राजाओं के लिए दुर्ग का होना आवश्यक कहा है और उसकी प्रशंसा भी की है॥ १६॥

अथ चित्रग्रीवो बिलमासाद्य तारस्वरेण प्रोवाच—"भोः भो मित्र हिरण्यक! सत्वरमागच्छ; महती मे व्यसनावस्था वर्तते।"

तच्छ्रुत्वा हिरण्यकोऽपि निलदुर्गान्तर्गतः सन् प्रोवाच—"भोः! को भवान्? किमर्थमायातः? किं कारणम्? कीदृक् ते व्यसनावस्थानम्? तत्कथय" इति।

तच्छ्रुत्वा चित्रग्रीव आह—"भोः! चित्रग्रीवो नाम कपोतराजोऽहं ते सुहृद्। तत्सत्वरमागच्छ। गुरुतरं प्रयोजनमस्ति।"

तदाकर्ण्य पुलकिततनुः प्रहृष्टात्मा स्थिरमनास्त्वरमाणो स निष्क्रान्तः। अथवा साध्विदमुच्यते—

सुहृदः स्नेहसम्पन्ना लोचनानन्ददायिनः।
गृहे गृहवतां नित्यमागच्छन्ति महात्मनाम्॥ १७॥

व्याख्या—तारस्वरेण=दीर्घस्वरेण, सत्वरं=शीघ्रम्, महती=विपुला, व्यसनावस्था=आपत्तिकालिकी दशा, व्यसनावस्थानं=विपत्कालस्थितिः, सुहृत्=मित्रम्। गुरुतरं (महत्त्व-पूर्णमिति यावत्), प्रयोजनं=कार्यं, पुलकिततनुः=रोमाञ्चितदेहः, प्रहृष्टात्मा=प्रसन्नहृदयः स्थिरमनाः=स्वस्थमनाः। स्नेहसम्पन्नाः=स्नेहयुक्ताः, लोचनानन्ददायिनः=नयनानन्द-कारकाः, सुहृदः=मित्राणि ॥ १७॥

हिन्दी—चित्रग्रीव ने हिरण्यक के बिल के पास जाकर उच्चस्वर से कहा—"मित्र हिरण्यक! शीघ्र बाहर निकलो, मुझपर बहुत बड़ी आपत्ति की स्थिति आ गयी है।"

चित्रग्रीव की बात को सुनकर हिरण्यक ने अपने बिल के भीतर से ही पूछा—"महाशय! आप कौन है? यहाँ किस लिये आये है? आपके यहाँ आगमन का क्या कारण है? आप कैसी विपत्ति की स्थिति में है? स्पष्ट रूप से कहिये।"

हिरण्यक के प्रश्नों को सुनकर चित्रग्रीव ने कहा—"मित्र ! मैं तुम्हारा मित्र कपोतों का राजा चित्रग्रीव हूँ। शीघ्र बाहर निकलो। तुमसे बहुत बड़ा कार्य है।"

उसकी बात को सुनकर वह मूषक आनन्द से रोमाञ्चित हो उठा और प्रसन्न तथा स्वस्थ चित्त से शीघ्रतापूर्वक बिल से निकल कर बाहर आ गया। किसी ने ठीक ही कहा है कि—

स्नेहयुक्त और नयनानन्ददायी मित्र सज्जनों एवं सद्गृहस्थों के ही यहाँ नित्य आया करते हैं। (दुर्जनों के यहाँ कोई नहीं जाता है) ॥ १७ ॥

आदित्यस्योदयस्तात ! ताम्बूलं भारती कथा।
इष्टा भार्या सुमित्रं च अपूर्वाणि दिने दिने ॥ १८ ॥
सुहृदो भवने यस्य समागच्छन्ति नित्यशः।
चित्ते च तस्य सौख्यस्य न किञ्चित्प्रतिमं सुखम् ॥ १९ ॥

व्याख्या—हे तात ! आदित्यस्योदयः=सूर्योदयः, ताम्बूलं, भारती कथा=महाभारतस्य कथा, इष्टा भार्या=प्रिया स्त्री, सुमित्रम्=सुहृद्, एतानि दिने-दिने अपूर्वाणि=नवीनानीव, भवन्ति ॥ १८ ॥ प्रतिमं=सदृशं, सुखम्=अन्यसुखं न भवतीति भावः ॥ १९ ॥

हिन्दी—हे तात ! सूर्योदय, ताम्बूल, महाभारत की कथा, प्रियकारिणी स्त्री तथा सन्मैत्री—ये वस्तुयें प्रतिदिन अपूर्व एवं नवीन वस्तु की तरह ही सुखकारक होती हैं। मनुष्य का हृदय इनसे कभी भी ऊबता नहीं है ॥ १८ ॥

जिसके यहाँ प्रतिदिन अच्छे तथा स्नेही मित्र आया करते हैं। उसको मित्रों को देखने से जो सुख प्राप्त होता है वह अन्य किसी वस्तु के देखने से नहीं प्राप्त होता ॥ १९ ॥

अथ चित्रग्रीवं सपरिवारं पाशबद्धमालोक्य हिरण्यकः सविषादमिदमाह—भोः ! किमेतत् ?"

स आह—"भोः ! जानन्नपि किं पृच्छसि ? उक्तञ्च यतः—

यस्माच्च येन च यदा च यथा च यच्च,
यावच्च यत्र च शुभाशुभमात्मकर्म।
तस्माच्च तेन च तदा च तथा च तच्च,
तावच्च तत्र च कृतान्तवशादुपैति ॥ २० ॥

तत्प्राप्तं मयैतद्बन्धनं जिह्वालौल्यात्। साम्प्रतं त्वं सत्वरं पाशविमोक्षं कुरु।"

व्याख्या—सविषादं=सदुःखम्। येन यस्माद् यदा यथा च यत् शुभाशुभम् आत्मनः कर्मफलं यावत्कालपर्यन्तं प्राप्यं भवति, तत् कृतान्तवशात्=भाग्यवशात् (कालवशादिति भावः), तस्मादेव तथा तदा च तावत्कालपर्यन्तं स्वत उपैति=प्राप्नोति ॥ २० ॥ जिह्वालौल्यात्=रसनाचापल्यात्, साम्प्रतम्=इदानीं, सत्वरं=शीघ्रम्।

हिन्दी—चित्रग्रीव को सकुटुम्ब पाशबद्ध देखकर हिरण्यक ने दुःखित होकर पूछा—"मित्र ! तुम्हारी यह कैसी दशा हुई है ?"

उसने कहा—"मित्र! जानते हुये भी तुम इसप्रकार से क्यों पूछ रहे हो? यतः कहा भी गया है कि—

जिस व्यक्ति के द्वारा जिस वस्तु से जिस रूप में जब जैसा जितना और जो शुभाशुभ कर्मफल मनुष्य को भोगना रहता है उसी व्यक्ति के द्वारा उसी वस्तु से उसी रूप से उसी क्षण में वैसा उतना ही और वही भोग्य कर्मफल आकर स्वतः उसके समक्ष उपस्थित हो जाता है ॥ २० ॥

मैंने अपनी जिह्वा की चपलता के कारण ही इस बन्धन को प्राप्त किया है। इस समय तुम अधिक देर न करो, शीघ्र मेरे पाश को काट दो।"

तदाकर्ण्य हिरण्यकः प्राह—

"अर्धार्धाद्योजनशतादामिषं वीक्षते खगः।
सोऽपि पार्श्वस्थितं दैवाद् बन्धनं न च पश्यति ॥ २१ ॥

तथा च

रविनिशाकरयोर्ग्रहपीडनं, गजभुजङ्गविहङ्गमबन्धनम्।
मतिमतां च निरीक्ष्य दरिद्रतां, विधिरहो बलवानिति मे मतिः ॥ २२ ॥

व्याख्या—खगः=पक्षी, अर्धार्धात्=पादप्रमाणात्, योजनशतात्=शतयोजनदूरात्। आमिषं=मांसं, वीक्षते=पश्यति, सोऽपि दैवात्=दुर्भाग्यात्, पार्श्वस्थितं बन्धनं=समीपस्थं पाशं, न पश्यति ॥ २१ ॥ ग्रहभूतयोरपि रविनिशाकरयोः=सूर्यचन्द्रयोः, ग्रहपीडनं=राहुजन्यं पीडनं=कष्टम्। भुजङ्गः=सर्पः, विहङ्गमः=खगः, एतेषामपि बन्धनं भवति। मतिमतां=सुधीनाम्, दरिद्रतां=विपन्नावस्थां, निरीक्ष्य=विलोक्य, विधिः=भाग्यम् ॥ २२ ॥

हिन्दी—चित्रग्रीव की बात को सुनकर हिरण्यक ने कहा—

"पक्षी सौ सवा सौ योजन की दूरी से भी मांस को देख लिया करते हैं, किन्तु दुर्भाग्य-ग्रस्त होने पर वे अपने समीप में लगाये गये पाश को भी नहीं देख पाते ॥ २१ ॥

और भी—ग्रह होते हुये भी सूर्य और चन्द्रमा को ग्रहजन्य कष्ट भोगना ही पड़ता है। बलवान् भयङ्कर तथा स्वच्छन्दगामी होने पर भी गजों, सर्पों और पक्षियों को बन्धन में आबद्ध हो जाना पड़ता है। इसप्रकार बलवानों और बुद्धिमानों की भी होने वाली विपन्नावस्था को देखते हुये भाग्य को ही बलवान् कहना मेरे विचार से अधिक युक्तिसङ्गत प्रतीत हो रहा है ॥ २२ ॥

तथा च—

व्योमैकान्तविहारिणोऽपि विहगाः सम्प्राप्नुवन्त्यापदं,
बध्यन्ते निपुणैरगाधसलिलान्मीनाः समुद्रादपि।
दुर्नीतं किमिहास्ति किं च सुकृतं कः स्थानलाभे गुणः,
कालो हि व्यसने प्रसारितकरो गृह्णाति दूरादपि ॥ २३ ॥

एवमुक्त्वा चित्रग्रीवस्य पाशं छेत्तुमुद्यतं स तमाह—"भद्र ! मा, मैवं कुरु; प्रथमं मम भृत्यानां पाशच्छेदं कुरु, तदनु ममापि च ।"

व्याख्या—व्योमैकान्तविहारिणः = गगने निभृतसञ्चारिणोऽपि, विहगाः = खगाः, अगाधसलिलात् = अनवगाह्यतोयात्, समुद्रादपि, निपुणैः = मत्स्यग्रहणकुशलैः, मीनाः = मत्स्याः, बध्यन्ते = व्यापाद्यन्ते। अतएव—इह = विश्वे, किं दुर्नीतं = नीतिविरुद्धमसद् वस्तु, किं सुकृतं = पुण्यं पुण्यकार्यं वा, कश्च स्थानाश्रयणे लाभोऽस्ति। यतः व्यसनप्रसारितकरः = प्रसारितविपद्बाहुः, (विपद्रूपं स्वकरं प्रसार्येत्यर्थः), कालः कृतान्तः, जीवान् दूरादपि = दूरतोऽपि, गृह्णाति ॥ २३ ॥ उद्यतं = तत्परं, सः = चित्रग्रीवः, तम् = हिरण्यकं, भृत्यानाम् = अनुचराणां, तदनु = ततः परं, मम = चित्रग्रीवस्येति भावः।

हिन्दी—आकाश में स्वच्छन्द विचरने वाले पक्षिगण भी कभी-कभी आपत्तिग्रस्त हो जाया करते हैं। मछलियों को मारने में निपुण जनों के द्वारा समुद्र के अगाध जल के मध्य से भी मछलियाँ मार ही ली जाती हैं। अतः इस विश्व में क्या नीतियुक्त है, क्या पुण्य है, कौन सा स्थान सुरक्षित है और किस स्थान में क्या लाभ है, यह कहना कठिन है। क्योंकि—काल अपनी आपत्तिरूपी विशाल भुजाओं को सर्वत्र फैलाये हुये खड़ा है। वह दूर एवं सुरक्षित स्थानों में स्थित जीवों को भी पकड़ ही लेता है। उसके बाहुपाश से कोई स्थान अछूता नहीं है ॥ २३ ॥

उपर्युक्त बात को कहने के पश्चात् जब हिरण्यक चित्रग्रीव के पाश को काटने के लिये आगे बढ़ने लगा तो चित्रग्रीव ने उसे रोकते हुये उससे कहा—"भद्र ! ऐसा मत करो। पहले मेरे इन अनुचरों के पाश को काटो, पुनः मेरे भी पाश को काट देना।"

तच्छ्रुत्वा कुपितो हिरण्यकः प्राह—"भोः ! न युक्तमुक्तं भवता। यतो स्वामिनोऽनन्तरं भृत्याः"।

स आह—"भद्र ! मा मैवं वद। मदाश्रयाः सर्वे एते वराकाः। अपरं स्वकुटुम्बं परित्यज्य समागताः। तत्कथमेतावन्मात्रमपि संमानं न करोमि ! उक्तञ्च—

> यः संमानं सदा धत्ते भृत्यानां क्षितिपोऽधिकम्।
> वित्ताभावेऽपि तं हृष्टास्ते त्यजन्ति न कर्हिचित् ॥ २४ ॥

तथा च—

> विश्वासः सम्पदां मूलं तेन यूथपतिर्गजः।
> सिंहो मृगाधिपत्येऽपि न मृगैः परिवार्यते ॥ २५ ॥

व्याख्या—कुपितः = क्रुद्धः सन्, न युक्तमुक्तं = नोचितमुक्तं, मदाश्रयाः = ममानुयायिनः ममानुजीविनश्च, वराकाः = दीनाः, एतावन्मात्रमपि = एतावद्विधमपि (इतना भी), यः क्षितिपः = राजा, भृत्यानां = सेवकानां, संमानं = सत्कारं, धत्ते = विधत्ते, तं = राजानं, ते = भृत्याः, हृष्टाः = तुष्टाः सन्तः, वित्ताभावे = अर्थाभावेऽपि ॥ २४ ॥ सम्पदां = विभवानां, मूलं—मूलभूतं तत्त्वं, तेन = विश्वासेनैव, यूथपतिः = समूहाधिपः, मृगाधिपत्ये = वन्यजीवाधिपत्ये, (अभिषिक्तोऽपि), मृगैः = वन्यजीवैः, न परिवार्यते = न स्वजनायते ॥ २५ ॥

हिन्दी—चित्रग्रीव की बात को सुनकर क्रुद्ध होते हुए हिरण्यक ने कहा—"महाशय! आपने उचित नहीं कहा, क्योंकि स्वामी के बाद ही भृत्यों का स्थान आता है।"

चित्रग्रीव ने कहा—"भद्र! ऐसी बात न कहिये। ये सभी विचारे मेरे आश्रित हैं। ये अपने अपने परिवार को छोड़कर यहाँ मेरे साथ आये हैं। क्या मैं इनका इतना भी समान नहीं कर सकता। कहा भी है कि—

जो राजा अपने अनुचरों का सदा समान किया करता है उसके भृत्य सन्तुष्ट होकर अर्थाभाव-काल में भी उसको नहीं छोड़ते ॥ २४ ॥

और भी—ऐश्वर्य का मूल विश्वास ही है। इसीलिये गज अपने यूथ का अधिपति होते हुए भी उन अनुयायियों के साथ परिवार बना कर रहा करता है और सिंह केवल विश्वास के अभाव में सम्पूर्ण वन्य जीवों के साम्राज्य पर अभिषिक्त होते हुए भी वन्यजीवों के द्वारा पारिवारिक भावना से अनुवर्तित नहीं हो पाता है। (वन्य जीव उसके साथ परिवार बना कर नहीं रहते) ॥ २५ ॥

अपरं मम कदाचित्पाशच्छेदं कुर्वतस्ते दन्तभङ्गो भवति, अथवा दुरात्मा लुब्धकः समभ्येति, तन्नूनं मम नरकपात एव। उक्तञ्च—

सदाचारेषु भृत्येषु संसीदत्सु च यः प्रभुः।
सुखी स्यान्नरकं याति परत्रेह च सीदति" ॥ २६ ॥

तच्छ्रुत्वा प्रहृष्टो हिरण्यकः प्राह—"भोः! वेद्म्यहं राजधर्मं, परं मया तव परीक्षा कृता। तत्सर्वेषां पूर्वं पाशच्छेदं करिष्यामि। भवानप्यनेन विधिना बहुकपोतपरिवारो भविष्यति। उक्तञ्च—

कारुण्यं संविभागश्च तस्य भृत्येषु सर्वदा।
संभवेत्स महीपालस्त्रैलोक्यस्यापि रक्षणे" ॥ २७ ॥

व्याख्या—दन्तभङ्गः=दन्तहानिः, समभ्येति=आगच्छति, नरकपातः=नरकनिवासः। सदाचारेषु=प्रशस्ताचारेषु, संसीदत्सु=क्लिश्यमानेषु, सुखी स्यात्सः, परत्रेह=स्वर्गे भूमावपि, सीदति=कष्टमनुभवति ॥ २६ ॥ वेद्म्यहं=जानामि अहन्। कारुण्यं=करुणा, संविभागः=समव्यवहारः, महीपालः=राजा ॥ २७ ॥

हिन्दी—एक दूसरी बात वह भी है कि—यदि कदाचित् मेरे पाश को काटते समय तुम्हारे दाँत ही टूट गये, अथवा वह दुष्ट व्याध ही लौट आया तो इनके बँधे रह जाने से मेरा नरकवास सुनिश्चित है। कहा भी गया है कि—

सदाचारी तथा आज्ञाकारी भृत्यों को कष्ट से छटपटाते हुए देखकर जो राजा प्रसन्न होता है, वह उस लोक में तो कष्ट भोगता ही है, मरने के पश्चात् भी नरकमें वास करता है" ॥ २६ ॥

चित्रग्रीव की बात को सुनकर हिरण्यक ने कहा—"महाशय! मैं राजधर्म को जानता

हूँ। मैंने तो आपकी परीक्षा ली थी। अब मैं पहले इन्हीं के पाश को काटूँगा। आप अपनी इस भावना और ऐसे आचरण के कारण सदा बढ़ते रहेंगे। कहा भी गया है कि—

जो राजा अपने भृत्यों के प्रति करुणा का व्यवहार करता है और उनको समभाव से देखता है, वह राजा तीनों ही लोकों की रक्षा कर सकता है॥ २७॥

एवमुक्त्वा सर्वेषां पाशच्छेदं कृत्वा हिरण्यकश्चित्रग्रीवमाह—"मित्र! गम्यतामधुना स्वाश्रयं प्रति। भूयोऽपि व्यसने प्राप्ते समागन्तव्यम्" इति तान्संप्रेष्य पुनरपि दुर्गं प्रविष्टः।

चित्रग्रीवोऽपि सपरिवारः स्वाश्रयमगमत्। अथवा साध्विदमुच्यते--

मित्रवान् साधयत्यर्थान् दुःसाध्यानपि वै यतः।
तस्मान्मित्राणि कुर्वीत समानान्येव चात्मनः॥ २८॥

व्याख्या—स्वाश्रयं=स्वभवनं, व्यसने=विपत्तौ। अर्थान्=स्वार्थान् (स्वकार्याणि), समानानि=तुल्यानि॥ २८॥

हिन्दी—उपर्युक्त बातों को करने के बाद हिरण्यक ने सबके पाश को काटकर चित्रग्रीव से कहा—"मित्र! अब तुम अपने निवासस्थान को जा सकते हो। जब कभी तुम पर आपत्ति आये तो फिर मेरे पास चले आना।" इस प्रकार से उन कबूतरों को भेजने के बाद हिरण्यक अपने विवर में चला गया। किसी ने ठीक ही कहा है कि—

यतः मित्रवान् व्यक्ति अपने कठिनतम कार्यों को भी सरलतापूर्वक कर लेता है, अतः मनुष्य को अपने समान लोगों को मित्र अवश्य बनाना चाहिये॥ २८॥

लघुपतनकोऽपि वायसः सर्वं तं चित्रग्रीवबन्धमोक्षमवलोक्य विस्मितमना व्यचिन्तयत्—"अहो! बुद्धिरस्य हिरण्यकस्य शक्तिश्च दुर्गसामग्री च। तदीदृगेव विधिर्विहङ्गानां बन्धनमोक्षात्मकः। यद्यप्यहं न कस्यचिद्विश्वसिमि चलप्रकृतिश्च, तथाप्येनं मित्रं करोमि। उक्तञ्च—

अपि सम्पूर्णतायुक्तैः कर्तव्याः सुहृदो बुधैः।
नदीशः परिपूर्णोऽपि चन्द्रोदयमपेक्षते"॥ २९॥

एवं सम्प्रधार्य पादपादवतीर्य बिलद्वारमाश्रित्य चित्रग्रीववच्छब्देन हिरण्यकं समाहूतवान्—"एह्येहि, भो हिरण्यक! एहि।"

व्याख्या—विस्मितमनाः=आश्चर्यान्वितः, ईदृगेव=एतादृशः, विधिः=उपायः, नियमः, चलप्रकृतिः=चञ्चलस्वभावः। सम्पूर्णतायुक्तैः=सर्वसाधनसम्पन्नैः, बुधैः=पण्डितैः, सुहृदः=मित्राणि, परिपूर्णोऽपि=सर्वगुणयुक्तोऽपि, नदीशः=समुद्रः, चन्द्रोदयं=पूर्णचन्द्रोदयम्, अपेक्षते॥ २९॥ पादपात्=वृक्षात्, एहि=आगच्छ।

हिन्दी—चित्रग्रीव के उक्त बन्धन और मोक्ष को देखकर वह लघुपतनक नाम का वायस आश्चर्य से चकित हो उठा और अपने मन में सोचने लगा—

"यह हिरण्यक तो बड़ा बुद्धिमान् है। इसके पास शक्ति और दुर्गसामग्री दोनों ही हैं।

पक्षियों के बन्धन और मोक्ष का यह बहुत अच्छा उपाय है। यद्यपि मैं किसी का विश्वास नहीं करता और मेरा स्वभाव भी बहुत चञ्चल है, तथापि इस हिरण्यक को तो अपना मित्र बनाऊँगा ही। कहा भी गया है कि--

सभी गुणों और साधनों से सम्पन्न होने पर भी बुद्धिमान् व्यक्ति को दूसरों के साथ मित्रता करनी ही चाहिये। समुद्र सभी साधनों से सम्पन्न होने पर भी चन्द्रोदय की अपेक्षा किया करता है ॥ २९ ॥

उपर्युक्त बातों का विचार करने के बाद वह वृक्ष से उतर कर हिरण्यक के बिल पास गया और चित्रग्रीव के ही समान प्रीतियुक्त वाणी में हिरण्यक को बुलाते हुये कहने लगा--

"मित्र हिरण्यक! बाहर आ जाओ। शीघ्र आओ।"

तच्छब्दं श्रुत्वा हिरण्यको व्यचिन्तयत्—किमन्योऽपि कश्चित्कपोतो बन्धनशेषस्तिष्ठति, येन मां व्याहरति।" आह च—"भोः! को भवान्?"

स आह—"अहं लघुपतनको नाम वायसः।"

तच्छ्रुत्वा विशेषादन्तर्लीनो हिरण्यक आह—"भोः! द्रुतं गम्यतामस्मात् स्थानात्।"

वायस आह—"अहं तव पार्श्वे गुरुकार्येण समागतः, तत्किं न क्रियते मया सह दर्शनम्?"

हिरण्यक आह—"न मेऽस्ति त्वया सह सङ्गमेन प्रयोजनम्" इति।

स आह—"भोः! चित्रग्रीवस्य मया तव सकाशात् पाशमोक्षणं दृष्टं, तेन मम महती प्रीतिः सञ्जाता। तत्कदाचिन्ममापि बन्धने जाते तव पार्श्वान्मुक्तिर्भविष्यति। तत्क्रियतां मय सह मैत्री।"

व्याख्या—व्याहरति = आह्वयति, विशेषादन्तर्लीनः = विशेषतो विलान्तगतः सन्, द्रुतं = शीघ्रं, गुरुकार्येण — प्रयोजनविशेषेण, पार्श्वाद् = अन्तिकात्, मुक्तिः = मोक्षः।

हिन्दी—वायस के उक्त शब्दों को सुनकर हिरण्यक ने अपने मन में सोचा—क्या कोई कपोत अभी भी बन्धन में फँसा हुआ अवशिष्ट रह गया है, जिसका बन्धन काटने के लिये चित्रग्रीव मुझे फिर बुला रहा है?" उसने पूछा "महाशय आप कौन हैं?"

उसने कहा—"मैं लघुपतनक नाम का वायस हूँ।"

उसकी बात को सुनकर हिरण्यक ने अपने को और अधिक छिपाते हुये (बिल के भीतर जाकर) कहा—"महोदय! आप यहाँ से शीघ्र चले जाँय।"

वायस ने पूछा—"मैं एक बहुत आवश्यक कार्य से आपके पास आया हूँ, आप मुझे अपना दर्शन क्यों नहीं देना चाहते?"

हिरण्यक ने कहा—मुझे आपसे मिलने की कोई जरूरत नही है।"

उसने कहा—"महाशय! मैंने आपको चित्रग्रीव के बन्धन को काटते हुये देखा है। उक्त कार्य को देखकर मेरे हृदय में आपके प्रति अनुराग उत्पन्न हो गया है। कभी मेरे भी

बन्धन में फँस जाने पर आपकी कृपा से मेरी मुक्ति हो सकेगी। अतएव मैं आपको अपना मित्र बनाना चाहता हूँ। आप कृपया मेरी मित्रता स्वीकार कर लें।"

**हिरण्यक आह—"अहो! त्वं भोक्ता, अहं ते भोज्यभूतः। तत्का त्वया सह मम मैत्री? तद् गम्यताम्। मैत्री विरोधभावात्कथम्? उक्तञ्च—**

**ययोरेव समं वित्तं ययोरेव समं कुलम्।**
**तयोर्मैत्री विवादश्च न तु पुष्टविपुष्टयोः॥ ३०॥**

**तथा च—**

**यो मित्रं कुरुते मूढ आत्मनोऽसदृशं कुधीः।**
**हीनं वाप्यधिकं वापि हास्यतां यात्यसौ जनः॥ ३१॥**

**तद् गम्यताम्" इति।**

व्याख्या—भोक्ता=भक्षकः, भोज्यभूतः=भक्ष्यः, विरोधभावात्=विरुद्धस्वभावात्, समं=तुल्यं, वित्तं=धनं, विवादः=कलहः, पुष्टविपुष्टयोः=सबलनिर्बलयोः, न=नहि भवतीति ॥ ३०॥ मूढः=मूर्खः, कुधीः=दुमतिः, आत्मनः=स्वस्य, असदृशम्=असमानं, हीनं=स्वल्पम्, अधिकं=विपुलं वा, हास्यतां=परिहासविषयतां, याति=गच्छति ॥ ३१॥

हिन्दी—हिरण्यक ने कहा—"महाशय! आप भक्षक हैं और मैं आपका भक्ष्य हूँ। अतः आपके साथ मेरी मित्रता से लाभ ही क्या है? आप यहाँ से चले जाँय। परस्पर विरुद्धस्वभाववालों की मैत्री हो ही कैसे सकती है? कहा भी गया है कि—

जिन व्यक्तियों का कुल और वित्त समान हो, उन्हीं की मैत्री और शत्रुता अच्छी होती है। सबल और निर्बल के मध्य की मैत्री तथा शत्रुता व्यर्थ होती है ॥ ३०॥

और भी—जो व्यक्ति अपनी मूर्खता के कारण अपने असमान व्यक्ति के साथ मित्रता या शत्रुता करता है, वह अल्पमात्रा में हो या अधिक मात्रा में, चाहे जितना भी हो, परिहास का विषय बनता ही है ॥ ३१॥

अतः आप यहाँ से शीघ्र चले जाँय।"

**वायस आह—"भो हिरण्यक! एषोऽहं तव दुर्गद्वारे उपविष्टः। यदि त्वं मैत्रीं न करोषि, ततोऽहं प्राणमोक्षणं तवाग्रे करिष्यामि। अथवा प्रायोपवेशनं मे स्यात्" इति।**

**हिरण्यक आह—"भोः! त्वया वैरिणा सह कथं मैत्रीं करोमि? उक्तञ्च—**

**वैरिणा नहि सन्दध्यात्सुश्लिष्टेनापि सन्धिना।**
**सुतप्तमपि पानीयं शमयत्येव पावकम्॥ ३२॥**

व्याख्या—प्राणमोक्षणं=प्राणत्यागं, प्रायोपवेशनं=प्रायेणानशनव्रतं, सुश्लिष्टेनापि=संश्लिष्टेन, निकटस्थेनापि (अत्यन्त अभिन्न), वैरिणा=शत्रुणा, न सन्दध्यात्=सन्धि न कुर्यादिति, हि=यतः, सुतप्तमपि, पानीयं=जलं, पावकम्=अग्निं, शमयति=शीतलतां नयति ॥ ३२॥

हिन्दी—वायस ने कहा—"मित्र हिरण्यक ! मैं अब तुम्हारे द्वारपर बैठ गया हूँ। यदि तुम मुझसे मित्रता नहीं करोगे तो मैं तुम्हारे आगे ही अपना प्राणत्याग कर दूँगा। अथवा, आज से मेरा अनशनव्रत ही प्रारंभ समझो।"

हिरण्यक ने कहा—"महाशय ! आप मेरे शत्रु हैं। मैं आपके साथ मित्रता कैसे कर सकता हूँ ? कहा भी गया है कि—

अत्यन्त घनिष्ठ हो जाने पर भी शत्रु के साथ सन्धि नहीं करनी चाहिये। क्योंकि जल चाहे जितना भी गर्म हो, वह अग्नि को बुझा ही देता है ॥ ३२ ॥

**वायस आह—"भोः ! त्वया सह दर्शनमपि नास्ति, कुतो वैरम् ? तत्किमनुचितं वदसि ?"**

**हिरण्यक आह—"द्विविधं वैरं भवति, सहजं कृत्रिमं च। तत्सहजवैरी त्वमस्माकम्। उक्तञ्च—**

**कृत्रिमं नाशमभ्येति वैरं द्राक् कृत्रिमैर्गुणैः।**
**प्राणदानं विना वैरं सहजं याति न क्षयम्" ॥ ३३ ॥**

**व्याख्या**—अनुचितम्=अप्रासङ्गिकमनुपयुक्तञ्च, सहजं=स्वाभाविकं, कृत्रिमं=स्वनिर्मितम् (कारणान्निर्मितं) सहजवैरी=स्वाभाविकः शत्रुः, अस्माकं=मूषकाणाम्। कृत्रिमं वैरं, कृत्रिमैर्गुणैः=कल्पितैरस्वभाविकैर्गुणैः, द्राक्=सद्य एव, नाशमभ्येति=विनश्यति। सहजवैरं=स्वाभाविकं शत्रुत्वं, प्राणदानं विना=स्वात्मत्यागं विना ( स्वनाशं विना ), क्षयं=नाशं, न याति—न गच्छति ॥ ३३ ॥

हिन्दी—हिरण्यक की उक्त बात को सुनकर वायस ने कहा—"अरे भाई ! अभी तो आपका दर्शन भी मुझे नहीं मिला, तबतक वैर कहाँ से हो गया ? इस प्रकार की अनर्गल बातें आप क्यों कर रहे हैं ?"

हिरण्यक ने कहा—"वैर दो प्रकार का होता है—१. स्वाभाविक और २. कृत्रिम ( अस्वाभाविक )। आप मेरे स्वाभाविक वैरियों में से हैं। कहा भी गया है कि—

कृत्रिम शत्रुता तो कृत्रिम ( बनावटी ) गुणों से कभी-कभी तत्काल मिट जाया करती है, किन्तु सहजशत्रुता एक पक्ष के विनाश के विना विनष्ट नहीं हो सकती" ॥ ३३ ॥

**वायस आह—"भोः ! द्विविधस्य वैरस्य लक्षणं श्रोतुमिच्छामि, तत्कथ्यताम्।"**

**हिरण्यक आह—"भोः ! कारणेन निर्वृत्तं कृत्रिमम्। तत्तदर्होपकारकरणाद् गच्छति। स्वाभाविकं पुनः कथमपि न गच्छति। तद्यथा—नकुलसर्पाणाम्। शष्पभुङ्नखायुधानाम्। जलवह्न्योः। देवदैत्यानाम्। सारमेयमार्जाराणाम्। ईश्वरदरिद्राणाम्। सपत्नीनाम्। सिंहगजानाम्। लुब्धकहरिणानाम्। श्रोत्रियभ्रष्टक्रियाणाम्। काकोलूकानाम्। मूर्खपण्डितानाम्। पतिव्रताकुलटानाम्। सज्जनदुर्जनानाम्। न कस्यचित्केनापि कोऽपि व्यापादितः, तथापि प्राणान्ताय यतन्ते।"**

व्याख्या—निर्वृत्तं = जातं (निर्मितं) तदर्होपकारकरणात् = तद्योग्योपकारकरणात् (तद्विनाशोपायकरणादित्यर्थः); शष्पभुक् = शष्पभोजी, नखायुधः = नखायुधजीवी (सिंहादयः), सारमेयः = कुक्कुरः, मार्जारः = बिडालः, ईश्वरः = धनिकः (स्वामी), सपत्नी = समानपतिका स्त्री (समानः पतिर्यस्याः सा), लुब्धकः = व्याधः, श्रोत्रियः = श्रुतिसम्पन्नः, (श्रुतिमधीते वेत्ति वा श्रोत्रियः), भ्रष्टक्रियाणां = क्रियाभ्रष्टानां श्रुतेश्च्युतानाम्, काकः = वायसः, पतिव्रता = साध्वी स्त्री, कुलटानां = चरित्रभ्रष्टानां, व्यापादितः = मारितः। प्राणान्ताय = विनाशाय, यतन्ते = प्रयतन्ते।

हिन्दी—वायस ने कहा—"महाशय! मैं दोनों प्रकार के वैरों का लक्षण सुनना चाहता हूँ। कृपया कह दीजिये।"

हिरण्यक ने कहा–महोदय! कारण से उत्पन्न होनेवाले को कृत्रिम कहा जाता है। वह उसके समाप्त होने योग्य उपकार करने से समाप्त भी हो सकता है। किन्तु स्वाभाविक वैर किसी भी स्थिति में समाप्त नहीं होता। जैसे—नकुल और सर्प का, शष्पभोजी तथा मांसाशी का, जल और अग्नि का, देवों और दैत्यों का, कुत्तों और बिड़ालों का, धनिकों और दरिद्रों का, सपत्नियों का, सिंहों और गजों का, व्याधों और हरिणों का, श्रोत्रियों और अश्रोत्रियों का, काकों और उलूकों का, मूर्खों और पण्डितों का, पतिव्रताओं और कुलटाओं का, सज्जनों और दुर्जनों का वैर स्वाभाविक होता है। इनमें से कभी किसी ने किसी को मार नहीं डाला है, फिर भी ये एक दूसरे के विनाश के लिये सतत प्रयत्नशील रहते हैं।"

वायस आह—"भोः! अकारणमेतत्। श्रूयतां मे वचनम्—

कारणान्मित्रतां याति कारणादेति शत्रुताम्।
तस्मान्मित्रत्वमेवात्र योज्यं वैरं न धीमता॥ ३४॥

तस्मात्कुरु मया सह समागमं मित्रधर्मार्थम्।"

हिरण्यक आह—"भोः! त्वया सह मम कः समागमः! श्रूयतां नीतिसर्वस्वम्—

सकृद् दुष्टं च यो मित्रं पुनः सन्धातुमिच्छति।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा॥ ३५॥

व्याख्या—अकारणं = निष्कारणं, सर्वे कारणादेव मित्रत्वं शत्रुत्वञ्च यान्ति, अतोऽत्र = विश्वेऽस्मिन्, मित्रत्वमेव, योज्यं = योजनीयं, न वैरं = शत्रुत्वं न योज्यम्॥ ३४॥ मित्रधर्मार्थं = मैत्रीकरणाय, नीतिसर्वस्वं = नीतितत्त्वं, सकृत् = वारैकमपि, दुष्टं = विकृतं, यः सन्धातुं = सन्धिना साधयितुं, सः, यथाश्वतरी (खच्चरी), मरणार्थमेव गर्भमाधत्ते॥ ३५॥

हिन्दी—वायस ने कहा—"आपका कथन अयथार्थ है। मेरी बात सुनिये—

मनुष्य कारण से ही किसी के साथ मित्रता या शत्रुता करता है। अतः मनुष्य को अकारण शत्रुता नहीं करनी चाहिये। यदि हो सके तो, इस विश्व में सभी के साथ मित्रता का ही व्यवहार करना चाहिये॥ ३४॥

अतः मेरे साथ मित्रता करने के लिये आप एक बार बाहर निकलकर मेरे साथ भेंट तो कर ही लीजिये।"

हिरण्यक ने कहा—"महाशय! आपके साथ मेरे समागम करने का प्रयोजन ही क्या है? नीति के इस तत्त्व को सुन लीजिये कि—

एक बार भी मित्रता के टूट जाने के बाद जो व्यक्ति पुनः उसको सन्धि के द्वारा जोड़ने की इच्छा करता है, वह गर्भ धारण करने वाली खच्चरी की तरह उससे स्वयं विनष्ट हो जाता है॥ ३५॥

**अथवा 'गुणवानहं, न मे कश्चिद्वैरनिर्यातनं करिष्यति' एतदपि न सम्भाव्यम्। उक्तञ्च—**

> **सिंहो व्याकरणस्य कर्तुरहरत्प्राणान् प्रियान् पाणिने-**
> **र्मीमांसाकृतमुन्ममाथ सहसा हस्ती मुनिं जैमिनिम्।**
> **छन्दोज्ञाननिधिं जघान मकरो वेलातटे पिङ्गल-**
> **मज्ञानावृतचेतसामतिरुषां कोऽर्थस्तिरश्चां गुणैः?॥ ३६॥**

व्याख्या—वैरनियातनं = वैरशोधनं, न सम्भाव्यं = न विचारणीयं, प्रियान् प्राणान् = प्रियप्राणान्, हस्ती = करी, उन्ममाथ = मथयामास = (व्यापादयामासेत्यर्थः) वेलातटे = समुद्रस्य तटे, मकरः = ग्राहः, जघान = मारयामास। अतः—अज्ञानावृतचेतसां = मन्दबुद्धीनाम्, अतिरुषां = क्रोधातुराणां, तिरश्चां = पश्वादीनां, गुणैः कोऽर्थः = को लाभः॥ ३६॥

हिन्दी—अथवा 'मैं गुणवान् हूँ, अतएव कोई मुझसे वैरशोधन नहीं करेगा', यह भी नहीं सोचना चाहिये। कहा भी गया है कि—

व्याकरणशास्त्र के कर्ता पाणिनि को सिंह ने मार डाला था, मीमांसाशास्त्र के प्रवर्तक जैमिनि मुनि को सहसा एक हाथी ने कुचल डाला था और छन्दःशास्त्र के प्रवर्तक आचार्य पिङ्गल को समुद्र के किनारे किसी ग्राह ने मार डाला था। अतः यह सिद्ध है कि—अज्ञानी, अविवेकी तथा क्रोधी पशुओं को किसी के गुणों से प्रयोजन ही क्या हो सकता है? (पशुओं को को किसी के गुण से कोई प्रयोजन नहीं होता है)॥ ३६॥

**वायस आह—"अस्त्येतत्, तथापि श्रूयताम्—**

> **उपकाराच्च लोकानां निमित्तान्मृगपक्षिणाम्।**
> **भयाल्लोभाच्च मूर्खाणां मैत्री स्याद् दर्शनात्सताम्॥ ३७॥**
> **मृद्घट इव सुखभेद्यो दुःसन्धानश्च दुर्जनो भवति।**
> **सुजनस्तु कनकघट इव दुर्भेदः सुकरसन्धिश्च॥ ३८॥**
> **इक्षोरग्रात्क्रमशः पर्वणि पर्वणि यथा रसविशेषः।**
> **तद्वत्सज्जनमैत्री विपरीतानां तु विपरीता॥ ३९॥**

व्याख्या—लोकानां = जनानां, निमित्तात् = कारणात्, सतां = सज्जनानां, दर्शना-

न्मैत्री भवतीति ॥ ३७ ॥ सुखभेद्यः=सुखेन विघटयितुं शक्यः, दुःसन्धानः=पुनः सन्धाना-योग्यश्च, सुजनः=सज्जनः, कनकघट इव=स्वर्णघट इव, दुर्भेदः=दुःखेन भेदयितुं योग्यः, सुकरसन्धिः=सुसन्धेयो भवतीति ॥ ३८ ॥ रसविशेषः=रसबाहुल्यम् ॥ ३९ ॥

हिन्दी—वायस ने कहा—"आपका कहना ठीक है, फिर भी मेरी बात सुन लीजिये—पारस्परिक उपकार द्वारा ही मनुष्यों में सन्धि होती है। मृगों और पक्षियों की मित्रता भी किसी कारण से हो जाती है। मूर्खों की मित्रता भय एवं लोभ के कारण होती है, किन्तु सज्जनों की मित्रता केवल दर्शनमात्र से ही हो जाती है ॥ ३७ ॥

दुर्जन व्यक्ति मिट्टी के घड़े के समान अनायास टूट जाने योग्य होता है और एक बार टूट जानेपर पुनः जोड़ने योग्य नहीं होता। किन्तु सज्जन व्यक्ति स्वर्णघट के समान दुर्भेद्य होता है और टूट जाने पर भी सरलतापूर्वक जोड़ लेने योग्य होता है ॥ ३८ ॥

जैसे गन्ने के प्रत्येक गाँठ में रस की मात्रा बढ़ती चली जाती है, उसी प्रकार सज्जनों की मैत्री भी प्रतिक्षण प्रगाढ़ होती चली जाती है। किन्तु दुर्जनों की मित्रता इसके विपरीत प्रारम्भ में प्रगाढ़ और बाद में क्षण-क्षण पर न्यून होनेवाली होती है ॥ ३९ ॥

तथा च—

आरम्भगुर्वी क्षयिणी क्रमेण, लघ्वी पुरा वृद्धिमती च पश्चात्।
दिनस्य पूर्वार्धपरार्धभिन्ना, छायेव मैत्री खलसज्जनानाम् ॥ ४० ॥

तत्सर्वथा साधुरेवाहम्। अपरं त्वां शपथादिभिर्निर्भयं करिष्यामि।"

हिरण्यक आह—"न मेऽस्ति ते शपथैः प्रत्ययः। उक्तञ्च—

शपथैः सन्धितस्यापि न विश्वासं व्रजेद्रिपोः।
श्रूयते शपथं कृत्वा वृत्रः शक्रेण सूदितः ॥ ४१ ॥

व्याख्या—आरम्भगुर्वी=प्रारम्भगुर्वी (प्रारम्भ में प्रगाढ़), पुरा=पूर्वं, लघ्वी=स्वल्पा, पश्चाद् वृद्धिमती=परिवृद्धा। पूर्वार्धपरार्धभिन्ना=पूर्वाह्णापराभिन्ना, छायेव खलसज्जनानां मैत्री भवतीति ॥ ४० ॥ साधुः=सज्जनः, शपथादिभिः=प्रतिज्ञावचनादिभिः, निर्भयं=भयरहितं, प्रत्ययः=विश्वासः। शपथैः=प्रतिज्ञावचनैः, सन्धितस्य=मित्रभावमुपगतस्य, रिपोः=शत्रोः, विश्वासं=प्रत्ययं, न व्रजेत्=न गच्छेत्, श्रूयते=आकर्ण्यते, पुरा शक्रेण=इन्द्रेण, शपथं कृत्वैव, वृत्रः=वृत्रासुरः, सूदितः=हतः ॥ ४१ ॥

हिन्दी—और भी—दुर्जनों और सज्जनों की मैत्री दिन की पूर्वाह्ण तथा अपराह्ण कालकी छाया की तरह प्रारम्भ में लम्बी और पुनः घटनेवाली तथा प्रारम्भ में छोटी और बाद में बढ़नेवाली होती है (जैसे—दिनके पूर्व भाग में मनुष्य की छाया बहुत बड़ी दिखाई पड़ती है और दोपहर तक जाते-जाते क्षीण हो जाती है, उसी प्रकार दुर्जनों की मैत्री भी प्रारम्भ में प्रगाढ़ किन्तु बाद में क्षीण हो जानेवाली होती है। इसके विपरीत सज्जनों की मैत्री दोपहर के बाद की छाया की भाँति प्रारम्भ में तो छोटी किन्तु बाद में बढ़ती जानेवाली होती है) ॥ ४० ॥

अतः विश्वास कीजिये। मैं सज्जन व्यक्ति हूँ। फिर मैं शपथ आदिके द्वारा भी आपको विश्वास दिला दूँगा।"

हिरण्यक ने कहा—"मुझे आपके शपथ पर कोई विश्वास नहीं है। कहा भी गया है कि—

शपथपूर्वक मित्रता करने वाले शत्रु का भी कभी विश्वास नहीं करना चाहिये। क्योंकि—इन्द्र ने शपथ के बाद ही वृत्रासुर का विनाश किया था॥ ४१॥

न विश्वासं विना शत्रुर्देवानामपि सिद्धयति।
विश्वासात्त्रिदशेन्द्रेण दितेर्गर्भो विदारितः॥ ४२॥

अन्यच्च—

बृहस्पतेरपि प्राज्ञस्तस्मान्नैवात्र विश्वसेत्।
य इच्छेदात्मनो वृद्धिमायुष्यं च सुखानि च॥ ४३॥

तथा च—

सुसूक्ष्मेणापि रन्ध्रेण प्रविश्याभ्यन्तरं रिपुः।
नाशयेच्च शनैः पश्चात्प्लवं सलिलपूरवत्॥ ४४॥

व्याख्या—त्रिदशेन्द्रेण=इन्द्रेण, दितेः=दैत्यमातुः, गर्भो विदारितः=विनाशितः॥४२॥ प्राज्ञः=पण्डितः, य आत्मनो, वृद्धिम्=अभ्युदयं, सुखानि, आयुष्यं=जीवनम्, इच्छेदिति॥ ४३॥ सुसूक्ष्मेण=स्वल्पेन, रन्ध्रेण=छिद्रेण, आभ्यन्तरं=मध्ये, प्रविश्य शनैर्नाशयेत्। यथा—सलिलपूरः=जलप्रवाहः, प्लवं=पोतं, विनाशयतीति॥ ४४॥

हिन्दी—यदि शत्रु किसी का विश्वास न करे तो देवता भी उस को मार नहीं सकते। विश्वास करने के कारण ही इन्द्र ने दैत्यमाता दिति के गर्भ को विनष्ट कर दिया था॥ ४२॥

अन्य भी—जो मनुष्य अपनी समृद्धि, सुख और आयु की कामना करता हो, उस बुद्धिमान् व्यक्ति को चाहिये कि वह इस विश्व में सुरगुरु बृहस्पति का भी विश्वास न करे॥ ४३॥

और भी—शत्रु मनुष्य के सूक्ष्मातिसूक्ष्म छिद्र (असावधानी) के द्वारा उसके भीतर प्रवेश कर लेने पर बाद में उसी प्रकार उसका विनाश कर डालता है; जैसे छोटे-छोटे छेदों के द्वारा प्रविष्ट होनेवाला जलप्रवाह शनैः शनैः नौका के भीतर एकत्र होकर उस नौका को डुबा देता है॥ ४४॥

न विश्वसेदविश्वस्तं विश्वस्तं नाति विश्वसेत्।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति॥ ४५॥
न वध्यते ह्यविश्वस्तो दुर्बलोऽपि मदोत्कटैः।
विश्वस्ताश्चाशु वध्यन्ते बलवन्तोऽपि दुर्बलैः॥ ४६॥
सुकृत्यं विष्णुगुप्तस्य मित्राप्तिर्भार्गवस्य च।
बृहस्पतेरविश्वासो नीतिसन्धिस्त्रिधा स्थितः॥ ४७॥

न्मैत्री भवतीति ॥ ३७ ॥ सुखभेद्यः=सुखेन विघटयितुं शक्यः, दुःसन्धानः=पुनः सन्धाना-योग्यश्च, सुजनः=सज्जनः, कनकघट इव=स्वर्णघट इव, दुर्भेदः=दुःखेन भेदयितुं योग्यः, सुकरसन्धिः=सुसन्धेयो भवतीति ॥ ३८ ॥ रसविशेषः=रसबाहुल्यम् ॥ ३९ ॥

हिन्दी—वायस ने कहा—"आपका कहना ठीक है, फिर भी मेरी बात सुन लीजिये—पारस्परिक उपकार द्वारा ही मनुष्यों में सन्धि होती है। मृगों और पक्षियों की मित्रता भी किसी कारण से हो जाती है। मूर्खों की मित्रता भय एवं लोभ के कारण होती है, किन्तु सज्जनों की मित्रता केवल दर्शनमात्र से ही हो जाती है ॥ ३७ ॥

दुर्जन व्यक्ति मिट्टी के घड़े के समान अनायास टूट जाने योग्य होता है और एक बार टूट जानेपर पुनः जोड़ने योग्य नहीं होता। किन्तु सज्जन व्यक्ति स्वर्णघट के समान दुर्भेद्य होता है और टूट जाने पर भी सरलतापूर्वक जोड़ लेने योग्य होता है ॥ ३८ ॥

जैसे गन्ने के प्रत्येक गाँठ में रस की मात्रा बढ़ती चली जाती है, उसी प्रकार सज्जनों की मैत्री भी प्रतिक्षण प्रगाढ़ होती चली जाती है। किन्तु दुर्जनों की मित्रता इसके विपरीत प्रारम्भ में प्रगाढ़ और बाद में क्षण-क्षण पर न्यून होनेवाली होती है ॥ ३९ ॥

तथा च—

आरम्भगुर्वी क्षयिणी क्रमेण, लघ्वी पुरा वृद्धिमती च पश्चात्।
दिनस्य पूर्वार्ध-परार्धभिन्ना, छायेव मैत्री खलसज्जनानाम् ॥ ४० ॥

तत्सर्वथा साधुरेवाहम्। अपरं त्वां शपथादिभिर्निर्भयं करिष्यामि।"

हिरण्यक आह—"न मेऽस्ति ते शपथैः प्रत्ययः। उक्तञ्च—

शपथैः सन्धितस्यापि न विश्वासं व्रजेद्रिपोः।
श्रूयते शपथं कृत्वा वृत्रः शक्रेण सूदितः ॥ ४१ ॥

व्याख्या—आरम्भगुर्वी=प्रारम्भगुर्वी (प्रारम्भ में प्रगाढ़), पुरा=पूर्वं, लघ्वी=स्वल्पा, पश्चाद् वृद्धिमती=परिवृद्धा। पूर्वार्धपरार्धभिन्ना=पूर्वाह्णापराभिन्ना, छायेव खलसज्जनानां मैत्री भवतीति ॥ ४० ॥ साधुः=सज्जनः, शपथादिभिः=प्रतिज्ञावचनादिभिः, निर्भयं=भयरहितं, प्रत्ययः=विश्वासः। शपथैः=प्रतिज्ञावचनैः, सन्धितस्य=मित्रभावमुपगतस्य, रिपोः=शत्रोः, विश्वासं=प्रत्ययं, न व्रजेत्=न गच्छेत्, श्रूयते=आकर्ण्यते, पुरा शक्रेण=इन्द्रेण, शपथं कृत्वैव, वृत्रः=वृत्रासुरः, सूदितः=हतः ॥ ४१ ॥

हिन्दी—और भी—दुर्जनों और सज्जनों की मैत्री दिन की पूर्वाह्ण तथा अपराह्ण कालकी छाया की तरह प्रारम्भ में लम्बी और पुनः घटनेवाली तथा प्रारम्भ में छोटी और बाद में बढ़नेवाली होती है (जैसे—दिनके पूर्व भाग में मनुष्य की छाया बहुत बड़ी दिखाई पड़ती है और दोपहर तक जाते-जाते क्षीण हो जाती है, उसी प्रकार दुर्जनों की मैत्री भी प्रारम्भ में प्रगाढ़ किन्तु बाद में क्षीण हो जानेवाली होती है। इसके विपरीत सज्जनों की मैत्री दोपहर के बाद की छाया की भाँति प्रारम्भ में तो छोटी किन्तु बाद में बढ़ती जानेवाली होती है) ॥ ४० ॥

अतः विश्वास कीजिये। मैं सज्जन व्यक्ति हूँ। फिर मैं शपथ आदिके द्वारा भी आपको विश्वास दिला दूँगा।"

हिरण्यक ने कहा—"मुझे आपके शपथ पर कोई विश्वास नहीं है। कहा भी गया है कि—

शपथपूर्वक मित्रता करने वाले शत्रु का भी कभी विश्वास नहीं करना चाहिये। क्योंकि—इन्द्र ने शपथ के बाद ही वृत्रासुर का विनाश किया था॥ ४१॥

न विश्वासं विना शत्रुर्देवानामपि सिद्ध्यति।
विश्वासात्त्रिदशेन्द्रेण दितेर्गर्भो विदारितः॥ ४२॥

अन्यच्च—

बृहस्पतेरपि प्राज्ञस्तस्मान्नैवात्र विश्वसेत्।
य इच्छेदात्मनो वृद्धिमायुष्यं च सुखानि च॥ ४३॥

तथा च—

सुसूक्ष्मेणापि रन्ध्रेण प्रविश्याभ्यन्तरं रिपुः।
नाशयेच्च शनैः पश्चात्प्लवं सलिलपूरवत्॥ ४४॥

व्याख्या—त्रिदशेन्द्रेण=इन्द्रेण, दितेः=दैत्यमातुः, गर्भो विदारितः=विनाशितः॥४२॥ प्राज्ञः=पण्डितः, य आत्मनो, वृद्धिम्=अभ्युदयं, सुखानि, आयुष्यं=जीवनम्, इच्छेदिति॥ ४३॥ सुसूक्ष्मेण=स्वल्पेन, रन्ध्रेण=छिद्रेण, आभ्यन्तरं=मध्ये, प्रविश्य शनैर्नाशयेत्। यथा—सलिलपूरः=जलप्रवाहः, प्लवं=पोतं, विनाशयतीति॥ ४४॥

हिन्दी—यदि शत्रु किसी का विश्वास न करे तो देवता भी उस को मार नहीं सकते। विश्वास करने के कारण ही इन्द्र ने दैत्यमाता दिति के गर्भ को विनष्ट कर दिया था॥ ४२॥

अन्य भी—जो मनुष्य अपनी समृद्धि, सुख और आयु की कामना करता हो, उस बुद्धिमान् व्यक्ति को चाहिये कि वह इस विश्व में सुरगुरु बृहस्पति का भी विश्वास न करे॥ ४३॥

और भी—शत्रु मनुष्य के सूक्ष्मातिसूक्ष्म छिद्र (असावधानी) के द्वारा उसके भीतर प्रवेश कर लेने पर बाद में उसी प्रकार उसका विनाश कर डालता है, जैसे छोटे-छोटे छेदों के द्वारा प्रविष्ट होनेवाला जलप्रवाह शनैः शनैः नौका के भीतर एकत्र होकर उस नौका को डुबा देता है॥ ४४॥

न विश्वसेदविश्वस्तं विश्वस्तं नाति विश्वसेत्।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति॥ ४५॥
न वध्यते ह्यविश्वस्तो दुर्बलोऽपि मदोत्कटैः।
विश्वस्ताश्चाशु वध्यन्ते बलवन्तोऽपि दुर्बलैः॥ ४६॥
सुकृत्यं विष्णुगुप्तस्य मित्राप्तिर्भार्गवस्य च।
बृहस्पतेरविश्वासो नीतिसन्धिस्त्रिधा स्थितः॥ ४७॥

तथा च—

महताप्यर्थसारेण यो विश्वसिति शत्रुषु।
भार्यासु च विरक्तासु तदन्तं तस्य जीवितम्" ॥ ४८ ॥

व्याख्या—मूलानि=आधाराणि, निकृन्तति=विदारयति ॥ ४५ ॥ दुर्बलः=निर्बलः, मदोत्कटैः=बलगर्वितैः ॥ ४६ ॥ विष्णुगुप्तस्य=चाणक्यस्य, सुकृत्यं=यथोचितोपायकरणं, भार्गवस्य=शुक्रस्य, मित्राप्तिः=मैत्रीकरणं, बृहस्पते=सुरगुरोः, अविश्वासः=विश्वासाभावः, त्रिधा, नीतिसन्धिः=नीतिसम्बन्धः, (नयमार्गः), स्थितः=कथितः ॥ ४७ ॥ अर्थसारेण=द्रव्यबलेन, विरक्तासु=स्वस्मिन् विरक्तासु (परपुरुषानुरक्तासु), तदन्तं=विश्वासं यावदेव (यावद्विश्वासं न करोति तावदेव) जीवितम्=जीवनम् ॥ ४८ ॥

हिन्दी—अविश्वस्त व्यक्ति का विश्वास नहीं करना चाहिये और विश्वस्त व्यक्ति का भी अधिक विश्वास नहीं करना चाहिये। क्योंकि विश्वास के कारण उत्पन्न होनेवाला भय (विपत्ति) मनुष्य के मूल को भी विनष्ट कर डालता है ॥ ४५ ॥

अविश्वस्त रहने पर दुर्बल व्यक्ति भी बलवानों के द्वारा मारा नहीं जा सकता और बलवान् होनेपर भी विश्वस्त होने के कारण वह दुर्बलों के द्वारा भी मारा जा सकता है ॥ ४६ ॥

नीति के तीन मार्ग होते हैं। विष्णुगुप्त के अनुसार मनुष्य को गुप्त रूप से यथोचित उपाय करते रहना चाहिये। शुक्राचार्य की दृष्टि में मित्रों को बढ़ाना ही मनुष्य की सफलता का साधन है। किन्तु सुरगुरु बृहस्पति का कथन है कि मनुष्य को सर्वदा अविश्वस्त भाव से रहते हुए अपना कार्य करते रहना चाहिये ॥ ४७ ॥

अपनी प्रभूत सम्पत्ति के बल से उपेक्षापूर्वक (अथवा धनादि के लोभ से) जो व्यक्ति अपने शत्रुओं पर विश्वास करता हैं, अथवा अपने प्रतिकूल आचरण करनेवाली स्त्री में विश्वास करता है, वह व्यक्ति विश्वास करने के समय तक ही जीवत रह पाता है" (उसका जीवन तभी तक सुरक्षित रहता है, जबतक कि वह उसका विश्वास नहीं करता है) ॥ ४८ ॥

तच्छ्रुत्वा लघुपतनकोऽपि निरुत्तरश्चिन्तयामास—"अहो, बुद्धिप्रागल्भ्यमस्य नीतिविषये। अथ वातएवास्योपरि मैत्रीपक्षपातः।" आह च—"भो हिरण्यक!

सख्यं साप्तपदीनं स्यादित्याहुर्विबुधा जनाः।
तस्मात्त्वं मित्रतां प्राप्तो वचनं मम तच्छृणु ॥ ४९ ॥

दुर्गस्थेनापि त्वया मया सह नित्यमेवालापो गुणदोषसुभाषितगोष्ठीकथाः सर्वदा कर्तव्याः; यद्येवं न विश्वसिषि।"

तच्छ्रुत्वा हिरण्यकोऽपि व्यचिन्तयत्—"विदग्धवचनोऽयं दृश्यते लघुपतनकः सत्यवाक्यश्च। तद्युक्तमनेन मैत्रीकरणम्।" आह च—"भोः! परं कदाचिन्मम दुर्गे चरणपातोऽपि न कार्यः। उक्तञ्च—

भीतभीतः पुरा शत्रुर्मन्दं मन्दं विसर्पति।
भूमौ प्रहेलया पश्चाज्जारहस्तोऽङ्गनास्विव" ॥ ५० ॥

व्याख्या—बुद्धिप्रागल्भ्यं=बुद्धेर्नैपुण्यं, मैत्रीपक्षपातः=मैत्रीकरणोत्साहः ( मैत्रीकरणायेच्छुकोऽहमिति यावत् )। विबुधाः=बुद्धिमन्तः, सख्यं=मित्रत्वं, साप्तपदीनं=सप्तभिः पदैर्गमनेनोत्पाद्यं, सप्तभिः पदैः सहगमनैः सप्तभिर्वाक्यैर्वा समुत्पद्यते ( एक साथ सात पद चलने से भी मित्रता हो जाती है ) ॥ ४९ ॥ आलापः=संभाषणं, न विश्वसिषि=विश्वासं न करोषि। विदग्धवचनः=भाषणपटुः, चरणपातः=पदविन्यासः। यथा—जारहस्तः=जारस्य=परस्त्रीगमनतत्परस्य; हस्तः=करः, अङ्गनासु परस्त्रीषु, भीतभीतः, पुरा मन्दं-मन्दं विसर्पति=चलति, पश्चाच्च प्रहेलया=लीलया=त्वरया, चलति, तथैव-शत्रुः पुरा=आदौ, भीतभीतः=भयाद्भीतः सन्, मन्दं मन्दं विसर्पति ॥ ५० ॥

हिन्दी—हिरण्यक की बात सुनने के बाद लघुपतनक निरुत्तर होकर अपने मन में सोचने लगा—"नीतिशास्त्र के विषय में हिरण्यक की बुद्धि बहुत प्रगल्भ है। इसीलिये इससे मैत्री करने का आग्रह मेरे मन में उत्पन्न हुआ है।" पुनः व्यक्त रूप से उसने कहा—"मित्र हिरण्यक ! विद्वानों का कहना है कि एक साथ सात पद चलने या सात वाक्यों के प्रयोग से ही परस्पर में मित्रता हो जाती है। अतः तुम अब मेरे मित्र हो चुके हो। अब मेरी बात को सुन लो ॥ ४९ ॥

यदि तुम मुझपर विश्वास नहीं करते हो, तो अपने दुर्ग के भीतर से ही तुम मेरे साथ बातचीत, गुणदोषविवेचन और सुभाषित-गोष्ठी आदि किया करना।"

लघुपतनक की बात को सुनकर हिरण्यक ने अपने मन में सोचा—"यह लघुपतनक बहुत चतुर, भाषणपटु एवं सत्यवक्ता जान पड़ता है। अतः इसके साथ मैत्री कर लेना उचित है।" पुनः व्यक्तरूप से उसने कहा—"महोदय ! आप के साथ मित्रता करने से पूर्व मेरा एक आग्रह है कि आप कभी भी मेरे दुर्ग के भीतर अपना चरण नहीं रख सकेंगे। कहा भी गया है कि—

जैसे—परस्त्रीगामी पुरुष का हाथ प्रारम्भ में डरते-डरते स्त्री के ऊपर चलता है और बाद में निर्भय होकर जल्दी-जल्दी चलने लगता है, उसी प्रकार शत्रु भी पहले तो भयभीत होकर शनैः शनैः भूमि में प्रवेश करने का प्रयत्न करता है और जब वह प्रवेश कर लेता है तो निर्भय होकर बड़ी तीव्रगति से बढ़ने लगता है ॥ ५० ॥

तच्छ्रुत्वा वायस आह—"भद्र ! एवं भवतु।"

ततः प्रभृति तौ द्वावपि सुभाषितगोष्ठीसुखमनुभवन्तौ तिष्ठतः। परस्परं कृतोपकारौ कालं नयतः। लघुपतनकोऽपि मांसशकलानि, मेध्यानि बलिशेषाण्यन्यानि वात्सल्यादाहृतानि पक्वान्नविशेषाणि हिरण्यार्थमानयति। हिरण्यकोऽपि तण्डुलानन्यांश्च भक्ष्यविशेषांल्लघुपतनकार्थं रात्रावाहृत्य तत्कालायातस्यार्पयति। अथवा युज्यते द्वयोरप्येतत्। उक्तञ्च—

> ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति।
> भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम् ॥ ५१ ॥

व्याख्या—एवं भवतु=तथास्तु, कृतोपकारौ=विहितोपकारौ, कालं=समयं, मांस-

शकलानि = मांसखण्डानि, मेध्यानि = पवित्राणि, बलिशेषाणि = अवशिष्टानि बलिभूतानि वस्तूनि, वात्सल्यादाहृतानि = स्नेहादानीतानि, पक्वान्नविशेषाणि = विशिष्टानि पक्वान्नानि, भक्ष्यविशेषान् = खाद्यपदार्थान्, आहृत्य = समानीय, तत्कालायातस्य = गोष्ठीकरणाय समागतस्य, अर्पयति = ददाति। गुह्यं = रहस्यम्, आख्याति = वदति ॥ ५१ ॥

हिन्दी—हिरण्यक की बात को सुनकर लघुपतनक ने कहा—"भद्र! आपके कथनानुसार ही रहूँगा।"

उस दिन से दोनों आपस में सुभाषित गोष्ठियों का आनन्द लेते हुये सुखपूर्वक मित्रभाव से रहने लगे। परस्पर में एक दूसरे का उपकार करके वे सुखपूर्वक समय व्यतीत किया करते थे। लघुपतनक मांस के टुकड़ों, पवित्र बलि में प्राप्त पदार्थों और विभिन्न प्रकार के पक्वान्नों को को ले आकर स्नेहपूर्वक हिरण्यक को दिया करता था। हिरण्यक भी चावलों तथा अन्य खाद्य पदार्थों को रात्रि में एकत्र करके प्रातःकाल सुभाषित गोष्ठी के लिए आये हुए लघुपतनक को प्रदान किया करता था। अथवा—दोनों का यह पारस्परिक लेन-देन उचित ही था। कहा भी गया है कि—

प्रीति के छः लक्षण बताये गये हैं—प्रेमपूर्वक किसी वस्तु को देना और लेना, अपनी गुप्त बातों को कहना और दूसरे की गुप्त बातों को पूछना, स्वयं मित्र द्वारा प्रदत्त पदार्थ को खाना और अपना खिलाना ॥ ५१ ॥

नोपकारं विना प्रीतिः कथञ्चित्कस्यचिद्भवेत्।
उपयाचितदानेन यतो देवा अभीष्टदाः ॥ ५२ ॥
तावत्प्रीतिर्भवेल्लोके यावद् दानं प्रदीयते।
वत्सः क्षीरक्षयं दृष्ट्वा परित्यजति मातरम् ॥ ५३ ॥
पश्य दानस्य माहात्म्यं सद्यः प्रत्ययकारकम्।
यत्प्रभावादपि द्वेषी मित्रतां याति तत्क्षणात् ॥ ५४ ॥

व्याख्या—देवाः = सुराः, उपयाचितदानेन = अभीष्टोपहारादिप्रदानेन, एव अभीष्टदाः = वरदाः, भवन्तीति ॥ ५२ ॥ लोके = विश्वेऽस्मिन्, वत्सः = गोवत्सः (बछड़ा), क्षीरक्षयं = दुग्धक्षयं, मातरं = स्वजननीम् ॥ ५३ ॥ सद्यः = तत्काले एव, मित्रतां याति ॥ ५४ ॥

हिन्दी—उपकार के बिना किसी की भी किसी व्यक्ति के साथ प्रीति नहीं होती। देवता भी अभीष्ट उपहारादि के प्रदान करने पर ही मनोवाञ्छित फल देते हैं, अन्यथा नहीं ॥५२॥

इस विश्व में, जब किसी को कुछ दिया जाता है तभी वह व्यक्ति भी प्रेम करता है। गाय का बछड़ा भी दूध के समाप्त हो जाने पर अपनी माता का साथ छोड़ देता है ॥ ५३ ॥

तत्क्षण फल देने वाले दान के माहात्म्य को देखो, उसके प्रभाव से शत्रु भी तत्काल मित्र बन जाते हैं ॥ ५४ ॥

पुत्रादपि प्रियतरं खलु तेन दानं,
मन्ये पशोरपि विवेकविवर्जितस्य।

दत्ते खले नु निखिलं खलु येन दुग्धं
नित्यं ददाति महिषी ससुतापि पश्य ॥ ५५ ॥

किं बहुना—

प्रीतिं निरन्तरां कृत्वा दुर्भेद्यां नखमांसवत् ।
मूषको वायसश्चैव गतावेकान्तमित्रताम् ॥ ५६ ॥

एवं स मूषकस्तदुपकाररञ्जितस्तथा विश्वस्तो यथा तस्य पक्षमध्ये प्रविष्टस्तेन सह सदैव गोष्ठीं करोति ।

व्याख्या—विवेकवर्जितस्य = विचारशून्यस्य, पशोरपि = जन्तोरपि, पुत्रादपि = स्वसुतादपि, प्रियतरं = स्नेहास्पदं, भवति । येन, ससुतापि, महिषी ( भैंस ), खले = कल्के ( खली ), निखिलं = सम्पूर्णमपि, दुग्धं ददाति ॥ ५५ ॥ नखमांसवत् दुर्भेद्यान् = अपरिच्छेद्यां, निरन्तराम् = निगूढां, प्रीतिं = स्नेहं, कृत्वा = विधाय, एकान्तमित्रतां = प्रगाढमैत्रीं, गतौ = प्राप्तौ ॥ ५६ ॥ तदुपकाररञ्जितः = तस्य उपकारेणानुरक्तः सन्, तस्य = वायसस्य, पक्षमध्ये = छदाभ्यन्तरे, प्रविष्टः = गतः सन्, गोष्ठीं = सभाम् ।

हिन्दी—केवल मनुष्यों के ही लिये नहीं अपितु विचारहीन पशुओं के भी लिये दान पुत्र से भी प्रियतर होता है । क्योंकि—खली आदि के देने पर सवत्सा महिषी अपना सम्पूर्ण दूध दूसरे को प्रदान कर देती है ।। ५५ ।।

इस विषय में अधिक कहने की आवश्यकता नहीं—

अँगुली के नख और मांस की भाँति अविच्छिन्न एवं अभेद्य प्रेम से मूषक और वायस दोनों ने आपस में प्रगाढ मैत्री कर ली ।। ५६ ।।

वह मूषक लघुपतनक के उपकारों से उसके प्रति इतना अधिक अनुरक्त और विश्वस्त हो गया कि उस वायस के पंखों के नीचे ही निर्भय भाव से बैठकर उसके साथ नित्य गोष्ठी करने लगा ।

अथान्यस्मिन्नहनि वायसोऽश्रुपूर्णनयनः समभ्येत्य सगद्गदं तमुवाच—"भद्र हिरण्यक ! विरक्तिः सञ्जाता मे साम्प्रतं देशस्यास्योपरि, तदन्यत्र यास्यामि ।"

हिरण्यक आह—"भद्र ! किं विरक्तेः कारणम् ?"

स आह—"श्रूयताम् ! अत्र देशे महत्यानावृष्ट्या दुर्भिक्षं सञ्जातम् । दुर्भिक्षत्वाज्जनो बुभुक्षापीडितः कोऽपि बलिमात्रमपि न प्रयच्छति । अपरं, गृहे-गृहे बुभुक्षितजनैर्विहङ्गानां बन्धनाय पाशाः प्रगुणीकृताः सन्ति । अहमप्यायुःशेषतया पाशेन बद्ध उद्धरितोऽस्मि । एतद्विरक्तेः कारणम् । तेनाहं विदेशं चलित इति बाष्पमोक्षं करोमि ।"

व्याख्या—अन्यस्मिन्नहनि = एकस्मिन् दिने, अश्रुपूर्णनयनः = बाष्पपूरितनेत्रः, समभ्येत्य = समागत्य, सगद्गदम् = कण्ठावरोधादस्पष्टं, विरक्तिः = विरतिः, महत्या = विपुलया, अनावृष्ट्या = अवर्षणेन, दुर्भिक्षं = दुष्कालः ( अकालः ), बलिमात्रं = काकाय विहितं बलिमपि,

विहङ्गानां=खगानां, पाशाः=बन्धनानि, प्रगुणीकृताः=प्रसारिताः, आयुःशेषतया=जीवनावशेषतया, उद्धरितः=निःसृतः। वाष्पमोक्षम्=अश्रुविमोचनम्।

हिन्दी—किसीदिन अश्रुपूर्ण नेत्रों से वायस ने आकर गद्गद वाणी में हिरण्यक से कहा—"भद्र हिरण्यक! इस देश के प्रति अब मुझे विरक्ति हो गयी है। अतः यहाँ से अन्यत्र चला जाना चाहता हूँ"।

हिरण्यक ने पूछा—"भद्र! आपकी इस विरक्ति का क्या कारण है"?

उसने कहा—"भद्र! यदि जानना ही चाहते हो तो सुनो—अत्यधिक अनावृष्टि के कारण इस देश में अकाल पड़ गया है। उस अकाल के कारण लोग स्वयं भूख से पीड़ित रहते हैं; अतः वायसों के लिए विहित वलि भी कोई प्रदान नहीं कर रहा है। इसके अतिरिक्त एक और भी बात है कि भूख से पीड़ित होकर लोगों ने पक्षियों को फंसाने के लिये घर-घर में पाश फैला दिया है। आयु के शेष रहने के कारण मैं किसी तरह उस पाश सें वचकर निकल आया हूँ। मेरी विरक्ति का कारण यही है। अब मैं विदेश-यात्रा के लिए प्रस्तुत हो चुका हूँ; इसीलिये रो रहा हूँ।"

हिरण्यक आह—"अथ भवान् क्व प्रस्थितः?"।

स आह—"अस्ति दक्षिणापथे वनगहनमध्ये महासरः। तत्र त्वत्तोऽधिकः परमसुहृत्कूर्मो मन्थरको नाम। स च मे मत्स्यमांसखण्डानि दास्यति। तद्भक्षणात्तेन सह सुभाषितगोष्ठीसुखमनुभवन् सुखेन कालं नयिष्यामि। नाहमत्र विहङ्गानां पाशबन्धनेन क्षयं द्रष्टुमिच्छामि। उक्तञ्च—

अनावृष्टिहते देशे सस्ये च प्रलयङ्गते।
धन्यास्तात! न पश्यन्ति देशभङ्गं कुलक्षयम्॥ ५७॥

व्याख्या—वनगहनमध्ये=दुर्गमे वने, महासरः=बृहत्तडागः, कूर्मः=कच्छपः, तद्भक्षणात्=मत्स्यमांसभक्षणात्, क्षयं=विनाशम्। अनावृष्टिहते=अनावृष्ट्या पीडिते, सस्ये=धान्ये, प्रलयंङ्गते=विनष्टे, ये देशभङ्गं=स्वराष्ट्रभङ्गं, कुलक्षयं=कुलनाशं, न पश्यन्ति, त एव धन्याः॥ ५७॥

हिन्दी—हिरण्यक ने पूछा—"आप कहाँ जाना चाहते हैं"?

उसने कहा—"दक्षिण के एक देश में दुर्गम वन के बीच एक बहुत बड़ा तालाब है। वहाँ, तुमसे भी अधिक घनिष्ठ मन्थरक नाम का मेरा एक मित्र कूर्म रहता है। वह मुझे मत्स्यमांसखण्डों को दिया करेगा। उनको खाकर मैं उसके साथ सुभाषितगोष्ठी का आनन्द लिया करूँगा और सुखपूर्वक अपना समय व्यतीत करूँगा। यहाँ रहकर मैं अपनी आँख से जाल में फँसे हुये पक्षियों का विनाश देखना नहीं चाहता। कहा भी गया है कि—

हे तात! अनावृष्टि आदि से दुर्भिक्षग्रस्त क्षेत्र में धन-धान्य की समाप्ति हो जाने पर विनष्ट होने वाले अपने देश और कुल को जो नहीं देखता, वह धन्य है॥ ५७॥

कोऽतिभारः समर्थानां किं दूरं व्यवसायिनाम् ? ।
को विदेशः सविद्यानां कः परः प्रियवादिनाम् ? ॥ ५८ ॥
विद्वत्त्वञ्च नृपत्वञ्च नैव तुल्यं कदाचन ।
स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते" ॥ ५९ ॥

व्याख्या—समर्थानां=क्षमाणां, व्यवसायिनाम्=उद्योगयुक्तानां, सविद्यानां=विदुषां, प्रियवादिनां=मधुरभाषिणां, परः=अन्यः शत्रुर्वा ॥ ५८ ॥ विद्वत्त्वं=विज्ञत्वं, नृपत्वं=भूपतित्वं, तुल्यं=समानं, स्वदेशे=स्वराष्ट्रे ॥ ५९ ॥

हिन्दी—समर्थ व्यक्ति के लिये क्या भार होता है, उद्योगी व्यक्तियों के लिये कौन स्थान दूर होता है, विद्वान् व्यक्ति के लिये कौन सा स्थान विदेश होता है और प्रियभाषी व्यक्तियों के लिये कौन व्यक्ति पराया होता है ? ॥ ५८ ॥

विद्वत्ता और राज्यसञ्चालन दोनों समान नहीं होते, क्योंकि राजा केवल अपने देश में ही आदर सत्कार प्राप्त कर सकता है, किन्तु विद्वान् सर्वत्र आदर सत्कार प्राप्त करता है ॥५९॥

हिरण्यक आह—"यद्येवं तदहमपि त्वया सह गमिष्यामि । ममापि महद् दुःखं वर्तते ।"

वायस आह—"भोः ! तव किं दुःखं, तत्कथय ?"

हिरण्यक आह—"भो ! बहु वक्तव्यमस्त्यत्र विषये । तत्तत्रैव गत्वा सर्वं सविस्तरं कथयिष्यामि ।"

वायस आह—"अहं तावदाकाशगतिः । तत्कथं भवतो मया सह गमनम्" ?

स आह—"यदि मे प्राणान् रक्षसि, तदा स्वपृष्ठमारोप्य मां तत्र प्रापय, नान्यथा मम गतिरस्ति ।"

व्याख्या—महद् दुःखम्=अतिकष्टं, सविस्तरं=विस्तृतरूपेण, आकाशगतिः=खेचरः, प्रापय=नय ।

हिन्दी—हिरण्यक ने कहा—"यदि आपका विचार दृढ़ है तो मैं भी आपके साथ चलूँगा । मुझे भी यहाँ बहुत कष्ट है ।"

वायस ने पूछा—"आप को कौनसा दुःख है ? वह तो कहिये !"

हिरण्यक ने कहा—"इस विषय में मुझे बहुत कहना है, अतः वहाँ चलने पर ही विस्तारपूर्वक कहूँगा ।"

वायस ने पूछा—"मैं तो आकाशगामी हूँ, आप मेरे साथ कैसे चल सकते हैं ?"

उसने कहा—"यदि आप मेरे प्राणों की रक्षा कर सकें तो अपनी पीठपर चढ़ाकर मुझे वहाँ पहुँचा दें । अन्यथा मेरे लिये दूसरी कोई गति नहीं है ।"

तच्छ्रुत्वा, सानन्दं वायस आह—"यद्येवं तद्धन्योऽहं, यद् भवतापि सह तत्र कालं नयामि । अहं सम्पातादिकानष्टावुड्डीनगतिविशेषान् वेद्मि । तत्समारोहय मम पृष्ठम्, येन सुखेन त्वां तत्सरः प्रापयामि ।"

हिरण्यक आह—"उड्डीनानां नामानि श्रोतुमिच्छामि।"

स आह—

"सम्पातञ्च विपातञ्च महापातं निपातनम्।
वक्रं तिर्यक् तथा चोर्ध्वमष्टमं लघुसंज्ञकम्॥ ६०॥

तच्छ्रुत्वा हिरण्यकस्तत्क्षणादेव तदुपरि समारूढः। सोऽपि शनैः शनैस्तमादाय सम्पातोड्डयनेन प्रस्थितः, क्रमेण तत्सरः प्राप्तः। ततो लघुपतनकं मूषकाधिष्ठितं विलोक्य दूरतोऽपि देशकालविदसामान्यकाकोऽयमिति ज्ञात्वा, सत्वरं मन्थरको जले प्रविष्टः।

व्याख्या—वेद्मि=जानामि। वक्रं=कुटिलगमनम्॥ ६०॥ मूषकाधिष्ठितं=पृष्ठे समारोपितं मूषकं, देशकालवित्=देशज्ञः कालज्ञश्च, असामान्यः=असाधारणः, सत्वरं=शीघ्रम्।

हिन्दी—हिरण्यक की उपर्युक्त बात को सुनकर वायस ने प्रसन्न चित्त से कहा—"यदि ऐसी बात है तो मैं धन्य हूँ। वहाँ भी मैं आपके साथ सुख से समय व्यतीत कर सकता हूँ। मैं सम्पातादि आठ प्रकार की उड्डयन सम्बन्धी गतियों को जानता हूँ। अतएव आप मेरी पीठपर चढ जाँय, जिससे मैं सुखपूर्वक आपको वहाँ तालाब के पास पहुँचा दूँ।"

हिरण्यक ने कहा—"मैं उड्डयनसम्बन्धी नीतियों का नाम सुनना चाहता हूँ।"

उसने कहा—"सम्पात, विपात, महापात, निपात, वक्रगति, तिर्यक्गति, ऊर्ध्वगति तथा लघुगति—ये आठ प्रकार की गतियाँ होती हैं॥ ६०॥

वायस की बात को सुनते ही हिरण्यक तत्काल उसकी पीठपर चढ गया। वह वायस भी उसको लेकर धीरे-धीरे सम्पात गति से क्रमशः उड़ते हुये उस तालाब के किनारे पहुँच गया। चूहे के साथ आते हुये लघुपतनक को दूर से ही देखकर देश और काल को जाननेवाला वह मन्थरक "यह तो कोई असाधारण वायस जान पड़ता है"—यह समझकर, तत्काल जल में चला गया।

लघुपतनकोऽपि तीरस्थतरुकोटरे हिरण्यकं मुक्त्वा शाखाग्रमारुह्य तारस्वरेण प्रोवाच—"भो मन्थरक! आगच्छागच्छ, तव मित्रमहं लघुपतनको नाम वायसश्चिरात् सोत्कण्ठः समायातः, तदागत्यालिङ्ग माम्। उक्तञ्च—

किं चन्दनैः सकर्पूरैस्तुहिनैः किं च शीतलैः?।
सर्वे ते मित्रगात्रस्य कलां नार्हन्ति षोडशीम्॥ ६१॥

तथा च—

केनामृतमिदं सृष्टं मित्रमित्यक्षरद्वयम्।
आपदां च परित्राणं शोकसन्तापभेषजम्"॥ ६२॥

व्याख्या—तरुकोटरे=वृक्षनिष्कुहे, चिरात्=बहुकालानन्तरं, सोत्कण्ठः=तव दर्शनोत्सुकः, तुहिनैः=हिमैः, मित्रगात्रस्य=मित्रशरीरस्य, षोडशीं कलां=षोडशांशमात्रामपि कलाम्,

नार्हन्ति=नाप्नुवन्ति ॥ ६१ ॥ आपदां=विपत्तीनां, परित्राणं=रक्षणं, शोकसन्तापभेषजं= शोकसन्तापयोरौषधम् ॥ ६२ ॥

हिन्दी—तालाब के किनारे पर स्थित एक वृक्ष के कोटर में हिरण्यक को बैठाने के पश्चात् लघुपतनक ने उस वृक्ष की एक शाखा पर बैठकर मन्थरक को बुलाते हुये जोर से कहा— "मित्र मन्थरक! आओ! आओ, मैं तुम्हारा मित्र लघुपतनक नाम का वायस हूँ। आज बहुत दिनों के बाद तुम्हें देखने की इच्छा से तुम्हारे पास आया हूं। अतः आकर मेरा आलिङ्गन तो कर लो। कहा भी गया है कि—

कपूरयुक्त चन्दन एवं हिम आदि पदार्थों की शीतलता मित्र के शरीरस्पर्श से उत्पन्न होने वाली शीतलता की सोलहवीं कला को भी नहीं पा सकती। (मित्र के शरीर को स्पर्श करने से जो शान्ति मिलती है वह कपूरयुक्त चन्दन एवं शीतल हिम से नहीं मिल सकती है) ॥ ६१ ॥

और भी—मित्र इन दो अक्षरों के रूप में अमृत का निर्माण किसने कर दिया है कि जो आपत्तियों से तो मनुष्य की रक्षा करता ही है, शोक और सन्ताप रूपी रोगों के लिये महौषधि का भी कार्य करता है" ॥ ६२ ॥

तच्छ्रुत्वा निपुणतरं परिज्ञाय सत्वरं सलिलान्निष्क्रम्य पुलकिततनुरानन्दाश्रुपूरितनयनो मन्थरकः प्रोवाच—"एह्येहि मित्र! आलिङ्ग माम्। चिरकालान्मया त्वं न सम्यक् परिज्ञातः। तेनाहं सलिलान्तः प्रविष्टः। उक्तञ्च—

यस्य न ज्ञायते वीर्यं न कुलं न विचेष्टितम्।
न तेन सङ्गतिं कुर्यादित्युवाच बृहस्पतिः" ॥ ६३ ॥

एवमुक्ते लघुपतनको वृक्षादवतीर्य तमालिङ्गितवान्। अथवा, साध्विदमुच्यते—

अमृतस्य प्रवाहैः किं कायक्षालनसम्भवैः।
चिरान्मित्रपरिष्वङ्गो योऽसौ मूल्यविवर्जितः ॥ ६४ ॥

व्याख्या—निपुणतरं=सम्यग्रूपेण, पुलकिततनुः=रोमाञ्चितशरीरः, एह्येहि=आगच्छागच्छ, वीर्यं=जलं, विचेष्टितं=मनोव्यापारं, सङ्गतिं=समागमं, न कुर्यादिति ॥ ६३ ॥ कायक्षालनसम्भवैः=देहक्षालनयोग्यैः, मित्रपरिष्वङ्गः=मित्रस्यालिङ्गनं, मूल्यविवर्जितः=अमूल्यो मूल्यरहितश्च ॥ ६४ ॥

हिन्दी—वायस की वाणी को सुनने के बाद उसे भलीभाँति पहचानकर वह कूर्म जल से बाहर निकल आया और प्रेमाश्रुपूर्ण नयनों से युक्त एवं पुलकित होकर उसने कहा—"आओ, आओ मित्र! आकर मेरे वक्ष के लग जाओ। मैंने इधर बहुत दिनों से तुम्हें नहीं देखा था, इसीलिये मैं जल में चला गया था। कहा भी गया है कि—

आचार्य बृहस्पति का यह मत है कि—मनुष्य जिसके वीर्य कुल तथा मनोगत भाव आदि को न जानता हो, उसके साथ उसे सङ्गति नहीं करनी चाहिये ॥ ६३ ॥

मन्थरक के उपर्युक्त कथन के बाद लघुपतनक ने वृक्ष से उतर कर उसका आलिङ्गन किया। अथवा यह ठीक ही कहा गया है कि—

अमृत के उस प्रवाह का महत्त्व ही क्या है, जो केवल मनुष्य के शरीर मात्र को ही धो सकता है। बहुत दिनों के पश्चात् मिलने वाले मित्र के शरीर का आलिङ्गन उस अमृत से अधिक महत्त्वपूर्ण होता है; क्योंकि उससे मनुष्य का बाह्य और आभ्यन्तर दोनों शुद्ध हो जाता है। उसकी एक और भी विशेषता होती है कि वह अमूल्य होते हुए भी निःशुल्क होता है॥ ६४॥

एवं द्वावपि तौ विहितालिङ्गनौ परस्परं पुलकितशरीरौ वृक्षादधः समुपविष्टौ, प्रोचतुरात्मचरित्रवृत्तान्तम्। हिरण्यकोऽपि मन्थरकं प्रणम्य वायसाभ्याशे समुपविष्टः। अथ तं समालोक्य मन्थरको लघुपतनकमाह—"भोः! कोऽयं मूषकः? कस्मात्त्वया भक्ष्यभूतोऽपि पृष्ठमारोप्यानीतः? तदत्र स्वल्पकारणेन भाव्यम्।"

तच्छ्रुत्वा लघुपतनक आह—"भो! हिरण्यको नाम मूषकोऽयं मम सुहृद् द्वितीयमिव जीवितम्। तत्किं बहुना—

पर्जन्यस्य यथा धारा यथा च दिवि तारकाः।
सिकतारेणवो यद्वत् सङ्ख्यया परिवर्जिताः॥ ६५॥

व्याख्या—वृक्षादधः=पादपादधः, वायसाभ्याशे=काकस्य समीपे, द्वितीयमिव जीवनं=प्राणभूतः, पर्जन्यस्य=मेघस्य, दिवि=आकाशे, तारकाः=नक्षत्राणि, सिकतारेणवः=बालुका-कणाः, सङ्ख्यया परिवर्जिताः=असङ्ख्यगुणाः सन्तीति भावः॥ ६५॥

हिन्दी—उक्तप्रकार से पारस्परिक आलिङ्गन के पश्चात् प्रेमपुलकित होकर दोनों उस वृक्ष के नीचे बैठ गये और एक दूसरे से अपना-अपना समाचार कहने-सुनने लगे। हिरण्यक भी आकर मन्थरक को प्रणाम करने के बाद वायस के बगल में बैठ गया। उसको देखकर मन्थरक ने लघुपतनक से पूछा—"मित्र! यह चूहा कौन है! अपना भक्ष्य होते हुये भी तुम इसे अपनी पीठ पर बैठाकर क्यों ले आये हो? इसमें कोई विशेष रहस्य जान पड़ता है।"

मन्थरक के प्रश्नों को सुनकर लघुपतनक ने कहा—"मित्र! यह हिरण्यक नाम का चूहा मेरा मित्र है और मेरे द्वितीय प्राण के समान मुझे अत्यन्त प्रिय है। अधिक क्या कहूँ, जैसे—आकाश में स्थित मेघधाराओं तथा नक्षत्रों और पृथ्वीपर स्थित बालुका-कणों की गणना नहीं की जा सकती, वे असंख्य होते हैं॥ ६५॥

गुणाः सङ्ख्यापरित्यक्तास्तद्वदस्य महात्मनः।
परं निर्वेदमापन्नः सम्प्राप्तोऽयं तवान्तिकम्"॥ ६६॥

मन्थरक आह—"किमस्य वैराग्यकारणम्?"

वायस आह—"पृष्टो मया तत्रैव, परमनेनाभिहितं यद्—बहु वक्तव्यमस्ति, तत्तत्रैव गत्वा कथयिष्यामि इति ममापि न निवेदितम्। तद् भद्र हिरण्यक! इदानीं निवेद्यतामुभयोरप्यावयोस्तदात्मनो वैराग्यकारणम्।"

सोऽब्रवीत्—

व्याख्या—सङ्ख्यापरित्यक्ताः=सङ्ख्याविवर्जिताः (असङ्ख्याः), निर्वेदमापन्नः= शोकमुपगतः सन्, तवान्तिकं=तव समीपं, सम्प्राप्तः=समागतः ॥ ६६ ॥

हिन्दी—उसी प्रकार हिरण्यक के गुण भी असंख्य हैं, उनकी गणना नहीं हो सकती, ये अत्यन्त सज्जन तथा असङ्ख्य गुणों से युक्त हैं, किन्तु किसी विशेष कारण से विरक्त होकर तुम्हारे पास चले आये और अपने स्थान का परित्याग कर दिया ॥ ६६ ॥

मन्थरक ने पूछा—"इनके वैराग्य का क्या कारण है?"

वायस ने उत्तर में कहा—"मैंने इनसे वहाँ कारण पूछा था, किन्तु इन्होंने यह कहकर मेरे आग्रह को टाल दिया कि इस विषय में बहुत कहना है! चलो, वहाँ पहुँचने पर ही सब कहूँगा। मुझसे भी वहाँ इन्होंने नहीं कहा था"। पुनः उसने हिरण्यक को सम्बोधित करते हुए कहा—"भद्र हिरण्यक! अब तो तुम यहाँ पहुँच गये हो। अब तुम अपने वैराग्य का कारण हम दोनों को बता दो।"

वायस के आग्रह को सुनकर हिरण्यक ने कहा—

[ १ ]

## ( हिरण्यकताम्रचूड-कथा )

अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम्। तस्य नातिदूरे मठायतनं भगवतः श्रीमहादेवस्य। तत्र च ताम्रचूडो नाम परिव्राजकः प्रतिवसति स्म। स च नगरे भिक्षाटनं कृत्वा प्राणयात्रां समाचरति। भिक्षाशेषञ्च तत्रैव भिक्षापात्रे निधाय तद्भिक्षापात्रं नागदन्तेऽवलम्ब्य पश्चाद्रात्रौ स्वपिति। प्रत्यूषे च तदन्नं कर्मकराणां दत्त्वा सम्यक् तत्रैव देवतायतने संमार्जनोपलेपनमण्डनादिकं समाज्ञापयति।

व्याख्या—मठायतनं=देवगृहं, प्राणयात्रां=जीवकोपार्जनं, पात्रे=भाण्डे, नागदन्ते= भित्तिकीलके (खूँटी मे), प्रत्यूषे=प्रातःकाले, कर्मकराणां=भृत्यानां, समाज्ञापयति= आज्ञापयति स्म।

हिन्दी—दक्षिण के किसी राज्य में महिलारोप्य नाम का एक नगर है। उससे थोड़ी ही दूरपर भगवान् शङ्कर का एक मन्दिर (मठ) बना हुआ है। उस मठ में कभी ताम्रचूड नाम का एक संन्यासी निवास करता था जो नगर से भिक्षाटन करके अपनी जीविका चलाया करता था। भोजन से अवशिष्ट बचे हुये अन्न को वह भिक्षापात्र में रखकर उस पात्र को खूँटी पर लटका दिया करता था और रात्रि में निश्चिन्त होकर सो जाया करता था। प्रातःकाल सोकर उठने के बाद भिक्षापात्र में रखे हुये अवशिष्ट अन्न से मजदूरों की मजदूरी आदि देकर उस मन्दिर में झाड़ू, लिपाई-पुताई तथा सजावट आदि करने के लिये भृत्यों को आदेश दिया करता था।

अन्यस्मिन्नहनि मम बान्धवैर्निवेदितम्—"स्वामिन्! मठायतने सिद्धमन्नं मूषक-भयात्तत्रैव भिक्षापात्रे निहितं नागदन्तेऽवलम्बितं तिष्ठति सदैव। तद् वयं भक्षयितुं

न शक्नुमः। स्वामिनः पुनरगम्यं किमपि नास्ति। तत्किं वृथाटनेनान्यत्र। अद्य तत्र गत्वा यथेच्छं भुञ्जामहे भवत्प्रसादात्"।

तदाकर्ण्याहं सकलयूथपरिवृत्तस्तत्क्षणादेव तत्र गतः। उत्पत्य च तस्मिन् भिक्षापात्रे समारूढः। तत्र भक्ष्यविशेषाणि सेवकानां दत्त्वा पश्चात्स्वयमेव भक्षयामि। सर्वेषां तृप्तौ जातायां भूयः स्वगृहं गच्छामि। एवं नित्यमेव तदन्नं भक्षयामि। परिव्राजकोऽपि यथाशक्ति रक्षति, परं यदैव निद्रान्तरितो भवति तदाहं तत्रारुह्यात्मकृत्यं करोमि।

व्याख्या—सिद्धमन्नं=पक्वान्नम्, अगम्यम्=गन्तुमशक्यम्, अटनेन=भ्रमणेन, प्रसादात् =कृपाविशेषात्, यूथपरिवृतः=समूहान्वितः, उत्पत्य=उत्प्लुत्य, निद्रान्तरितः=निद्रान्तर्गतः, आत्मकृत्यं=स्वकृत्यं भक्षणमित्यर्थः।

हिन्दी—एक दिन मेरे कुटुम्ब के सदस्यों ने मुझसे आग्रहपूर्वक कहा—"स्वामिन्! पका हुआ भोजन भिक्षापात्र में रखकर मूषकों के भय से मठ की दिवाल में गड़ी हुई खूँटी से लटका कर रखा रहता हैं। उसको हमलोग खा नहीं पाते हैं। स्वामी के लिये कोई स्थान अगम्य नहीं है। अतः अन्यत्र भ्रमण करने से क्या लाभ है? यदि आप की कृपा हो जाय, तो आज हमलोग वहाँ चलकर भरपेट भोजन कर सकते हैं।"

उनके आग्रह को सुनकर मैं तत्काल उनके साथ उस स्थान पर पहुँच गया। वहाँ पहुँचने के बाद मैं कूदकर उस भिक्षापात्र पर चढ़ गया था और उस भिक्षा-पात्र में रखे हुये अन्न को अपने अनुचरों को प्रदान करने के पश्चात् स्वयं भी खाने लगा। सबकी तृप्ति हो जाने के बाद पुनः मैं अपने घर को लौट आया। इसप्रकार प्रतिदिन मैं उस अन्न को खाया करता था। परिव्राजक यथाशक्ति उस अन्न को बचाने का प्रयत्न किया करता था किंतु जब वह सो जाता था तो मैं उस भिक्षापात्र पर चढ़कर अपना कार्य पूर्ण कर लिया करता था।

अथ कदाचित्तेन मम त्रासार्थं महान् यत्नः कृतः। जर्जरवंशोऽपि समानीतः। तेन सुप्तोऽपि मम भयाद्भिक्षापात्रं ताडयति। अहमप्यभक्षितेऽप्यन्ने प्रहारभयादपसर्पामि। एवं तेन सह सकलां रात्रिं विग्रहपरस्य मे कालो व्रजति।

अथान्यस्मिन्नहनि तस्मिन् मठे बृहत्स्फिङ् नामा परिव्राजकस्तस्य सुहृत् तीर्थयात्राप्रसङ्गेन प्राघुणिकः समायातः। तं दृष्ट्वा प्रत्युत्थानविधिना सम्भाव्य प्रपत्तिपूर्वकमभ्यागतक्रियया नियोजितवान्। ततश्च रात्रावेकत्र कुशसंस्तरे द्वावपि प्रसुप्तौ धर्मकथां कथयितुमारब्धौ।

व्याख्या—त्रासार्थं=भयोत्पादनार्थं, यत्नः=प्रयत्नः, जर्जरवंशः=विस्फारितमध्यभागो वंशः, अभक्षिते=अखादिते, प्रहारभयात्=ताडनभयात्, अपसर्पामि=दूरं गच्छामि। विग्रहपरस्य=कलहायमानस्य, तीर्थयात्राप्रसङ्गेन=तीर्थयात्राक्रमेण, प्राघुणिकः=अतिथिः, प्रत्युत्थानविधिना=उत्थानादिविधिना, सम्भाव्य=सत्कृत्य, प्रपत्तिपूर्वकं=विशेषादरपूर्वकम्, अभ्यागतक्रियया=अतिथिक्रियया, कुशसंस्तरे=कुशास्तरणे।

हिन्दी—एक दिन उस परिव्राजक ने मुझे भयभीत करने का पूर्ण प्रयत्न किया और कहीं से एक फटा हुआ बांस भी ले आया। मेरे भय से वह सोते समय भिक्षापात्र को उस बांस से ठोका करता था। चोट लगने के भय से मैं उस अन्न को बिना खाये ही भाग जाया करता था। इसप्रकार मेरी सम्पूर्ण रात्रि उस संन्यासी के साथ सङ्घर्ष करने में बीत जाया करती थी।

एक दिन उस सन्यासी का एक मित्र बृहत्स्फिक् नाम का एक संन्यासी अपनी तीर्थयात्रा के प्रसङ्ग में घूमता हुआ अतिथि के रूप में उस मठ में आया। अतिथि को देखते ही वह संन्यासी अपने स्थान पर उठकर खड़ा हो गया और यथोचित अभ्युत्थानादि के द्वारा स्वागत करके विनयपूर्वक उसका आतिथ्य सत्कार करने में व्यस्त हो गया। रात्रि में दोनों एक कुश की चटाई पर सोकर आपस में धर्मकथादि कहने-सुनने लगे।

**अथ बृहत्स्फिक्कथागोष्ठीषु स ताम्रचूडो मूषकत्रासार्थं व्याक्षिप्तमना जर्जरवंशेन भिक्षापात्रं ताडयंस्तस्य शून्यं प्रतिवचनं प्रयच्छति। तन्मयो न किञ्चिदुदाहरति।**

**अथासावभ्यागतः परं कोपमुपागतस्तमुवाच—"भोस्ताम्रचूड! परिज्ञातस्त्वं सम्यङ् न सुहृत्। तेन मया सह साह्लादं न जल्पसि, तद्रात्रावपि त्वदीयं मठं त्यक्त्वाऽन्यत्र मठे यास्यामि। उक्तञ्च—**

**एह्यागच्छ, समाश्रयासनमिदं, कस्माच्चिराद् दृश्यसे?**
**का वार्ता, ह्यतिदुर्बलोऽसि, कुशलं, प्रीतोऽस्मि ते दर्शनात्।**
**एवं ये समुपागतान्प्रणयिनः प्रह्लादयन्त्यादरा**
**त्तेषां युक्तमशङ्कितेन मनसा हर्म्याणि गन्तुं सदा॥ ६७॥**

व्याख्या—बृहत्स्फिक्=बृहन्नितम्बः (बृहत्यौ स्फिचौ यस्यासौ बृहत्स्फिक्) (स्थूल कूल्हों वाला), कथागोष्ठी=वार्ताप्रसङ्गः, व्याक्षिप्तमनाः=व्याक्षिप्तचित्तः, शून्यम्=अनवधानतयाप्रासङ्गिकं, प्रतिवचनम्=उत्तरं, प्रयच्छति=ददाति। तन्मयः=मूषकं मनसा चिन्तयन्, नोदाहरति=न वदति। अभ्यागतः=अतिथिः, साह्लादं=सहर्षं (सोत्साहं), न जल्पसि=न वदति। समाश्रय=तिष्ठ, कुशलं=शिवं, प्रीतोऽस्मि=प्रसन्नोऽस्मि, समुपागतान्=समागतान्, प्रह्लादयन्ति=हर्षयन्ति, अशङ्कितेन=निर्भयेन, मनसा=चित्तेन, हर्म्याणि=भवनानि॥ ६७॥

हिन्दी—बृहत्स्फिक् से वातचीत करते समय भी चूहों को डराने के लिये व्याकुल रहने से वह सन्यासी वार-वार फटे हुये बांस को उठा कर उस भिक्षापात्र को ठोंकता रहता था और उद्विग्नता के कारण बृहत्स्फिक् के कथनपर अन्यमनस्क भाव से हाँ-हाँ करता चला जा रहा था। चूहों को डराने में व्यस्त रहने के कारण वह बृहत्स्फिक् की बातों का कोई उत्तर नहीं देता था।

अन्त में उस अतिथि ने अप्रसन्न होकर कहा—"ताम्रचूड! मैंने आज समझ लिया कि तुम मेरे सच्चे मित्र नहीं हो। यही कारण है कि तुम मुझसे प्रेमपूर्वक बातें नहीं करते हो। अतः तुम्हारे इस मठ में मेरा निवास करना व्यर्थ है। रात्रि का समय होने पर भी मैं तुम्हारे इस मठ को छोड़कर अभी किसी अन्य मठ में चला जाता हूँ। कहा भी गया है कि—

"आओ भाई ! आओ, यह आसन है, बैठ जाओ। बहुत दिनों के बाद दिखाई पड़ रहे हो, क्या बात है ? क्या समाचार है ? इधर बहुत दुर्बल हो गये हो ? कुशल तो है ? तुम्हें देखकर मुझे बहुत बड़ी प्रसन्नता हुई है।" स्नेही तथा सम्बन्धीजनों के आगमन पर जो लोग प्रसन्न होकर उपर्युक्त प्रकार से आदरपूर्वक कुशल समाचार पूछते हैं और अपने अभ्यागत मित्रों को अपनी वाणी से आह्लादित करते रहते हैं, उन्हीं व्यक्तियों के यहाँ मनुष्य को अतिथि के रूप में जाना चाहिये और निर्भय होकर उनके भवनों में निवास भी करना चाहिये ॥६७॥

गृही यत्रागतं दृष्ट्वा दिशो वीक्षेत वाप्यधः।
तत्र ये सदने यान्ति ते शृङ्गरहिता वृषाः ॥ ६८ ॥
नाभ्युत्थानक्रिया यत्र नालापा मधुराक्षराः।
गुणदोषकथा नैव तत्र हर्म्ये न गम्यते ॥ ६९ ॥

तदेकमठप्राप्त्यापि त्वं गर्वितस्त्यक्तसुहृत्स्नेहो नैतद्वेत्सि यत्त्वया मठाश्रयव्याजेन नरकोपार्जनं कृतम्।

व्याख्या—आगतम्=अतिथिं, वीक्षेत=अवलोकयेत्, सदने=भवने वृषाः=बलीवर्दाः ॥ ६८ ॥ अभ्युत्थानक्रिया=उत्थानादिना स्वागतम्, आलापाः=भाषणानि, गुणदोषकथा =शुभाशुभवार्ता, हर्म्ये=भवने ॥ ६९ ॥ वेत्सि=जानासि।

हिन्दी—अतिथि के आने पर जिस गृह का स्वामी उपेक्षापूर्वक इधर-उधर दिशाओं की ओर देखने लगता है उस घर में अतिथि के रूप में जानेवाले व्यक्तियों को सींगरहित बैलों के ही समान समझना चाहिये ॥ ६८ ॥

जिस घर में अतिथि के पहुँचने पर गृही संमानपूर्वक अभ्युत्थान नहीं करता और प्रियं सूचक शब्दों में कुशल-समाचारादि नहीं पूछता और सुख-दुःख की बातें नहीं करता है, वह घर अतिथियों के जाने योग्य नहीं होता ॥ ६९ ॥

तुम एक ही मठ को पाकर इतना गर्वित हो गये हो कि मित्रों के स्नेह को भी भूल गये। तुम यह भी नहीं जानते कि मठ के रूप में तुमने अपने लिए यह नरक का मार्ग प्रशस्त कर लिया है।

उक्तञ्च—

नरकाय मतिस्ते चेत्पौरोहित्यं समाचर।
वर्षं यावत्किमन्येन मठचिन्तां दिनत्रयम् ॥ ७० ॥

तन्मूर्ख ! शोचितव्येऽप्यर्थे त्वं गर्वितः। तदहं त्वदीयं मठं परित्यज्य यास्यामि।"

अथ तच्छ्रुत्वा भयत्रस्तमनास्ताम्रचूडस्तमुवाच—भो भगवन् ! मैवं वद। न त्वत्समोऽन्यो मम सुहृत्कश्चिदस्ति; परं तच्छ्रूयतां गोष्ठीशैथिल्यकारणम्। एष दुरात्मा मूषकः प्रोन्नतस्थाने धृतमपि भिक्षापात्रमुत्प्लुत्यारोहति, भिक्षाशेषं च तत्रस्थं भक्षयति। तदभावादेव मठे मार्जनक्रियापि न भवति। तन्मूषकत्रासार्थमेतेन वंशेन भिक्षापात्रं

मुहुर्मुहुस्ताडयामि, नान्यत्कारणमिति। अपरमेतत्कुतूहलं पश्यास्य दुरात्मनो यन्मार्जारमर्कटादयोऽपि तिरस्कृता अस्योत्पतनेन।"

**व्याख्या**—मठचिन्तां=मठाधिपत्यम् ॥ ७० ॥ गोष्ठीशैथिल्यकारणं=भाषणश्रवणेऽनवधानतायाः कारणं, प्रोन्नतस्थाने=अत्युच्चस्थाने, धृतं=स्थापितं, पात्रं=भाण्डम्, उत्प्लुत्य=आरुह्य, कुतूहलम्=आश्चर्यं, मार्जारः=विडालः, मर्कटः=वानरः, तिरस्कृताः=अपमानिताः, उत्पतनेन=कूर्दनेन।

**हिन्दी**—कहा भी गया है कि—

यदि तुम नरक में वास करना चाहते हो तो केवल एक वर्ष तक पौरोहित्य कर लो और अधिक शीघ्रता चाहते हो तो केवल तीन दिन तक मठाधीश बनकर बैठे रहो ॥ ७० ॥

अरे मूर्ख! चिन्तनीय वस्तु को पाकर तुम इतने गर्वित हो गये हो कि मित्रता को भी भूल गये हो। अतः मैं तुम्हारे इस मठ को छोड़कर चला जा रहा हूँ।"

उस सन्यासी की बात को सुनते ही भयभीत होकर ताम्रचूड ने कहा—"भगवन्! ऐसी बात न कहिये। आपके समान मेरा कोई दूसरा मित्र नहीं है। आपकी बातचीत में अन्यमनस्क होने का जो कारण है उसे कह रहा हूँ, सुनिये—यह दुष्ट चूहा ऊँचे से ऊँचे स्थानपर रखने पर भी कूदकर भिक्षापात्र पर चढ़ जाया करता है और मेरे अवशिष्ट बचे हुये भिक्षान्न को खा जाता है। उस अन्न के अभाव में मठ की सफाई तक नहीं हो पा रही है। अतः इन चूहों को डराने के लिये इस बांस से मैं भिक्षापात्र को बार-बार ठोकता रहता हूँ। मेरी अनवधानता का अन्य कोई कारण नहीं है। देखिये तो सही, सबसे बड़े आश्चर्य की बात तो इसमें यह है कि इसने कूदने में बिल्लियों और वानरों का भी तिरस्कृत कर दिया है।"

बृहत्स्फिगाह—"अथ ज्ञायते तस्य बिलं कस्मिश्चित्प्रदेशे?"

ताम्रचूड आह—"भगवन्! न वेद्मि सम्यक्।"

स आह—"नूनं निधानस्योपरि तस्य बिलम्। निधानोष्मणा निश्चितं प्रकूर्दतेऽसौ। उक्तञ्च—

> ऊष्मापि वित्तजो वृद्धिं तेजो नयति देहिनाम्।
> किं पुनस्तस्य सम्भोगस्त्यागकर्मसमन्वितः ॥ ७१ ॥

तथा च—

> नाकस्माच्छाण्डिली मातर्विक्रीणाति तिलैस्तिलान्।
> लुञ्चितानितरैर्येन हेतुरत्र भविष्यति" ॥ ७२ ॥

ताम्रचूड आह—"कथमेतत्?" स आह—

**व्याख्या**—प्रदेशे=स्थाने, निधानस्य=भूमिगतद्रव्यस्य, निधानोष्मणा=द्रव्योष्मणा, वित्तजः=द्रव्यजः, ऊष्मा=तेजः (गर्मी), त्यागकर्मसमन्वितः=सद्व्यययुक्तः, सम्भोगः=तस्योपयोगः ॥ ७१ ॥ शाण्डिली=शाण्डिल्यगोत्रीया ब्राह्मणी, अकस्मात्=कारणं विना

( सहसा ), लुञ्चितान् = कुट्टितान् ( कूटे हुये ), तिलान्, तिलैः = असंस्कृतैस्तिलैः, विक्रीणाति, अतोऽत्र हेतुः = कारणम् ॥ ७२ ॥

हिन्दी—बृहत्स्फिक् ने पूछा—"उसका बिल कहाँ है, आप जानते हैं ?"

ताम्रचूड ने कहा—"भगवन् ! मैं ठीक नहीं बता सकता।"

उसने कहा—"यह निश्चित है कि उसका बिल किसी खजाने पर है। धन की ही गर्मी के कारण यह इतना अधिक कूदता है। कहा भी गया है कि—

धन की भी गर्मी मनुष्यके तेज को कुछ बढ़ा देती है। यदि उसका धन सन्मार्ग में व्यय होता हो, तब तो पूछना ही क्या है। उस मनुष्य का तेज तो बढ़ ही जाता है ॥ ७१ ॥

और भी किसी ने कहा है कि—हे मातः ! यह शाण्डिलगोत्रीया स्त्री अपने कूटे हुए तिलों को यदि बिना साफ किये हुये तिलों के बदले में बेच रही है, तो इसमें कोई न कोई विशेष कारण अवश्य है" ॥ ७२ ॥

ताम्रचूड ने पूछा—"यह कथा कैसी है ?"

बृहत्स्फिक् ने कहना प्रारम्भ किया—

## [ २ ]

## ( तिलचूर्णविक्रय-कथा )

एकदाहं कस्मिंश्चित्स्थाने प्रावृट्काले व्रतग्रहणनिमित्तं कञ्चिद् ब्राह्मणं वासार्थं प्रार्थितवान्। ततश्च तद्वचनात्तेनापि शुश्रूषितः सुखेन देवार्चनपरस्तिष्ठामि। अथान्यस्मिन्नहनि प्रत्यूषे प्रबुद्धोऽहं ब्राह्मणब्राह्मणीसंवादे दत्तावधानः शृणोमि। तत्र ब्राह्मण आह—"ब्राह्मणि ! प्रभाते दक्षिणायनसंक्रान्तिरनन्तदानफलदा भविष्यति। तदहं प्रतिग्रहार्थं ग्रामान्तरं यास्यामि। त्वया ब्राह्मणस्यैकस्य भगवतः सूर्यस्योद्देशेन किञ्चिद्भोजनं दातव्यम्" इति।

व्याख्या—प्रावृट्काले = वर्षाकाले, व्रतग्रहणनिमित्तं = व्रतग्रहणार्थं ( चातुर्मास्यव्रतग्रहणार्थम् ), वासार्थं = स्वनिवासार्थं, तद्वचनात् = ब्राह्मणादेशात्, शुश्रूषितः = सत्कृतः, प्रत्यूषे = प्रातःकाले, प्रबुद्धः = जागृतः सन्, दत्तावधानः = दत्तचित्तः, प्रतिग्रहार्थं = दानग्रहणार्थं, सूर्यस्योद्देशेन = सूर्यदैवतमुद्दिश्य।

हिन्दी—एकबार वर्षाकाल में मैंने अपना चातुर्मास्यव्रत करने के उद्देश्य से किसी ग्राम के एक ब्राह्मण से निवास के लिये स्थान देने की प्रार्थना की थी। उस ब्राह्मण ने मेरी प्रार्थना को स्वीकार कर लिया था और उसकी सेवा से सन्तुष्ट होकर मैं अपने व्रतसम्बन्धी नियमों के पालन एवं देवों की अर्चना में लीन रहते हुये उसके यहाँ सुखपूर्वक रहने लगा। एकदिन प्रातःकाल सोकर उठते ही मैं उस ब्राह्मण और उसकी स्त्री के बीच में होनेवाले विवाद को ध्यानपूर्वक सुनने लगा। वह ब्राह्मण अपनी स्त्री से कह रहा था—"ब्राह्मणि ! आज

सूर्योदय के समय कर्क की सङ्क्रान्ति होनेवाली है, जो अत्यन्त पुण्यद एवं फलद होगी। मैं दान लेने के लिये दूसरे ग्राम को चला जाऊँगा। तुम भगवान् सूर्य को दान देने के उद्देश्य से किसी ब्राह्मण को बुलाकर भोजन करा देना।"

अथ तच्छ्रुत्वा ब्राह्मणी परुषतरवचनैस्तं भर्त्सयमाना प्राह—"कुतस्ते दारिद्र्योपहतस्य भोजनप्राप्तिः? तत्किं न लज्जसे एवं ब्रुवाणः? अपि च न मया तव हस्तलग्नया क्वचिदपि लब्धं सुखं, न मिष्टान्नस्यास्वादनं, न च हस्तपादकण्ठादिभूषणम्।"

तच्छ्रुत्वा भयत्रस्तोऽपि विप्रो मन्दं मन्दं प्राह—"ब्राह्मणि! नैतद्युज्यते वक्तुम्। उक्तञ्च—

ग्रासादपि तदर्धं च कस्मान्नो दीयतेऽर्थिषु।
इच्छानुरूपो विभवः कदा कस्य भविष्यति?॥ ७३॥

व्याख्या—परुषतरवचनैः = कठोरतरवाक्यैः, भर्त्सयमाना = धिक्कुर्वती, दारिद्र्योपहतस्य = निर्धनस्य, हस्तलग्नया = भार्यारूपतया, मिष्टान्नं = मोदकादिकं, भूषणम् = आभूषणम्। अर्थिषु = याचकेषु, ग्रासादपि = स्वकवलादपि, इच्छानुरूपः = इच्छानुकूलः, विभवः = ऐश्वर्यम्॥७३॥

हिन्दी—उस ब्राह्मण बात को सुनकर उसकी स्त्री परुषतर वाक्यों में अपने पति को धिक्कारती हुई बोली—"तुम्हारे जैसे दरिद्र व्यक्ति के यहाँ भोजन मिलेगा ही कहाँ से? इस प्रकार की बातें कहते हुए तुम्हें लज्जा नहीं आती? तुम्हारी स्त्री के रूप में आने के बाद से आजतक कभी भी मैंने सुख नहीं प्राप्त किया है। तुम्हारे यहाँ आकर न तो कभी मिष्टान्न खाने को मिला, न कभी मेरे हाथों और पैरों में कोई आभूषण ही पड़ सका।"

ब्राह्मणी की बात सुनकर उस ब्राह्मण ने डरते हुये धीरे से कहा—ब्राह्मणि! तुम्हें इस तरह की बातें नहीं कहनी चाहिये। कहा भी गया है कि—

अपने ग्रास में से आधा ही सही, यदि हो सके तो याचकों को क्यों नहीं देते हो? अपनी इच्छा के अनुरूप ऐश्वर्य कब किस मनुष्य के पास हो सका है। अपनी इच्छा के अनुरूप ऐश्वर्य न तो किसी के पास हुआ है और न होगा ही। अतः जिससे जितना भी हो सके, याचकों को देते रहना चाहिये॥ ७३॥

ईश्वरा भूरि दानेन यल्लभन्ते फलं किल।
दरिद्रस्तच्च काकिण्या प्राप्नुयादिति नः श्रुतम्॥ ७४॥
दाता लघुरपि सेव्यो भवति न कृपणो महानपि समृद्ध्या।
कूपोऽन्तःस्वादुजलः प्रीत्यै लोकस्य न समुद्रः॥ ७५॥

तथा च—

अकृतत्यागमहिम्ना मिथ्या किं राजराजशब्देन?।
गोप्तारं न निधीनां कथयन्ति महेश्वरं विबुधाः॥ ७६॥

व्याख्या—ईश्वराः = धनिकाः, भूरिदानेन = प्रचुरदानेन, काकिण्या = कपर्दिकया, लभन्ते, श्रुतं = समाकर्णितम्॥ ७४॥ समृद्ध्या = विभवेन, अन्तःस्वादुजलः = मधुरजलयुक्तः

( स्वादु=मधुरं जलं यस्मिन् स स्वादुजलः ), प्रीत्यै—प्रसन्नतार्थं, भवति ॥ ७५ ॥ अकृतत्याग-महिम्ना=अदत्तदानेन, ( न कृतस्त्यागहिमा येन तथोक्तेन ), राजराजशब्देन=महाराजाधिराजादिशब्देन, किं=किं भवति, यतः—निधीनां=निधानानां, गोप्तारं=रक्षकं, महेश्वरं=महाराजशब्देनाभिधेयं, न कथयन्ति ॥ ७६ ॥

हिन्दी—श्रुतियों एवं शास्त्रों में लिखी हुई इस बात को हमलोगों ने भी सुना है कि जिस फल को धनीगण बड़े-बड़े दान देकर प्राप्त करते हैं, उसी फल को निर्धन व्यक्ति कौड़ी का दान करके प्राप्त कर लेता है। ( दान का फल सामर्थ्यानुसार दान से ही होता है ) ॥ ७४ ॥

लघु होने पर भी दाता व्यक्ति की सेवा सभी लोग करते हैं किन्तु समृद्धिमान् होने पर भी कृपण व्यक्ति की सेवा कोई नहीं करता। लघु होने पर भी पेय जल से युक्त कूप से लोगों को जितनी प्रसन्नता होती है, उतनी विशाल समुद्र से नहीं होती; क्योंकि उसका जल सुपेय नहीं होता ॥ ७५ ॥

और भी—कृपण व्यक्ति के लिये "राजराज" शब्द का प्रयोग करना व्यर्थ है; क्योंकि निधियों की रक्षा करने वाले प्रहरी को कोई भी राजा नहीं कहता है। ( कुबेर को "राजराज" कहा गया है। यदि वह दानी नहीं है तो उसको उक्त शब्द से सम्बोधित करना व्यर्थ है ) ॥७६॥

अपि च—

सदा दानपरिक्षीणः शस्त एव करीश्वरः।
अदानः पीनगात्रोऽपि निन्द्य एव हि गर्दभः ॥ ७७ ॥
सुशीतोऽपि सुवृत्तोऽपि यात्यदानादधो घटः।
पुनः कुब्जापि काणापि दानादुपरि कर्करी ॥ ७८ ॥
यच्छञ्जलमपि जलदो वल्लभतामेति सकललोकस्य।
नित्यं प्रसारितकरो मित्रोऽपि न वीक्षितुं शक्यः ॥ ७९ ॥

व्याख्या—दानपरिक्षीणः=मदत्यागात्परिक्षीणः, करीश्वरः=गजयूथपः, पीनगात्रः=पीवरतनुः ॥ ७७ ॥ सुशीतः=सुशीतलोऽपि, सुवृत्तः=वर्तुलोऽपि, कुब्जा=कुटिला, काणा=एकाक्ष्यपि, कर्करी=गलन्तिका ॥ ७८ ॥ यच्छन्=प्रयच्छन्, वल्लभतां=प्रियतां, प्रसारितकरः=प्रसारितहस्तः, प्रकीर्णांशुर्वा, मित्रः=सुहृत् सूर्यो वा, वीक्षितुं=विलोकयितुम् ॥ ७९ ॥

हिन्दी—मद के सतत परित्याग करने से दुर्बलता को प्राप्त हो जाने पर भी गजाधिप वन्दनीय ही समझा जाता है और मोटा होनेपर भी कृपण होने के कारण ही गर्दभ निन्दनीय समझा जाता है ॥ ७७ ॥

शीतल तथा वर्तुल होने पर भी दान के अभाव में घट नीचे रखा जाता है और जलदात्री होने के कारण ही कुब्ज एवं काण कर्करी उसके ऊपर रखी जाती है। ( कर्करी, मिट्टी के उस छोटे पात्र को कहते हैं जिसके नीचे छिद्र होता है ) ॥ ७८ ॥

जल को प्रदान करने के कारण मेघ को लोग स्नेह की दृष्टि से देखते हैं और अपने

किरण-करों को फैलाये रहने के कारण सूर्य को लोग देखना तक नहीं चाहते। ( लोग जल पिलाने के कारण परिचारक का भी आदर करते हैं किन्तु नित्य हाथ फैलाये रहने के कारण मित्र को देखना तक नहीं चाहते ) ॥ ७९ ॥

एवं ज्ञात्वा दारिद्र्याभिभूतैरपि स्वल्पात्स्वल्पतरं काले पात्रे च देयम्। उक्तञ्च—

सत्पात्रे महती श्रद्धा देशे काले यथोचिते।
यद्दीयते विवेकज्ञैस्तदानन्त्याय कल्पते ॥ ८० ॥

तथा च—

अतितृष्णा न कर्तव्या तृष्णां नैव परित्यजेत्।
अतितृष्णाभिभूतस्य शिखा भवति मस्तके" ॥ ८१ ॥

ब्राह्मण्याह—"कथमेतत्" ? स आह—

व्याख्या—दारिद्र्याभिभूतैः=दारिद्र्यग्रस्तैरपि, स्वल्पात्स्वल्पतरम्=अल्पादल्पतरं, काले=समये, पात्रे=सत्पात्रे, (सुयोग्याय), देयं=प्रदातव्यमेव। यद्दीयते=यत्किञ्चिदपि वस्तु प्रदीयते, आनन्त्याय, भवतीति भावः ॥ ८० ॥ तृष्णा=लोभः, मस्तके=शिरसि ॥८१॥

हिन्दी—अतएव दारिद्र्यग्रस्त होने पर भी मनुष्य को अवसर तथा सुयोग्य पात्र के मिलने पर, थोड़ा ही सही, यथाशक्ति अवश्य देना चाहिये। कहा भी गया है कि—

देश और काल के अनुसार सुयोग्य पात्र को जो दान विवेकज्ञों के द्वारा दिया जाता है, वह अनन्तकाल तक फलदायक होता है ॥ ८० ॥

और भी—मनुष्य को अत्यधिक लोभ नहीं करना चाहिये और लोभ का आत्यन्तिक परित्याग भी नहीं कर देना चाहिये। अत्यधिक लोभ करने वाले व्यक्ति के मस्तक में शिखा निकल आती है" ॥ ८१ ॥

ब्राह्मण के उपर्युक्त वाक्य को सुनकर ब्राह्मणी ने पूछा—"यह कैसे" ?

उस ब्राह्मण ने उत्तर में अग्रिम कथा को प्रारंभ करते हुये कहा—

[ ३ ]

## ( शबरशूकर-कथा )

अस्ति कस्मिश्चिद्वनोद्देशे कश्चित्पुलिन्दः। स च पापर्द्धिं कर्तुं वनं प्रति प्रस्थितः अथ तेन प्रसर्पता महान् अञ्जनपर्वतशिखराकारः क्रोडः समासादितः। तं दृष्ट्वा कर्णान्ताकृष्टनिशितसायकेन समाहतः।

अथ शूकरेणापि कोपाविष्टेन चेतसा बालेन्दुद्युतिना दंष्ट्राग्रेण पाटितोदरः पुलिन्दो गतासुर्भूतलेऽपतत्। अथ लुब्धकं व्यापाद्य शूकरोऽपि शरप्रहारवेदनया पञ्चत्वं गतः।

व्याख्या—वनोद्देशे=वनप्रदेशे, पुलिन्दः=शबरः, पापर्द्धिम्=आखेटक्रियां, प्रसर्पता=गच्छता, अञ्जनपर्वतशिखराकारः=कज्जलगिरिशिखराकारः (दीर्घः, कृष्णवर्णश्चेति भावः), क्रोडः=शूकरः, =समासादितः=प्राप्तः। कर्णान्ताकृष्टनिशितसायकेन=कर्णान्ताकृष्टतीक्ष्णशरेण

( कर्णान्तम् आकृष्टो निशितः सायको येन तथोक्तेन ), समाहतः=व्यापादितः। कोपाविष्टेन= क्रोधयुक्तेन, चेतसा=मनसा, बालेन्दुद्युतिना=बालेन्दुसन्निभेन कान्त्या, पाटितोदरः=विस्फारितोदरभागः, गतासुः=गतप्राणः, शरप्रहारवेदनया=बाणाघातवेदनया, पञ्चत्वं गतः= मृत्युमुपगतः।

हिन्दी—वन के किसी एक भाग में कोई शबर निवास करता था। एक दिन शिकार करने के लिए वह वन की ओर गया। मार्ग में जाते हुये उसने काजल के पर्वत की श्रेणी के समान अत्यन्त विशाल तथा कृष्ण वर्ण के एक शूकर को देखा। उसको देखते ही उसने धनुष की प्रत्यञ्चा को अपने कान तक खींच कर तीक्ष्ण बाण से उसपर प्रहार किया।

शूकर ने भी बाण के लगने से क्रुद्ध होकर अपने अर्धचन्द्राकार दांतों के प्रहार से उस व्याध के उदर को फाड़ डाला। उदर के फट जाने के कारण वह व्याध निर्जीव होकर पृथ्वी पर गिर पड़ा। उस व्याध को मारने के पश्चात् वह शूकर भी बाण के आघात से व्यथित होकर धराशायी हो गया और उसके भी प्राण निकल गये।

**एतस्मिन्नन्तरे कश्चिदासन्नमृत्युः शृगालो निराहारतया पीडित इतस्ततो परिभ्रमंस्तं प्रदेशमाजगाम। यावद्वराहपुलिन्दौ द्वावपि पश्यति तावत्प्रहृष्टो व्यचिन्तयत्—"भोः! सानुकूलो मे विधिः, तेनैवैतदचिन्तितं भोजनमुपस्थितम्। अथवा साध्विदमुच्यते—**

**अकृतेऽप्युद्यमे पुंसामन्यजन्मकृतं फलम्।**
**शुभाशुभं समभ्येति विधिना संनियोजितम्॥ ८२॥**

व्याख्या—आसन्नमृत्युः=प्राप्तमृत्युकालः, निराहारतया=बुभुक्षया, वराहपुलिन्दौ= शूकरशबरौ, विधिः=दैवम्, अचिन्तितम्=अतर्कितं, भोजनम्=भक्ष्यम्। अन्यजन्मकृतं= पूर्वजन्मार्जितं, समभ्येति=प्राप्नोति॥ ८२॥

हिन्दी—इस बीच में एक आसन्नमृत्यु शृगाल भूख से पीड़ित होकर इधर-उधर से घूमता हुआ उस स्थान पर आया। उस मृत वराह और शबर को देखकर वह अपने मन में सोचने लगा कि विधि आज मेरे अनुकूल जान पड़ता है, इसीलिये मुझे आज यह अतर्कित भोजन मिला है। अथवा, किसी ने ठीक ही कहा है कि—

उद्योग न करने पर भी मनुष्य के पूर्वजन्म का अर्जित शुभ या अशुभ फल भाग्य के द्वारा प्रेरित होकर उसके समक्ष आ ही जाता है॥ ८२॥

**तथा च—**

**यस्मिन् देशे च काले च वयसा यादृशेन च।**
**कृतं शुभाशुभं कर्म तत्तथा तेन भुज्यते॥ ८३॥**

**तदहं तथा भक्षयामि यथा बहून्यहानि मे प्राणयात्रा भवति। तत्तावदेनं स्नायुपाशं धनुष्कोटिगतं भक्षयामि। उक्तञ्च—**

**शनैः शनैश्च भोक्तव्यं स्वयं वित्तमुपार्जितम्।**
**रसायनमिव प्राज्ञैर्हेलया न कदाचन"॥ ८४॥**

व्याख्या—वयसा = अवस्थया, तत्तथा = तस्मिन्नेव काले तादृशेन वयसा, भुज्यते ॥८३॥ बहून्यहानि = बहुदिनानि, प्राणयात्रा = जीवनवृत्तिः, स्नायुपाशं = धनुर्ज्याम्, धनुष्कोटिगतं = धनुष्कोणस्थं, भोक्तव्यं = खादितव्यं, रसायनम् = औषधम्। हेलया = त्वरया नेति भावः ॥८४॥

हिन्दी—और भी—जिस देश में, जिस समय में और जैसी अवस्था में मनुष्य जिस शुभ या अशुभ कर्म को करता है, उस कर्म का फल भी वह उसी देश में, उसी समय में और उसी अवस्था में भोगता है ॥ ८३ ॥

अतः मैं इसको इसप्रकार से खाऊँगा कि जिससे बहुत दिनों तक मेरी जीविका चलती रहे। अतएव पहले मैं धनुष के दोनों कोणों में बँधी हुई तांत की रज्जु को ही खाना आरम्भ करता हूँ। कहा भी गया है कि—

मनुष्य को अपने द्वारा उपार्जित वित्त का उपभोग रसायन की तरह शनैः शनैः करना चाहिये, उपभोग में कभी भी शीघ्रता नहीं करनी चाहिये" ॥ ८४ ॥

इत्येवं मनसा निश्चित्य चापचटितां कोटिं मुखमध्ये प्रक्षिप्य स्नायुं भक्षयितुं प्रवृत्तः। ततश्च त्रुटिते पाशे तालुदेशं विदार्य चापकोटिर्मस्तकमध्येन शिखावन्निष्क्रान्ता। सोऽपि तद्वेदनया तत्क्षणान्मृतः। अतोऽहं ब्रवीमि—"अति तृष्णा न कर्तव्या" इति।

[ ब्राह्मण्यास्तिलविक्रय-कथा ]

स पुनरप्याह—"ब्राह्मणि ! न श्रुतं भवत्या—

आयुः कर्म च वित्तं च विद्या निधनमेव च।
पञ्चैतानि हि सृज्यन्ते गर्भस्थस्यैव देहिनः ॥ ८५ ॥

व्याख्या—चापचटितां = चापलग्नां, कोटिम् = अटनीं (धनुष के अग्रभाग को), स्नायुं = मौर्वीं, शिखावत् = शिखासदृशी। निधनं = मरणं, सृज्यन्ते = निर्मीयन्ते ॥ ८५ ॥

हिन्दी—उपर्युक्त प्रकार से सोचने के बाद वह शृगाल चढ़े हुए धनुष के अग्रभाग को मुख में डालकर उसमें संलग्न स्नायु ( तांत ) को खाने लगा। धनुष की डोरी के सहसा टूट जाने के कारण धनुष की कोटि तालु को छेदकर उसके मस्तक में शिखा की तरह निकल गयी। चोट की वेदना के कारण वह शृगाल तत्काल मर गया।"

उपर्युक्त कथा को सुनाने के बाद ब्राह्मण ने कहा—"इसीलिये मैं कहता हूँ कि मनुष्य को अत्यधिक लोभ नहीं करना चाहिये और लोभ का आत्यन्तिक परित्याग भी नहीं कर देना चाहिये। अपनी बात को आगे बढ़ाते हुये उस ब्राह्मण ने पुनः कहा—"ब्राह्मणि ! क्या तुमने यह नहीं सुना है कि—

आयु, कर्म, धन, विद्या तथा मरण—ये पाँच वस्तुयें मनुष्य को उसकी गर्भावस्था में ही विधाता द्वारा प्रदान कर दी जाती हैं। वह इनको अपने पौरुष से नहीं प्राप्त करता ॥ ८५ ॥

अथैवं सा तेन प्रबोधिता ब्राह्मण्याह—"यद्येवं तदस्ति मे गृहे स्तोकस्तिलराशिः। ततस्तिलाल्लुञ्चित्वा तिलचूर्णेन ब्राह्मणं भोजयिष्यामि" इति।

ततस्तद्वचनं श्रुत्वा ब्राह्मणो ग्रामं गतः। सापि तांस्तिलानुष्णोदकेन संमर्द्य

लुञ्चित्वा सूर्यातपे दत्तवती। अत्रान्तरे तस्या गृहकर्मव्यग्रायास्तिलानां मध्ये कश्चित्सारमेयो मूत्रोत्सर्गं चकार। तं दृष्ट्वा सा चिन्तवती—"अहो, नैपुण्यं पश्य पराङ्मुखीभूतस्य विधेः, यदेते तिला अभोज्याः कृताः। तदहमेतान्समादाय कस्यचिद् गृहं गत्वा लुञ्चितैरलुञ्चितानानयामि। सर्वोऽपि जनोऽनेन विधिना प्रदास्यति" इति।

व्याख्या—एवम् = उपर्युक्तप्रकारेण, प्रबोधिता = प्रतिबोधिता, स्तोकः = स्वल्पः, लुञ्चित्वा = संशोध्य, (कुट्टयित्वा) संमर्द = प्रक्षाल्य; गृहकर्मव्यग्रायाः = गृहकर्मणि सक्तायाः, सारमेयः = कुक्कुरः, नैपुण्यं = वैदग्ध्यं, कौशलमिति यावत्, पराङ्मुखीभूतस्य: विपरीतस्य, विधेः = दैवस्य, अभोज्याः = भक्षयितुमशक्याः, लुञ्चितैः = संशोधितैः।

हिन्दी—ब्राह्मण के द्वारा उक्त प्रकार से समझाये जाने पर उस ब्राह्मणी ने कहा—"यदि ऐसी बात है तो मेरे घर में थोड़ा सा तिल पड़ा हुआ है। उस तिल को साफ करके उसको कूट लेती हूँ और उसके चूर्ण से किसी ब्राह्मण को भोजन करा दूँगी।"

ब्राह्मणी की बात से सन्तुष्ट होकर वह ब्राह्मण किसी अन्य ग्राम को चला गया। ब्राह्मण के चले जाने पर उस ब्राह्मणी ने उन तिलों को गर्म जल में डालकर खूब मलकर धो लिया और कूटकर सूखने के लिये उन्हें धूप में डाल दिया। तिलों को धूप में डालकर वह ब्राह्मणी अपने अन्य धन्धों में लग गयी। इसी बीच एक कुत्ते ने आकर उन तिलों में पेशाब कर दिया। उसको देखकर वह ब्राह्मणी बहुत चिन्तित हुई और अपने मन में सोचने लगी—हमारे प्रतिकूल चलने वाले भाग्य का खेल तो देखो! उसने इन तिलों को भी खाने योग्य नहीं रहने दिया। अब इन तिलों को मैं किसी दूसरे के यहाँ देकर इन कूटे हुए तिलों के बदले में बिना कूटा हुआ तिल माँग लाती हूँ। कूटे हुये तिलों के बदले में कोई भी व्यक्ति बिना कूटा हुआ तिल देने को तैयार हो जायगा।"

अथ यस्मिन् गृहेऽहं भिक्षार्थं प्रविष्टस्तत्र गृहे सापि तिलानादाय प्रविष्टा विक्रयं कर्तुम्। आह च—"गृह्णातु कश्चिदलुञ्चितैर्लुञ्चितांस्तिलान्।"

अथ तद्गृहगृहिणी प्रहृष्टा यावदलुञ्चितैर्लुञ्चितान् गृह्णाति, तावदस्याः पुत्रेण कामन्दकीयशास्त्रं दृष्ट्वा व्याहृतम्—"मातः! अग्राह्याः खल्विमे तिलाः। नास्या अलुञ्चितैर्लुञ्चिता ग्राह्याः। कारणं किञ्चिद् भविष्यति; येनैषालुञ्चितैर्लुञ्चितान् प्रयच्छति।"

तच्छ्रुत्वा तया परित्यक्तास्ते तिलाः। अतोऽहं ब्रवीमि—"नाकस्माच्छाण्डिली मातः" इति।

व्याख्या—गृहिणी = गृहस्वामिनी, प्रहृष्टा = प्रसन्नानना, व्याहृतं = कथितं, परित्यक्ताः = त्यक्ताः।

हिन्दी—संन्यासी ने कहा—मैं जिस घर में भिक्षा माँगने के लिये गया था, संयोग से वह ब्राह्मणी भी उन तिलों को लेकर उन्हें बदलने के लिये उसी घर में पहुँची। वहाँ जाकर उसने कहा—"बिना कूटे हुए तिलों के बदले में इन कूटे हुये तिलों को ले लो।"

उस ब्राह्मणी की बात को सुनकर उस घर की स्वामिनी प्रसन्न होकर जब अपने विना कूटे हुये तिलों में उन कूटे हुये तिलों को बदलने लगी तो उसके पुत्र ने कामन्दकीय नीतिशास्त्र को देखकर उसे रोकते हुये कहा—"मातः! इसके ये तिल बदलने योग्य नहीं हैं। अपने विना कूटे हुये तिलों के बदले में इसके कूटे हुये तिलों को न लेना। इसमें कोई कारण अवश्य है जिससे कि यह विना कूटे हुये तिलों के बदले में अपने कूटे हुये तिलों को बदलना चाहती है।"

पुत्र की बात की सुनकर उस गृहस्वामिनी ने उन तिलों को छोड़ दिया।

उपर्युक्त कथा को समाप्त करने के बाद बृहत्स्फिक् ने कहा—"इसीलिये मैं कहता हूँ कि—शाण्डिलगोत्रीया ब्राह्मणी विना कारण के ही अपने कूटे हुये तिलों को विना कूटे हुये तिलों से बदलती नहीं है"।

एतदुक्त्वा स भूयोऽपि प्राह—"अथ ज्ञायते तस्य क्रमणमार्गः?"

ताम्रचूड आह—"भगवन्! ज्ञायते, यत एकाकी स न समागच्छति किन्त्वसङ्ख्ययूथपरिवृतः पश्यतो मे परिभ्रमन्नितस्ततः सर्वजनेन सहागच्छति, याति च।"

अभ्यागत आह—"अस्ति किञ्चित्खनित्रकम्?"

स आह—"बाढम्; अस्त्येषा सर्वलोहमयी सुहस्तिका।"

अभ्यागत आह—"तर्हि प्रत्यूषे त्वया मया सह स्थातव्यम्, येन द्वावपि जनचरणामलिनायां भूमौ तत्पदानुसारेण गच्छावः।"

व्याख्या—क्रमणमार्गः=गमनागमनमार्गः, असङ्ख्ययूथपरिवृतः=अनेकसमूहसमेतः, (असङ्ख्यैः यूथैः परिवृतः), खनित्रकं=खननयन्त्रं (खनने का औजार), सुहस्तिका=खनित्रविशेषः, जनचरणामलिनायां=जनचरणचिह्नैरचिह्नितायां, तत्पदानुसारेण=मूषकपदानुसारेण।

हिन्दी—उपर्युक्त कथा को कहने के बाद उस वृहत्स्फिक् ने पुनः उस सन्याससे पूछा—"क्या तुम उसके आने और जाने के मार्ग को जानते हो?"

ताम्रचूड़ ने कहा—"भगवन्! जानता हूँ। क्योंकि यह अकेला कभी नहीं आता। जब भी आता है तो अपने असंख्य यूथों के ही साथ आता है और मेरे सामने इधर-उधर घूमकर चला भी जाता है।"

अभ्यागत ने पुनः पूछा—"क्या तुम्हारे पास खनने का कोई यन्त्र है?"

उसने कहा—"है, यह लोहे की बनी हुई एक सुहस्तिका (कुदाल) है।"

अभ्यागत ने कहा—"कल प्रातःकाल तुम मेरे साथ रहना जिससे हम दोनों भूमि पर किसी मनुष्य के पदचिह्नों के उभड़ने से पूर्व उस चूहे के पदचिह्नों का अनुसरण करके उसके बिल का पता लगा सकें।"

मयापि तद्वचनमाकर्ण्य चिन्तितम्—अहो, विनष्टोऽस्मि; यतोऽस्य साभिप्रायवचांसि श्रूयन्ते। नूनं यथा निधानं ज्ञातं, तथा दुर्गमप्ययमस्माकं ज्ञास्यति। एतदस्याभिप्रायादेव ज्ञायते।

उक्तञ्च—

सकृदपि दृष्ट्वा पुरुषं विबुधा जानन्ति सारतां तस्य ।
हस्ततुलयापि निपुणाः पलप्रमाणं विजानन्ति ॥ ८६ ॥

वाञ्छैव सूचयति पूर्वतरं भविष्यत्, पुंसां यदन्यतनुजं त्वशभं शुभं वा ।
विज्ञायते शिशुरजातकलापचिह्नः, प्रत्युद्गतैरपसरन् सरसः कलापी ॥ ८७ ॥

व्याख्या—विनष्टोऽस्मि = हतोऽस्मि, साभिप्रायवचांसि = अर्थगर्भितानि भाषणानि। सकृदपि = एकवारमपि, सारतां = तत्त्वं, निपुणाः = योग्याः, हस्ततुलया = करतुलनया (अनुमानेन), पलप्रमाणं = पलादिप्रमाणम्, विजानन्ति = जानन्ति ॥८६॥ पुंसां = पुरुषाणां, वाञ्छैव = इच्छैव, तेषां पूर्वतरं = भूतं, भविष्यच्च विज्ञायते। अजातकलापचिह्नः = अजातपिच्छोऽपि, शिशुः = मयूरशिशुः, सरसैः = मनोहरैः, प्रत्युगतैः = गमनैः, अपसरन् = गच्छन्, कलापी = मयूरोऽयमिति, ज्ञायते ॥ ८७ ॥

हिन्दी—हिरण्यक ने कहा—"उस संन्यासी के वचन को सुनकर मैंने भी सोचा कि—अब तो, मैं मार ही डाला जाऊँगा। क्योंकि इस संन्यासी का कथन बहुत सारगर्भित जान पड़ता है। जैसे इसने भूमिगत विधान (खजाना) को जान लिया था उसीप्रकार हमारे बिल को भी जान जायगा। यह बात उसके कथन से ही व्यक्त हो जाती है। कहा भी गया है कि—

बुद्धिमान् व्यक्ति मनुष्य को एक बार देखने से ही उसके आभ्यन्तरिक तत्व को जान लेते हैं। निपुण व्यक्ति अपने हाथरूपी तुला (तराजू) से ही छटाँक आदि का अन्दाज लगा लिया करते हैं ॥ ८६ ॥

मनुष्य की इच्छाओं से उसके भूत तथा भावी जीवन के शुभाशुभ कर्मों को जाना जा सकता है। क्याकि—पंख आदि चिह्नों के न रहने पर भी मयूर का शिशु अपनी मनोहर गति आदि के द्वारा पहचान ही लिया जाता है ॥ ८७ ॥

ततोऽहं भयत्रस्तमनाः सपरिवारो दुर्गमार्गं परित्याज्यान्यमार्गेण गन्तुं प्रवृत्तः। ततः सपरिजनो यावदग्रतो गच्छामि तावत्सम्मुखीनो बृहत्कायो मार्जारः समायाति। स मूषकवृन्दमवलोक्य तन्मध्ये सहसोत्पपात।

अथ ते मूषका मां कुमार्गगामिनमवलोक्य गर्हयन्तो, हतशेषा रुधिरप्लावितवसुन्धरास्तमेव दुर्गं प्रविष्टाः। अथवा साध्विदमुच्यते—

छित्त्वा पाशमपास्य कूटरचनां भङ्क्त्वा बलाद्वागुरां,
पर्यन्ताग्निशिखाकलापजटिलान्निर्गत्य दूरं वनात्।
व्याधानां शरगोचरादपि जवेनोत्पत्य धावन्मृगः,
कूपान्तः पतितः करोतु विधुरे किं वा विधौ पौरुषम् ? ॥ ८८ ॥

व्याख्या—सपरिजनः = सानुयायिवर्गः, कुमार्गगामिनं = कुपथगामिनं, गर्हयन्तः =

भर्त्सयन्तः, हतशेषाः=मृतावशिष्टाः, रुधिरप्लावितवसुन्धराः=रुधिरः सिक्तभूमयः (रुधिरेण प्लाविता वसुन्धरा यैस्तैः)। पाशं=बन्धनं, छित्वा=विनाशयित्वा, कूटरचनां=मृगबन्धनार्थं कपटरचनां (धोखेकी टट्टी), वागुरां=मृगबन्धनीं, पर्यन्ताग्निशिखाकलापजटिलात्=समन्ताद् व्याप्तदावाग्निज्वालानिचयात् (दावाग्नि की लपटों में घिरे हुए वन से), व्याधानां=वधिकानां, शरगोचरात्=शरलक्ष्यात्, जवेन=वेगेन, उत्पत्य=निर्गत्य, विधुरे=विपरीते (हीने), विधौ= भाग्ये, पौरुषं=पुरुषार्थम् ॥ ८८ ॥

हिन्दी—उस संन्यासी के मनोगत भाव को समझकर मैं भयभीत होकर अपने परिजनों के साथ प्रतिदिन के मार्ग को छोड़कर एक अन्य मार्ग से भागने लगा। अपने अनुयायियों के साथ अभी मैं आगे बढा ही था कि सामने से एक विशालकाय मार्जार (बिडाल) आता हुआ दिखायी पड़ा। चूहों के समूह को देखकर वह सहसा उनके बीच में कूद पड़ा।

उस मार्जार के मुख से बचे हुए मेरे अनुयायी चूहे मुझे गलत मार्ग पर चलते हुये देखकर मेरी निन्दा करने लगे और रक्त से पृथ्वी को सींचते हुये अपने पुराने बिल-दुर्ग में प्रविष्ट हो गये। अथवा, ठीक ही कहा गया है कि—

जाल में फँसा हुआ मृग किसीप्रकार उसको फाड़कर निकला तो व्याधों के द्वारा लगाई गई धोखे की टट्टी में फँस गया। उस धोखे की टट्टी को तोड़कर भागा तो मृगबन्धनी (पाशविशेष) में फँस गया। उसको भी तोड़कर निकला तो दावाग्नि की लपटों से व्याप्त वन में जाकर फँस गया। पुनः उससे भी बचकर निकला तो व्याधों के शरलक्ष्य में आ गया। उनसे बचने के लिये तीव्र वेग से भागने लगा तो कूएँ में गिर पड़ा। भाग्य के प्रतिकूल रहने पर आखिर वह क्या पुरुषार्थ करता ? ॥८८॥

**अथाहमेकोऽन्यत्र गतः, शेषा मूढतया तत्रैव दुर्गं प्रविष्टाः। अत्रान्तरे स दुष्टपरिव्राजको रुधिरबिन्दुचर्चितां भूमिमवलोक्य तेनैव मार्गेण दुर्गमुपगतः। ततश्च सुहस्तिकया खनितुमारब्धः।**

**अथ तेन खनता प्राप्तं तन्निधानं यस्योपरि सदैवाहं कृतवसतिः, यस्योष्मणा महादुर्गमपि गच्छामि। ततो हृष्टमनास्ताम्रचूडमिदमूचेऽभ्यागतः—"भो भगवन्! इदानीं स्वपिहि निःशङ्कः। अस्योष्मणा मूषकस्ते जागरणं सम्पादयति।" एवमुक्त्वा तन्निधानमादाय मठाभिमुखं प्रस्थितौ द्वावपि।**

व्याख्या—मूढतया=मूर्खतया, रुधिरबिन्दुचर्चितां=रक्तबिन्दुलिप्तां, निःशङ्कः= निर्भयः सन्।

हिन्दी—परिजनों की भर्त्सना के कारण मैं एकाकी अन्यत्र चला गया और वे अपनी मूर्खता के कारण पुनः उसी बिल में घुस गये। इसके पश्चात् वह दुष्ट परिव्राजक चूहों के रक्त से भींगी हुई भूमि का अनुसरण करते हुए मेरे दैनिक आवागमन के मार्ग से बिल तक पहुँच गया और वहाँ पहुँचकर खनित्र से उसको खनने लगा।

जिस धन पर मैं सदा निवास करता था और जिसकी गर्मी के कारण अगम्य स्थानों में

भी चला जाता था, बिल को खनते हुये उस सन्यासी ने उस धन को प्राप्त कर लिया। पुनः प्रसन्न होकर उसने ताम्रचूड से कहा—'भगवन्! इस समय तुम निःशङ्क होकर सो सकते हो। इसी धन की गर्मी के कारण वह चूहा रातभर तुम्हारे सोने में बाधा पहुँचाया करता था।" उक्त बात को कहने के बाद वे दोनों प्राप्त धन को लेकर मठ की ओर चल दिये।

अहमपि यावन्निधानरहितं स्थानमागच्छामि, तावदरमणीयमुद्वेगकारकं तत्स्थानं वीक्षितुमपि न शक्नोमि। अचिन्तयं च—"किं करोमि, क्व गच्छामि, कथं मे स्यान्मनसः प्रशान्तिः ?"

एवं चिन्तयतो मे महाकष्टेन स दिवसो व्यतिक्रान्तः। अथास्तमितेऽर्के सोद्वेगो निरुत्साहस्तस्मिन्मठे सपरिवारः प्रविष्टः।

अथास्मत्परिग्रहशब्दमाकर्ण्य ताम्रचूडोऽपि भूयो भिक्षापात्रं जर्जरवंशेन ताडयितुं प्रवृत्तः।

व्याख्या—निधानरहितं = धनरहितम्, अरमणीयम् = असुन्दरम्, उद्वेगकारकं = समुद्वेगजनकं, वीक्षितुमपि = द्रष्टुमपि, प्रशान्तिः = शान्तिः (चैन)। महाकष्टेन = महता दुःखेन, व्यतिक्रान्तः = व्यतीतः। अस्तमिते = अस्तं गते, अर्के = सूर्ये, सोद्वेगः = अशान्तः, निरुत्साहः = उत्साहरहितः, परिग्रहशब्दं = परिवारस्य शब्दं, प्रवृत्तः = आरब्धः।

हिन्दी—जब मैं लौटकर उस खजाने के पास आया तो देखा कि वह स्थान अत्यन्त अशोभनीय एवं उद्वेगकारक हो चुका था। मैं उस स्थान को देख भी नहीं सकता था। उसको देखकर मैंने सोचा—अब मैं क्या करूँ, कहाँ चला जाऊँ, कैसे मेरे मन को शान्ति मिल सकती है ?"

उक्त प्रकार से सोचते हुये मेरा वह दिन अत्यन्त कष्ट के साथ किसी तरह व्यतीत हुआ। सूर्य के डूब जानेपर मैं उद्वेग के साथ निरुत्साह होकर अपने परिवार को लेकर उसी मठ में पुनः घुस गया।

मेरे परिजनों के शब्द को सुनकर ताम्रचूड पुनः उस जर्जर बांस से भिक्षा पात्र को ठोकने लगा।

अथासावभ्यागतः प्राह—"सखे! किमद्यापि निःशङ्को न निद्रां गच्छसि ?"

स आह—"भगवन्! भूयोऽपि समायातः सपरिवारः स दुष्टात्मा मूषकः! तद्भयाज्जर्जरवंशेन भिक्षापात्रं ताडयामि।"

ततो विहस्याभ्यागतः प्राह—"सखे! मा भैषीः। वित्तेन सह गतोऽस्य कूर्दनोत्साहः। सर्वेषामपि जन्तूनामियमेव स्थितिः। उक्तञ्च—

यदुत्साही सदा मर्त्यः पराभवति यज्जनान्।
यदुद्धतं वदेद्वाक्यं तत्सर्वं वित्तजं बलम्॥ ८९॥

व्याख्या—अभ्यागतः = अतिथिः, मा भैषीः = भयं मा कुरु, वित्तेन सह = धनेन सह,

मर्त्यः=मनुष्यः, जनान्=लोकान्, पराभवति=तिरस्करोति, उद्धतं=सगर्वं, वित्तजं=धनजं बलं भवतीति ॥ ८९ ॥

हिन्दी—ताम्रचूड की क्रिया को देखकर उस अभ्यागत ने पूछा—"सखे! क्या अब भी तुम निःशङ्क होकर नहीं सो सकते हो?"

उसने कहा—"भगवन्! फिर वही दुष्ट चूहा अपने परिवार को लेकर आ गया है। उसी के भय से इस जर्जर बांस से भिक्षापात्र को ठोक रहा हूँ।"

उसकी बात को सुनकर अभ्यागत ने हँसते हुये कहा—"मित्र! अब भय न करो। धन के साथ ही उसके कूदने का उत्साह चला गया है। सभी प्राणियों की यही स्थिति होती है। कहा भी गया है कि—

जिसके कारण मनुष्य सदा उत्साहयुक्त रहता है, दूसरों का तिरस्कार करता है और औद्धत्य के साथ बातचीत करता है, वह धन का ही बल होता है ॥ ८९ ॥

अथाऽहं तच्छ्रुत्वा कोपाविष्टो भिक्षापात्रमुद्दिश्य विशेषादुत्कूर्दितोऽप्राप्त एव भूमौ निपतितः। तच्छ्रुत्वासौ मे शत्रुर्विहस्य ताम्रचूडमुवाच—"भोः! पश्य कौतूहलम्! उक्तञ्च—

अर्थेन बलवान्सर्वोऽप्यर्थयुक्तश्च पण्डितः।
पश्यैनं मूषकं व्यर्थं स्वजातेः समतां गतम् ॥ ९० ॥

तत्स्वपिहि त्वं गतशङ्कः। यदस्योत्पतनकारणं तदावयोर्हस्तगतं जातम्। अथवा साध्विदमुच्यते—

दंष्ट्राविरहितः सर्पो मदहीनो यथा गजः।
तथार्थेन विहीनोऽत्र पुरुषो नामधारकः ॥" ९१ ॥

व्याख्या—कोपाविष्टः=क्रोधविह्वलः, विशेषात्=प्रयत्नतः, कौतूहलं=कौतुकम्। अर्थेन=धनेन, व्यर्थम्=अर्थरहितं, स्वजातेः=मूषकस्य, समतां=तुल्यतां, गतं=प्राप्तम् ॥ ९० ॥ नामधारकः=केवलं नाम्ना पुरुषो भवति ॥ ९१ ॥

हिन्दी—उस अतिथि के वाक्य को सुनकर क्रोधातुर होकर मैं उस भिक्षापात्र को लक्ष्य करके विशेष प्रयत्न के साथ ऊपर कूदा, किन्तु उसको विना पाये ही भूमि पर गिर पड़ा। मेरे गिरने की ध्वनि को सुनकर मेरे शत्रु ने ताम्रचूड से कहा—"मित्र! उस दृश्य को देखो! कहा गया है कि—

धन के ही कारण लोग बलवान् होते हैं और धनी व्यक्ति ही पण्डित माना जाता है। धनहीन हुए इस चूहे को देखो कि धन की गर्मी समाप्त होते ही यह अपनी जाति वालों की कोटि में आ गया है ॥ ९० ॥

अतः तुम निःशङ्क होकर सो जाओ। इसके कूदने का जो कारण था वह हम लोगों के हाथ में आ चुका है। किसी ने ठीक ही कहा है कि—

विषयुक्त दाँतों के अभाव में सर्प और मद के अभाव में गज जैसे सामान्य कोटि में आ

जाते हैं। ( केवल नाममात्र के लिए ही वे सर्प और गज रह जाते है ), उसीप्रकार धन के अभाव में पुरुष भी केवल नाममात्र के लिये ही पुरुष रह जाता है" ॥ ९१ ॥

तच्छ्रुत्वाहं मनसा विचिन्तितवान्—अहो, सत्यमाह ममैष शत्रुः। यतो ममाङ्गुलिमात्रमपि कूर्दनशक्तिर्नास्ति, तद्धिगर्थहीनस्य पुरुषस्य जीवितम्! उक्तञ्च—

अर्थेन च विहीनस्य पुरुषस्याल्पमेधसः।
उच्छिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा ॥ ९२ ॥
यथा काकयवाः प्रोक्ता यथारण्यभवास्तिलाः।
नाममात्रा न सिद्ध्यै स्युर्धनहीनास्तथा नराः ॥ ९३ ॥

व्याख्या—अङ्गुलिमात्रमपि = अङ्गुलिपर्यन्तमपि, शक्तिः = बलं, जीवितं = जीवनम्। अल्पमेधसः = मन्दबुद्धेः, उच्छिद्यन्ते = विनश्यन्ति, ग्रीष्मे = ग्रीष्मकाले, कुसरितः = कुनद्यः, शुष्कतां व्रजन्तीति भावः ॥ ९२ ॥ काकयवाः = यवविशेषाः, अरण्यभवाः = वनोद्भवाः, सिद्ध्यै = कार्याय ॥ ९३ ॥

हिन्दी—उस अभ्यागत की बात को सुनकर मैंने भी अपने मन में इस बात को सोचा कि यह मेरा शत्रु ठीक कहता है। एक अंगुल भी कूदने की शक्ति मुझ में नहीं हैं। अतः अर्थहीन पुरुषों का जीवन व्यर्थ है। कहा भी गया है कि—

धनहीन पुरुषों की बुद्धि इतनी क्षीण हो जाती है कि उसकी क्रियायें ग्रीष्मकालिक छोटी नदियों की तरह स्वयं विनष्ट हो जाया करती हैं ॥ ९२ ॥

जैसे काकयव ( जंगली जौं ) तथा जङ्गली तिल केवल नाममात्र के ही लिये होते हैं, उनका कोई उपयोग नहीं होता; उसीप्रकार निर्धन व्यक्तियों का जीवन भी व्यर्थ ही होता है ॥ ९३ ॥

सन्तोऽपि नहि राजन्ते दरिद्रस्येतरे गुणाः।
आदित्य इव भूतानां श्रीर्गुणानां प्रकाशिनी ॥ ९४ ॥
न तथा बाध्यते लोके प्रकृत्या निर्धनो जनः।
यथा द्रव्याणि सम्प्राप्य तैर्विहीनः सुखे स्थितः ॥ ९५ ॥

व्याख्या—इतरे = अन्ये, गुणाः = लोकोपकारकगुणाः, सन्तोऽपि = वर्तमानाः, श्रीः = लक्ष्मीः, भूतानां = जनानां, गुणानां, प्रकाशिनी भवति, यथादित्यो लोकानां प्रकाशको भवति ॥ ९४ ॥ प्रकृत्या = स्वभावेन, निर्धनः = दरिद्रः, न बाध्यते = न पीड्यते, यथा सुखे स्थितो जनः पश्चाद् धनेन विना पीड्यते ॥ ९५ ॥

हिन्दी—अन्य गुणों के होने पर भी निर्धन व्यक्ति सुशोभित नहीं होते हैं। जैसे—सूर्य विश्व का प्रकाशक होता है, उसीप्रकार लक्ष्मी ( धन ) ही मनुष्य के गुणों की प्रकाशित होती है ॥ ९४ ॥

स्वभाव से ही निर्धन व्यक्ति उतना दुःख नहीं पाता जितना कि पहले धनी

होकर सुख का उपभोग कर लेने के पश्चात् निर्धन हो जाने के कारण दुःख का अनुभव करता है ॥ ९५ ॥

शुष्कस्य कीटखातस्य वह्निदग्धस्य सर्वतः ।
तरोरप्यूषरस्थस्य वरं जन्म न चार्थिनः ॥ ९६ ॥
शङ्कनीया हि सर्वत्र निष्प्रतापा दरिद्रता ।
उपकर्तुमपि प्राप्तं निःस्वं सन्त्यज्य गच्छति ॥ ९७ ॥

**व्याख्या**—कीटखातस्य = कीटभक्षितस्य, ऊषरस्थस्य = मरुप्रदेशे जातस्य, तरोः = वृक्षस्य, जन्म वरम् । अर्थिनः = याचकस्य, जन्म न वरमिति भावः ॥ ९६ ॥ निष्प्रतापा = प्रभावहीना, दरिद्रता = धनहीनता, सर्वत्र शङ्कनीया भवति, उपकर्तुम् = उपकाराय, प्राप्तं = समागतमपि, निःस्वं = दरिद्रं, लोकः सन्त्यजतीति भावः ॥ ९७ ॥

**हिन्दी**—शुष्क, कीटभक्षित, अग्नि से जले हुये एवं मरु भूमि में स्थित वृक्ष का जन्म कथञ्चित् अच्छा समझा जा सकता है, किन्तु याचक व्यक्ति का जीवन अच्छा नहीं समझा जाता ॥ ९६ ॥

प्रभावहीन दरिद्रता सर्वत्र शङ्कनीय ही होती है। उपकार के लिये आये हुये व्यक्ति का भी निर्धन होने के कारण लोग परित्याग कर देते हैं। कोई भी उसका आदर नहीं करता ॥ ९७ ॥

उन्नम्योन्नम्य तत्रैव निर्धनानां मनोरथाः ।
हृदयेष्वेव लीयन्ते विधवास्त्रीस्तनाविव ॥ ९८ ॥
व्यक्तेऽपि वासरे नित्यं दौर्गत्यतमसावृतः ।
अग्रतोऽपि स्थितो यत्नान्न केनापीह दृश्यते ॥ ९९ ॥

**व्याख्या**—निर्धनानां मनोरथाः = दरिद्राणा मनोरथाः, हृदयेष्वेव उन्नम्योन्नम्य = उत्थायोत्थाय, लीयन्ते । यथा = विधवायाः स्तनौ = कुचौ, हृदयेष्वेव विलीयेते ॥ ९८ ॥ व्यक्ते = सुप्रकाशितेऽपि, वासरे = दिवसे, दौर्गत्यतमसावृतः = दारिद्र्यान्धकाराच्छन्नः (दौर्गत्यरूपेणान्धकारेणावृतः), यत्नात् = विशेषात्, अग्रतः = पुरतः, स्थितोऽपि, केनापि = लोकेनेत्यर्थः, न दृश्यते = नावलोक्यते ॥ ९९ ॥

**हिन्दी**—विधवा स्त्री के स्तनों की भाँति दरिद्र व्यक्तियों के मनोरथ भी उनके हृदय में ही उठते और विलीन हो जाते हैं। वे कभी भी सफल नहीं हो पाते ॥ ९८ ॥

स्पष्ट दिन के होनेपर भी दरिद्रतारूपी अन्धकार से आच्छादित व्यक्ति प्रयत्नपूर्वक लोगों के समक्ष स्थिर रहनेपर भी किसी की दृष्टि में नहीं आता। (लोग उसको देखते हुये भी उसकी उपेक्षा कर देते हैं) ॥ ९९ ॥

**एवं विलप्याहं भग्नोत्साहस्तन्निधानं गण्डोपधानीकृतं दृष्ट्वा व्यर्थश्रमः स्वं दुर्गं प्रभाते गतः । ततश्च मद्भृत्याः प्रभाते गच्छन्तो मिथो जल्पन्ति–अहो, असमर्थोऽयमुदरपूरणेऽस्माकम् । केवलमस्य पृष्ठलग्नानां बिडालादिभ्यो विपत्तयः । तत्किमनेनाराधितेन ?**

उक्तञ्च—

यस्सकाशान्न लाभः स्यात्केवलाः स्युर्विपत्तयः।
स स्वामी दूरतस्त्याज्यो विशेषादनुजीविभिः॥" १००॥

व्याख्या—विलप्य=प्रलप्य, भग्नोत्साहः=नष्टोत्साहः, गण्डोपधानीकृतं=कपोलोपधानीकृतं (उपधीयते इत्युपधानं, कपोलस्याधस्तात् स्थापितमिति भावः) व्यर्थश्रमः=व्यर्थोद्योगः, मिथः=परस्परं, जल्पन्ति=कथयन्ति, उदरपूरणे=भोजनप्रदाने, पृष्ठलग्नानाम्=अनुगच्छतां, विडालादिभ्यः=मार्जारादिभ्यः, विपत्तयः=आपत्तयः। आराधितेन=सेवनेन। अनुजीविभिः=अनुचरैः॥ १००॥

हिन्दी—उक्तप्रकार से विलाप करने के पश्चात् जब मैंने उस निधान को संन्यासी के तकिये के नीचे रखा हुआ देखा तो उत्साहहीन होकर और अपने परिश्रम को व्यर्थ समझकर मैं प्रातःकाल होनेपर अपने विल में लौट आया। मुझे देखकर मेरे अनुचरगण इधर-उधर आते-जाते हुये मेरे प्रति उपेक्षा का भाव दिखाकर आपस में कहने लगे कि अब यह हम लोगों को भोजन देने में असमर्थ हो चुका है। अब इसके पीछे-पीछे घूमने से केवल बिल्ली आदि का भय मात्र ही प्राप्त हो सकता है, अतः इसका अनुगमन करने से क्या लाभ है? कहा भी गया है कि—

जिस स्वामी का अनुगमन करने से लाभ की आशा न हो, प्रत्युत विपत्ति की ही सम्भावना हो, उस स्वामी को छोड़ देना ही अनुचरों के लिये हितकर होता है॥ १००॥

एवं तेषां वचांसि मार्गे शृण्वन् स्वदुर्गं प्रविष्टोऽहम्। यावन्निर्धनत्वात्तत्परिजनमध्यात् कश्चिदपि मम न संमुखेऽभ्येति, तावन्मया चिन्तितम्—अहो, धिगियं दरिद्रता। अथवा साध्विदमुच्यते—

मृतो दरिद्रः पुरुषो मृतं मैथुनमप्रजम्।
मृतमश्रोत्रियं श्राद्धं मृतो यज्ञस्त्वदक्षिणः॥" १०१॥

एवं मे चिन्तयतस्ते भृत्या मम शत्रूणां सेवका जाताः। ते च मामेकाकिनं दृष्ट्वा विडम्बनां कुर्वन्ति।

व्याख्या—परिजनमध्यात्=परिवारमध्यात्, संमुखे=दृष्टिपथे। मृतः=नष्टः (व्यर्थ), अप्रजं=सन्तानशून्यं, मैथुनं=स्त्रीप्रसङ्गः, अश्रोत्रियं=शास्त्रज्ञैः ब्राह्मणैः, शून्यं, श्राद्धं=पितृकर्म, अदक्षिणः=दक्षिणारहितः॥ १०१॥ एकाकिनं=सेवकादिरहितं, विडम्बनाम्=उपहासम्।

हिन्दी—मार्ग में अनुचरों के उपर्युक्त वाक्य को सुनता हुआ मैं अपने बिल में घुस गया। मेरी निर्धनता के कारण जब मेरे कुटुम्ब के सदस्यों में से कोई भी मेरे सामने नहीं आया तो मैं अपने मन में सोचने लगा कि इस दरिद्रता को धिक्कार है। अथवा ठीक ही कहा गया है कि—

निर्धन व्यक्ति का जीवन व्यर्थ है। वह जीवित रहनेपर भी मरे हुये के ही समान होता है। सन्तान की उत्पत्ति यदि न होती हो तो स्त्री-प्रसङ्ग करना व्यर्थ है। कर्मकाण्डादि को

जाननेवाले ब्राह्मणों के अभाव में श्राद्धक्रिया व्यर्थ हो जाती है और बिना दक्षिणा के यज्ञ करना भी व्यर्थ ही होता है ॥ १०१ ॥

इधर मैं चिन्तित होकर सोच रहा था और उधर मेरे सेवकों ने मुझे छोड़कर मेरे शत्रुओं का आश्रय ग्रहण कर लिया था। मुझे एकाकी देखकर वे मेरा उपहास किया करते थे।

अथ मयैकाकिना योगनिद्रां गतेन भूयो विचिन्तितम्—"यत्तस्य कुतपस्विनः समाश्रयं गत्वा तद्गण्डोपधानवर्तिकृतां वित्तपेटां शनैः शनैर्विदार्य तस्य निद्रावशङ्गतस्य स्वदुर्गं तद्वित्तमानयामि, येन भूयोऽपि मे वित्तप्रभावेणाधिपत्यं पूर्ववद्भविष्यति। उक्तञ्च—

व्यथयन्ति परं चेतो मनोरथशतैर्जनाः।
नानुष्ठानैर्धनैर्हीनाः कुलजा विधवा इव ॥ १०२ ॥

व्याख्या—एकाकिना = एकेन मया, योगनिद्रां = ध्यानभावं, कुतपस्विनः = परिव्राजकापसदस्य, समाश्रयं = निवासस्थानं, गण्डोपधानवर्तिकृतां = गण्डोपधाने स्थापितां, वित्तपेटां = धनमञ्जूषां, विदार्य = खण्डयित्वा, निद्रावशङ्गतस्य = सुप्तस्य, वित्तप्रभावेण = धनप्रभावेण। धनैर्हीनाः = दरिद्राः, मनोरथशतैः = मनोगतकामनादिभिः, चेतः = हृदयं, व्यथयन्ति = पीडयन्ति, नानुष्ठानैः = न च कार्यरूपेण परिणतैः स्वमनोरथैः पीडयन्ति (स्वमनोरथं कार्यरूपेण विपरिणमयितुं न शक्नुवन्ति) यथा—सत्कुलोद्भवा विधवा स्त्री वासनादिभिः स्वहृदयं पीडयितुं शक्नोति न च पुरुषप्रसङ्गेन प्रभवतीति)।

हिन्दी—एकाकी मैंने ध्यानस्थ होकर पुनः सोचा कि क्यों न मैं उस कुतपस्वी के मठ में चलकर उसके तकिये के नीचे रक्खी हुई वित्तपेटिका को धीरे-धीरे काटकर उसके सो जाने के बाद उस धन को बिल में उठा ले आऊँ; जिससे पुनः उस धन के प्रभाव से इन चूहों पर मेरा आधिपत्य स्थापित हो जाय। कहा भी गया है कि—

दरिद्र व्यक्ति अपनी असङ्ख्य कामनाएँ करके केवल अपने हृदय को दुःखी बना सकते हैं, किन्तु उनकी पूर्ति करके सुखलाभ नहीं कर सकते। जैसे—कुलीन विधवा स्त्री अपने हृदय में वासना के विभिन्न भावों को अङ्कित करके अपने दुःख को बढ़ा सकती है, किन्तु वासना की पूर्ति करके हृदय को शान्त नहीं कर सकती है ॥ १०२ ॥

दौर्गत्यं देहिनां दुःखमपमानकरं वरम्।
येन स्वैरपि मन्यन्ते जीवन्तोऽपि मृता इव ॥ १०३ ॥
दैन्यस्य पात्रतामेति पराभूतेः परं पदम्।
विपदामाश्रयः शश्वद् दौर्गत्यकलुषीकृतः ॥ १०४ ॥
लज्जन्ते बान्धवास्तेन संबन्धं गोपयन्ति च।
मित्राण्यमित्रतां यान्ति यस्य न स्युः कपर्दकाः ॥ १०५ ॥

व्याख्या—दौर्गत्यं = निर्धनत्वं, देहिनां = जनानां, परमापमानकरं = तिरस्कारं = तिरस्कारजनकं, दुःखं भवति, येन स्वैरपि = स्वकीया जना अपि, तान् जीवन्तोऽपि मृता इव मन्यन्ते ॥ १०३ ॥ निर्धनो जनः, दैन्यस्य = दीनतायाः, पराभूतेः = पराभवस्य (तिरस्कारादेः),

पात्रतां=विषयताम्, एति=गच्छति। दौर्गत्यकलुषीकृतः=दरिद्रत्वपापपीडितो जनः, शश्वत्=निरन्तरमेव, विपदामाश्रयः=दुःखानां स्थानं भवति ॥ १०४ ॥ तेन=दरिद्रेण, बान्धवाः=स्वकीयाः=कुटुम्बिनः, लज्जन्ते=लज्जामनुभवन्ति, सम्बन्धं=स्वसम्बन्धं, गोपयन्ति, अमित्रतां=शत्रुतां, यान्ति=गच्छन्ति, कपर्दकाः=काकिण्यः (कौड़िया) ॥ १०५ ॥

हिन्दी—दरिद्रता मनुष्य के लिये सबसे अपमानकर तथा दुःखद वस्तु होती है। दरिद्रता के कारण ही अपने सगे सम्बन्धीजन मनुष्य के जीवित रहने पर भी उसको मृत के ही समान समझते हैं ॥ १०३ ॥

निर्धनता के कारण व्यक्ति दीनता और तिरस्कार का विषय बन जाता है। निर्धनता रूपी पाप से कलुषित हुआ व्यक्ति आपत्तियों का आश्रय-सा बन जाता है। आपत्तियाँ निरन्तर उसे घेरे रहती है ॥ १०४ ॥

कुटुम्ब के सदस्य भी निर्धन व्यक्ति को देखकर उसकी निर्धनता के कारण उससे लज्जा का अनुभव करते हैं और अपने सम्बन्ध को छिपाया करते हैं। जिससे पास कौड़ियां (धन) नहीं होती हैं उसके मित्र भी शत्रु बन जाते हैं ॥ १०५ ॥

मूर्तं लाघवमेवैतदपायानामिदं गृहम्।
पर्यायो मरणस्यायं निर्धनत्वं शरीरिणाम् ॥ १०६ ॥
अजाधूलिरिव त्रस्तैर्मार्जनीरेणुवज्जनैः।
दीपखट्वोत्थच्छायेव त्यज्यते निर्धनो जनः ॥ १०७ ॥
शौचावशिष्टयाप्यस्ति किञ्चित्कार्यं क्वचिन्मृदा।
निर्धनेन जनेनैव न तु किञ्चित्प्रयोजनम् ॥ १०८ ॥

व्याख्या—मूर्तं=मूर्तिमत्, लाघवं=लघुत्वम्, अपायानां=विपदां, विपदां, गृहं=भवनम्, आश्रयः। मरणस्य=निधनस्य, पर्यायः=प्रतिरूपं, निर्धनत्वं=धनहीनत्वम् ॥ १०६ ॥ त्रस्तैः=भयभीतैः, अजाधूलिरिव=अजायाः पादधूलिरिव, मार्जनीरेणुवत्=शोधन्याः समुत्थितधूलिरिव, खट्वा=मञ्चकः, छायेव त्यज्यते=परित्यज्यते। धर्मशास्त्रवचनादजापादोत्थिता धूली, मार्जनीधूली, दीपमञ्चकयोश्छाया च त्याज्या भवतीति ॥ १०७ ॥ शौचावशिष्टया=करशौचावशिष्टया=करशोधनादवशिष्टया, मृदा=मृत्तिकया, कार्यं=प्रयोजनं, (भवति, किन्तु) निर्धनेन किञ्चित्प्रयोजनं न भवतीति ॥ १०८ ॥

हिन्दी—मनुष्यों के लिए दरिद्रता लघुता की व्यक्त मूर्ति होती है और आपत्तियों का तो घर ही होती है। इसे मृत्यु का अपर पर्याय कहा गया है ॥ १०६ ॥

बकरी के पैर से उठने वाली तथा मार्जनी (झाड़ू) से उठने वाली धूल, दीप-छाया तथा चारपाई की छाया देखकर जैसे लोग भयभीत हो उठते हैं और उससे बचने के लिये दूर भागते हैं, उसी प्रकार निर्धन व्यक्ति को भी देखकर उससे बचने के लिए लोग दूर भाग जाया करते हैं ॥ १०७ ॥

हाथ और पैर धोने से अवशिष्ट बची हुई मिट्टी का भी कथञ्चित् कभी कोई प्रयोजन हो सकता है, किन्तु निर्धन व्यक्ति से कभी किसी का कोई प्रयोजन नहीं पड़ता ॥ १०८ ॥

अधनो दातुकामोऽपि सम्प्राप्तो धनिनां गृहम्।
मन्यते याचकोऽयं धिग्दारिद्र्यं खलु देहिनाम् ॥ १०९ ॥

अतो वित्तापहारं विदधतो यदि मे मृत्युः स्यात्तथापि शोभनम्। उक्तञ्च—

स्ववित्तहरणं दृष्ट्वा यो हि रक्षत्यसून्नरः।
पितरोऽपि न गृह्णन्ति तद्दत्तं सलिलाञ्जलिम् ॥ ११० ॥

तथा च—

गवार्थे ब्राह्मणार्थे च स्त्रीवित्तहरणे तथा।
प्राणांस्त्यजति यो युद्धे तस्य लोकाः सनातनाः ॥ १११ ॥

व्याख्या—अधनः=निर्धनः, दातुकामोऽपि=दातृरूपेणापि, याचकोऽयं=प्रतिग्रहार्थमागतोऽयम्, इति मन्यते=स्वीक्रियते ॥ १०९ ॥ वित्तापहारं=धनापहरणं, विदधतः=कुर्वतः। असून्=प्राणान्, रक्षति, तद्दत्तं सलिलाञ्जलिं=जलाञ्जलिम् ॥ ११० ॥ सनातनाः=शाश्वतिकाः, स्वर्गलोकाः ॥ १११ ॥

हिन्दी—निर्धन व्यक्ति यदि किसी धनिक के यहाँ वस्तु देने के लिये भी जाता है, तो वह धनिक यही मानता है कि यह याचक है, कुछ मांगने के लिए ही आया है। अतः मनुष्य की दरिद्रता को धिक्कार है ॥ १०९ ॥

धन को चुराते समय यदि मेरी मृत्यु भी हो गयी ( यदि मैं मार डाला गया ) तो भी उत्तम ही होगा। कहा भी गया है कि—

अपने धन का अपहरण देखते हुए भी जो व्यक्ति प्राणों की रक्षा करता है और कोई प्रतिविधान नहीं करता, उस व्यक्ति के द्वारा दी गयी जलाञ्जलि को पितर भी स्वीकार नहीं करते ॥ ११० ॥

और भी—गौ ब्राह्मण की रक्षा के लिये तथा स्त्री और धन को अपहृत होते हुए देखकर उनकी रक्षा के लिये एवं युद्ध करते हुए जो व्यक्ति अपने प्राणों का परित्याग करता है, उसको सनातन लोक में स्थान मिलता है ॥ १११ ॥

एवं निश्चित्य रात्रौ तत्र गत्वा निद्रावशमुपागतस्य पेटायां यावन्मया छिद्रं कृतं तावत्प्रबुद्धो दुष्टतापसः। ततश्च जर्जरवंशप्रहारेण शिरसि ताडितः कथञ्चिदायुषः सावशेषतया निर्गतोऽहं न मृतश्च। उक्तञ्च—

प्राप्तव्यमर्थं लभते मनुष्यो, देवोऽपि तं लङ्घयितुं न शक्तः।
तस्मान्न शोचामि न विस्मयो मे, यदस्मदीयं न हि तत्परेषाम्" ॥ ११२॥

काककूर्मौ पृच्छतः—"कथमेतत्"? हिरण्यक आह—

व्याख्या—तापसः=तपस्वी, पेटायां=मञ्जूषायां=प्राप्तव्यं=लभ्यम्, देवो=विधिः,

लङ्घयितुं=समुल्लङ्घयितुं ( उलङ्घन करने में ), शक्तः=समर्थः । न शोचामि=शोकं न करोमि, न विस्मयः=न चाश्चर्यं करोमीति ॥ ११२ ॥

हिन्दी—संन्यासी के सिरहाने में रक्खे हुए धन को चुराने का निश्चय करने के पश्चात् रात्रि में मैं वहाँ गया और उस सोये हुये संन्यासी की पेटिका को काटकर अभी मैं उसमें रक्खे हुए धन को चुराने की तैयारी ही कर रहा था कि वह दुष्ट सन्यासी जाग गया। जागते ही उसने जर्जर वांस से मेरे शिर पर प्रहार किया। आयु शेष रहने के कारण कथंचित् मैं वहाँ से निकलकर भागा और मरने से बच गया। कहा भी गया है कि—

मिलने वाली वस्तु मनुष्य को अवश्य मिलती है। विधाता भी उसका उल्लंघन नहीं कर सकता। अतएव किसी वस्तु के विनष्ट हो जाने पर मैं दुःखी नहीं होता और किसी वस्तु के अनायास मिल जाने पर आश्चर्य भी नहीं करता। क्योंकि—जो वस्तु हमारी होगी वह हमें मिलेगी ही, वह दूसरों को नहीं मिल सकती है और दूसरों की वस्तु हमें नहीं मिल सकती" ॥ ११२ ॥

काक और कूर्म ने पूछा—"यह कथा कैसी है ?"

हिरण्यक ने कथा को आरम्भ करते हुए कहा—

## [ ४ ]

## ( वणिकपुत्र-कथा )

अस्ति कस्मिंश्चिन्नगरे सागरदत्तो नाम वणिक्। तत्सूनुना रूपकशतेन विक्रीयमाणः पुस्तको गृहीतः। तस्मिंश्च लिखितमस्ति—

प्राप्तव्यमर्थं लभते मनुष्यो, देवोऽपि तं लङ्घयितुं न शक्तः।
तस्मान्न शोचामि न विस्मयो मे, यदस्मदीयं न हि तत्परेषाम् ॥ ११३ ॥

व्याख्या—तत्सूनुना=तस्य पुत्रेण, रूपकशतेन=रूप्यकशतेन ( एक सौ रुपये में )।

हिन्दी—किसी नगर में सागरदत्त नामका एक वणिक् रहता था। उसके लड़के ने एकबार सौ रुपये में बिकनेवाली एक पुस्तक खरीदी। उस पुस्तक में लिखा कि—जो वस्तु जिसको मिलने वाली होती है, उसे अवश्य मिलनी है। उस वस्तु की प्राप्ति को विधाता भी रोक नहीं सकता। अतएव मैं किसी वस्तु के विनष्ट हो जाने पर न दुःखी होता हूँ और न किसी वस्तु के अनायास मिल जाने पर आश्चर्य ही करता हूँ। क्योंकि—जो वस्तु दूसरों मिलने वाली होगी वह हमें नहीं मिल सकती और जो हमें मिलने वाली होगी वह दूसरों के हाथ मे जा नहीं सकती ॥ ११३ ॥

तद्दृष्ट्वा सागरदत्तेन तनुजः पृष्टः—"पुत्र ! कियता मूल्येनैष ग्रन्थो गृहीतः ?"।
सोऽब्रवीत्—"रूपकशतेन।"

तच्छ्रुत्वा सागरदत्तोऽब्रवीत्—"धिङ्मूर्ख ! त्वं लिखितैकश्लोकं रूपकशतेन यद्

गृह्णासि, एतया बुद्ध्या कथं द्रव्योपार्जनं करिष्यसि? तदद्यप्रभृति त्वया मे गृहे न प्रवेष्टव्यम्।" एवं निर्भर्त्स्य गृहान्निःसारितः।

व्याख्या—तनुजः = पुत्रः, बुद्ध्या = धिया, द्रव्योपार्जनं = धनोपार्जनम्, अद्य प्रभृति = अद्यतः, न प्रवेष्टव्यं = नागन्तव्यम्। निर्भर्त्स्य = तिरस्कारपूर्वकं निन्दां विधाय, निःसारितः = अपसारितः।

हिन्दी—उस पुस्तक को देखकर सागरदत्त ने अपने पुत्र से पूछा—"पुत्र! इस पुस्तक को तुमने कितने में खरीदा है?"

उत्तर में उसने कहा—"एक सौ रुपये में।"

उसकी बातको सुनकर सागरदत्त ने कहा—"अरे मूर्ख! लिखे हुए एक श्लोक को जब तुम एक सौ रुपये में खरीदते हो, तो इस बुद्धि से तुम वित्तोपार्जन क्या करोगे? अतः आज से तुम मेरे घर में प्रवेश न करना।" इस प्रकार से उसकी भर्त्सना करने के बाद उसने उसको अपने घर से निकाल दिया।

स च तेन निर्वेदेन विप्रकृष्टं देशान्तरं गत्वा किमपि नगरमासाद्यावस्थितः। अथ कतिपयदिवसैस्तन्नगरनिवासिना केनचिदसौ पृष्टः—"कुतो भवानागतः? किं नामधेयो वा? इति।

असावब्रवीत्—"प्राप्तव्यमर्थं लभते मनुष्यः।" अथान्येनापि पृष्टेनानेन तथैवोत्तरं दत्तम्। एवं यः कश्चित्पृच्छति तस्येदमेवोत्तरं ददाति। एवञ्च तस्य नगरस्य मध्ये "प्राप्तव्यमर्थं" इति प्रसिद्धं नाम जातम्।

व्याख्या—निर्वेदेन = कष्टेन, विप्रकृष्टं = दूरतरं, कतिपयदिवसैः = कतिपयैरहोभिः, कुतः = कस्मात्।

हिन्दी—पिता की भर्त्सना से दुःखित होकर वह वणिक्-पुत्र अपने नगर को छोड़कर दूर चला गया और किसी नगर में जाकर रहने लगा। कुछ दिनों के पश्चात् उस नगर के किसी निवासी ने उससे पूछा—"आप कहाँ से आये हैं? आप का क्या शुभ नाम है?"

उत्तर में उसने कहा—"मनुष्य अपने प्राप्तव्य को ही प्राप्त करता है।"

पुनः दूसरे व्यक्ति के पूछने पर भी उसने वह उत्तर दिया। इस प्रकार जो भी उससे पूछता था उसे वही उत्तर दिया करता था। यहाँतक कि उस नगर में "प्राप्तव्य-अर्थ" नाम से ही वह प्रसिद्ध भी हो गया।

अथ राजकन्या चन्द्रवती नामाभिनवरूपयौवनसम्पन्ना सखीद्वितीयैकस्मिन्महोत्सवदिवसे नगरं निरीक्षमाणास्ति। तत्रैव च कश्चिद्राजपुत्रोऽतीवरूपसम्पन्नो मनोरमश्च कथमपि तस्या दृष्टिगोचरं गतः। तद्दर्शनसमकालमेव कुसुमबाणहतया तया निजसख्यभिहिता—"सखि! यथा किलानेन समागमो भवति, तथाद्य त्वया यतितव्यम्।"

व्याख्या—सखीद्वितीया = स्वसख्यनुगता ("आलिः सखी वयस्या इत्यमरः") मनोरमः =

दर्शनीयः, दृष्टिगोचरं=प्रत्यक्षं, कुसुमबाणहतया=कामबाणपीडितया, तया=राजदुहितया, समागमः=सङ्गमः, यतितव्यं=प्रयत्नं कार्यमिति।

हिन्दी—एक बार किसी उत्सव के दिन चन्द्रवती नाम की राजकन्या अपनी सहेली के साथ नगर का निरीक्षण करने के लिये निकली हुई थी। नगर-निरीक्षण के समय अत्यन्त सुन्दर तथा मनोहर कोई राजकुमार किसी प्रकार से उस राजकन्या की दृष्टि में आ गया। उसको देखते ही उस राजकन्या ने कामदेव के बाण से पीड़ित होकर अपनी सखी से कहा—"सखि! इस राजकुमार के साथ जैसे भी मेरा समागम हो सके उसप्रकार का प्रयत्न तुमको करना चाहिये।"

एवं च श्रुत्वा सा सखी तत्सकाशं गत्वा शीघ्रमब्रवीत्—यत्—"अहं चन्द्रवत्या तवान्तिकं प्रेषिता भणितञ्च त्वां प्रति तथा यन्मम त्वद्दर्शनान्मनोभवेन पश्चिमावस्था कृता। तद्यदि शीघ्रमेव मदन्तिके न समेष्यसि, तदा मे मरण शरणम्" इति।

तच्छ्रुत्वा तेनाभिहितम्—"यदवश्यं मया तत्रागन्तव्यं, तत्कथय केनोपायेन प्रवेष्टव्यम्?"

अथ सख्याभिहितम्—"रात्रौ सौधावलम्बितया दृढवरत्रया त्वया तत्रारोढव्यम्।"

सोऽब्रवीत्—"यद्येवं निश्चयो भवत्यास्तदहमेवं करिष्यामि।"

इति निश्चित्य सखी चन्द्रवतीसकाशं गता।

व्याख्या—सकाशं=समीपं, तवान्तिकं=तव समीपं, भणितं=कथितं, मनोभवेन =कामेन, पश्चिमावस्था=कामस्य चरमावस्था इति, समेष्यसि=आगमिष्यसि, सौधावलम्बितया =राजभवनावलम्बितया, दृढवरत्रया=स्थूलरज्ज्वा (वरत्रा=चर्ममयी रज्जुः)।

हिन्दी—राजकुमारी की बात को सुनकर उसकी सखी ने राजकुमार के पास तत्काल पहुँचकर कहा—"चन्द्रवती ने मुझे आपके पास भेजा है। आपसे कहने के लिए उसने यह सन्देश भी कहा है कि—आपको देखने से कामदेव ने मेरी स्थिति को अत्यन्त चिन्तनीय बना दिया है। यदि आप शीघ्र मेरे पास नहीं आयेंगे तो मेरे लिए मृत्यु के अतिरिक्त और कोई अन्य उपाय नहीं रह जायगा।"

राजकुमारी के सन्देश को सुनकर राजकुमार ने कहा—'यदि राजकुमारी के पास पहुँचना मेरे लिए अनिवार्य है, तो कहो किस उपाय से मैं महल के भीतर प्रविष्ट हो सकता हूँ"।

सखी ने कहा—"रात्रि के समय राजप्रासाद के नीचे लटकती हुई चमड़े की स्थूल रज्जु के सहारे आप ऊपर चढ़ जाइयेगा।"

राजकुमार ने कहा—"यदि आपकी यही इच्छा है तो मैं आपके आदेश का पालन अवश्य करूँगा।"

राजकुमार के साथ मिलने का निश्चय करने के बाद राजकुमारी की सखी चन्द्रवती के पास लौट आयी।

अथागतायां रजन्यां स राजपुत्रः स्वचेतसा व्यचिन्तयत्—अहो, महदकृत्यमेतत्। उक्तञ्च—

गुरोः सुतां मित्रभार्यां स्वामिसेवकगेहिनीम्।
यो गच्छति पुमाँल्लोके तमाहुर्ब्रह्मघातिनम्॥ ११४॥

अपरञ्च—

अयशः प्राप्यते येन येन चाप्यगतिर्भवेत्।
स्वार्थाच्च भ्रश्यते येन तत्कर्म न समाचरेत्॥ ११५॥

इति सम्यग्विचार्य तत्सकाशं न जगाम।

व्याख्या—रजन्यां = रात्रौ, अकृत्यम् = अनुचितं कर्म, सुतां = पुत्रीं, गेहिनीम् = भार्याम्, ब्रह्मघातिनं = ब्रह्महत्याकारिणम्, आहुरिति॥ ११४॥ येन कार्येण, अयशः अपयशः, दुष्कीर्तिः, अगतिः = अपगतिः, स्वार्थात् = स्वाभिप्रायसिद्धेः, स्वेष्टलाभादित्यर्थः, तत्कर्म = तादृशं कर्म॥ ११५॥ तत्सकाशं = राजकन्यायाः समीपं, न जगाम = न वव्राज।

हिन्दी—रात हो जानेपर उस राजकुमार ने अपने मन में सोचा—"राजकुमारी के साथ समागम करना बहुत बड़ा अनुचित कार्य होगा। कहा भी गया है कि—

गुरु की पुत्री, मित्र की स्त्री, स्वामी अथवा सेवक की स्त्री के साथ समागम करने वाला व्यक्ति ब्रह्मघाती कहा जाता है॥ ११४॥

और भी—जिस कार्य को करने से अपकीर्ति या असद्गति होती हो अथवा स्वार्थ से च्युत होने की सम्भावना हो, उस प्रकार का कार्य नहीं करना चाहिये॥ ११५॥

उक्त बातों का विचार करके वह उस राजकन्या के पास नहीं गया।

अथ प्राप्तव्यमर्थः पर्यटन् धवलगृहपार्श्वे रात्रावलम्बितवरत्रां दृष्ट्वा कौतुकाविष्टहृदयस्तामालम्ब्याधिरूढः। तथा च राजपुत्र्या "स एवायम्" इत्याश्वस्तचित्तया स्नानखादनपानाच्छादनादिना संमान्य तेन सह शयनतलमाश्रितया तदङ्गसंस्पर्शसञ्जातहर्षरोमाञ्चितगात्रयोक्तम्—"युष्मद्दर्शनमात्रानुरक्तया मयात्मा प्रदत्तोऽयम्। त्वद्वर्जमन्यो भर्ता मनस्यपि मे न भविष्यति' इति। तत्कस्मान्मया सह न ब्रवीषि?"।

सोऽब्रवीत्—"प्राप्तव्यमर्थं लभते मनुष्यः।" इत्युक्ते तया अन्योऽयमिति मत्वा धवलगृहादुत्तार्य मुक्तः। स तु खण्डदेवकुले गत्वा सुप्तः।

व्याख्या—धवलगृहपार्श्वे = राजप्रासादस्य पार्श्वे, वरत्रां = चर्ममयीं रज्जुं, कौतुकाविष्टः = कुतूहलयुक्तः सन्, आश्वस्तचित्तया = विश्वस्तचित्तया, खादनं = भोजनं, संमान्य = सत्कृत्य, आत्मा प्रदत्तः = हृदयं समर्पितम्। त्वद्वर्जमन्यः = त्वदतिरिक्तोऽन्यः, धवलगृहात् = राजप्रासादात्, उत्तार्य = भूमावुत्तार्य, खण्डदेवकुले = भग्ने देवालये।

हिन्दी—इधर-उधर घूमता हुआ वह "प्राप्तव्य अर्थ" नाम का वणिक्पुत्र संयोग से उस राजभवन के समीप पहुँच गया और रात्रि में राजप्रसाद के नीचे लटकती हुई उस रस्सी

को देखकर कौतुहलवश उसके सहारे वह उस प्रासाद के ऊपर चढ़ गया। राजपुत्री ने उसको देखकर यह समझा कि यह वही राजकुमार है। अतः विश्वस्त होकर वह उसको स्नान, भोजन, जल तथा वस्त्र आदि देखकर उसका सम्मान करने लगी और अन्त में अपने पलङ्ग पर सुलाकर स्वयं भी उसके साथ सो गयी। एकासनपर सोने के कारण उस वणिक्-पुत्र के शरीर-स्पर्श से रोमाञ्चित होकर उसने कहा—"आपके दर्शनमात्र से ही आपके प्रति अनुरक्त होकर मैंने यह अपना हृदय आपको दे दिया है। आपको छोड़कर अब कोई दूसरा मेरा पति नहीं हो सकेगा। इतना होने पर भी आप मुझसे बोलते नहीं है, क्या बात है?"।

उसने कहा—"मनुष्य प्राप्तव्य वस्तु को प्राप्त कर ही लेता है।"

उस वणिक् पुत्र के उक्त उत्तर को सुनते ही राजकुमारी ने यह समझ लिया कि—यह कोई दूसरा व्यक्ति है। अतः राजप्रसाद से नीचे उतार कर उसे भगा दिया। राजप्रसाद से निकाले जानेपर वह एक टूटे हुए देवमन्दिर में जाकर सो गया।

अथ तत्र कयाचित्स्वैरिण्या दत्तसङ्केतको यावद्दण्डपाशिकः प्राप्तस्तावदसौ पूर्वसुप्तस्तेन दृष्टो, रहस्यसंरक्षणार्थमभिहितश्च—"को भवान्?"

सोऽब्रवीत्—"प्राप्तव्यमर्थं लभते मनुष्यः" इति।

तच्छ्रुत्वा दण्डपाशिकेनाभिहितं यत्—शून्यं देवगृहमिदं, तदत्र मदीयस्थाने गत्वा स्वपिहि।"

तथा प्रतिपद्य स मतिविपर्यासादन्यशयने सुप्तः। अथ तस्यारक्षकस्य कन्या विनयवती नाम रूपयौवनसम्पन्ना कस्यापि पुरुषस्यानुरक्ता सङ्केतं दत्त्वा तत्र शयने सुप्तासीत्।

व्याख्या—स्वैरिण्या = परपुरुषगामिन्या, दत्तसङ्केतकः = कृतमिलनसङ्केतः, दण्डपाशिकः = नगररक्षकः (दण्डपाशहस्तः कश्चिद्राजपुरुषः), रहस्यसंरक्षणार्थं = स्वरहस्यगोपनार्थं मदीयस्थाने = मदीये शयने, प्रतिपद्य = स्वीकृत्य, मतिविपर्यासात् = मतिविपर्ययात्, आरक्षकस्य = नगररक्षकस्य।

हिन्दी—संयोग से किसी व्यभिचारिणी स्त्री के सङ्केत से नगर का एक रक्षक भी उसी मन्दिर में उस स्त्री से मिलने के लिये आ पड़ा। प्राप्तव्य-अर्थ को पहले से ही वहाँ सोया हुआ देखकर उसने अपने कृत्य को छिपाने के उद्देश्य से प्राप्तव्य-अर्थ से पूछा—"आप कौन है?"

प्राप्तव्य-अर्थ ने कहा—"मनुष्य अपने प्राप्तव्य अर्थ को ही प्राप्त करता है।"

उसके उत्तर को सुनकर उस सुरक्षाधिकारी ने कहा—"यह तो निर्जन स्थान है, तुम मेरे स्थानपर जाकर सो जाओ।"

सुरक्षाधिकारी के कथन को उसने स्वीकार तो कर लिया किन्तु अर्धनिद्रित होने के कारण भ्रमवश वह किसी दूसरे के स्थान पर जाकर सो गया।

उस सुरक्षाधिकारी की कन्या विनयवती जो युवती हो चुकी थी, किसी पुरुष से

प्रेम करती थी। अतएव उस व्यक्ति को वहाँ आने का संकेत देकर उस स्थानपर सोयी हुई थी।

अथ सा तमायान्तं दृष्ट्वा "स एवास्मत्सद्वल्लभः" इति रात्रौ घनतरान्धकारव्यामोहितोत्थाय भोजनाच्छादनादिक्रियां कारयित्वा गान्धर्वविवाहेनात्मानं विवाहयित्वा तेन समं शयने स्थिता विकसितवदनकमला तमाह—"किमद्यापि मया सह विश्रब्धं भवान्न ब्रवीति ?"।

सोऽब्रवीत्—"प्राप्तव्यमर्थं लभते मनुष्यः।" इति श्रुत्वा तया चिन्तितं यत्—"कार्यमसमीक्षितं क्रियते तस्येदृक्फलविपाको भवति" इति। एवं विमृश्य सविषादया तया निःसारितोऽसौ।

व्याख्या—वल्लभः = प्रियः, व्यामोहिता = मोहमुपगता, (भ्रमयुक्ता), तेन समं = प्राप्तव्यार्थेन सह, विकसितवदनकमला = सञ्जातरोमाञ्चा (विकसिताङ्गी), विश्रब्धं = विगतभयः, (विश्वस्तः) असमीक्षतम् = अविचारितं, फलविपाकः = परिणामः, विमृश्य = विचार्य, सविषादया = चिन्ताकुलया, निःसारितः = अपसारितः।

हिन्दी—उसको अपनी ओर आते हुए देखकर सुरक्षाधिकारी की कन्या ने यह समझा कि—यही मेरा प्रियतम है। रात्रि के उस सघन-अन्धकार में भ्रमाभिभूत होकर उसको देखते ही वह सहसा उठकर खड़ी हो गयी और भोजन तथा वस्त्रादि का प्रबन्ध करने के पश्चात् उसने उसके साथ अपना गान्धर्व-विवाह कर लिया। पुनः उसके साथ पर्यङ्कपर सोने के बाद कामातुर होकर उसने पूछा—"क्या बात है कि अब भी आप निश्चिन्त होकर मुझसे बातचीत नहीं कर रहे हैं ?"।

उत्तर में उस वणिक् ने कहा—"मनुष्य अपने प्राप्तव्य-अर्थ को प्राप्त करता है।"

उसकी उक्त बात को सुनते ही वह चिन्तातुर होकर सोचने लगी कि बिना सोचे-विचारे हुए कार्य को करने का ऐसा ही फल होता है। उक्त प्रकार से पश्चात्ताप करने के पश्चात् दुःखित होकर उसने उस वणिक्पुत्र को अपने घर से निकाल दिया।

स च यावद्वीथीमार्गेण गच्छति, तावदन्यविषयवासी वरकीर्तिर्नाम वरो महता वाद्यशब्देनागच्छति। प्राप्तव्यमर्थोऽपि तैः सह गन्तुमारब्धवान्। अथ यावत्प्रत्यासन्ने लग्नसमये राजमार्गासन्नश्रेष्ठिद्वारे रचितवेदिकायां कृतकौतुकमङ्गलवेशा वणिक्सुता तिष्ठति, तावन्मदमत्तो हस्त्यारोहकं हत्वा प्रणश्यज्जनकोलाहलेन लोकमाकुलयंस्तमेवोद्देशं प्राप्तः। तं च दृष्ट्वा सर्वे वरानुयायिनो वरेण सह प्रणश्य दिशो जग्मुः।

व्याख्या—वीथीमार्गेण = नगररथ्यापथेन, अन्यविषयवासी = अन्यराज्यनिवासी, (परदेशवासीति भावः) प्रत्यासन्ने = सन्निकटस्थे, लग्नसमये = मुहूर्तकाले, वेदिकायां = मण्डपवेदिकायां, कृतकौतुकमङ्गलवेशा = विहितविवाहोचितमङ्गलवेषा, वणिक्सुता = वणिक्पुत्री, हस्ती = गजः, आरोहकं = हस्तिपकं (महावत को), प्रणश्यज्जनकोलाहलेन = पलायमानानां

जनानां शब्देन, लोकं=जनसमूहम्, आकुलयन्=व्याकुलयन्, तमेवोद्देशं=तमेव प्रदेशं, वरानुयायिनः=वरपक्षीयाः, प्रणश्य=तत्स्थानं परित्यज्य, दिशो जग्मुः=इतस्ततो जग्मुः।

**हिन्दी**—वहाँ से निकाले जाने पर वह एक नगरवीथी से जा ही रहा था कि उधर से कोई अन्य राज्य का निवासी वरकीर्ति नामक वर गाजे-बाजे के साथ बड़े धूमधाम से अपनी बारात लिये हुए आ पहुँचा। प्राप्तव्य-अर्थ भी उसकी बारात में सम्मिलित हो गया और बारातियों के साथ-साथ चलने लगा। मुहूर्त्त के सन्निकट आ जाने पर प्रमुख सड़क के किनारे सेठ के दरवाजे पर बनाये गये मण्डप में विवाहोचित माङ्गलिक वेश में उस सेठ की कन्या ज्योंही आकर बैठी त्योंही उधर से एक मदमत्त गज अपने महावत को मारकर इधर-उधर भागनेवाले जनसमुदाय के कोलाहल से सम्पूर्ण जनसमूह को व्याकुल करता हुआ उस मण्डप के पास आ पहुँचा। उस मदमत्त गज को देखकर वर के साथ आये हुये लोग वर को लेकर इधर-उधर भाग गये।

**अथास्मिन्नवसरे भयतरललोचनामेकाकिनीं कन्यामवलोक्य "मा भैषीः; अहं परित्राता" इति सुधीरं स्थिरीकृत्य दक्षिणपाणौ सङ्गृह्य महासाहसिकतया प्राप्तव्यमर्थः परुषवाक्यैर्हस्तिनं निर्भर्त्सितवान्।**

**ततः कथमपि दैवयोगादपयाते हस्तिनि यावत्ससुहृद्बान्धवो वरकीर्तिरतिक्रान्ते लग्नसमये समागच्छति तावद्वधूरन्येन हस्ते गृहीता तिष्ठति। तद्दृष्ट्वा वरकीर्तिनाऽभिहितम्—"भोः श्वसुर! विरुद्धमिदं त्वयानुष्ठितं यन्मह्यं प्रदाय कन्यान्यस्मै प्रदत्ता" इति।**

**व्याख्या**—भयतरललोचनां=भयकातराक्षीं, (भयेन तरले=चञ्चले लोचने यस्यास्ताम्) परित्राता=रक्षकः, सुधीरं=धैर्यपूर्वकं, स्थिरीकृत्य=समाश्वास्य, महासाहसिकतया=महता साहसेन, परुषवाक्यैः=कठोरवाक्यैः, निर्भर्त्सितवान्=भर्त्सयामास। दैवयोगात्=दैवात्, अपयाते=गते, अतिक्रान्ते=व्यतीते, लग्नसमये=मुहूर्त्ते विरुद्धम्=अनुचितम्, अनुष्ठितं=कृतम्।

**हिन्दी**—उपर्युक्त स्थिति में भय से कातर तथा एकाकिनी उस कन्या को देखकर प्राप्तव्य-अर्थ ने उसके पास जाकर कहा—"डरो मत, मैं तुम्हारा रक्षक हूँ।" इस प्रकार से धैर्यपूर्वक उसको सान्त्वना देकर अपने दाहिने हाथ से उसको पकड़ लिया और साहस के साथ अत्यन्त कठोर शब्दों में उस गज को डाँटा।

किसी प्रकार संयोग से उस गज के चले जाने पर जब वह वरकीर्ति अपने मित्रों एवं सगे-सम्बन्धियों के साथ पुनः उस मण्डप में आया तो मुहूर्त्त का समय व्यतीत हो चुका था और उसकी वधू को एक दूसरा व्यक्ति अपने हाथ से पकड़े हुये खड़ा था। उक्त स्थिति को देखकर वरकीर्ति ने अपने श्वसुर को सम्बोधित करके कहा—"श्वसुर महोदय! आपने यह उचित कार्य नहीं किया है कि अपनी इस कन्या को एकबार मुझे देने के बाद पुनः दूसरे को दे दिया।"

**सोऽब्रवीत्—"भोः! अहमपि हस्तिभयपलायितो भवद्भिः सहायातो, न जाने**

किमिदं वृत्तम्।" इत्यभिधाय दुहितरं प्रष्टुमारब्धवान्—"वत्से! न त्वया सुन्दरं कृतम्, तत्कथ्यतां कोऽयं वृत्तान्तः?"

साऽब्रवीत्—"यदहमनेन प्राणसंशयाद्रक्षिता, तदेनं मुक्त्वा मम जीवन्त्या नान्यः पाणिं ग्रहीष्यति" इति।

अनेन वार्ताव्यतिकरेण रजनी व्युष्टा। अथ प्रातस्तत्र सञ्जाते महाजनसमवाये तं वार्ताव्यतिकरं श्रुत्वा राजदुहिता तमुद्देशमागता। कर्णपरम्परया श्रुत्वा दण्डपाशिकसुतापि तत्रैवागता। अथ तं महाजनसमवायं श्रुत्वा राजापि तत्रैवाजगाम, प्राप्तव्यमर्थं प्राह च—"भो! विश्रब्धं कथय, कीदृशोऽसौ वृत्तान्तः?"

अथ सोऽब्रवीत्—"प्राप्तव्यमर्थं लभते मनुष्यः" इति।

व्याख्या—अभिधाय = उक्त्वा, प्राणसंशयात् = जीवनसन्देहात्, मुक्त्वा = परित्यज्य, जीवन्त्याः = जीवनं धारयन्त्याः, पाणिं = करं, वार्ताव्यतिकरेण = वार्ताप्रसङ्गेन (कथनोपकथनेन), रजनी = निशा, व्युष्टा = समतिक्रान्ता। महाजनसमवाये = जनसमूहे (भीड़ हो जाने पर), राजदुहिता = राजपुत्री, कर्णपरम्परया = श्रोत्रपरम्परया।

हिन्दी—उसके श्वसुर ने कहा—"महाशय, हाथी के भय से मैं भी तो आप लोगों के साथ ही भाग गया था और आप लोगों के साथ ही आया भी हूँ, मुझे भी यह ज्ञात नहीं है कि—यहाँ क्या घटना घटी है"। यह कहकर वह पुनः कन्या से पूछने लगा—"बेटी तुमने यह अच्छा कार्य नहीं किया। अतः ठीक ठीक बता दो कि यहाँ क्या घटना घटी है?"

कन्या ने कहा—"यतः इन्होंने आज मुझे मृत्यु से बचाया है, अतः इनको छोड़कर मेरी जीवित-दशा में कोई भी दूसरा व्यक्ति मेरा पाणिग्रहण नहीं कर सकता।"

इसी कहा-सुनी में वह रात्रि व्यतीत हो गयी। दूसरे दिन प्रातःकाल वहाँ भीड़ लग जानेपर उस विवाद को सुनकर वह राजपुत्री भी वहाँ आ गयी। कर्णपरम्परया उस विवाद को सुनकर नगररक्षक की वह कन्या भी वहीं चली आयी। उस एकत्रित भीड़ के समाचार को सुनकर राजा भी वहीं चला आया। आते ही प्राप्तव्य-अर्थ से राजा ने पूछा—"निर्भय होकर कहो, क्या वृत्तान्त है?"

प्राप्तव्य-अर्थ ने उत्तर में कहा—"मनुष्य प्राप्तव्य अर्थ को ही प्राप्त करता है।"

राजकन्या स्मृत्वा प्राह—"देवोऽपि तं लङ्घयितुं न शक्तः" इति।

ततो दण्डपाशिकसुताऽब्रवीत्—"तस्मान्न शोचामि न विस्मयो मे" इति।

तमखिललोकवृत्तान्तमाकर्ण्य वणिक्सुताऽब्रवीत्—"यदस्मदीयं नहि तत्परेषाम्" इति।

अभयदानं दत्वा राजा पृथक्-पृथग्वृत्तान्ताञ्ज्ञात्वाऽवगततत्त्वस्तस्मै प्राप्तव्यमर्थाय स्वदुहितरं सबहुमानं ग्रामसहस्रेण समं सर्वालङ्कारपरिवारयुतां दत्वा, "त्वं मे पुत्रोऽसि" इति नगरविदितं तं यौवराज्येऽभिषिक्तवान्। दण्डपाशिकेनापि स्वदुहिता स्वशक्त्या वस्त्रदानादिना सम्भाव्य प्राप्तव्यार्थाय प्रदत्ता।

व्याख्या—अखिलं=सम्पूर्णम्, अवगततत्त्वः=विदितवृत्तान्ततत्त्वः, स्वदुहितरं स्वकन्यां, सर्वालङ्कारपरिवारयुतां=सर्वाभरणभूषितां भृत्यादिभिरनुगतां च, नगरविदितं=सर्वविदितं, (सुप्रसिद्धमिति यावत्), सम्भाव्य=सत्कृत्य।

हिन्दी—उसके द्वारा कथित बात को स्मरण करके राजकन्या ने कहा—"विधाता भी उसे रोक नहीं सकता है।"

राजकन्या की बात को सुनकर सुरक्षाधिकारी की कन्या ने भी कहा—"अतएव मैं विगत बात के लिये पश्चात्ताप नहीं करती हूँ और उस बातपर मुझे विस्मय भी नहीं होता।"

उपर्युक्त सम्पूर्ण वृत्तान्त को सुनने के बाद उस वणिक् कन्या ने कहा—"जो वस्तु मेरी है, वह दूसरों की नहीं हो सकती।"

राजा ने उन कन्याओं के वृत्तान्त को उनसे पृथक्-पृथक् पूछकर और उस वृत्तान्त के तत्त्व को जानकर पूर्ण आश्वस्त होने के बाद उनको अभयदान देते हुये अपनी कन्या को सम्पूर्ण अलङ्कारों एवं दासदासियों से युक्त करके एक हजार ग्रामों के साथ अत्यन्त आदरपूर्वक प्राप्तव्य-अर्थ को समर्पित कर दिया और यह कहकर कि—"आज से तुम मेरे पुत्र हो गये", सर्वविदित उस वणिक्कुमार को युवराज के पद पर अभिषिक्त कर दिया। नगर-सुरक्षाधिकारी ने भी यथाशक्ति अपनी कन्या को वस्त्रादि से सुसज्जित करके उसका सत्कार करते हुये प्राप्तव्य अर्थ को समर्पित कर दिया।

**अथ प्राप्तव्यमर्थेनापि स्वीयपितृमातरौ समस्तकुटुम्बावृतौ तस्मिन्नगरे संमानपुरःसरं समानीतौ। अथ सोऽपि स्वगोत्रेण सह विविधभोगानुपभुञ्जानः सुखेनावस्थितः।**

**अतोऽहं ब्रवीमि—"प्राप्तव्यमर्थं लभते मनुष्यः" इति।**

व्याख्या—पितृमातरौ=पितरौ, समस्तकुटुम्बावृतौ=परिवारान्वितौ, सोऽपि=वणिक्पुत्रोऽपि, स्वगोत्रेण=स्वकुलेन सह।

हिन्दी—उन कन्याओं के साथ विवाह करने के बाद प्राप्तव्य-अर्थ ने अपने माता-पिता को भी सान्वय उसी नगर में बुला लिया। अपने गोत्र वालों के साथ वह स्वयं भी अनेक प्रकार के भोगों का उपभोग करता हुआ सुखपूर्वक वहाँ रहने लगा।

उक्त कथा समाप्त करने के बाद हिरण्यक ने कहा—"इसीलिये मैं कहता हूँ कि—"मनुष्य अपने प्राप्तव्य-अर्थ को ही प्राप्त करता है।"

**तदेतत्सकलं सुख-दुःखमनुभूय परं विषादमुपगतोऽनेन मित्रेण त्वत्सकाशमानीतः। तदेतन्मे वैराग्यकारणम्।"**

**मन्थरक आह—"भद्र! भवति सुहृदयमसन्दिग्धं, यत् क्षुत्क्षामोऽपि शत्रुभूतं त्वां भक्ष्यस्थाने स्थितमेवं पृष्ठमारोप्यानयति, न मार्गेऽपि भक्षयति। उक्तञ्च यतः—**

**विकारं याति नो चित्तं वित्ते यस्य कदाचन।**
**मित्रं स्यात्सर्वकाले च कारयेन्मित्रमुत्तमम्॥ ११६॥**

विद्वद्भिः सुहृदामत्र चिह्नैरेतैरसंशयम्।
परीक्षाकरणं प्रोक्तं होमाग्नेरिव पण्डितैः॥ ११७॥

तथा च—

आपत्काले तु सम्प्राप्ते यन्मित्रं मित्रमेव तत्।
वृद्धिकाले तु सम्प्राप्ते दुर्जनोऽपि सुहृद्भवेत्॥ ११८॥

व्याख्या—विषादमुपगतः=दुःखमुपगतः (खिन्नचित्तः), असन्दिग्धं=निःसंशयं, क्षुत्क्षामः=क्षुधातुरः, भक्ष्यस्थाने स्थितं=भक्ष्यभूतम्। वित्ते=धने, (विभवे), विकारं= विकृतिं, सर्वकाले=सर्वदा॥ ११६॥ आपत्काले=विपत्तौ, वृद्धिकाले=समुन्नतौ, दुर्जनः= दुष्टः॥ ११८॥

हिन्दी—उपर्युक्त सभी सुख-दुःखों को स्वयं भोगने के पश्चात् उनसे खिन्न होकर मैं इस मित्र के साथ आपके पास चला आया हूँ। मेरे वैराग्य का यही कारण है।"

मन्थरक ने कहा—"भद्र! तुम्हारा यह सच्चा मित्र है, इसमें सन्देह नहीं। क्योंकि— क्षुधातुर होते हुए भी इसने स्वशत्रु तथा भक्ष्यभूत तुमको अपनी पीठपर चढ़ाकर यहां तक पहुँचा दिया। मार्ग में स्वाधीन पाकर भी इसने तुम्हारा भक्षण नहीं किया। कहा भी गया है कि—

मित्र के धन एवं ऐश्वर्यादि को देखकर जिसका हृदय विकृत नहीं होता, वही सच्चा मित्र होता है और मनुष्य को सच्चे मित्रों का संग्रह अवश्य करना चाहिए॥ ११६॥

जैसे विद्वान् लोग होमाग्नि की परीक्षा करते हैं, उसी प्रकार उक्त चिह्नों के द्वारा मित्रों की परीक्षा अवश्य करनी चाहिये॥ ११७॥

तथा च—जो व्यक्ति आपत्तिकाल में भी मित्र बना रहता है और अपने पूर्व व्यवहार में किसी प्रकार का अन्तर नहीं आने देता वही सच्चा मित्र होता है। मनुष्य के समृद्धि-काल में तो दुर्जन भी उसका मित्र बना रहता है॥ ११८॥

तन्ममाप्यद्यास्य विषये विश्वासः समुत्पन्नो, यतो नीतिविरुद्धेयं मैत्री मांसाशिभिर्वायसैः सह जलचराणाम्। अथवा साध्विदमुच्यते—

मित्रं कोऽपि न कस्यापि नितान्तं न च वैरकृत्।
दृश्यते मित्रविध्वस्तात्कार्याद् वैरी परीक्षितः॥ ११९॥

तत्स्वागतं भवतः। स्वगृहवदास्यतामत्र सरस्तीरे। यच्च वित्तनाशो विदेशवासश्च ते सञ्जातस्तत्र विषये सन्तापो न कर्तव्यः। उक्तञ्च—

अभ्रच्छाया खलप्रीतिः सिद्धमन्नं च योषितः।
किञ्चित्कालोपभोग्यानि यौवनानि धनानि च॥ १२०॥

व्याख्या—अस्य=काकस्य, नीतिविरुद्धा=नियमविरुद्धा, (अस्वाभावकीति भावः), मांसाशिभिः=मांसादैः, नितान्तम्=अत्यन्तम्। वैरकृत्=शत्रुः॥ ११९॥ सन्तापः=शोकः।

अभ्रच्छाया = मेघच्छाया, खलप्रीतिः = दुष्टजनप्रीतिः, सिद्धमन्नं = पक्वमन्नं, किञ्चित्कालोपभोग्यानि = अल्पकालोपभोग्यानि ॥ १२० ॥

**हिन्दी**—आज इसके इस कार्य से मेरे हृदय में भी इसके प्रति विश्वास हो गया है। क्योंकि—मांस-भक्षी वायसों और जलचरों की यह मैत्री नीतिविरुद्ध कही गयी है। अथवा, किसी ने यह ठीक ही कहा है कि—

कोई किसी का मित्र नहीं होता और कोई किसी का नितान्त शत्रु भी नहीं होता। प्रायः देखा जाता है कि कार्य की सिद्धि और विनाश से ही मित्र एवं शत्रु की परीक्षा होती है। अर्थात् अच्छे और बुरे कार्यों के करने से ही कोई व्यक्ति किसी का मित्र अथवा शत्रु बनता है ॥ ११९ ॥

अतः आपलोगों का स्वागत है। इस तालाब के किनारे आपलोग अपने घर की तरह निवास कर सकते हैं। आपके धन का जो विनाश हुआ है और जो प्रवास आपको करना पड़ रहा है, उनके विषय में आपको दुःखी नहीं होना चाहिये। कहा भी गया है कि—

बादलों की छाया, दुष्टजनों की प्रीति, पका हुआ अन्न, स्त्रियाँ, यौवन तथा धन, वस्तुयें कुछ ही क्षणों तक उपभोग के योग्य रहती हैं ॥ १२० ॥

अतएव, विवेकिनो जितात्मानो धनस्पृहां न कुर्वन्ति। उक्तञ्च—

सुसञ्चितैर्जीवनवत्सुरक्षितैर्निजेऽपि देहे न नियोजितैः क्वचित्।
पुंसो यमान्तं व्रजतोऽपि निष्ठुरैरेतैर्धनैः पञ्चपदी न दीयते ॥ १२१ ॥

अन्यच्च—

यथामिषं जले मत्स्यैर्भक्ष्यते श्वापदैर्भुवि।
आकाशे पक्षिभिश्चैव तथा सर्वत्र वित्तवान् ॥ १२२ ॥

**व्याख्या**—विवेकिनः = विचारयुक्ताः, जितात्मानो = जितेन्द्रियाः, धनस्पृहां = धनेच्छां, सुसञ्चितैः = सम्यगर्जितैः, जीवनवत् = आत्मवत् ( स्वप्राणवत् ), सुरक्षितैः = कृपणभावेन रक्षितैः, न नियोजितैः = न व्ययीकृतैः, निष्ठुरैः = निर्दयैः, यमान्तं = यमान्तिकं, व्रजतः = गच्छतः, पञ्चपदी = पञ्चपदान्यपि; न दीयते = न गम्यते ॥ १२१ ॥ आमिषं = मांसं, श्वापदैः = सिंहव्याघ्रादिभिः ॥ १२२ ॥

**हिन्दी**—अतएव विचारवान् व्यक्ति तथा आत्मजित् धन की इच्छा नहीं करते। कहा भी गया है कि—

निरन्तर सञ्चित, प्राणों के समान संरक्षित और अपने शरीर के भरण-पोषण आदि में भी कभी व्यय न किये जाने वाले धन से मनुष्य का कोई हित नहीं होता। अन्ततोगत्वा जब मनुष्य परलोकवास के लिये प्रस्थान करने लगता है तो भी उसके द्वारा आत्मवत् संरक्षित वह धन निष्करुण पड़ा रहता है, सहानुभूति में पाँच पद भी साथ नहीं जाता ॥ १२१ ॥

अन्य भी—जैसे मांस को जल में रहने पर मत्स्य, पृथ्वी पर रहने पर श्वापद ( मांसाशी

जीव ) और आकाश में पक्षिगण खाने के लिए सदा प्रस्तुत रहते हैं, उसीप्रकार वित्तवान् व्यक्ति को भी सर्वत्र सभी लोग खाने ( लूटने ) लिए तैयार बैठे रहते हैं ॥ १२२ ॥

निर्दोषमपि वित्ताढ्यं दोषैर्योजयते नृपः।
निर्धनः प्राप्तदोषोऽपि सर्वत्र निरुपद्रवः ॥ १२३ ॥
अर्थानामर्जने दुःखमर्जितानां च रक्षणे।
नाशे दुःखं व्यये दुःखं धिगर्थान् कष्टसंश्रयान् ॥ १२४ ॥
अर्थार्थी यानि कष्टानि मूढोऽयं सहते जनः।
शतांशेनापि मोक्षार्थी तानि चेन्मोक्षमाप्नुयात् ॥ १२५ ॥

व्याख्या—वित्ताढ्यं = धनवन्तं, प्राप्तदोषः = सदोषः, निरुपद्रवः = उपद्रवरहितो भवतीति भावः ॥ १२३ ॥ अर्थानां = वित्तानां, कष्टसंश्रयान् = कष्टाश्रयभूतान् ॥ १२४ ॥ मूढः = मूर्खः, कष्टानि = दुःखानि, मोक्षं = मुक्तिं ( स्वर्गमित्यर्थः ) ॥ १२५ ॥

हिन्दी—धनी व्यक्ति के निर्दोष रहने पर भी राजा उसपर दोषारोपण करता ही रहता है और निर्धन सदोष होने पर भी सर्वत्र उपद्रवरहित होकर आनन्द लिया करता है ॥ १२३ ॥

धन के उपार्जन करने में जितना कष्ट मनुष्य को उठाना पड़ता है, उतना ही उसके संरक्षण में भी दुःख उठाना पड़ता है। एकत्र धन के नष्ट हो जाने पर तो दुःख होता ही है, उसको व्यय करने में भी दुःख हुआ करता है। अतः कष्टाश्रयभूत धन को धिक्कार है ॥१२४॥

धन चाहने वाले मूर्खजन उसके उपार्जनादि में जिन कष्टों को सहते हैं, उन कष्टों का शतांश भी वे यदि मोक्ष के लिये सहते तो मोक्षप्राप्ति कोई दुर्लभ वस्तु नहीं रह जाती। वे अत्यन्त सरलतापूर्वक मोक्ष को प्राप्त कर लेते ॥ १२५ ॥

अपरं विदेशवासजमपि वैराग्यं त्वया न कार्यम्। यतः—

को धीरस्य मनस्विनः स्वविषयः, को वा विदेशः स्मृतो,
यं देशं श्रयते तमेव कुरुते बाहुप्रतापार्जितम्।
यद्दंष्ट्रानखलाङ्गुलप्रहरणः सिंहो वनं गाहते,
तस्मिन्नेव हतद्विपेन्द्ररुधिरैस्तृष्णां छिनत्त्यात्मनः ॥ १२६ ॥

अर्थहीनः परदेशे गतोऽपि यः प्रज्ञावान् भवति, स कथञ्चिदपि न सीदति। उक्तञ्च—

कोऽतिभारः समर्थानां किं दूरं व्यवसायिनाम्।
को विदेशः सविद्यानां कः परः प्रियवादिनाम् ? ॥ १२७ ॥

व्याख्या—विदेशवासजं = परदेशनिवासजं, स्वविषयः = स्वदेशः, बाहुप्रतापार्जितं = स्वबाहुबलार्जितम्, दंष्ट्रानखलाङ्गुलप्रहरणः = नखाद्यायुधजीवी, यद्वनं, गाहते = आश्रयते, हतद्विपेन्द्ररुधिरैः = हतगजरुधिरैः, तृष्णां = पिपासां, छिनत्ति = भिनत्ति ॥ १२६ ॥ न सीदति = पीडां नानुभवति। समर्थानां = शक्तानां, व्यवसायिनां = सोद्यमानां, सुविद्यानां = गृहीतविद्यानां, प्रियवादिनां = मधुरवादिनां, परः = शत्रुः ॥१२७ ॥

सम्पदि यस्य न हर्षो विपदि विषादो रणे च भीरुत्वम्।
तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम्" ॥ १८० ॥

व्याख्या—अस्मद्विधैः=अस्मत्सदृशैः, सत्पुरुषाः=सज्जनाः, व्यसने=विपत्तौ, व्याकुलत्वं=धैर्यशून्यत्वं, नोपयान्ति। विषादः=शोकः, भुवनत्रयतिलकं=त्रिलोकभूषणम् ॥ १८० ॥

हिन्दी—उसकी बात को सुनकर लघुपतनक ने कहा—"भद्र! हम लोगों के रहते हुए तुम्हें इस प्रकार से भयभीत नहीं होना चाहिये। मैं शीघ्र ही हिरण्यक को लेकर आ रहा हूँ। जो सत्पुरुष होते हैं, वे आपत्तिकाल में इस प्रकार से व्याकुल नहीं होते।"
कहा भी गया है कि—

जिस व्यक्ति को सम्पत्तिकाल में हर्ष तथा आपत्तिकाल में विषाद नहीं होता और युद्धस्थल में भीरुता नहीं होती, ऐसे किसी विरले ही त्रैलोक्यभूषण पुरुष को माता जन्म देती है ॥१८०॥

एवमुक्त्वा लघुपतनकश्चित्राङ्गमाश्वास्य यत्र हिरण्यकमन्थरकौ तिष्ठतस्तत्र गत्वा सर्वं चित्राङ्गपाशपतनं कथितवान्। हिरण्यकं च चित्राङ्गपाशमोक्षणं प्रति कृतनिश्चयं पृष्ठमारोप्य भूयोऽपि सत्वरं चित्राङ्गसमीपे गतः।

सोऽपि मूषकमवलोक्य किञ्चिज्जीविताशया संहृष्ट आह—

"आपन्नाशाय विबुधैः कर्तव्याः सुहृदोऽमलाः।
न तरत्यापदं कश्चिद्योऽत्र मित्रविवर्जितः" ॥ १८१ ॥

व्याख्या—आश्वास्य=समाश्वास्य, चित्राङ्गपाशपतनं=चित्राङ्गस्य पाशबन्धनं, भूयोऽपि=पुनरपि, सत्वरं=शीघ्रमेव, जीविताशया=स्वजीवनाशया (जीवित बच जाने की आशा से), संहृष्टः=सञ्जातहर्षः, सुप्रसन्नः सन्। विबुधैः=विद्वद्भिः, आपन्नाशाय=विपन्निवारणाय, अमलाः=निर्व्याजाः, सुहृदः कर्तव्याः ॥ १८१ ॥

हिन्दी—चित्राङ्ग को समझा-बुझाकर आश्वस्त करने के बाद लघुपतनक हिरण्यक और मन्थरक के पास चला आया। उनसे चित्राङ्ग के पाश में फँस जाने का सम्पूर्ण वृत्तान्त सुनाकर चित्राङ्ग के पाश को काटने के लिये दृढ़प्रतिज्ञ हिरण्यक को अपनी पीठपर बैठाकर पुनः तत्काल चित्राङ्ग के पास चला गया।

चित्राङ्ग ने मूषक को देखकर अपने जीवित बच जाने की आशा से प्रसन्न होकर कहा—

"विद्वानों को चाहिये कि वे अपनी विपत्ति के विनाशार्थ सच्चे तथा निर्मल चरित्र वाले व्यक्तियों को अपना मित्र अवश्य बनावें। मित्रों के अभाव में कोई भी व्यक्ति विपत्ति को पार नहीं कर सकता ॥ १८१ ॥

हिरण्यक आह—"भद्र! त्वं तावन्नीतिशास्त्रज्ञो दक्षमतिः, तत्कथमत्र कूटपाशे पतितः"?।

स आह—"भो! न कालोऽयं विवादस्य। तद्यावत्स पापात्मा लुब्धकः समभ्येति तावद् द्रुततरं कर्त्तयेमं मत्पादपाशम्"।

तदाकर्ण्य विहस्याह हिरण्यकः—"किं मय्यपि समायाते लुब्धकाद्बिभेषि ? यतः शास्त्रं प्रति महती मे विरक्तिः सम्पन्ना यद् भवद्विधा अपि नीतिशास्त्रविद एतामवस्थां प्राप्नुवन्ति, तेन त्वां पृच्छामि ।"

व्याख्या—नीतिशास्त्रज्ञः = नीतिशास्त्रविद्, दक्षमतिः = निपुणमतिः, विवादस्य = व्यर्थ-वार्तालापस्य, पापात्मा = पापिष्ठः, कर्तय = छिन्धि, पादपाशं = चरणलग्नं पाशम् । बिभेषि = भयं करोषि, विरक्तिः = वैराग्यम्, एतामवस्थां = पाशबन्धनावस्थां, प्राप्नुवन्ति = आप्नुवन्ति ।

हिन्दी—वहाँ पहुँचकर हिरण्यक ने चित्राङ्ग से पूछा—"भद्र ! तुम तो नीतिशास्त्र के ज्ञाता और निपुणमति हो, तुम कैसे इस कूटपाश में फँस गये ?"।

उसके उत्तर में चित्राङ्ग ने कहा—"मित्र ! यह व्यर्थ बातचीत करने का समय नहीं है। वह पापात्मा लुब्धक जबतक लौटकर वापस नहीं आ जाता, उससे पूर्व ही मेरे पैर में पड़े हुये इस पाश को काट दो।"

उसकी बात को सुनकर हिरण्यक ने हँसकर कहा—"क्या मेरे यहाँ आ जाने के बाद भी तुम उस बहेलिये से डरते हो ? (अब तुम्हें भयभीत नहीं होना चाहिये, किन्तु मेरे एक प्रश्न का उत्तर तो दो)। तुम्हारे जैसे नीतिशास्त्रविद् जन भी इस अवस्था को प्राप्त हो सकते हैं, यह देखकर मुझे शास्त्रों के प्रति बड़ी अश्रद्धा हो गयी है। इसीलिए मैं तुमसे यह पूछ रहा हूँ।"

स आह—"भद्र ! कर्मणा बुद्धिरपि हन्यते । उक्तञ्च—

> कृतान्तपाशबद्धानां दैवोपहतचेतसाम् ।
> बुद्धयः कुब्जगामिन्यो भवन्ति महतामपि ॥ १८२ ॥
> विधात्रा रचिता या सा ललाटेऽक्षरमालिका ।
> न तां मार्जयितुं शक्ताः स्वबुद्ध्याप्यतिपण्डिताः" ॥ १८३ ॥

व्याख्या—कर्मणा = भाग्येन, कृतान्तपाशबद्धानां = यमपाशबद्धानां, दैवोपहतचेतसां = कर्मोपहतचित्तानां, महतां = श्रेष्ठजनानाम्, अपि बुद्धयः = मतयः कुब्जगामिन्यः = वक्रगतयः, भवन्ति ॥ १८२ ॥ विधात्रा = ब्रह्मणा, ललाटे = मस्तके भालपट्टे, रचिता = लिखिता, अक्षर-मालिका = अक्षरपङ्क्तिः, तां = ललाटाक्षरमालिकां, पण्डिताः = विद्वांसोऽपि, मार्जयितुम् = विनाशयितुं, न शक्ताः = न प्रभवन्ति ( समर्था न भवन्तीति भावः ) ॥ १८३ ॥

हिन्दी—उसने कहा—"भद्र ! दुर्भाग्य से बुद्धि भी विनष्ट हो जाती है। ( दुर्भाग्य बुद्धि का भी विनाश कर डालता है ) कहा भी गया है कि—

यमराज जिनको अपने पाश में आबद्ध कर लेता है और जिनका हृदय दुर्भाग्य के द्वारा अपहृत कर लिया जाता है, वे चाहे जितने भी महान् हों उनकी बुद्धि कुटिलगामिनी हो ही जाती है ॥ १८२ ॥

ब्रह्मा जिन पंक्तियों को मनुष्य के ललाट पर लिख देता है, उन पंक्तियों को विद्वान् से भी विद्वान् व्यक्ति भी अपनी बुद्धि के द्वारा नहीं मिटा सकते ॥ १८३ ॥

एवं तयोः प्रवदतोः सुहृद्व्यसनसन्तप्तहृदयो मन्थरकः शनैः शनैस्तं प्रदेशमाजगाम। तं दृष्ट्वा लघुपतनको हिरण्यकमाह—"अहो, न शोभनमापतितम् !"

हिरण्यक आह—"किं स लुब्धकः समायाति ?"।

स आह—"आस्तां तावल्लुब्धकवार्ता, एष मन्थरकः समागच्छति। तदनीतिरनुष्ठितानेन। यतो वयमप्यस्य कारणान्नूनं व्यापादनं यास्यामः। यदि स पापात्मा लुब्धकः समागमिष्यति, तदहं तावत्खमुत्पतिष्यामि। त्वं पुनर्बिलं प्रविश्यात्मानं रक्षयिष्यसि। चित्राङ्गोऽपि वेगेन दिगन्तरं यास्यति। एष पुनर्जलचरः स्थले कथं भविष्यतीति व्याकुलोऽस्मि।"

व्याख्या—प्रवदतः=विवादं कुर्वतः, सुहृद्व्यसनसन्तप्तहृदयः=मित्रदुःखेन दुःखितचित्तः, शोभनं=शुभं, लुब्धकवार्ता=लुब्धकस्यागमनवृत्तान्तः, अनीतिः=अनुचितम्, अनुष्ठिता=विहिता, व्यापादनं=मारणं, खम्=आकाशं, वेगेन=जवेन, दिगन्तरं=दिशान्तरं, जलचरः=जलजीवः, भविष्यति=आत्मनं रक्षयिष्यति, व्याकुलः=समुद्विग्नः।

हिन्दी—अभी वे दोनों (हिरण्यक और चित्राङ्ग) आपस में विवाद ही कर रहे थे कि मित्र के दुःख से दुःखित होकर मन्थरक भी धीरे धीरे उस स्थान पर आ गया। उसको देखकर लघुपतनक ने हिरण्यक से कहा—"मित्र ! यह तो अच्छा नहीं हुआ !"।

हिरण्यक ने पूछा—"क्या वह बहेलिया आ रहा है ?"।

उसने कहा—"बहेलिये के आगमन की बात को छोड़ ही दो, यह मन्थरक भी यहीं चला आ रहा है। यह इसने बहुत अनुचित कार्य किया। क्योंकि—इसी के कारण हम लोग भी मारे जायेंगे। यदि इस बीच में वह दुष्ट व्याध आया तो मैं आकाश में उड़ जाऊँगा। तुम बिल में घुसकर आत्मरक्षा कर लोगे। चित्राङ्ग भी तेजी से भाग कर किसी दिशा में चला जायगा। किन्तु यह जल में चलनेवाला मन्थरक पृथ्वी पर रहकर अपने को कैसे बचा सकेगा !"

अत्रान्तरे प्राप्तोऽसौ मन्थरकः। हिरण्यक आह—"भद्र ! न युक्तमनुष्ठितं भवता यदत्र समायातः। तद्भूयोऽपि द्रुततरं गम्यतां, यावदसौ लुब्धको न समायाति।"

मन्थरक आह—"भद्र किं करोमि, न शक्नोमि तत्रस्थो मित्रव्यसनाग्निदाहं सोढुं, तेनाहमत्रागतः।

व्याख्या—अत्रान्तरे=अस्मिन्नेवावसरे, प्राप्तः=समागतः। मित्रव्यसनाग्निदाहं=सुहृद्दुःखाग्निदाहं (मित्र के विपत्तिरूपी अग्नि के दाह को)।

हिन्दी—इस बीच में मन्थरक भी वहाँ आ गया। उसको देखकर हिरण्यक ने कहा—"भद्र ! आपने यहाँ आकर अच्छा कार्य नहीं किया। जबतक वह बहेलिया न आवे, उससे पूर्व ही शीघ्र आप यहाँ से चले जाँय।"

मन्थरक ने कहा—"भद्र ! मैं क्या करूँ, वहाँ रहकर मित्रकी विपत्ति रूपी अग्नि की

ज्वाला को सह सकना मेरे लिए कठिन था। अतएव मैं भी यहाँ चला आया हूँ।"

अथवा साध्विदमुच्यते—

दयितजनविप्रयोगा वित्तवियोगाश्च केन सह्याः स्युः।
यदि सुमहौषधिकल्पो वयस्यजनसङ्गमो न स्यात्॥ १८४॥
वरं प्राणपरित्यागो न वियोगो भवादृशैः।
प्राणा जन्मान्तरे भूयो भवन्ति न भवद्विधाः"॥ १८५॥

व्याख्या—सुमहौषधिकल्पः = महारसायनसमः, वयस्यजनसङ्गमः = सुहृज्जनसङ्गमः, न स्यात्तर्हि, दयितजनविप्रयोगाः = प्रियजनवियोगाः, वित्तवियोगाः = धननाशाश्च, केन सह्याः = सोढुं शक्याः, स्युः ? ॥ १८४ ॥ भवादृशैः = भवत्सदृशैः सज्जनैः, वियोगापेक्षया प्राणत्यागः = प्राणपरित्यागः, वरम्। यतः प्राणाः, जन्मान्तरेऽपि भवन्ति, किन्तु भवद्विधाः = भवत्सदृशाः, सुहृदो न भवन्तीति भावः" ॥ १८५ ॥

हिन्दी—अथवा, यह ठीक ही कहा गया है कि—

यदि महौषधि के समान मित्रजनों की सङ्गति न हो, तो प्रियजनों के वियोग और धन के नाश से उत्पन्न होने वाले दुःख को सहने में कौन समर्थ हो सकता है ? ॥ १८४ ॥

आप जैसे सज्जन मित्रों के वियोग को सहने की अपेक्षा प्राण-त्यागकर देना अच्छा है। क्योंकि प्राण दूसरे जन्म में भी मिल सकते हैं किन्तु आप जैसे सज्जन मित्र नहीं मिल सकते"॥१८५॥

एवं तस्य प्रवदतः, आकर्णपूरितशरासनो लुब्धकोऽप्युपागतः। तं दृष्ट्वा मूषकेण तस्य स्नायुपाशस्तत्क्षणात्खण्डितः। अत्रान्तरे चित्राङ्गः सत्वरं पृष्ठमवलोकयन् प्रधावितः। लघुपतनको वृक्षमारूढः। हिरण्यकश्च समीपवर्तिबिलं प्रविष्टः।

व्याख्या—आकर्णपूरितशरासनः = कर्णपर्यन्ताकृष्टधनुः, उपागतः = समागतः। तस्य = चित्राङ्गस्य, स्नायुपाशः = चर्मपाशः (तांत के बने हुये पाश को), खण्डितः = कर्तितः।

हिन्दी—अभी वे चारों आपस में बातचीत कर ही रहे थे कि उधर से धनुष की प्रत्यञ्चा को कानतक चढ़ाये हुए वह व्याध भी आ गया। उसको देख कर चूहे ने चित्राङ्ग के पाश को तत्काल काट दिया। मुक्त हो जाने के बाद चित्राङ्ग पीछे को देखता हुआ शीघ्रता के साथ वहाँ से भाग गया। लघुपतनक उड़कर पास के किसी वृक्ष पर चला गया और हिरण्यक समीप के एक बिल में घुस गया।

अथासौ लुब्धको मृगगमनाद् विषण्णवदनो व्यर्थश्रमस्तं मन्थरकं मन्दं मन्दं स्थलमध्ये गच्छन्तं दृष्टवान्। अचिन्तयच्च—"यद्यपि कुरङ्गो धात्रापहृतस्तथाप्ययं कूर्म आहारार्थं सम्पादितः। तदद्यास्यामिषेण मे कुटुम्बस्याहारवृत्तिर्भविष्यति"। एवं विचिन्त्य तं दर्भैः संच्छाद्य धनुषि समारोप्य स्कन्धे कृत्वा गृहं प्रति प्रस्थितः।

व्याख्या—विषण्णवदनः = खिन्नाननः, स्थलमध्ये = भूपृष्ठे, कुरङ्गः = मृगः, धात्रा = ब्रह्मणा, कूर्मः = कच्छपः, आहारार्थम् भोजनार्थं, आमिषेण = मांसेन, कुटुम्बस्य = परिवारस्य, आहारवृत्तिः = भोजनक्रिया, दर्भैः = कुशैः (तृणैः), संच्छाद्य = आच्छाद्य (ढक कर)।

हिन्दी—मृग के भाग जाने से खिन्न होकर मन में अपने परिश्रम को व्यर्थ समझते हुए उस व्याध ने पृथ्वीपर धीरे-धीरे जाते हुए उस कच्छप को देख लिया। उसको देखकर वह अपने मन में सोचने लगा—यद्यपि विधाता ने मृग को मेरे हाथों से छीन लिया फिर भी इस कच्छप को आज के आहार के लिए भेज ही दिया। अतः आज इसी के मांस से मेरे परिवार का भोजन सम्पन्न होगा।" उपर्युक्त बात सोचने के बाद उसने उस कूर्म को तृणों से आच्छादित करके धनुष की नोक में टांग लिया और धनुष को कन्धे पर रखकर वह अपने घर की ओर चल दिया।

अत्रान्तरे तं नीयमानमवलोक्य हिरण्यको दुःखाकुलः पर्यदेवयत्—"कष्टं भोः, कष्टमापतितम्।

एकस्य दुःखस्य न यावदन्तं गच्छाम्यहं पारमिवार्णवस्य।
तावद् द्वितीयं समुपस्थितं मे, छिद्रेष्वनर्था बहुलीभवन्ति ॥ १८६ ॥

व्याख्या—दुःखाकुलः=शोकाकुलः, पर्यदेवयत्=विलापमकरोत्। कष्टमापतितं=दुःखमापतितम्। अर्णवस्य=समुद्रस्य, अनर्थाः=आपत्तयः, बहुलीभवन्ति=वर्धन्ते ॥ १८६ ॥

हिन्दी—उस कच्छप को टांगकर ले जाते हुए देखकर हिरण्यक ने दुःखाकुल होकर विलाप करना प्रारंभ कर दिया। रोते हुए उसने कहा—'ओह! यह कितना बड़ा कष्ट मुझ पर आ पड़ा।

समुद्र के निःसीम किनारे की तरह जबतक मैं एक दुःख के छोर तक पहुँच ही नहीं पाया कि तबतक यह दूसरा भी दुःख मेरे समक्ष आ धमका। यह कथन सच है कि मनुष्य के ऊपर जब कभी आपत्ति आती है तो एक के बाद दूसरी सतत आती ही आती है (उनका अन्त शीघ्र नहीं होता) ॥ १८६ ॥

यावदस्खलितं तावत्सुखं याति समे पथि।
स्खलिते च समुत्पन्ने विषमं च पदे पदे ॥ १८७ ॥
यन्नम्रं सगुणं चापि यन्नापत्सु न सीदति।
धनुर्मित्रं कलत्रं च दुर्लभं शुद्धवंशजम् ॥ १८८ ॥
न मातरि न दारेषु न सोदर्ये न चात्मजे।
विश्रम्भस्तादृशः पुंसां यादृङ् मित्रे निरन्तरे ॥ १८९ ॥

व्याख्या—समे=अविषमे (समतल); पथि=मार्गे, अस्खलितं=स्खलनरहितं, सुखं याति=सुखेन गच्छति। स्खलिते सति पदे-पदे विषमं भवति ॥ १८७ ॥ सगुणं=गुणयुक्तं सरलमिति भावः। आपत्सु=विपत्सु, न-सीदति=दुःखं नानुभवति, न च भग्नता प्रयाति, धनुः=कार्मुकम्, मित्रं=सुहृत्, कलत्रं=स्त्री, शुद्धवंशजं=सुकुलोत्पन्नं शुद्धवंशोद्भवं वा, दुर्लभं=दुष्प्रापं भवति ॥ १८८ ॥ दारेषु=स्त्रीषु, सोदर्ये=सहोदरे, आत्मजे=पुत्रे, विश्रम्भः=विश्वासः, यादृक्=यथा, निरन्तरे=अभिन्ने मित्रे भवतीति भावः ॥ १८९ ॥

हिन्दी—मनुष्य जबतक गिरता नहीं है तबतक मार्गपर समतल भूमि की तरह निःशङ्क चलता रहता है। जब वह एक बार गिर जाता है तो बार-बार गिरता रहता है। वही समतल मार्ग उसके लिए विषम बन जाता है और पद-पद पर उसको ठोकर लगती रहती है॥ १८७॥

जैसे नम्रस्वभाववाली, अच्छे कुल में उत्पन्न और आपत्तिकाल में भी साथ न छोड़ने वाली स्त्री दुर्लभ होती है, उसीप्रकार नम्र दृढ़प्रत्यञ्चायुक्त और आपत्तिकाल में धोखा न देने वाला अच्छे बांस का बना हुआ कार्मुक भी दुर्लभ होता है। ठीक इसी प्रकार विनम्र, सरल, कुलीन तथा आपत्ति में साथ देने वाला मित्र भी दुर्लभ होता है॥ १८८॥

मनुष्य अपने अभिन्न मित्र पर जितना अधिक विश्वास करता है उतना अपनी माता, अपनी स्त्री, अपने सगे भाई तथा अपने पुत्र पर भी विश्वास नहीं करता॥ १८९॥

**यदि तावत्कृतान्तेन मे धननाशो विहितस्तन्मार्गश्रान्तस्य मे विश्रामभूतं मित्रं कस्मादपहृतम्? अपरमपि मित्रं, परं मन्थरकसमं न स्यात्।**

**उक्तञ्च—**

**असम्पत्तौ परो लाभो गुह्यस्य कथनं तथा।**
**आपद्विमोक्षणं चैव मित्रस्यैतत्फलत्रयम्॥ १९०॥**

**तदस्य पश्चान्नान्यः सुहृन्मे। तत्किं ममोपर्यनवरतं व्यसनशरैर्वर्षति हन्त विधिः? यत आदौ तावद् वित्तनाशः, ततः परिवारभ्रंशः, ततो देशत्यागः, ततो मित्रवियोग इति।**

व्याख्या—कृतान्तेन = दैवेन, मार्गश्रान्तस्य = मार्गक्लिन्नस्य, विश्रामभूतं = विश्रामस्थानं, मन्थरकसमं = मन्थरकतुल्यम्। असम्पत्तौ = दारिद्र्ये सति, परो लाभः = परमधनाप्तिः, गुह्यस्य = गुप्तस्य, आपद्विमोक्षणं = कष्टनिवारणं, मित्रस्यत्रीणि फलानि भवन्ति। अनवरतं = सततं निरन्तरमिति यावत्, व्यसनशरैः = विपद्रूपैः बाणैः, विधिः = दैवः।

हिन्दी—यदि विधाता ने मेरे धन का विनाश कर दिया था तो मार्ग में श्रान्त हो जाने पर विश्राम के लिए आश्रयभूत मेरे मित्र को क्यों मुझसे छीन लिया? अन्य भी मित्र होंगे किन्तु मन्थरक के समान मित्र का होना असंभव है। कहा भी गया है कि—

दरिद्रता के समय धनाप्ति की तरह सहायता करना, गोपनीय बातों को कहना और विपत्ति से छुड़ाना—मित्र के द्वारा ये तीन फल प्राप्त होते हैं। (मित्र के तीन मुख्य कार्य होते हैं १—धनाभावकाल में सहयोग देना। २—मित्र की गोपनीय बातों को सुनकर उनका समुचित समाधान करना और ३—विपत्तिकाल में मित्र को विपत्ति से मुक्त करना)॥ १९०॥

मन्थरक के बाद कोई भी मेरा दूसरा मित्र नहीं होगा जो आपत्तिकाल में मेरी सहायता करे। क्यों विधाता मुझपर निरन्तर आपत्तिरूपी बाणों की वृष्टि करता रहता है, यह बात समझ में नहीं आती। सर्वप्रथम तो उसने मेरे धन का नाश किया। पुनः परिवार का विनाश किया, तदनन्तर देशत्याग कराया और अब मित्रवियोग भी करा दिया।

अथवा स्वरूपमेतत्सर्वेषामेव जन्तूनां जीवितधर्मस्य च । उक्तञ्च—

काय: संनिहितापाय: सम्पद: क्षणभङ्गुरा: ।
समागमा: सापगमा: सर्वेषामेव देहिनाम् ॥ १९१ ॥

तथा च—

क्षते प्रहारा निपतन्त्यभीक्ष्णं, धनक्षये दीप्यति जाठराग्नि: ।
आपत्सु वैराणि समुल्लसन्ति, छिद्रेष्वनर्था बहुलीभवन्ति ॥ १९२ ॥

व्याख्या—जन्तूनां=जीवानां, जीवितधर्मस्य=जीवनधारकस्य, काय:=शरीरम्, संनिहितापाय:=सन्निकृष्टविनाशो भवति । सम्पद:=धनानि, क्षणभङ्गुरा:=नश्वरा:, समागमा:=सङ्गमा:, सापगमा:=वियोगयुक्ता:, भवन्तीति भाव: ॥ १९१ ॥ क्षते=क्षतयुक्तेऽङ्गे, प्रहारा:=प्रहरणादिकम् ( चोट ), अभीक्ष्णम्=अनवरतं, निपतन्ति । धनक्षये=धनाभावे सति, जाठराग्नि:=उदराग्नि:, दीप्यति=वर्धते, आपत्सु=विपत्सु, वैराणि=द्वेषभावा: ॥ १९२ ॥

हिन्दी—अथवा, सभी प्राणियों की यही दशा होती है । प्रत्येक जीवधारी आपत्तियों में उलझा रहता है । कहा भी गया है कि—

प्रत्येक देहधारी विनाश के निकट खड़ा रहता है । सम्पत्तियाँ क्षणभङ्गुर होती हैं । समागम ( मिलन ) वियोग से युक्त होता है । सभी प्राणियों की यही दशा होती है ॥ १९१ ॥

और भी—घावयुक्त स्थानपर अनवरत चोट लगती ही रहती है । धनाभावकाल में जठराग्नि और अधिक बढ जाती है । आपत्तिकाल में शत्रुओं की भी सङ्ख्या बढ़ जाती है । सारांश यह कि—आपत्तिकाल में मनुष्य के समक्ष आपत्तियाँ एक के बाद दूसरी निरन्तर आती हीं रहती हैं ॥ १९२ ॥

अहो, साधूक्तं केनापि—

शोकारातिभयत्राणं प्रीतिविश्रम्भभाजनम् ।
केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम् ॥ १९३ ॥

अत्रान्तरे चाक्रन्दपरौ चित्राङ्गलघुपतनकौ तत्रैव समायातौ । अथ हिरण्यक आह—"अहो, किं वृथा प्रलपितेन ? तद्यावदेष मन्थरको दृष्टिगोचरान्न नीयते तावदस्य मोक्षोपायश्चिन्त्यताम्, इति ।

व्याख्या—अराते:=शत्रो:, भयस्य च त्राणं=रक्षणोपायभूतं, प्रीते:=स्नेहस्य, विश्रम्भस्य=विश्वासस्य च, भाजनं=पात्रम् । मित्रमिति अक्षरद्वयात्मकं रत्नं, केन सृष्टं=जनितमिति भाव: ॥ १९३ ॥ आक्रन्दपरौ=विलपन्तौ, दृष्टिगोचरात्=दृष्टिपथाद्, दूरं, न नीयते=न प्राप्यते, मोक्षोपाय:=विमोक्षणोपाय: ।

हिन्दी—अहो, किसी ने यह ठीक ही कहा है कि—

शोक, शत्रु तथा भय से बचानेवाले और प्रेम तथा विश्वास के पात्रभूत मित्ररूपी दो अक्षरों के रत्न को किसने उत्पन्न कर दिया है ? ॥ १९३ ॥

इसी बीच चित्राङ्ग तथा लघुपतनक भी रोते हुए उसी स्थानपर आ गये । उनको

देखकर हिरण्यक ने कहा—"मित्रो! व्यर्थ रोने से क्या लाभ होगा! इस विलाप से कोई लाभ नहीं होनेवाला है। अतः यह बहेलिया मन्थरक को लेकर जब तक दृष्टि से ओझल नहीं हो जाता है उससे पूर्व ही उसके छुड़ाने का उपाय सोच लेना चाहिये।

**उक्तञ्च—**

व्यसनं प्राप्य यो मोहात्केवलं परिदेवयेत्।
क्रन्दनं वर्धयत्येव तस्यान्तं नाधिगच्छति॥ १९४॥
केवलं व्यसनस्योक्तं भेषजं नयपण्डितैः।
तस्योच्छेदसमारम्भो विषादपरिवर्जनम्॥ १९५॥

**अन्यच्च—**

अतीतलाभस्य सुरक्षणार्थं, भविष्यलाभस्य च सङ्गमार्थम्।
आपत्प्रपन्नस्य च मोक्षणार्थं, यन्मन्त्र्यतेऽसौ परमो हि मन्त्रः"॥ १९६॥

**व्याख्या**—परिदेवयेत्=विलपेत्, तेन क्रन्दनं=विलपनं दुःखमित्यर्थः, तस्यान्तं=तस्य समाप्तिः॥ १९४॥ भेषजम्=औषधम्। नयपण्डितैः=नीतिशास्त्रविशारदैः। तस्योच्छेदसमारम्भः=विपद्विनाशोपायारम्भः, विषादस्य=दुःखस्य, परिवर्जनं=त्यागः॥ १९५॥ अतीतलाभस्य=पूर्वकालीनलाभस्य, सङ्गमार्थं=मेलनार्थं, विमोक्षणार्थं=विमोक्षणाय, मन्त्र्यते=विचार्यते, तन्मन्त्रः=परामर्शः, चिन्तितोपायो भवति॥ १९६॥

**हिन्दी**—कहा भी गया है कि—

आपत्ति के आ जानेपर जो व्यक्ति मोह के कारण केवल रोता या विलाप करता है, वह ठीक नहीं करता। क्योंकि विलाप करने से उसका दुःख बढ़ता ही है, उसका अन्त नहीं होता॥ १९४॥

नीति-विशारदों ने आपत्ति की औषध एकमात्र उसको दूर करने के उपाय का आरम्भ करना और दुःख को भूल जाना ही कहा है॥ १९५॥

और भी—अतीतके लाभ की रक्षा, भविष्य के लाभ की प्राप्ति और विपद्ग्रस्त को बचाने के लिए जो उपाय सोचा जाता है या जो परामर्श किया जाता है वही वास्तव में सार्थक और सच्चा परामर्श होता है"॥ १९६॥

**तच्छ्रुत्वा वायस आह—"भो, यद्येवं तत्क्रियतां मद्वचः। एष चित्राङ्गोऽस्य मार्गं गत्वा किञ्चित्पल्वलमासाद्य, तस्य तीरे निश्चेतनो भूत्वा पततु। अहमप्यस्य शिरसि समारुह्य मन्दैश्चञ्चुप्रहारैः शिर उल्लेखयिष्यामि, येनासौ दुष्टलुब्धकोऽमुं मृतं मत्वा चञ्चुप्रहरणप्रत्ययेन मन्थरकं भूमौ क्षिप्त्वा मृगार्थं परिधाविष्यति। अत्रान्तरे त्वया दर्भमयानि पाशानि खण्डनीयानि, येनासौ मन्थरको द्रुततरं पल्वलं प्रविशति।"**

**व्याख्या**—मद्वचः=मद्वचनम्। अस्य=व्याधस्य, पल्वलं=लघुतडागं, निश्चेतनः=गतचेतनः, उल्लेखयिष्यामि=प्रहारं करिष्यामि। अमुं=चित्राङ्गं, मृतं=गतप्राणं, प्रत्ययेन=विश्वासेन, दर्भनिर्मितानि, प्रविशति=गमिष्यति।

**हिन्दी**—हिरण्यक की बात को सुनकर वायस ने कहा—"यदि ऐसी ही बात है,

तो आप लोग मेरे कथनानुसार उपाय करें। चित्राङ्ग बहेलिये के मार्ग में जाकर किसी छोटे तालाब के किनारे निर्जीव बनकर पड़ जाय। मैं इसके शिर पर बैठकर अपनी चोंच से धीरे धीरे उसको खोदता रहूँगा, जिससे यह दुष्ट व्याध चित्राङ्ग को मरा हुआ समझेगा। मेरे खोदने के कारण पूर्ण विश्वस्त होकर वह मन्थरक को जमीन पर रख देगा और मृग को प्राप्त करने के लिये उधर दौड़ेगा। इसी बीच में तुम मन्थरक के दर्भनिर्मित पाश को काट देना, जिससे वह तत्काल उस तालाब में चला जायेगा।"

चित्राङ्ग आह—"भोः! भद्रोऽयं त्वया दृष्टो मन्त्रः। नूनं मन्थरकोऽयं मुक्तो मन्तव्यः, इति। उक्तञ्च—

सिद्धिं वा यदि वासिद्धिं चित्तोत्साहो निवेदयेत्।
प्रथमं सर्वजन्तूनां तत्प्राज्ञो वेत्ति नेतरः॥ १९७॥

तदेवं क्रियताम्" इति।

तथानुष्ठिते स लुब्धकस्तथैव मार्गासन्नपल्वलतीरस्थं चित्राङ्गं वायससनाथमपश्यत्।

व्याख्या—भद्रः=शोभनः, मन्त्रः=परामर्शः। मन्तव्यः=ज्ञातव्यः। सिद्धिं=साफल्यम्, असिद्धिम्=असाफल्यं वा, चित्तोत्साहः=स्वहृदयोत्साह एव, प्रथमं=कार्यारम्भकाले, निवेदयेत्=कथयति, तत्=चित्तोत्साहकथनं, प्राज्ञः=विद्वान्, विज्ञः, वेत्ति=जानाति (ज्ञातुं शक्नोति), नेतरः=नान्यः कश्चिदिति भावः॥ १९७॥ तथानुष्ठिते=तथा कृते सति, वायससनाथं=काकेन सनाथीकृतमिति।

हिन्दी—वायस के कथन को सुनकर चित्राङ्ग ने कहा—"मित्र! तुमने यह बड़ा ही उत्तम उपाय सोचा है। इस उपाय से मन्थरक को अब मुक्त ही समझना चाहिये। कहा भी गया है कि—

किसी भी कार्य की सफलता या असफलता को मनुष्य के हृदय का उत्साह कार्यारम्भकाल में ही बता देता है, किन्तु हृदय के उस कथन को विज्ञजन ही समझ पाते हैं, साधारण जन नहीं समझ पाते॥ १९७॥

हमलोगों को तुम्हारे बताये हुए उपाय को अतिशीघ्र कार्यान्वित कर देना चाहिये।"

उक्त उपाय के कार्यान्वित हो जानेपर व्याध ने तालाब के किनारे निर्जीव पड़े हुये उस मृग को देखा जिसके मस्तकपर वह काक बैठा हुआ था।

तं दृष्ट्वा हर्षितमना व्यचिन्तयत्—"नूनं पाशबन्धनवेदनया वराकोऽयं मृगः सावशेषजीवितः पाशं त्रोटयित्वा कथमप्येतद्वनान्तरं यावत्प्रविष्टस्तावन्मृतः। तद्वश्योऽयं कच्छपः सुयन्त्रितत्वात्। तदेनमपि तावद् गृह्णामि।" इत्यवधार्य कच्छपं भूतले प्रक्षिप्य मृगमुपाद्रवत्। एतस्मिन्नन्तरे हिरण्यकेन वज्रोपमदंष्ट्राप्रहरणेन तद्दर्भवेष्टनं खण्डशः कृतम्। मन्थरकोऽपि तृणमध्यान्निष्क्रम्य समीपवर्तिनं पल्वलं प्रविष्टः। चित्राङ्गोऽप्यप्राप्तस्यापि तस्य, तत उत्थाय वायसेन सह पलायितः।

व्याख्या—हर्षितमनाः=प्रसन्नचित्तः, वेदनया=पीडया, वराकः=दीनः, सावशेष-

जीवनः, त्रोटयित्वा, वश्यः=हस्तगतः, सुयन्त्रितत्वात्=दृढबद्धत्वात्, एनं=मृगं, भूतले=पृथिव्याम्, उपाद्रवत्=अधावत्। वज्रोपमदंष्ट्राप्रहरणेन=वज्रतुल्यदन्तप्रहरणेन (वज्रोपमा दंष्ट्रा एव प्रहरणं यस्य तेन), दर्भवेष्टनं=दर्भावगुण्ठनं, तस्य=व्याधस्य, वायसेन सह=काकेन सह।

हिन्दी—उस मृग को देखकर प्रसन्न मन से वह व्याध सोचने लगा—"पाश के बन्धन से पीड़ित होनेपर भी यह दीन (बेचारा) मृग आयु के शेष रहने से पाश को तोड़कर किसी प्रकार यहां तक भाग अवश्य आया था किन्तु अत्यधिक घायल हो जाने के कारण यहाँ पहुँचते ही मर गया होगा। यह कूर्म तो मेरे वश में है ही, क्योंकि इसको खूब कसकर बांध दिया है। यह कहीं जा तो सकता नहीं। अतः इस मृग को भी ले लेता हूँ।" उक्तप्रकार से सोचने के पश्चात् वह कूर्म को वहीं जमीन पर रख कर और मृग की ओर दौड़ पड़ा। इसी बीच में संगय पाकर हिरण्यक ने अपने वज्रतुल्य दांतों से उस दर्भ की रस्सी को काट दिया। रस्सी के कट जानेपर मन्थरक तृणों के उस आवरण से बाहर निकलकर समीप के तालाब में घुस गया। इधर चित्राङ्ग भी उस व्याध के पहुँचने से पूर्व ही उठकर उस कौवे के साथ भाग गया।

एतस्मिन्नन्तरे विलक्षो विषादपरो लुब्धको निवृत्तो यावत्पश्यति, तावत्कच्छपोऽपि गतः। ततश्च तत्रोपविश्येमं श्लोकमपठत्—

"प्राप्तो बन्धनमप्ययं गुरुमृगस्तावत्त्वया मे हृतः,
सम्प्राप्तः कमठः स चापि नियतं नष्टं तवादेशतः।
क्षुत्क्षामोऽत्र वने भ्रमामि शिशुकैस्त्यक्तः समं भार्यया,
यच्चान्यन्न कृतं कृतान्त! कुरु ते तच्चापि सह्यं मया"॥ १९८॥

एवं बहुविधं विलप्य स्वगृहं गतः।

व्याख्या—विलक्षः=व्याकुलः (सलज्जः), विषादपरः=दुःखितः सन्, बन्धनं प्राप्तोऽपि, गुरुमृगः=महामृगः, त्वया=कृतान्तेन, हृतः=अपहृतः। कमठः=कच्छपः, नियतं=निश्चितमेव, तवादेशतः=तवादेशात्, नष्टः=विनष्टः (पलायितः) शिशुकैः=पुत्रैः, भार्यया=स्वस्त्रियया, त्यक्तः=विरहितः, क्षुत्क्षामः=क्षुधापीडितः, वने=कानने, भ्रमामि=विचरामि। हे कृतान्त! =हे दैव! यच्चान्यन्न कृतं=यच्च न विहितमद्यावधिपर्यन्तम्, तच्चापि कुरु=विधेहि। ते=तव, कृतं सर्वमपि मया=व्याधेन सह्यं=सह्यमेवेति भावः॥ १९८॥ विलप्य=विलापं कृत्वा।

हिन्दी—इसके बाद लज्जित, विकल एवं दुःखित होकर वह बहेलिया वापस लौट आया। वापस आने के बाद देखा, तो वह कूर्म भी चला गया था। तदनन्तर वह खिन्न होकर वहीं बैठ गया और अग्रिम श्लोक को पढ़ने लगा—

"मेरे पाश (बन्धन) में फँसे हुए इस महामृग को तो तुमने पहले ही मुझसे छीन लिया था। इस समय एक कूर्म मिला था, वह भी तुम्हारे आदेश से ही भाग गया। स्त्री तथा पुत्रों से अलग होकर मैं भूखा-प्यासा इस वन में इधर-उधर भटक रहा हूँ। हे कृतान्त!

यह सब तुम्हारा ही किया हुआ हो रहा है। अतः अबतक जो नहीं कर सके हो, वह भी पूर्ण कर लो। तुम जो भी करोगे, मुझे सहना ही पड़ेगा।" उक्त प्रकार से अनेकविध विलाप करने के पश्चात् वह व्याध अपने घर चला गया।

अथ तस्मिन् व्याधे दूरतरं गते, सर्वेऽपि ते काककूर्ममृगमूषकाः परमानन्दभाजः परस्परमालिङ्गय पुनर्जातमिवात्मानं मन्यमानास्तदेव सरः सम्प्राप्य महासुखेन सुभाषितकथागोष्ठीविनोदेन कालं नयन्ति स्म।

एवं ज्ञात्वा विवेकिना मित्रसङ्ग्रहः कार्यः। न च मित्रेण सह व्याजेन वर्तितव्यम्" इति। उक्तञ्च यतः—

यो मित्राणि करोत्यत्र न कौटिल्येन वर्तते।
तैः समं न पराभूतिं संप्राप्नोति कथञ्चन ॥ १९९ ॥

इति महामहोपाध्यायश्रीविष्णुशर्मविरचिते पञ्चतन्त्रे
मित्रसम्प्राप्तिर्नाम द्वितीयं तन्त्रं समाप्तम्।

व्याख्या—परमानन्दभाजः=परमानन्दं प्राप्ताः, पुनर्जातमिव=पुनर्लब्धजीवितमिव, मन्यमानाः=स्वीकुर्वन्तः; कालं नयन्ति=समयं यापयन्ति। विवेकिना=बुद्धिमता, मित्रसङ्ग्रहः=सुहृत्सञ्चयः, कार्यः=कर्तव्यः। व्याजेन=कपटेन, न वर्तितव्यं=न स्थातव्यं, न व्यवहर्तव्यमिति यावत्। कौटिल्येन=कुटिलभावेन, कपटेनेत्यर्थः, तैः=मित्रैः, समं=साकं, पराभूतिं=शत्रुकृतं पराभवं तिरस्कारं वा, न सम्प्राप्नोति=न लभते ॥ १९९ ॥

पूर्णा छात्रविबोधाय टीका सरलया गिरा।
तन्त्रस्यास्य द्वितीयस्य मूलभावानुवादिनी ॥ १ ॥

हिन्दी—उस व्याध के कुछ दूर चले जानेपर वे सभी काक, कूर्म, मृग तथा मूषक आनन्दयुक्त होकर आपस में एक दूसरे का आलिङ्गन करने लगे और उपर्युक्त सङ्कटों से बच जाने के कारण अपना द्वितीय जीवन स्वीकार करते हुए पुनः उस तालाब के किनारे चले आये; जहां से पहले गये थे। तालाब के किनारे पूर्ववत् एकत्र होकर वे पुनः विभिन्न कथाओं एवं गोष्ठियों द्वारा अपना मनोविनोद करके सुखपूर्वक समय व्यतीत करने लगे।

उपर्युक्त प्रसङ्गों से यह शिक्षा मिलती है कि विचारवान् व्यक्तियों को मित्रों का सङ्ग्रह अवश्य करना चाहिये और कभी भी मित्रों के साथ कपट-भाव नहीं रखना चाहिये। यतः कहा भी गया है कि—

जो व्यक्ति मित्रों का सङ्ग्रह करता है और उनके साथ कपटभाव नहीं रखता वह उन मित्रों की सहायता के कारण कभी भी शत्रुओं द्वारा तिरस्कृत अथवा विजित नहीं होता है ॥ १९९ ॥

इति श्री पं० वासुदेवात्मजेन श्रीश्यामाचरणपाण्डेयेन हिन्दी-संस्कृतव्याख्याभ्यां विभूषितं
पञ्चतन्त्रस्य द्वितीयं मित्रसम्प्राप्तिसंज्ञकं तन्त्रं सम्पूर्णम् ॥

* शुभमस्तु *

—:*:—

॥ श्रीः ॥

# पञ्चतन्त्रे

## : काकोलूकीयम् :

### ( तृतीयं तन्त्रम् )

अथेदमारभ्यते काकोलूकीयं नाम तृतीयं तन्त्रं, यस्यायमादिमः श्लोकः—

न विश्वसेत्पूर्वविरोधितस्य, शत्रोश्च मित्रत्वमुपागतस्य ।
दग्धां गुहां पश्य उलूकपूर्णां, काकप्रणीतेन हुताशनेन ॥ १ ॥

तद्यथानुश्रूयते—अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम् । तस्य समीपस्थोऽनेकशाखासनाथोऽतिसघनतरपत्रच्छन्नो न्यग्रोधपादपोऽस्ति । तत्र च मेघवर्णो नाम वायसराजोऽनेककाकपरिवारः प्रतिवसति स्म । स तत्र विहितदुर्गरचनः सपरिजनः कालं नयति स्म ।

व्याख्या—काकाश्चोलूकाश्च काकोलूकाः, काकोलूकानां समाहारः काकोलूकं, काकोलूकमधिकृत्य कृतं काकोलूकीयम् । पूर्वविरोधितस्य = पूर्वं विरोधभावं प्राप्तस्य, किन्तिदानीं मित्रत्वं = सुहृद्भावम्, उपागतस्य = समागतस्य, शत्रोः = अरेः, न विश्वसेत् = विश्वासं न कुर्यादिति । काकप्रणीतेन = काकानीतेन ( काकप्रक्षिप्तेनेत्यर्थः ), हुताशनेन = अग्निना, दग्धां = प्रज्वलितां, गुहां = गिरिकन्दरां, पश्य = विलोकय ॥ १ ॥ अनेकशाखासनाथः = अनेकशाखासनाथीकृतः, अतिसघनतरपत्रच्छन्नः = सघनतरैः पत्रैराच्छन्नः, न्यग्रोधपादपः = वटवृक्षः । विहितदुर्गरचनः = कृतदुर्गः ( विहिता दुर्गरचना येनासौ ) कालं नयति = समयं यापयति स्म ।

हिन्दी—विष्णुशर्मा ने राजपुत्रों से कहा—अब मैं "काकोलूकीय" नामक तृतीय तन्त्र प्रारम्भ करता हूँ, जिसका प्रथम श्लोक यह है—

पहले विरोधी रह चुकने वाले और इस समय ( कार्य के समय ) मित्रभाव को प्राप्त शत्रु का विश्वास नहीं करना चाहिये । कार्यकाल में मित्रभाव को प्राप्त पूर्वविरोधी कौवे के द्वारा प्रक्षिप्त अग्नि से जली हुई गिरिकन्दरा को देखो। ( इसको देखने से मेरा पूर्व-कथन प्रमाणित हो जायगा ) ॥ १ ॥

जैसा कि सुना जाता है—दक्षिण के किसी जनपद में महिलारोप्य नाम का एक नगर था । उस नगर के समीप ही अनेकशाखाओं द्वारा सनाथित और सघनतरपत्रों से आच्छन्न

न्यग्रोध का एक वृक्ष था। उस वृक्ष पर कभी अनेक काक-कुटुम्बों से समन्वित मेघवर्ण नामक वायसों का एक राजा निवास करता था जो उस वृक्ष पर दुर्ग का निर्माण करके अपने परिजनों के साथ अपना समय व्यतीत किया करता था।

तथान्योऽरिमर्दनो नामोलूकराजोऽसङ्ख्योलूकपरिवारो गिरिगुहादुर्गाश्रयः प्रतिवसति स्म। स च रात्रावभ्येत्य सदैव तस्य न्यग्रोधस्य समन्तात्परिभ्रमति।

अथोलूकराजः पूर्वविरोधवशाद्यं कञ्चिद्वायसं समासादयति तं व्यापाद्य गच्छति। एवं नित्याभिगमनाच्छनैः शनैस्तन्न्यग्रोधपादपदुर्गं तेन समन्तान्निर्वायसं कृतम्।

व्याख्या—अभ्येत्य = आगत्य, पूर्वविरोधवशात् = पूर्ववैरवशात्, वायसं = काकं, व्यापाद्य = हत्वा, नित्याभिगमनात् = सततागमनात्, समन्तात् = सर्वतः, निर्वायसं = काकरहितम्।

हिन्दी—अरिमर्दन नाम का एक उलूकराज भी अपने असङ्ख्यपरिजनों के साथ गिरि-कन्दरारूपी दुर्ग में निवास किया करता था।

रात्रि में आकर वह नित्य उस वटवृक्ष के चारों ओर घूमा करता था। वह उलूकराज उस वृक्ष के आसपास जिस वायस को पा जाता था उसे पूर्वविरोध के कारण मार डाला करता था और पुनः अपने दुर्ग में भाग जाया करता था। इस प्रकार नित्य के आगमन से उसने धीरे-धीरे उस वटवृक्षरूपी वायसों के दुर्ग को चारों ओर से काकशून्य बना दिया।

अथवा भवत्येवम्। उक्तञ्च—

य उपेक्षेत शत्रुं स्वं प्रसरन्तं यदृच्छया।
रोगं चालस्यसंयुक्तः स शनैस्तेन हन्यते॥ २॥

तथा च—

जातमात्रं न यः शत्रुं व्याधिञ्च प्रशमं नयेत्।
अतिपुष्टाङ्गयुक्तोऽपि स पश्चात्तेन हन्यते॥ ३॥

व्याख्या—यदृच्छया = स्वेच्छया, प्रसरन्तं = प्रवर्द्धमानम्, उपेक्षेत = उपेक्षाभावेनेक्षेत, तेन = वैरिणा॥ २॥ जातमात्रं = समुत्पन्नमात्रं, प्रशमं = शमं (शान्तिमित्यर्थः) न नयेत् = न प्रापयेत्, अतिपुष्टाङ्गः = सबलोऽपि, तेन = अरिणा, रुजा वा, हन्यते॥ ३॥

हिन्दी—अथवा ऐसा तो होता ही है। कहा भी गया है कि—

जो व्यक्ति अपने शत्रु और रोग को उसकी इच्छानुसार बढ़ते हुए देखकर भी आलस्य के कारण उसकी अपेक्षा कर देता है और उसके विनाश का उपाय नहीं सोचता, वह कालान्तर में शनैः शनैः उसके सम्पुष्ट होनेपर उसी के द्वारा मारा भी जाता है॥ २॥

और भी—जो व्यक्ति अपने शत्रु एवं रोग को उत्पन्न होते ही शान्त नहीं कर देता है, वह सबल एवं परिपुष्टाङ्ग होनेपर भी कालान्तर में उसी शत्रु या रोग के द्वारा मार डाला जाता है॥ ३॥

अथान्येद्युः स वायसराजः सर्वान् वायससचिवानाहूय प्रोवाच—"भोः! उत्कटस्तावदस्माकं शत्रुरुद्यमसम्पन्नः, कालविच्च। नित्यमेव निशागमे समेत्यास्मत्पक्ष-

कदनं करोति। तत्कथमस्य प्रतिविधानम्?। वयं तावद्रात्रौ न पश्यामः, न च तस्य दिवा दुर्गं विजानीमः, येन गत्वा प्रहरामः। तदत्र विषये किं युज्यते—सन्धिविग्रहयानासनसंश्रयद्वैधीभावानामेकतमस्य क्रियमाणस्य? तद्विचार्य शीघ्रं कथयन्तु भवन्तः।"

व्याख्या—अन्येद्युः=द्वितीयदिने, सचिवान्=मन्त्रिवरान्, उत्कटः=शक्तिसम्पन्नः, उद्यमसम्पन्नः=सोद्योगः, कालवित्=समयवित् (अवसर को समझने वाला), निशागमे=सायंकाले, समेत्य=आगत्य, अस्मत्पक्षकदनं=मत्पक्षविनाशनं, प्रतिविधानं=प्रतीकारः। तस्य=शत्रोः, प्रहरामः=व्यापादयामः, सन्धिः=शत्रुभिः सह मैत्री, विग्रहः=कलहः (युद्ध) यानं=प्रस्थानम् (आक्रमणं) आसनं=स्थितिः, संश्रयः=अन्यबलाश्रयणं, विचार्य=सम्यगवधार्य, कथयन्तु=वदन्तु।

हिन्दी—दूसरे दिन उस वायसराज ने सम्पूर्ण सचिवों को बुलाकर पूछा—"हमारा शत्रु उत्कट एवं उद्यमसम्पन्न है। वह अवसर को भली-भाँति जानता है। निरन्तर सायं काल में आकर हमारे पक्ष का विनाश किया करता है। इसका क्या प्रतिविधान हो सकता है?। हमलोगों को रात्रि में दिखाई नहीं देता, और दिन में शत्रु के दुर्ग को देखा नहीं है कि जिससे जाकर उसको मार सकें। अतः इस विषय में क्या करना उचित होगा? सन्धि, विग्रह, यान, आसन, संश्रय तथा द्वैधीभाव, शत्रुओं के साथ किये जाने वाले इन राजनीतिक कर्तव्यों में से किसका अवलम्बन करना उचित होगा? अतिशीघ्र सोचकर आप लोग कहें।"

अथ ते प्रोचुः—"युक्तमभिहितं देवेन, यदेष प्रश्नः कृतः। उक्तञ्च—

अपृष्टेनापि वक्तव्यं सचिवेनात्र किञ्चन।
पृष्टेन तु विशेषेण वाच्यं पथ्यं महीपतेः॥ ४॥
यो न पृष्टो हितं ब्रूते परिणामे सुखावहम्।
मन्त्री च प्रियवक्ता च केवलं स रिपुः स्मृतः॥ ५॥
तस्मादेकान्तमासाद्य कार्यो मन्त्रो महीपते!।
येन तस्य वयं कुर्मो निर्णयं वारणं तथा॥ ६॥

व्याख्या—युक्तम्=उचितम्, अभिहितं=कथितं, देवेन=भवता, राज्ञा, अत्र=अस्मिन् विषये, सचिवेन=मन्त्रिणा, अपृष्टेनापि=वक्तुमनाहूतेनापि, वक्तव्यं=कथनीयं, विशेषेण=विशेषरूपेण, महीपतेः=राज्ञः, पथ्यं=हितं, प्रियं वस्तु (उपकारक वस्तु को), वाच्यं=वक्तव्यमिति॥ ४॥ परिणामे=परिणामकाले, सुखावहं=सुखकारकं (सुखद), हितं=प्रियं, न ब्रूते=न कथयति, मन्त्री=सचिवः, प्रियवक्ता=प्रियवचनशीलो जनः, प्रियवक्ता मन्त्रीति वा. रिपुः=शत्रुः स्मृतः=कथितः॥ ५॥ तस्माद्=तस्माद् कारणाद्, एकान्तम्=एकान्तस्थानम्, आसाद्य=प्राप्य, मन्त्रः=परामर्शः (विचार-विमर्श), कार्यः=कर्तव्यः, तस्य=शत्रुविहितस्य कष्टस्य, वारणं=निवारणं (प्रतीकार), कुर्मः॥ ६॥

हिन्दी—उन मंत्रियों ने कहा—"महाराज ने इसप्रकार का प्रश्न करके ठीक ही किया है। कहा भी गया है कि—

इस विषय में (राज्य पर आपत्ति आने के समय) मन्त्री को चाहिये कि वह बिना पूछे ही राजा के हित की बात कहे। यदि राजा मन्त्री से पूछता है, तब तो विशेषरूप से राजा की हितकारक बात को कहना ही चाहिये॥ ४॥

राजा के पूछने पर भी जो मन्त्री परिणाम में सुखद तथा राजा के हितकारक बात को नहीं कहता, वह प्रियवक्ता मन्त्री (अथवा प्रियवक्ता जन) केवल रिपु के ही समान कहा गया है॥ ५॥

हे महीपते! अतएव यह आवश्यक है कि एकान्त पाकर राजा मंत्री से परामर्श करे, जिससे समागत आपत्ति के विषय में कोई निर्णय किया जा सके और उसके वारण का उपाय भी किया जा सके। अवसर पाकर हमें भी इस विषय में परामर्श कर लेना चाहिए जिससे कोई निर्णय करके हम भी उसका प्रतीकार कर सकें॥ ६॥

अथ स मेघवर्णोऽन्वयागतानुज्जीविसञ्जीव्यनुजीविप्रजीविचिरञ्जीविनाम्नः पञ्च सचिवान् प्रत्येकं प्रष्टुमारब्धवान्। तत्र तेषामादौ तावदुज्जीविनं पृष्टवान्—"भद्र! एवं स्थिते किं मन्यते भवान्?"।

स आह—"राजन्! बलवता सह विग्रहो न कार्यः। यथा स बलवान्कालप्रहर्ता च तस्मात्सन्धानीयः।

व्याख्या—अन्वयागतान्=वंशक्रमादागतान्, तेषां=सचिवानां, स्थिते=अवसरे (ऐसी स्थिति में), विग्रहः=युद्धः, कालप्रहर्ता=यथाकालप्रहर्ता (ठीक समय पर प्रहार करने वाला), संधानीयः=सन्धिना साध्यः।

हिन्दी—मंत्रियों के परामर्श से मेघवर्ण ने वंशानुगत उज्जीवी, सञ्जीवी, अनुजीवी, प्रजीवी तथा चिरञ्जीवी नाम के अपने पाचों सचिवों से क्रमशः पूछना प्रारम्भ किया। सर्वप्रथम उनसे अपने उज्जीवी नाम के सचिव से पूछा—"भद्र! ऐसी स्थिति में आप किस उपाय का अवलम्बन करना उचित समझते हैं?"।

उसने कहा—"राजन्! अपने से बलवान् शत्रु के साथ विग्रह नहीं करना चाहिए। हमारा शत्रु अत्यन्त बलवान् है और उचित अवसरपर प्रहार करने वाला है। अतः सन्धि के ही द्वारा उसको वशीभूत करना चाहिये।

उक्तञ्च यतः—

बलीयसे प्रणमतां काले प्रहरतामपि।
सम्पदो नापगच्छन्ति प्रतीपमिव निम्नगाः॥ ७॥

तथा च—

सत्यान्यायो धार्मिकश्चाढ्यो भ्रातृसङ्घातवान्बली।
अनेकविजयी चैव सन्धेयः स रिपुर्भवेत्॥ ८॥

सन्धिः कार्योऽप्यनार्येण विज्ञाय प्राणसंशयम्।
प्राणैः सुरक्षितैः सर्वं राज्यं भवति रक्षितम्॥९॥

व्याख्या—वलीयसे=बलवते (बलवन्तं शत्रुमनुकूलयितुमिति भावः), प्रणमतां=नमस्कुर्ववतां (नम्रीभूतानामिति यावत्), काले=अवसरे, प्रहरतां=प्रहारं कुर्वतां (आक्रमण करने वाले व्यक्ति की), सम्पदः=राज्यश्रियः, नापगच्छन्ति=न विनश्यन्ति। यथा—निम्नगाः=नद्यः, प्रतीपं=विपरीतं (विरुद्ध दिशा को), न गच्छन्तीति भावः॥७॥ संन्यायः=न्यायवान् (न्यायकर्ता), आढ्यः=सम्पद्युक्तः (धनी), भ्रातृसङ्घातवान्=बन्धुबान्धवादियुक्तः, अनेकविजयी=अनेकयुद्धविजयी, रिपुः=शत्रुः, संधेयः=संधिना साध्यो भवतीति भावः॥८॥ प्राणसंशयं=प्राणसङ्कटं, विज्ञाय=ज्ञात्वा, अनार्येण=दुष्टेनापि, सन्धिः कार्यः॥९॥

हिन्दी—कहा भी गया है कि—

जैसे नदियाँ बहाव से विपरीत दिशा में नहीं जाती, उसीप्रकार से बलवान् शत्रु के प्रति नम्रता का भाव प्रदर्शित करने वाले और अवसर मिलने पर यथाकाल शत्रुपर प्रहार करने वाले राजा की राज्यलक्ष्मी भी कभी उस राजा को छोड़कर अन्यत्र नहीं जाती॥७॥

और भी—उचित न्यायकर्ता, धार्मिक, धनवान्, बन्धु बान्धवों से युक्त तथा अनेक युद्धों का विजयी शत्रु-राजा सन्धि के ही द्वारा साध्य होता है॥८॥

प्राणसङ्कट की स्थिति को समझकर राजा को चाहिये कि वह अनार्य एवं नीच शत्रु से भी सन्धि कर ले, क्योंकि प्राणों के सुरक्षित रहनेपर राजा का राज्य स्वतः सुरक्षित रहता है॥९॥

येनाऽनेकयुद्धविजयी स, तेन विशेषात्सन्धेयः।

उक्तञ्च—

अनेकयुद्धविजयी सन्धानं यस्य गच्छति।
तत्प्रभावेण तस्याशु वशं गच्छन्त्यरातयः॥१०॥
सन्धिमिच्छेत्समेनापि सन्दिग्धो विजयो युधि।
न हि सांशयिकं कुर्यादित्युवाच बृहस्पतिः॥११॥
सन्दिग्धो विजयो युद्धे समेनापि हि युध्यताम्।
उपायत्रितयादूर्ध्वं तस्माद्युद्धं समाचरेत्॥१२॥

व्याख्या—अनेकयुद्धविजयी=अनेकयुद्धजयी, स=उलूकराजः, विशेषात्=प्रयत्नात् (यत्नपूर्वक), सन्धेयः=सन्धानीयः। यस्य=नृपतेः, पुरुषस्य वा, सन्धानं=सन्धिसाध्यतां (मित्रभावमित्यर्थः), अरातयः=शत्रवः, आशु=शीघ्रमेव, तत्प्रभावेण=अनेकयुद्धजयिनः प्रभावेण (अनेक युद्धों को जीतनेवाले व्यक्ति के प्रभाव से), वशं गच्छन्ति=वशतां यान्ति॥१०॥ युधि=सङ्ग्रामे, विजयः=जयः, सन्दिग्धः=सन्देहयुक्तः (सन्देहास्पद), तत्र, समेनापि=समानबलयुक्तेनापि अरिणा सह, सन्धि=सन्धानम्, इच्छेत्, सांशयिकं=

सन्दिग्धविजयं, युद्धं=सङ्ग्रामं, न कुर्यात् ॥ ११ ॥ उपायत्रितयादूर्ध्वं=सामदानभेदाख्योपायानां त्रयाणां वैफल्ये सति, उपायान्तरविरहात्, युद्धं समाचरेत्=युद्धं कुर्यात् ॥ १२ ॥

हिन्दी—वह उलूकराज अनेक युद्धों का विजेता है (इमसे हुए अनेक युद्धों में विजय प्राप्त कर चुका है), अतः उसके साथ प्रयत्नपूर्वक सन्धि कर लेना ही उचित होगा। कहा भी गया है कि—

अनेक युद्धों का विजेता राजा जिस व्यक्ति की मित्रता में आ जाता है, उस व्यक्ति के अन्य शत्रु उस विजेता के प्रभाव से स्वतः वशीभूत हो जाते हैं ॥ १० ॥

बृहस्पति ने कहा है कि—युद्ध में विजय सन्दिग्ध होती है। सन्दिग्ध विजय वाले युद्ध में राजा को भाग नहीं लेना चाहिये। ऐसी स्थिति में शत्रु समान बलयुक्त हो तो भी उसके साथ सन्धि ही कर लेनी चाहिये ॥ ११ ॥

युद्ध में विजय सन्दिग्ध तो होती ही है। जिस युद्ध में अपनी विजय की आशा न हो और मित्रता के लिये प्रयुक्त साम, दाम और भेद ये तीनों उपाय निष्फल हो चुके हों, तभी समानबलयुक्त शत्रु के साथ युद्ध करने का निश्चय करना चाहिये। उपायान्तर द्वारा शत्रु के असाध्य होनेपर ही राजा को युद्ध करना चाहिये ॥ १२ ॥

असन्दधानो मानान्धः समेनापि हतो भृशम्।
आमकुम्भ इवान्येन करोत्युभयसङ्क्षयम् ॥ १३ ॥
समं शक्तिमता युद्धमशक्तस्य हि मृत्यवे।
दृषत्कुम्भमिवाभित्वा नावतिष्ठेत शक्तिमान् ॥ १४ ॥

व्याख्या—मानान्धः=अभिमानान्धः, असन्दधानः=समेन सह सन्धिमकुर्वाणः, आमकुम्भ इव=अपक्वघट इव, उभयसङ्क्षयं=पक्षद्वयस्य विनाशं करोति ॥ १३ ॥ अशक्तस्य=निर्बलस्य, शक्तिमता=बलवता सह, मृत्यवे=विनाशाय भवति। दृषत्=प्रस्तरः यथा, घटप्रस्तरयोर्युद्धे प्रस्तरः घटं विनाशयत्येव तथैव सबलोऽपि निर्बलं विनाशयत्येव ॥ १४ ॥

हिन्दी—अपनी मानान्धता के कारण जो राजा अपने समान शक्तितुल्य शत्रु के साथ सन्धि नहीं करता, वह उस समानशक्तियुक्त शत्रु के द्वारा आहत होकर अन्त में परस्पर में टकरानेवाले दो कच्चे घटों के समान दोनों ही पक्षों का विनाश कर डालता है (केवल मान के ही कारण युद्ध करने का निश्चय नहीं करना चाहिये। उपायान्तर द्वारा शत्रु के असाध्य होनेपर ही विवश होकर दोनों पक्षों के विनाश का निश्चय करना चाहिये) ॥ १३ ॥

सबल व्यक्ति के साथ निर्बल व्यक्ति का युद्ध उसकी मृत्यु के लिये ही होता है। जैसे घट एवं प्रस्तर के संघर्ष में प्रस्तर घट को विनष्ट किये विना नहीं छोड़ता, उसीप्रकार सबल शत्रु भी अपने निर्बल शत्रु को आमूल विनष्ट किये विना नहीं छोड़ता। (अतः उपायान्तर द्वारा यदि शत्रु साध्य हो सकता हो तो निर्बल व्यक्ति को अपने से सबल व्यक्ति के साथ युद्ध करने का निश्चय नहीं करना चाहिये) ॥ १४ ॥

अन्यच्च—

भूमिर्मित्रं हिरण्यं वा विग्रहस्य फलत्रयम्।
नास्त्येकमपि यद्येषां विग्रहं न समाचरेत्॥ १५॥
खनन्नाखुबिलं सिंहः पाषाणशकलाकुलम्।
प्राप्नोति नखभङ्गं वा फलं वा मूषको भवेत्॥ १६॥
तस्मान्न स्यात्फलं यत्र पुष्टं युद्धं तु केवलम्।
तत्र स्वयं तदुत्पाद्य कर्तव्यं न कथञ्चन॥ १७॥

व्याख्या—विग्रहस्य=युद्धस्य, फलत्रयं भवति—१-भूमिः=क्षेत्राप्तिः, २-मित्रं=मित्राप्तिः, ३-हिरण्यं=सुवर्णं ( रत्नाद्याप्तिः ) ॥ १५ ॥ सिंहः, पाषाणशकलाकुलं=शिलाखण्डव्याप्तं, आखुबिलं=मूषकविवरं, खनन्, नखभङ्गं=स्वनखभङ्गं, प्राप्नोति अथवा, मूषकः=मूषकप्राप्तिरूपं फलं भवेदिति ॥ १६ ॥ तस्मात्=तस्माद्धेतोः, यत्र=यस्मिन् युद्धे, पुष्टं=विपुलं, फलं न स्यात् तत्=युद्धम्, उत्पाद्य=स्वयमुत्पाद्य ( स्वयं कारण बनकर ) ॥ १७ ॥

हिन्दी—अन्य भी बात है कि—

विग्रह के तीन ही फल होते हैं। १—भूप्राप्ति ( सीमा या क्षेत्र वृद्धि ), २—मित्रप्राप्ति और ३—हिरण्यप्राप्ति। यदि इन तीनों में से एक भी फल के मिलने की आशा न हो तो युद्ध नहीं करना चाहिये ॥ १५ ॥

पाषाण-खण्डों से व्याप्त ( पथरीली ) भूमि में स्थित चूहे के बिल को खोदनेवाला सिंह परिणाम में अपने नख का विनाश ही प्राप्त करता है। यदि उसके अतिरिक्त उसे कोई फलाप्ति भी होती है तो केवल चूहा मात्र ही मिलता है ॥ १६ ॥

अतः जिस युद्ध में पर्याप्त फलप्राप्ति की आशा न हो, केवल युद्धमात्र ही करना हो, उस युद्ध के लिए स्वयं कारण बनकर कभी भी रण को निमन्त्रित नहीं करना चाहिये ॥ १७ ॥

बलीयसा समाक्रान्तो वैतसीं वृत्तिमाचरेत्।
वाञ्छन्नभ्रंशिनीं लक्ष्मीं न भौजङ्गीं कदाचन॥ १८॥
कुर्वन् हि वैतसीं वृत्तिं प्राप्नोति महतीं श्रियम्।
भुजङ्गवृत्तिमापन्नो वधमर्हति केवलम्॥ १९॥
कौर्मं सङ्कोचमास्थाय प्रहारानपि मर्षयेत्।
प्राप्ते काले च मतिमानुत्तिष्ठेत् कृष्णसर्पवत्॥ २०॥

व्याख्या—बलीयसा=बलवता, समाक्रान्तः=आक्रान्तः सन्, वैतसीं वृत्तिं=विनम्रां वृत्तिं ( वेत्रलतासदृशीं ), अभ्रंशिनीं=स्थिरां, वाञ्छन्=इच्छन्, भौजङ्गीं=भुजङ्गसदृशीं फणोत्थापिनीं वृत्तिं न कुर्यादिति भावः ॥ १८ ॥ महतीं=विपुलां, श्रियं=लक्ष्मीम् ॥ १९ ॥ बलवता सह युद्धे कौर्मं=कच्छपाकारं, सङ्कोचं=स्वाङ्गसङ्कोचं ( चेष्टाविरहितं मौनं ), प्रहारान्=शत्रोः प्रहारान्, मर्षयेत्=क्षमेत ( सहेदिति भावः ), पुनः प्राप्तकाले=अवसरे समागते सति, कृष्णसर्पवत्=भुजङ्गवत् ( भौजङ्गीं वृत्तिं विधाय ), उत्तिष्ठेत्=आक्रमणं कुर्यादिति भावः ॥ २० ॥

हिन्दी—बलवान् शत्रु द्वारा आक्रान्त होने पर मनुष्य को वेत्रलता जैसी नम्रवृत्ति का अवलम्बन कर लेना चाहिये। अचल सम्पत्ति को चाहनेवाले व्यक्ति को ऐसी स्थिति में सर्प के समान फण को उठाकर फुफकार छोड़ने वाली वृत्ति का अवलम्बन कदापि नहीं करना चाहिये ॥ १८ ॥

वैतसी-वृत्ति का अवलम्बन करने वाला व्यक्ति समय पर विपुल सम्पत्ति का अधिकारी बन सकता है, किन्तु असमय में भुजङ्गों के समान फण को उठाकर फुफुकारनेवाला व्यक्ति तत्काल मारा डाला जाता है। ( असमय में युद्ध को निमन्त्रण देने वाला व्यक्ति मृत्यु को ही निमन्त्रण देता है ) ॥ १९ ॥

अतः असमय की स्थिति में बुद्धिमान् व्यक्ति को कूर्म-वृत्ति का अवलम्बन करके अपने अङ्गों को समेटकर मौन धारण कर लेना चाहिये और शत्रु के प्रहार को धैर्यपूर्वक सहते रहना चाहिये। पुनः जब अनुकूल समय आ जाय तो भौजङ्गी वृत्ति को धारण करके शत्रुपर आक्रमण करने के लिए प्रस्तुत हो जाना चाहिये ॥ २० ॥

आग्रहं विग्रहं मत्वा सुसाम्ना प्रशमं नयेत्।
विजयस्य ह्यनित्यत्वाद्रभसं च समुत्सृजेत् ॥ २१ ॥

तथा च—

बलिना सह योद्धव्यमिति नास्ति निदर्शनम्।
प्रतिवातं नहि घनः कदाचिदुपसर्पति" ॥ २२ ॥

एवमुज्जीवी सामन्त्रं सन्धिकारं क्लृप्तवान्।

व्याख्या—यत्र शत्रुकृतो विग्रहः दुर्वारस्तत्र विग्रहं=युद्धम्, आगतं=समुपस्थितं ( दुर्वारमिति भावः ), मत्वा=स्वीकृत्य, तं=युद्धं, साम्ना=सामोपायेन, प्रशमं=शान्ति नयेदिति। विजयस्यानित्यत्वात्=कस्य विजयः स्यात्कस्य न वेति न ज्ञायते, अतो विजयस्यानित्यत्वमवधार्य, रभसं=युद्धस्य निश्चयं युद्धोत्साहं वा तत्कालमेव, समुत्सृजेत्=त्यजेत् ॥ २१ ॥ योद्धव्यमिति=विग्रहे समुपस्थिते विग्रहः कार्य एवेति, निदर्शनं=अनुकरणीयमुदाहरणम्, घनः=मेघः, प्रतिवातं=वायोरभिमुखं, नोपसर्पति=न गच्छति ॥ २२ ॥ सन्धिकारं=सन्धिविधायकं, क्लृप्तवान्=कथितवान्।

हिन्दी—यदि युद्ध की स्थिति आ ही जाय तो उसको दुर्निवार समझकर साम के द्वारा शान्त करने का प्रयास करना चाहिये। विजय को अनिश्चित मानकर युद्ध के लिए बहुत अधिक उत्साहित नहीं होना चाहिये। यदि साम के द्वारा युद्ध की स्थिति टाली जा सकती हो तो युद्ध के दुराग्रह को तत्काल छोड़ देना चाहिये ॥ २१ ॥

और भी—

"बलवान् व्यक्ति के साथ युद्ध करना ही चाहिये"—इसका उदाहरण सर्वत्र नहीं मिलता है, अतः यह कोई अनिवार्य सिद्धान्त नहीं है। क्योंकि मेघ अपने से शक्तिशाली वायु

के संमुख कभी नहीं जाता। वायु से विपरीत दिशा में न जाकर अनुकूल दिशा की ओर ही बढ़ता है" ॥ २२ ॥

इसप्रकार उज्जीवी ने सन्धिविधायक सामनीति के अवलम्बन का परामर्श दिया।

अथ तच्छ्रुत्वा सञ्जीविनमाह—"भद्र ! तवाभिप्रायमपि श्रोतुमिच्छामि।"

स आह—"देव ! न ममैतत्प्रतिभाति यच्छत्रुणा सह सन्धिः क्रियते। उक्तञ्च यतः—

शत्रुणा नहि सन्दध्यात्सुश्लिष्टेनापि सन्धिना।
सुतप्तमपि पानीयं शमयत्येव पावकम् ॥ २३ ॥

अपरञ्च—स क्रूरोऽत्यन्तलुब्धो धर्मरहितः, तत्त्वया विशेषान्न सन्धेयः।

व्याख्या—अभिप्रायं = मन्तव्यम्। प्रतिभाति = रोचते, सुश्लिष्टेन = प्रदर्शितानुरागेणापि, शत्रुणा सह, सन्धिना = सन्धानेन, न सन्दध्यात् = सन्धि न कुर्यात्। सुतप्तमपि = अत्युष्णमपि, पानीयं = जलं, पावकम् = अग्निं, शमयति ॥ २३ ॥ क्रूरः = पिशुनः, न सन्धेयः = न कदापि सन्धिना सन्धातुं योग्योऽस्ति।

हिन्दी—उज्जीवी के परामर्श को सुनकर वायसराज ने सञ्जीवी से कहा—"भद्र ! इस विषय में मैं आपके अभिप्राय को भी सुनना चाहता हूँ।"

उसने उत्तर में कहा—देव ! शत्रु के साथ सन्धि कर ली जाय, यह बात मुझे अच्छी नहीं लगती। कहा भी गया है कि—

अत्यन्त स्नेह प्रकट करने वाले एवं सन्निकट में आये हुये शत्रु के साथ भी मित्रता नहीं करनी चाहिये। क्योंकि—जल चाहे जितना भी उष्ण हो वह अग्नि को बुझा ही देता है ॥ २३ ॥

दूसरी बात यह है कि—हमारा वह शत्रु अत्यन्त क्रूर एवं लोभी होने के साथ ही धर्महीन भी है। अतः आपको किसी भी शर्तपर उससे सन्धि नहीं करनी चाहिये। क्योंकि वह सन्धि के योग्य नहीं है।

उक्तञ्च यतः—

सत्यधर्मविहीनेन न सन्दध्यात्कथञ्चन।
सुसन्धितोऽप्यसाधुत्वादचिराद्याति विक्रियाम् ॥ २४ ॥

तस्मात्तेन सह योद्धव्यमिति मे मतिः। उक्तञ्च—

क्रूरो लुब्धोऽलसोऽसत्यः प्रमादी भीरुरस्थिरः।
मूढो युद्धावमन्ता च सुखोच्छेद्यो भवेद्रिपुः ॥ २५ ॥

व्याख्या—धर्मरहितः शत्रुः, सुसन्धितोऽपि = सन्धिना सुसाधितोऽपि, असाधुत्वात् = स्वदुष्टस्वभावात्, अचिरात् = शीघ्रमेव, विक्रियां = वैकृतं भावं, याति = गच्छति ॥ २४ ॥ असत्यः = असत्यवादी, प्रमादी = मत्सरयुक्तः, अस्थिरः = चञ्चलः (प्रतिज्ञा-विमुखः), मूढः = मूर्खः युद्धावमन्ता = युद्धकातरः ॥ २५ ॥

हिन्दी—कहा भी गया है कि—

सत्य एवं धर्म विहीन शत्रु के साथ सन्धि कदापि नहीं करनी चाहिये। क्योंकि—वह अपने दुष्ट स्वभाव के कारण सन्धि के नियमों को तोड़ देता है और अत्यन्त घनिष्ठता रखने पर भी शीघ्र ही विकृत हो जाता है ॥ २४ ॥

अतः उसके साथ युद्ध करना अत्यन्त आवश्यक है। मेरा तो यही विचार है। कहा भी गया है कि—अत्यन्त क्रूर, लोभी, आलसी, असत्यवादी, प्रमादी, भीरु, अस्थिर, मूर्ख एवं युद्ध की उपेक्षा करके उससे भागने वाला शत्रु अनायास ही विनष्ट किया जा सकता है ॥ २५ ॥

अपरं, तेन पराभूता वयं यदि सन्धानकीर्तनं करिष्यामः, स भूयोऽत्यन्तं कोपं करिष्यति। उक्तञ्च—

चतुर्थोपायसाध्ये तु रिपौ सान्त्वमपक्रिया।
स्वेद्यमामज्वरं प्राज्ञः कोऽम्भसा परिषिञ्चति ? ॥ २६ ॥
सामवादाः सकोपस्य शत्रोः प्रत्युत दीपकाः।
प्रतप्तस्येव सहसा सर्पिषस्तोयबिन्दवः ॥ २७ ॥

व्याख्या—पराभूताः=तिरस्कृताः, ( विजिताः सन्तः ), सन्धानकीर्तनं=सन्धिप्रस्तावं, चतुर्थोपायसाध्ये=युद्धसाध्ये, रिपौ=शत्रौ, सान्त्वं=सान्त्वनावचनं ( शान्तिचर्चा ), अपक्रिया=अपकारः। स्वेद्यं=स्वेदेन साध्यं ( पसीने से ठीक होने वाले ), आमज्वरम्=आमाशयस्य दोषेणोत्पन्नं ज्वरं, प्राज्ञः=बुद्धिमान्, अम्भसा=जलेन ॥ २६ ॥ सामवादाः=सन्धेः प्रस्तावाः, दीपकाः=क्रोधाग्नेरुत्तेजकाः। प्रतप्तस्य=अत्युष्णस्य, सर्पिषः=घृतस्य, तोयबिन्दवः=जलबिन्दवः ॥ २७ ॥

हिन्दी—दूसरी बात यह है कि—हमलोग उसके द्वारा पराजित किये जा चुके हैं। इस समय यदि हमलोग उसके समक्ष सन्धि का प्रस्ताव रखेंगे तो वह और अधिक क्रुद्ध हो जायगा। कहा भी गया है कि—

युद्ध के ही द्वारा प्रतिविधान किए जाने की स्थिति में शत्रु के समक्ष शान्ति या सन्धि का प्रस्ताव करना अपकार करने का कार्य करता है ( शत्रु उस प्रस्ताव को अपना अपकार समझता है )। अतः युद्ध की अनिवार्यता-काल में सन्धि का प्रस्ताव नहीं करना चाहिये। स्वेद के द्वारा उपचार किये जाने के योग्य आमज्वर को शान्त करने के लिए कोई भी बुद्धिमान् व्यक्ति रोगी के शरीर को शीतल जल से नहीं सींचता ॥ २६ ॥

क्रुद्ध शत्रु के समक्ष रखा गया शान्ति या सन्धि का प्रस्ताव उसके क्रोध को शांत नहीं करता, प्रत्युत उसको और अधिक उत्तेजित कर देता है। अत्यन्त उष्ण घृत पर पड़े हुए जल-बिन्दु से घृत की ज्वाला शान्त नहीं होती, प्रत्युत और अधिक उत्तेजित हो जाती है ॥ २७ ॥

यच्चैष वदति—रिपुर्बलवान् इति, तदप्यकारणम्। यत उक्तञ्च—

सोत्साहशक्तिसम्पन्नो हन्याच्छत्रुं लघुर्गुरुम्।
यथा कण्ठीरवो नागं सुसाम्राज्यं प्रपद्यते ॥ २८ ॥

मायया शत्रवो वध्या अवध्याः स्युर्बलेन ये।
यथा स्त्रीरूपमास्थाय हतो भीमेन कीचकः ॥ २९ ॥

व्याख्या—अकारणम् = अयुक्तम्, लघुं गुरुं = लघुं गुरुं वा शत्रुं, कण्ठीरवः = सिंहः। नागे = गजे, प्रपद्यते = लभते (स्थापयतीति भावः) ॥ २८ ॥ बलेन = सैन्यशक्त्या, अवध्याः = हन्तुमयोग्याः, मायया = उपायविशेषेण, स्त्रीरूपमास्थाय = स्त्रीरूपं विधाय ॥ २९ ॥

हिन्दी—इन्होंने जो यह कहा है कि—'शत्रु बहुत बलवान् है', वह भी अनुपयुक्त ही है। क्योंकि कहा गया है कि—

उत्साहरूपी शक्ति से सम्पन्न व्यक्ति अपने छोटे-बड़े सभी शत्रुओं को मार कर उनपर आधिपत्य जमा ही लेता है। जैसे—सिंह अपने उत्साह से गजों को मारकर उनपर अपना साम्राज्य स्थापित कर ही लेता है ॥ २८ ॥

जो शत्रु सैन्य-शक्ति के द्वारा अवध्य होते हैं, वे भी माया के द्वारा रचित उपायों से वध्य हो जाते हैं। भीमसेन ने स्त्री का ही रूप बनाकर कीचक का वध किया था ॥ २९ ॥

तथा च—

मृत्योरिवोग्रदण्डस्य राज्ञो यान्ति वशं द्विषः।
शष्पतुल्यं हि मन्यन्ते दयालुं रिपवो नृपम् ॥ ३० ॥
प्रयात्युपशमं यस्य तेजस्तेजस्वितेजसा।
वृथा जातेन किं तेन मातुर्यौवनहारिणा ? ॥ ३१ ॥
या लक्ष्मीर्नानुलिप्ताङ्गी वैरिशोणितकुङ्कुमैः।
कान्तापि मनसः प्रीतिं न सा धत्ते मनस्विनाम् ॥ ३२ ॥
रिपुरक्तेन संसिक्ता वैरिस्त्रीनेत्रवारिणा।
न भूमिर्यस्य भूपस्य का श्लाघा तस्य जीवने" ॥ ३३ ॥

एवं सञ्जीवी विग्रहमन्त्रं विज्ञापयामास।

व्याख्या—उग्रदण्डस्य = तीक्ष्णदण्डस्य, द्विषः = शत्रवः, शष्पतुल्यं = तृणसदृशं, मन्यन्ते ॥ ३० ॥ तेजस्वितेजसा = शत्रुतेजसा, यस्य = भूपतेः, मातुर्यौवनहारिणा = स्वमातुर्यौवनापहारकेण तेन, किं भवतीति ॥ ३१ ॥ वैरिशोणितकुङ्कुमैः = शत्रुरक्तकुङ्कुमैः (शत्रु के रक्तरूपी कुङ्कुम से), या लक्ष्मीः = या श्रीः, नानुलिप्ताङ्गी = लिप्तदेहा न भवति, कान्ता = मनोहरापि, सा = लक्ष्मीः, मनस्विनाम् = मानधनानां, प्रीतिं = स्नेहं, न धत्ते ॥ ३२ ॥ नेत्रवारिणा = अश्रुजलेन, श्लाघा = प्रशंसा ॥ ३३ ॥ विग्रहमन्त्रं = युद्धस्य परामर्शं, विज्ञापयामास = प्रख्यापयामास।

हिन्दी—तथा च—

मृत्यु के समान उग्रदण्ड देने वाले राजा के शत्रु अधीन हो जाते हैं और दयालु राजा के शत्रु उस राजा को तृण के समान मानते हैं ॥ ३० ॥

शत्रु के तेज के सामने जिस राजा का तेज उपशमित हो जाता है, उस राजा का जीवन

व्यर्थं समझना चाहिये। माता के यौवन का अपहरण करने वाले ऐसे व्यक्ति के जीवन धारण करने से क्या लाभ है ॥ ३१ ॥

शत्रु के रक्तरूपी कुङ्कुम से जिस लक्ष्मी का शरीर लिप्त न हुआ हो वह लक्ष्मी मनोहारिणी होने पर भी मनस्वियों के स्नेह का भाजन नहीं होती ॥ ३२ ॥

जिस राजा की भूमि शत्रुओं के रक्त और उनकी स्त्रियों के अश्रुजल से भीग नहीं गयी, उस राजा के जीवन की प्रशंसा ही क्या हो सकती है ॥ ३३ ॥

इसप्रकार सञ्जीवी ने युद्ध करने का परामर्श दिया।

**अथ तच्छ्रुत्वानुजीविनमपृच्छत्—"भद्र! त्वमपि स्वाभिप्रायं निवेदय।"**

**सोऽब्रवीत्—"देव! दुष्टः स बलाधिको निर्मर्यादश्च, तत्तेन सह सन्धिविग्रहौ न युक्तौ, केवलं यानमर्हं स्यात्।**

**उक्तञ्च—**

**बलोत्कटेन दुष्टेन मर्यादारहितेन च।**
**न सन्धिर्विग्रहो नैव विना यानं प्रशस्यते ॥ ३४ ॥**

व्याख्या—निर्मर्यादः=मर्यादारहितः, यानं=प्रस्थानम् (पलायनमिति भावः), अर्हं=योग्यम्। बलोत्कटेन=उत्कटबलयुक्तेन ॥ ३४ ॥

हिन्दी—सञ्जीवी के परामर्श को सुनकर मेघवर्ण ने अनुजीवी से पूछा—"भद्र! आप भी अपना अभिप्राय कह डालें।"

उसने कहा—"देव! हमारा शत्रु अत्यन्त दुष्ट और बलवान् है। वह मर्यादाहीन भी है अतः उसके साथ सन्धि या युद्ध–दोनों ही अनुचित होगा। उसके समक्ष यान (पलायन) ही एकमात्र उचित उपाय होगा। कहा भी गया है कि—

अत्यन्त बलशाली, सैन्यसम्पन्न, दुष्ट एवं मर्यादाहीन शत्रु के साथ सन्धि या विग्रह का अवलम्बन करना उचित नहीं होता। ऐसी स्थिति में एकमात्र यान (पलायन) ही प्रशस्त होता है ॥ ३४ ॥

**द्विधाकारं भवेद्यानं भये प्राणप्ररक्षणम्।**
**एकमन्यज्जिगीषोश्च यात्रालक्षणमुच्यते ॥ ३५ ॥**
**कार्तिके वाथ चैत्रे वा विजिगीषोः प्रशस्यते।**
**यानमुत्कृष्टवीर्यस्य शत्रुदेशे न चान्यदा ॥ ३६ ॥**
**अवस्कन्दप्रदानस्य सर्वे कालाः प्रकीर्तिताः।**
**व्यसने वर्तमानस्य शत्रोश्छिद्रान्वितस्य च ॥ ३७ ॥**

व्याख्या—द्विधाकारं=द्विविधं, भये=प्राणभये, प्राणप्ररक्षणम्=आत्मरक्षार्थं पलायनम्। अन्यत्=अपरं (द्वितीयञ्च) विजयाय भूपतेः, यात्रालक्षणं=यात्रारूपम् ॥ ३५ ॥ उत्कृष्टवीर्यस्य=उत्कृष्टपराक्रमयुक्तस्य ॥ ३६ ॥ अवस्कन्दप्रदानस्य=गुप्ताक्रमणं चिकीर्षोः (छापामार युद्ध

करने वालों के लिए), व्यसने=विपदि, वर्तमानस्य=स्थितस्य, छिद्रान्वितस्य=दोष-युक्तस्य ॥ ३७ ॥

हिन्दी—यान दो प्रकार का होता है। १–शत्रु के द्वारा आक्रान्त होने पर आत्मरक्षा के लिए उसके सामने से भाग जाना। और २—विजय की कामना से शत्रुपर आक्रमण करने के लिए प्रस्थान करना ॥ ३५ ॥

विजय की कामना से प्रस्थान करनेवाले राजा के लिए कार्तिक अथवा चैत्र का मास उत्तम होता है। सवल एवं वीर्यवान् राजा को शत्रु पर आक्रमण करने के उद्देश्य से इसी काल में प्रस्थान करना चाहिए। अन्य मासों की विजययात्रा उत्तम नहीं होती ॥ ३६ ॥

छिपकर आक्रमण करने वाले राजाओं के लिए सभी मास उत्तम होते हैं। शत्रु के गुप्त-भेदों और उसकी आपत्तिकालिकी अवस्था का पता लग जानेपर कभी भी उसपर आक्रमण किया जा सकता है ॥ ३७ ॥

स्वस्थानं सुदृढं कृत्वा शूरैश्चाप्तैर्महाबलैः।
परदेशं ततो गच्छेत्प्रणिधिव्यासमग्रतः॥ ३८ ॥
अज्ञातवीवधासारतोयसस्यो व्रजेत्तु यः।
परराष्ट्रं स नो भूयः स्वराष्ट्रमधिगच्छति॥ ३९ ॥

ततो युक्तं कर्तुमपसरणम्।

व्याख्या—सुदृढं=सुरक्षितम्, आप्तैः=विश्वस्तैः, प्रणिधिः=गुप्तचरः ॥ ३८ ॥ वीवधः=मार्गः, आसारः=मित्रबलं, तोयः=जलं, सस्यं=धान्यम् ॥ ३९ ॥ अपसरणं=पलायनम्।

हिन्दी—अपने दुर्ग की सुरक्षा आदि की व्यवस्था करने के बाद बलवान् एवं विश्वस्त योद्धाओं के साथ गुप्तचरों को आगे कर शत्रु के देश पर आक्रमण करने के लिए प्रस्थान करना चाहिए ॥ ३८ ॥

जो राजा मार्गों की जानकारी किए बिना और मित्रों के सहयोग, खाद्यसामग्री, जल आदि की जानकारी एवं व्यवस्था किए बिना ही शत्रु पर आक्रमण कर देता है, वह पुनः अपने देश को नहीं लौट पाता ॥ ३९ ॥

अतः इस समय आत्मरक्षार्थ भाग जाना ही सर्वोत्तम होगा।

अन्यच्च—

न विग्रहो न सन्धानं बलिना तेन पापिना।
कार्यलाभमपेक्ष्यापसरणं क्रियते बुधैः॥ ४० ॥

उक्तञ्च यतः—

यदपसरति मेषः कारणं तत्प्रहर्तुं, मृगपतिरपि कोपात्सङ्कुचत्युत्पतिष्णुः।
हृदयनिहितवैराः गूढमन्त्रप्रचाराः, किमपि विगणयन्तो बुद्धिमन्तः सहन्ते॥ ४१ ॥

व्याख्या—सन्धानं=सन्धिः, कार्यलाभमपेक्ष्य=कार्यसिद्धिमुद्दिश्य, अपसरणं=पलायनम् ॥ ४० ॥ मृगपतिः=सिंहः, उत्पतिष्णुः=आक्रमणोद्यतः, सङ्कुचति=स्वाङ्गसङ्कोचं करोति,

हृदयनिहितवैराः=हृदयनिहितवैराः ( हृदये निहितं वैरं यैस्ते ), गूढमन्त्रप्रचाराः ( गूढः= गुप्तः, मन्त्रस्य प्रचारो येषां ते ), विगणयन्तः=विचारयन्तः, सहन्ते=विपक्षस्याक्रमणादिकं सहन्ते ॥ ४१ ॥

हिन्दी—और भी—

बलवान् एवं पापी उस दुष्ट शत्रु के साथ सन्धि या युद्ध करना दोनों ही अनुपयुक्त होगा, अतः अपने कार्य की सिद्धि के लिये इस समय हम लोगों का भाग जाना ही उत्तम होगा ॥ ४० ॥

क्योंकि कहा गया है कि—

मेष यदि युद्ध में पीछे हटता है तो उसका अभिप्राय युद्धक्षेत्र से भागना नहीं है। उसका वह पलायन शत्रु-पक्ष पर और अधिक तैयारी के साथ आक्रमण करने के लिये होता है। मृगपति सिंह भी आक्रमण के ही लिये क्रोधसे अपने अङ्गों को सङ्कुचित करता है। अपने मनोगत वैर को ध्यान में रखते हुये आक्रमण की गुप्त योजना बनाकर भी बुद्धिमान् एवं बलवान् राजा कुछ सोचकर ही शत्रु के आक्रमण को सहता है अथवा पलायन करता है ( ऐसे व्यक्ति अवसर मिलते ही शत्रुपर सांघातिक प्रहार करने में चूकते नहीं हैं ) ॥ ४१ ॥

अन्यच्च—

बलवन्तं रिपुं दृष्ट्वा देशत्यागं करोति यः।
युधिष्ठिर इवाप्नोति पुनर्जीवन्स मेदिनीम् ॥ ४२ ॥
युद्ध्यतेऽहङ्कृतिं कृत्वा दुर्बलो यो बलीयसा।
स तस्य वाञ्छितं कुर्यादात्मनश्च कुलक्षयम् ॥ ४३ ॥

तद् बलवताभियुक्तस्यापसरणसमयोऽयं न सन्धेर्विग्रहस्य च।”

एवमनुजीविमन्त्रोऽपसरणस्य।

व्याख्या—देशत्यागं=स्वराष्ट्रत्यागं, जीवम्=जीवनं धारयद्, मेदिनीं=पृथिवीम् ॥ ४२ ॥ अहङ्कृतिं=गर्वं ( अभिमानपूर्वकं ), तस्य=शत्रोः, वाञ्छितम्=इष्टं, कुलक्षयं= कुलनाशमित्यर्थः ॥ ४३ ॥ अपसरणसमयः=पलायनकालः।

हिन्दी—और भी—समय की प्रतीक्षा में जो राजा अपने बलवान् शत्रु के सामने से भाग जाता है, वह युधिष्ठिर की तरह इसी जीवन में पुनः अपने राज्य को प्राप्त कर लेता है ॥ ४२ ॥

जो राजा अहङ्कार में आकर शक्ति का विचार नहीं करता और अपने से शक्तिशाली शत्रु के साथ युद्ध करने को प्रस्तुत हो जाता है, वह अपने कुल का विनाश तो करता ही है साथ ही अपने शत्रु की इच्छापूर्ति भी करता है ( अपने अविवेक के कारण शत्रु को अनायास ही विजय प्राप्त करने का अवसर प्रदान कर देता है ) ॥ ४३ ॥

अतः बलवान् एवं आक्रमण में प्रवृत्त शत्रु के समक्ष पलायन करने का ही यह समय है, सन्धि या युद्ध करने का समय नहीं है।”

इस प्रकार के अनुजीवी ने अपसरण करने का सुझाव प्रदान किया।

अथ तस्य वाक्यं समाकर्ण्य प्रजीविनमाह—"भद्र! त्वमप्यात्मनोऽभिप्रायं वद।"

सोऽब्रवीत्—"देव! मम सन्धिविग्रहयानानि त्रीण्यपि न प्रतिभान्ति। विशेषतश्चासनं प्रतिभाति।

उक्तञ्च यतः—

नक्रः स्वस्थानमासाद्य गजेन्द्रमपि कर्षति।
स एव प्रच्युतः स्थानाच्छुनापि परिभूयते॥ ४४॥

अन्यच्च—

अभियुक्तो बलवता दुर्गे तिष्ठेत् प्रयत्नवान्।
तत्रस्थः सुहृदाह्वानं प्रकुर्वीतात्ममुक्तये॥ ४५॥

व्याख्या—आत्मनः=स्वस्य, न प्रतिभान्ति=न रोचन्ते। स्वस्थानमासाद्य=स्वदुर्गे स्थित्वा, नक्रः=ग्राहः, प्रच्युतः=स्वस्थानाद् भ्रष्टः, शुना=कुक्कुरेणापि, परिभूयते=तिरस्क्रियते (अभिभूयते)॥ ४४॥ अभियुक्तः=आक्रान्तः सन्, प्रयत्नवान्=प्रत्याक्रमणाय यत्नं कुर्वन्, आत्ममुक्तये=आत्मरक्षार्थं, सुहृदाह्वानं=मित्रामन्त्रणं प्रकुर्वीत=कुर्यादिति भावः॥ ४५॥

हिन्दी—अनुजीवी की बात को सुनकर मेघवर्ण ने प्रजीवी से पूछा—"महोदय! आप भी अपना अभिप्राय व्यक्त करें।"

उसने कहा—"देव! मुझे तो सन्धि, विग्रह एवं यान, ये तीनों ही अच्छे नहीं लगते। इस परिस्थिति में आसन (अपने दुर्ग में छिपकर शत्रु के आक्रमण की प्रतीक्षा करना) ही एकमात्र उचित उपाय प्रतीत हो रहा है।

क्योंकि कहा गया है कि—

मकर अपने स्थानपर रहते हुए बड़े-बड़े गजराजों को खींचकर वश में कर लेता है। किन्तु वही जब अपने स्थान (जल) से बाहर निकल जाता है तो एक अकिञ्चन कुत्ते के द्वारा भी पराजित हो जाता है॥ ४४॥

और भी—

बलवान् शत्रु के द्वारा आक्रान्त होनेपर राजा को अपने दुर्ग का परित्याग नहीं करना चाहिए। उसे अपने दुर्ग में रहते हुए शत्रु के आक्रमण की प्रतीक्षा करनी चाहिए और अपनी सुरक्षा का उपाय सोचकर आत्मरक्षार्थ सतत प्रयत्न करते रहना चाहिए। अपने दुर्ग में बैठे रहकर ही आत्मरक्षा के लिए मित्रों एवं हितैषियों को सहयोगार्थ निमन्त्रित भी करते रहना चाहिए॥ ४५॥

यो रिपोरागमं श्रुत्वा भयसन्त्रस्तमानसः।
स्वस्थानं सन्त्यजेत्तत्र न स भूयो विशेत्नरः॥ ४६॥
दंष्ट्राविरहितः सर्पो मदहीनो यथा गजः।
स्थानहीनस्तथा राजा गम्यः स्यात्सर्वजन्तुषु॥ ४७॥

निजस्थानस्थितोऽप्येकः शतं योद्धुं सहेन्नरः ।
शक्तानामपि शत्रूणां तस्मात्स्थानं न सन्त्यजेत् ॥ ४८ ॥
तस्माद् दुर्गं दृढं कृत्वा वीवधासारसंयुतम् ।
प्राकारपरिखायुक्तं शस्त्रादिभिरलङ्कृतम् ॥ ४९ ॥

व्याख्या—आगमम्=आगमनम् ( आक्रमणमिति भावः ), स्वस्थानं=स्वराष्ट्रं स्वदुर्गं वा, न विशेत्=प्रवेशं नाप्नुयादिति ॥ ४६ ॥ दंष्ट्राविरहितः=दन्तहीनः, स्थानहीनः=दुर्गहीनः ॥ ४७ ॥ सहेत्=शक्नुयात्, शक्तानां=सबलानाम् ॥ ४८ ॥ वीवधासारसंयुतं=मित्रादियुक्तं ( धान्यादिना परिपूर्णं ), कृत्वा=विधाय, प्राकारः=प्राचीरम्, परिखा=खेयम् ( परितः खन्यते या सा ), शस्त्रादिभिः=विभिन्नैः शस्त्रास्त्रैः, अलङ्कृतं=सुशोभितं ( व्याप्तमिति भावः ) ॥ ४९ ॥

हिन्दी—शत्रु के आक्रमण की बात सुनते ही जो व्यक्ति भयभीत होकर अपने स्थान को छोड़ देता है, वह पुनः उस स्थान में प्रवेश नहीं कर पाता ॥ ४६ ॥

जैसे दांतरहित सर्प और मदहीन गज अशक्त एवं सर्वग्राह्य हो जाते हैं, उसी प्रकार दुर्गहीन राजा भी सभी प्राणियों के लिए ( साधारण शत्रु के लिए भी ) दम्य हो जाता है ॥४७॥

अपने स्थानपर रहने वाला एक व्यक्ति भी सैकड़ों सशक्त शत्रुओं को युद्ध में पछाड़ देने में समर्थ होता है, अतः राजा को अपने स्थान ( दुर्ग ) का परित्याग नहीं करना चाहिये ॥ ४८ ॥

अतएव आप धन, धान्य, मित्र, सैन्य, प्राकार, परिखा तथा शस्त्रों से अपने दुर्ग को सुसज्जित एवं सुरक्षित कर उसी में बैठे रहें ( और शत्रु के आक्रमण की प्रतीक्षा करते रहें ) ॥ ४९ ॥

तिष्ठ मध्यगतो नित्यं युद्धाय कृतनिश्चयः ।
जीवन् संप्राप्स्यसि क्ष्मान्तं मृतः स्वर्गमवाप्स्यसि ॥ ५० ॥

अन्यच्च—

बलिनापि न बाध्यन्ते लघवोऽप्येकसंश्रयाः ।
विपक्षेणापि मरुता यथैकस्थानवीरुधः ॥ ५१ ॥
महानप्येकको वृक्षो बलवान् सुप्रतिष्ठितः ।
प्रसह्यैव हि वातेन शक्यो धर्षयितुं यतः ॥ ५२ ॥

व्याख्या—युद्धाय=प्रत्याक्रमणाय, कृतनिश्चयः=कृतसङ्कल्पः, मध्यगतः=दुर्गमध्यगतः तिष्ठ । क्ष्मान्तं=भूखण्डान्तं यावत् ॥ ५० ॥ एकसंश्रयाः=एकाश्रयाः ( एकत्र स्थिताः ) लघवः=क्षुद्राः, न बाध्यन्ते=न पीड्यन्ते, एकस्थानवीरुधः=एकत्र संश्लिष्टा लताः, विपक्षेण=विपरीतेन, मरुता=वायुना, न बाध्यन्ते ॥ ५१ ॥ सुप्रतिष्ठितः=सुदृढोऽपि, एककः=एकः, वातेन=मरुद्वेगेन, प्रसह्यैव=बलात् सहसैव, धर्षयितुं=समुत्पाटयितुं, शक्यः=योग्यो भवति ॥ ५२ ॥

हिन्दी—युद्ध ( प्रत्याक्रमण ) के लिए तैयार एवं दृढप्रतिज्ञ होकर आप दुर्ग के मध्य में

निवास करें। यदि युद्ध में जीवित बचे रहे तो भूमण्डल का समस्त साम्राज्य आप का ही होगा और संयोग से मृत्यु हुई तो स्वर्ग तो मिलेगा ही॥ ५०॥

और भी—एकत्र संयुक्त रहने पर शक्तिहीन जन भी सबल व्यक्तियों के द्वारा पीड़ित (पराभूत) नहीं होते। जैसे एकत्र संश्लिष्ट लतायें वायु के प्रतिकूल होनेपर भी प्रताड़ित नहीं होतीं॥ ५१॥

अत्यन्त सुदृढ़, सशक्त तथा अतिदीर्घ वृक्ष भी एकाकी होने पर वायु के द्वारा हठात् उखाड़ दिया जाता है॥ ५२॥

अथ ये संहता वृक्षाः सर्वतः सुप्रतिष्ठिताः।
न ते शीघ्रेण वातेन हन्यन्ते ह्येकसंश्रयात्॥ ५३॥
एवं मनुष्यमप्येकं शौर्येणापि समन्वितम्।
शक्यं द्विषन्तो मन्यन्ते हिंसन्ति च ततः परम्"॥ ५४॥

एवं प्रजीविमन्त्रः। इदमासनसंज्ञकम्।

व्याख्या—संहताः=संश्लिष्टाः, एकसंश्रयात्=संश्लिष्टत्वात् (आपस में मिले होने के कारण), वातेन=वायुना, न हन्यन्ते=न विनाश्यन्ते॥ ५३॥ शौर्येण=पराक्रमेण, समन्वितं=युक्तमपि, द्विषन्तः=शत्रवः, शक्यं=धर्षयितुं शक्यं, हिंसन्ति=विनाशयन्ति॥ ५४॥ आसनसंज्ञकम्=आसनाख्यम्।

हिन्दी—जो वृक्ष परस्पर संश्लिष्ट एवं चारों ओर से पङ्क्ति बनाकर खड़े रहते हैं, वे आपस में संश्लिष्ट होने के कारण झंझावात के द्वारा उखाड़े नहीं जा सकते॥ ५३॥

अत्यन्त बलवान् एवं पराक्रमी होनेपर भी एकाकी व्यक्ति को असहाय जानकर उसके शत्रु उसको विजित समझने लगते हैं और समय पाकर उसका विनाश भी कर डालते हैं"॥ ५४॥

इसप्रकार प्रजीवी ने भी अपना मत व्यक्त किया। इसी को "आसन" कहा जाता है।

एतत्समाकर्ण्य चिरञ्जीविनं प्राह—"भद्र! त्वमपि स्वाभिप्रायं वद।"

सोऽब्रवीत्—'देव! षाड्गुण्यमध्ये मम संश्रयः सम्यक् प्रतिभाति। तत्तस्यानुष्ठानं कार्यम्। उक्तञ्च—

असहायः समर्थोऽपि तेजस्वी किं करिष्यति।
निर्वाते ज्वलितो वह्निः स्वयमेव प्रशाम्यति॥ ५५॥
सङ्गतिः श्रेयसी पुंसां स्वपक्षे च विशेषतः।
तुषैरपि परिभ्रष्टा न प्ररोहन्ति तण्डुलाः॥ ५६॥

व्याख्या—समाकर्ण्य=श्रुत्वा, षाड्गुण्यमध्ये=सन्धिविग्रहयानासनद्वैधीभावसंश्रयानां मध्ये, संश्रयः=मित्रबलाश्रयणं, प्रतिभाति=प्रतीयते, अनुष्ठानं=प्रयोगः (कार्य रूप में परिणत करना)। तेजस्वी=तेजोयुक्तः, समर्थः=सक्षमः, असहायः=सहायशून्यः, निर्वाते=वायुशून्ये, वह्निः=अग्निः॥ ५५॥

हिन्दी—प्रजीवी की बात को सुनकर राजा ने चिरञ्जीवी से कहा—"भद्र ! आप भी अपना अभिप्राय व्यक्त करें।"

चिरञ्जीवी ने कहा—"देव ! सन्धि, विग्रह, यान, आसन, द्वैधीभाव तथा संश्रय में से मुझे तो संश्रय ही सर्वोत्तम प्रतीत होता है, अतः उसी का प्रयोग किया जाना चाहिये। कहा भी गया है कि—

सबल, सशक्त तथा प्रतापवान् होनेपर भी अकेला असहाय व्यक्ति कुछ नहीं कर सकता। वायुहीन प्रदेश में प्रज्वलित अग्नि जैसे स्वतः बुझ जाती है, उसीप्रकार मित्रहीन एकाकी राजा भी शत्रुओं द्वारा पराजित हो जाता है ॥ ५५ ॥

मनुष्य के लिए मित्रता सदा कल्याणकारी होती है। यदि वह अपने आत्मीय जनों की हो तो और भी उत्तम होती है। जैसे छिलके के अभाव में चावल अंकुरित एवं पल्लवित नहीं हो पाता, उसीप्रकार मित्रता के अभाव में मनुष्य भी आगे नहीं बढ़ पाता ॥ ५६ ॥

**तदत्रैव स्थितेन त्वया कश्चित्समर्थः समाश्रयणीयो यो विपत्प्रतीकारं करोति। यदि पुनस्त्वं स्वस्थानं त्यक्त्वान्यत्र यास्यसि, तत्कोऽपि ते वाङ्मात्रेणापि सहायत्वं न करिष्यति। उक्तञ्च—**

**वनानि दहतो वह्नेः सखा भवति मारुतः।**
**स एव दीपनाशाय, कृशे कस्यास्ति सौहृदम् ॥ ५७ ॥**

**व्याख्या**—अत्रैव स्थितेन=स्वदुर्गस्थितेन, समर्थः=सक्षमः, विपत्प्रतीकारं=आपत्तेः प्रतिविधानं, वाङ्मात्रेण=वचनमात्रेणापि, सहायत्वं=साहाय्यं, दहतः=भस्मसात्कुर्वतः, वह्नेः=दावाग्नेः, मारुतः=पवनः, सखा=मित्रं, (सहायकः), कृशे=निर्बले, सौहृदं=मित्रत्वम् ॥ ५७ ॥

**हिन्दी**—आप अपने दुर्ग में रहते हुए किसी समर्थ सहायक का आश्रयण कर लें, जो आपकी इस विपत्ति का प्रतिविधान कर सकता हो। यदि आप अपने दुर्ग को छोड़कर कहीं अन्यत्र चले जायेंगे, तो कोई वचनमात्र से भी आपकी सहायता नहीं करेगा। कहा भी गया है कि—

वन को जलाने वाली दावाग्नि का सहयोगी तो पवन भी होता ह। किन्तु वही पवन दीपक को बुझाने के लिए शत्रु बन जाता है। इससे यह स्पष्ट है कि लोग बलवान् व्यक्ति का ही सहयोग भी करते हैं। निर्बल व्यक्ति के प्रति किसी को भी सौहार्द नहीं होता। ठीक ही कहा गया है कि—निर्बल का कोई भी सहायक नहीं होता ॥ ५७ ॥

**अथवा नैतदेकान्तं, यद्बलिनमेकं समाश्रयेत्। लघूनामपि संश्रयो रक्षायै एव भवति। उक्तञ्च—**

**यतः—**

**सङ्घातवान्यथा वेणुर्निबिडो वेणुभिर्वृतः।**
**न शक्यः स समुच्छेत्तुं दुर्बलोऽपि तथा नृपः ॥ ५८ ॥**

यदि पुनरुत्तमसंश्रयो भवति तत्किमुच्यते !

व्याख्या—वेणुभिः = करीरैः, ( बांस से ), सङ्घातवान् = समूहवान्, संश्रयः = आश्रयः ( सहायकः )।

हिन्दी—अथवा, यह आवश्यक नहीं है कि किसी बलवान् व्यक्ति का ही आश्रयण किया जाय। छोटे छोटे लोगों के समूह का भी आश्रयण करना रक्षाकारक ही होता है। यतः कहा गया है कि—

जैसे अनेक बांसों से घिरा हुआ और सघन बांसों के मध्य में स्थित रहनेवाला बांस भी सुगमतापूर्वक काटा नहीं जा सकता, उसीप्रकार निर्बलों के समुदाय से घिरा हुआ राजा भी शत्रु द्वारा सुविधापूर्वक विनाश के योग्य नहीं होता ॥ ५८ ॥

संयोग से यदि उत्तम एवं सबल व्यक्तियों का आश्रय मिल जाय तो अच्छा ही होता है। उसके विषय में कुछ कहना ही व्यर्थ है।

उक्तञ्च—

महाजनस्य सम्पर्कः कस्य नोन्नतिकारकः।
पद्मपत्रस्थितं तोयं धत्ते मुक्ताफलश्रियम् ॥ ५९ ॥

तदेवं संश्रयं विना न कश्चित्प्रतीकारो भवति। तस्मात्संश्रयः कार्य इति मेऽभिप्रायः"। एवं चिरञ्जीविमन्त्रः।

व्याख्या—महाजनस्य = श्रेष्ठस्य, उन्नतिकारकः = अभ्युन्नतिदायकः, पद्मपत्रस्थितं, तोयं = जलं, मुक्ताफलश्रियं = मौक्तिकश्रियम् ॥ ५९ ॥ प्रतीकारः = प्रतिविधानम्। अभिप्रायः = मन्त्रः।

हिन्दी—कहा भी गया है कि—

महापुरुषों का संसर्ग किसके लिए उन्नतिकारक नहीं होता। जैसे पद्म-पत्र पर स्थित जल भी मोती का आकार धारण कर लेता है ॥ ५९ ॥

किसी का आश्रयण किए विना शत्रु का समुचित प्रतीकार नहीं हो सकता। अतः किसी का आश्रय अवश्य ग्रहण कर लेना चाहिए। मेरा तो अभिप्राय यही है।"

इस प्रकार से चिरञ्जीवी ने संश्रय ग्रहण करने का परामर्श दिया।

अथैवमभिहिते स मेघवर्णो राजा चिरन्तनं पितृसचिवं दीर्घदर्शिनं सकलनीतिशास्त्रपारङ्गतं स्थिरजीविनामानं प्रणम्य प्रोवाच—"तात ! यदेते मया पृष्टाः सचिवास्तावदत्र स्थितस्यापि तव, तत्परीक्षार्थं येन त्वं सकलं श्रुत्वा यदुचितं तन्मे समादिशसि। तद्युक्तं भवति, तत्समादिश्यताम्।"

व्याख्या—चिरन्तनं = परमवृद्धम्, पितृसचिवं = स्वपितुः, सचिवं, दीर्घदर्शिनं = दूरदर्शिनं, स्थितस्य = वर्तमानस्य, परीक्षार्थं = विचारार्थं, समादिशसि = विज्ञापयिष्यसि।

हिन्दी—चिरञ्जीवी के परामर्श को सुनने के पश्चात् मेघवर्ण ने परमवृद्ध, दीर्घदर्शी,

सम्पूर्ण राजनीतिशास्त्रों में पारङ्गत और अपने पिता के काल से ही सचिव-पदपर नियुक्त स्थिरजीवी नाम के सचिव को प्रणाम करके विनम्र भाव से कहा—तात! आपके उपस्थित रहते हुए भी मैंने जो इन सचिवों से प्रश्न किया है, वह इनकी परीक्षा के लिए किया है जिससे इनके उत्तरों को सुनकर आप समुचित विचार कर सकें और मेरे योग्य जो हो उसका निर्देश दे सकें। आप इनके मतों को सुन चुके हैं। अतः मेरे लिए जो प्रेय एवं श्रेय मार्ग हो, उसका निर्देश करें।"

स आह—"वत्स! सर्वैरप्येतैर्नीतिशास्त्राश्रयमुक्तं सचिवैः, तदुपयुज्यते स्वकालोचितं सर्वमेव। परमेष द्वैधीभावस्य कालः।

उक्तञ्च—

अविश्वासं सदा तिष्ठेत्सन्धिना विग्रहेण च।
द्वैधीभावं समाश्रित्य पापे शत्रौ बलीयसि॥ ६०॥

व्याख्या—नीतिशास्त्राश्रयं=नीतिसंमतं (नीतिशास्त्र के अनुसार), उपयुज्यते=युज्यते, स्वकालोचितं=समयोचितं, द्वैधीभावस्य=आदौ सन्धिना रिपोः विश्वासं समुत्पाद्य ततस्तस्य प्रतीकारः कर्तव्यः। कालः=समयः, द्वैधीभावं समाश्रित्य=द्वैधीभावम् आश्रित्य, बलीयसि=बलवति, पापे=दुष्टे, शत्रौ=रिपौ, सदा, अविश्वासं=अविश्वस्तः यथा स्यात्तथा, (अविश्वास के साथ), तिष्ठेत्॥ ६०॥

हिन्दी—स्थिरजीवी ने कहा—वत्स! इन सभी मन्त्रियों ने नीतिसम्मत ही परामर्श दिया है। अपने-अपने समय के अनुरूप सभी परामर्श ग्राह्य एवं उपादेय हैं। किन्तु वर्तमान परिस्थिति द्वैधीभाव की है। अतः द्वैधीभाव का ही अवलम्बन करना इस समय उपयुक्त होगा।

कहा भी गया है कि—

दुष्ट एवं बलवान् शत्रु के साथ द्वैधीभाव का अवलम्बन करके अविश्वस्त रूप से सन्धि का भाव प्रदर्शित करते रहना चाहिए और भीतर ही भीतर युद्ध की तैयारी भी करते रहना चाहिए॥ ६०॥

ततः स्वयमविश्वस्तैर्लोभं दर्शयद्भिः शत्रुर्विश्वास्य सुखेनोच्छिद्यते।

उक्तञ्च—

उच्छेद्यमपि विद्वांसो वर्धयन्त्यरिमेकदा।
गुडेन वर्धितः श्लेष्मा सुखं वृद्ध्या निपात्यते॥ ६१॥
स्त्रीणां शत्रोः कुमित्रस्य पण्यस्त्रीणां विशेषतः।
यो भवेदेकभावेन न स जीवति मानवः॥ ६२॥
कृत्यं देवद्विजातीनामात्मनश्च गुरोस्तथा।
एकभावेन कर्तव्यं शेषं भावद्वयाश्रितैः॥ ६३॥

व्याख्या—उच्छेद्यमपि=विनाशयितुं योग्यमपि, अरिं=शत्रु, श्लेष्मा=कफः, वृद्ध्या=वर्धनेन, निपात्यते=पात्यते॥ ६१॥ पण्यस्त्रीणां=वेश्यानाम्। एकभावेन=

विश्वासयुक्तेनेत्यर्थः ॥ ६२ ॥ देवकृत्यं=पूजादिकं, एकभावेन=विश्वस्तभावेनेत्यर्थः । भावद्वयाश्रितैः=द्वैधीभावेन ॥ ६३ ॥

हिन्दी—स्वयं अविश्वस्त रहते हुए विभिन्न प्रलोभनों को दिखाकर शत्रु के हृदय में विश्वास उत्पन्न करना चाहिए। विश्वस्त हो जानेपर शत्रु को अनायास ही मारा जा सकता है। कहा भी गया है कि—

गुण के द्वारा बढ़ाया हुआ कफ बाद में जैसे अनायास गिरा दिया जाता है, उसी प्रकार शत्रु भी पहले बढ़ाकर अनायास ही गिरा दिया जाता है। इसीलिए बुद्धिमान् व्यक्ति पहले शत्रु को एकबार आगे बढ़ने का अवसर प्रदान कर देते हैं ॥ ६१ ॥

कहा भी गया है कि—

स्त्रियों, शत्रुओं, कुमित्रों तथा वेश्याओं के साथ विश्वस्त-भाव से रहने वाला व्यक्ति अधिक दिन तक नहीं जीता है ॥ ६२ ॥

देवकृत्य, द्विजकृत्य, आत्मकृत्य तथा गुरुकृत्य—इन्हीं चार कृत्यों को विश्वस्त भाव से करना चाहिए। शेष कृत्यों को द्वैधीभाव से ही करना चाहिए ॥ ६३ ॥

एको भावः सदा शस्तो यतीनां भावितात्मनाम् ।
श्रीलुब्धानां न लोकानां विशेषेण महीभृताम् ॥ ६४ ॥

तद् द्वैधीभावसंश्रितस्य तव स्वस्थाने वासो भविष्यति, लोभाश्रयाच्च शत्रुमुच्चाटयिष्यसि। अपरं यदि किञ्चिच्छिद्रं तस्य पश्यसि तद्गत्वा व्यापादयिष्यसि।"

मेघवर्ण आह—"तात ! अहमविदितसंश्रयस्तस्य । तत्कथं तस्य छिद्रं ज्ञास्यामि ?"।

स्थिरजीव्याह—"वत्स ! न केवलं स्थानं, छिद्राण्यपि तस्य प्रकटीकरिष्यामि प्रणिधिभिः।

व्याख्या—भावितात्मनाम्=आत्मतत्त्वविदां, श्रीलुब्धानां=धनलुब्धानां, महीभृतां=राज्ञाम् ॥ ६४ ॥ लोभाश्रयात्=लोभाश्रयणात्, छिद्रं=दोषम् । अविदितसंश्रयः=तस्याश्रयानभिज्ञः, प्रणिधिः=गुप्तचरः ।

हिन्दी—यतियों, आत्मतत्त्ववेत्ताओं तथा साधकों के ही लिए विश्वस्तभाव से रहना उचित होता है। अर्थलोलुपजनों और राजाओं के लिए विश्वस्तभाव से रहना उचित नहीं होता है ॥ ६४ ॥

द्वैधीभाव का अवलम्बन करके सर्वप्रथम तो आप अपने दुर्ग में निवास करते रहेंगे और यहीं से शत्रु को प्रलोभन दिखाकर उसका उच्चाटन भी कर सकेंगे।

मेघवर्ण ने पूछा—"तात ! मैं उसका आवास भी नहीं जानता हूँ, तो उसके छिद्रों को कैसे जान सकूँगा ?।

स्थिरजीवी ने कहा—"वत्स ! केवल उसका स्थान ही नहीं, उसके छिद्रों को भी मैं गुप्तचरों के द्वारा प्रकट कर दूँगा।

उक्तञ्च—

गावो गन्धेन पश्यन्ति, वेदैः पश्यन्ति वै द्विजाः।
चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः॥ ६५॥

तथा चोक्तमत्र विषये—

यस्तीर्थानि निजे पक्षे परपक्षे विशेषतः।
आप्तैश्चारैर्नृपो वेत्ति न स दुर्गतिमाप्नुयात्॥ ६६॥

व्याख्या—गन्धेन=घ्राणेन, द्विजाः=ब्राह्मणाः, वेदैः=श्रुतिभिः, चारैः=गुप्तचरैः, इतरे=अन्ये॥ ६५॥ अत्र विषये=नीतिविषये, निजे पक्षे=स्वपक्षे, परपक्षे=शत्रुपक्षे, तीर्थानि=राजपुरुषान्, दुर्गतिं=कष्टम्॥ ६६॥

हिन्दी—कहा भी गया है कि—

पशु गन्ध के द्वारा ( सूँघकर ) देखते हैं, ब्राह्मण वेदों और स्मृतियों के द्वारा देखते हैं, राजागण गुप्तचरों के द्वारा देखते हैं और अन्य साधारण जन नेत्रों द्वारा देखते हैं॥ ६५॥

इस विषय में शास्त्रों में कहा गया है कि—

जो राजा स्वपक्ष एवं विपक्ष के राजकर्मचारियों के विषय में गुप्तचरों के माध्यम से पूर्ण जानकारी रखता है, वह कभी भी कष्ट का भागी नहीं होता॥ ६६॥

मेघवर्ण आह—"तात! कानि तीर्थान्युच्यन्ते, कतिसङ्ख्यानि च? कीदृशा गुप्तचराः? तत्सर्वं निवेद्यताम्" इति।

स आह—"अत्र विषये भगवता नारदेन युधिष्ठिरः प्रोक्तः, यच्छत्रुपक्षेऽष्टादश तीर्थानि, स्वपक्षे पञ्चदश, त्रिभिस्त्रिभिर्गुप्तचरैस्तानि ज्ञेयानि, तैर्ज्ञातैः स्वपक्षः परपक्षश्च वश्यो भवति। नारदेन युधिष्ठिरं प्रति उक्तञ्च—

रिपोरष्टादशैतानि स्वपक्षे दश पञ्च च।
त्रिभिस्त्रिभिरविज्ञातैर्वेत्सि तीर्थानि चारकैः॥ ६७॥

व्याख्या—अत्रविषये=तीर्थविषये, स्वपक्षे=आत्मपक्षे, ज्ञेयानि=ज्ञातव्यानि। अविज्ञातैः=अविदितैः, चारकैः=गुप्तचरैः॥ ६७॥

हिन्दी—मेघवर्ण ने पूछा—"तात! तीर्थ किसको कहते हैं, वे कितने प्रकार के होते हैं? गुप्तचर कैसे होते हैं? कृपया स्पष्टरूप से कहें।"

स्थिरजीवी ने कहा—"इस विषय में भगवान् नारद ने युधिष्ठिर से कहा है कि—शत्रुपक्ष में अठारह तीर्थ होते हैं और स्वपक्ष में पन्द्रह तीर्थ होते हैं। उन प्रत्येक तीर्थों को तीन-तीन गुप्तचरों द्वारा जाना जाता है। उनकी जानकारी हो जानेपर स्वपक्ष एवं परपक्ष दोनों ही वशीभूत हो जाते हैं। नारद ने युधिष्ठिर से कहा भी है कि—

शत्रुपक्ष में अठारह तीर्थ होते हैं और स्वपक्ष में पन्द्रह तीर्थ होते हैं। इन तीर्थों को तीन-तीन अज्ञात गुप्तचरों द्वारा जाना जाता है॥ ६७॥

तीर्थशब्देनात्र आयुक्तकर्माभिधीयते। तद्यदि तेषां कुत्सितं भवति, तत्स्वामिनोऽभिघाताय भवति। प्रधानं भवति, तदृद्धये स्यादिति।

तद्यथा—मन्त्री, पुरोहितः, सेनापतिः, युवराजः, दौवारिकः, अन्तर्वंशिकः, प्रशास्तृ-समाहर्तृ-सन्निधातृ-प्रदेष्टारः, अश्वसाधनाध्यक्षः, गजाध्यक्षः, पर्षद्ध्यक्षः, बलाध्यक्षः, कोषाध्यक्षः, दुर्गपाल-सीमापाल प्रोत्कटभृत्याः, एषां भेदेन द्रागरिपुः साध्यते।

व्याख्या—आयुक्ताः=अधिकारिणः, कुत्सितं=गर्हितं कर्म, अभिघाताय=विनाशाय, प्रधानं=श्रेष्ठं, वृद्धये=वर्धनाय, युवराजः=राज्याधिकारी (राजपुत्रः) दौवारिकः=द्वारपालः, अन्तर्वंशिकः=अन्तःपुराध्यक्षः, प्रशास्ता=मुख्यप्रशासकः, समाहर्ता=करसङ्ग्राहकः, सन्निधाता=धनाधिकृतः (धनादि को सञ्चित करनेवाला सेवक), प्रदेष्टा=राजाज्ञाप्रचारकः, पर्षद्ध्यक्षः=सभाध्यक्षः, प्रोत्कटभृत्याः=राजसेवकाः, साध्यते=आत्मवशं क्रियते॥

हिन्दी—राजनीति में तीर्थ शब्द का अर्थ राजसेवक एवं राजकार्य होता है। यदि राजा के विभिन्न विभागों का कार्य उत्तम नहीं हुआ तो उससे राजा का ही विनाश होता है। यदि विभिन्न विभागों का कार्य उत्तम हुआ तो उससे राजा की अभिवृद्धि होती है। शत्रुपक्षीय राजा के विभिन्न विभागों के सञ्चालक अधिकारियों के नाम ये हैं—१. मन्त्री २. पुरोहित ३. सेनापति ४. युवराज ५. दौवारिक ६. अन्तर्वंशिक ७. प्रशास्ता ८. समाहर्ता ९. सन्निधाता १०. प्रदेष्टा ११. अश्वाध्यक्ष १२. गजाध्यक्ष १३. सभाध्यक्ष, १४. बलाध्यक्ष (पैदल सेना का अध्यक्ष) १५. कोशाध्यक्ष १६. दुर्गपाल १७. सीमापाल १८. अन्यप्रमुख भृत्य। इनका गुप्त भेद ज्ञात हो जाने पर शत्रु राजा अनायास ही वश में किया जा सकता है।

स्वपक्षे च—देवी, जननी, कञ्चुकी, मालिकः, शय्यापालकः, स्पशाध्यक्षः, सांवत्सरिकः, भिषक्, जलवाहकः, ताम्बूलवाहकः, आचार्यः, अङ्गरक्षकः, स्थानचिन्तकः, छत्रधारः, विलासिनी। एतेषां द्वारेण स्वपक्षे विघातः।

उक्तञ्च—

वैद्यसांवत्सराचार्याः स्वपक्षेऽधिकृताश्चराः।
तथाहितुण्डिकोन्मत्ताः सर्वं जानन्ति शत्रुषु॥ ६८॥

व्याख्या—देवी=राजमहिषी (रानी), जननी=राजमाता, मालिकः=मालाकारः स्पशाध्यक्षः=चराध्यक्षः, सांवत्सरिकः=भविष्यवक्ता (ज्यौतिषी), भिषक्=वैद्यः, जलवाहकः=जलदाता (पानी पिलानेवाला परिचारक), स्थानचिन्तकः=आसनाध्यक्षः, विलासिनी=वेश्या (नर्तकी) विघातः=विनाशः। आहितुण्डिकः=सर्पजीवी (सर्पों का खेल दिखाने वाला)॥६८॥

हिन्दी—स्वपक्ष के विभागाध्यक्षों एवं मुख्य व्यक्तियों के नाम ये हैं—१. रानी २. राजमाता ३. कञ्चुकी ४. मालाकार ५. शय्यापालक ६. गुप्तचराध्यक्ष ७. सांवत्सरिक (ज्यौतिषी) ८. वैद्य ९. जलवाहक १०. ताम्बूलवाहक ११. आचार्य १२. अङ्गरक्षक १३. नर्तकी। इनके द्वारा स्वपक्ष का विनाश हो सकता है। कहा भी गया है कि—

वैद्य, सांवत्सरिक, आचार्य, विश्वस्त गुप्तचर, आहितुण्डिक तथा विक्षिप्त वेश में घूमने वाले गुप्तचर—ये शत्रुपक्षीय राजा के सभी दोषों को जान सकते हैं॥ ६८॥

तथा च—

कृत्वा कृत्यविदस्तीर्थेष्वन्तः प्रणिधयः पदम्।
विदाङ्कुर्वन्तु महतस्तलं विद्विषदम्भसः ॥ ६९ ॥

एवं मन्त्रिवाक्यमाकर्ण्यात्रान्तरे मेघवर्णं आह—"तात ! अथ किं निमित्तमेवंविधं प्राणान्तिकं सदव वायसोलूकानां वैरम् ?"

स आह—"वत्स !—

व्याख्या— कृत्यविदः=कार्यकुशलाः, तीर्थेषु=विभिन्नविभागेषु, पदं=स्थानं, विद्विषदम्भसः=शत्रुसागरस्य, तलं=अन्तस्तत्त्वं, विदाङ्कुर्वन्तु=जानन्तु ( ज्ञातुं शक्नुवन्ति ) ॥ ६९ ॥ प्राणान्तिकं=प्राणान्तकरं वैरं=शत्रुत्वम्।

हिन्दी—और भी—

जैसे चतुर जन सोपानों द्वारा अथाह जल के अन्तस्तल का पता लगा सकते हैं, उसी-प्रकार कार्यकुशल एवं दक्ष गुप्तचर शत्रुपक्षीय अधिकारियों के माध्यम से विभिन्न विभागों के अन्तस्तल में प्रवेश कर उनके गुप्त भेदों को जान सकते हैं ॥ ६९ ॥

मन्त्री के उपर्युक्त वचनों को सुनकर मेघवर्ण ने पूछा—"तात ! वायस और उलूकों के मध्य इस प्रकार का प्राणान्तिक वैर क्यों हुआ है ?"।

स्थिरजीवी ने कहा—

[ १ ]

## ( काकोलूकवैरकथा )

कदाचिद्धंसशुकबककोकिलचातकोलूककपोतपारावतविष्किरप्रभृतयः सर्वेऽपि पक्षिणः समेत्य सोद्वेगं मन्त्रयितुमारब्धाः—"अहो ! अस्माकं तावद्वैनतेयो राजा, स च वासुदेवभक्तः, न कामपि चिन्तामस्माकं करोति, तत्किं तेन वृथा स्वामिना ? यो लुब्धकपाशैर्नित्यं निबध्यमानानां न रक्षां विधत्ते।

व्याख्या—विष्किरः=कुक्कुटः, समेत्य=एकत्र स्थित्वा, सोद्वेगं=सकष्टम्, अस्माकं=खगानां, वैनतेयः=गरुडः, वासुदेवः=नारायणः, स्वामिना=प्रजापालकेन राज्ञा, लुब्धकः=व्याधः।

हिन्दी—कभी हंस, शुक, वक, कोकिल, चातक, कपोत परावत, कुक्कुट आदि प्रमुख पक्षियों ने एकत्र होकर आपस में एक सभा की, जिसमें उद्विग्न एवं खिन्न होकर उन सबों ने यह विचार किया कि "वैनतेय हम लोगों का राजा है और वह भगवान् वासुदेव का भक्त है। वह हमलोगों की कभी चिन्ता नहीं करता। अतः ऐसे व्यर्थ राजा से लाभ ही क्या है जो व्याधों के पाश से बंधकर नित्य छटपटाने वाले हम पक्षियों की रक्षा तक नहीं कर सकता।

उक्तञ्च—

> यो न रक्षति वित्रस्तान् पीड्यमानान्परैः सदा।
> जन्तून् पार्थिवरूपेण स कृतान्तो न संशयः॥ ७०॥
> यदि न स्यान्नरपतिः सम्यङ् नेता ततः प्रजाः।
> अकर्णधारा जलधौ विप्लवेतेह नौरिव॥ ७१॥
> षडिमान् पुरुषो जह्याद्भिन्नां नावमिवार्णवे।
> अप्रवक्तारमाचार्यमनधीयानमृत्विजम्॥ ७२॥
> अरक्षितारं राजानं भार्यां चाप्रियवादिनीम्।
> ग्रामकामञ्च गोपालं वनकामं च नापितम्॥ ७३॥

तत्सञ्चिन्त्यान्यः कश्चिद्राजा विहङ्गमानां क्रियताम्" इति।

व्याख्या—परैः=शत्रुभिः, पीड्यमानान्=क्लिश्यमानान्, वित्रस्तान्=भयग्रस्तान्, पार्थिवरूपेण=नृपतिरूपेण, कृतान्तः=यमः॥ ७०॥ नेता=नायकः, जलधौ=समुद्रे, अकर्णधारा=कर्णधाररहिता (माँझीरहित), विप्लवेत=निमज्जेत (विनश्येदित्यर्थः)॥७१॥ अप्रवक्तारम्=अनुपदेष्टारम् ( उपदेश न देनेवाले ), आचार्यं=गुरुम्, अनधीयानम्=अविद्वांसम्, ऋत्विजं=पुरोहितं, होतारं वा, अरक्षितारम्=अत्रातारम्, अप्रियवादिनीं=कटुभाषिणीं, ग्रामकामं=ग्रामासक्तं, गोपालं=गोचारकं, वनकामम्=वनासक्तं, नापितञ्च=क्षुरिणम्, अर्णवे=समुद्रे, भिन्नां=त्रुटितां छिन्नां, नौकामिव, जह्यात्=त्यजेत्॥ ७२-७३॥

हिन्दी—कहा भी गया है कि—

जो राजा शत्रुओं द्वारा पीड़ित एवं भयत्रस्त होनेवाली अपनी प्रजा की रक्षा नहीं कर सकता, वह राजा के रूप में यमराज ही होता है॥ ७०॥

यदि राजा प्रजा का उचित नेतृत्व नहीं करता तो उसकी प्रजा समुद्र में डूबनेवाली कर्णधाररहित नौका की तरह विनष्ट हो जाती है॥ ७१॥

जैसे समुद्र में डूबनेवाली टूटी हुई नौका को छोड़ दिया जाता है, उसीप्रकार से इन छः व्यक्तियों को भी छोड़ देना चाहिये—१—अनुपदेष्टा गुरु, २—मूर्ख ऋत्विक् ( पुरोहित ), ३—अरक्षक राजा, ४—अप्रियवादिनी स्त्री, ५—ग्रामवासी गोपाल, एवं ६—वनवासी नापित। ( इनसे जनसमुदाय का कोई भी हित नहीं हो सकता। अतः इनका परित्याग कर देना ही श्रेयस्कर होता है।) ॥ ७२-७३॥

अतः आपस में विचार करके हमलोगों को दूसरा कोई पक्षियों का राजा चुन लेना चाहिए"।

अथ तैर्भद्राकारमुलूकमवलोक्य सर्वैरभिहितं यत् एष उलूको राजास्माकं भविष्यति। तदानीयतां नृपाभिषेकसम्बन्धिनः सम्भाराः" इति।

अथ साधिते विविधतीर्थोदके, प्रगुणीकृतेऽष्टोत्तरशतमूलिकासङ्घाते, प्रदत्ते सिंहासने, वर्तिते ससद्वीपसमुद्रभूधरविचित्रे धरामण्डले, प्रसारिते व्याघ्रचर्मणि, आ-

पूरितेषु हेमकुम्भेषु, दीपेषु वाद्येषु च सज्जीकृतेषु माङ्गल्यवस्तुषु, गीतपरे युवतीजने, आनीतायामग्रमहिष्यां कृकालिकायाम् उलूकोऽभिषेकार्थं, यावत्सिंहासने उपविशति तावत्कुतोऽपि वायसः समायातः।

व्याख्या—भद्राकारं = सुरूपम्, भव्याननमिति यावत्, सम्भाराः = सामग्र्यः (राजतिलक की सामग्रियां), साधिते = आनीते, तीर्थोदके = तीर्थजले, प्रगुणीकृते = एकत्रीकृते, मूलिकासङ्घाते = काष्ठौषधिमूलनिचये (औषधमूलों को), वर्तिते = अङ्किते (चौक बनाने के बाद) हेमकुम्भेषु = सुवर्णकुम्भेषु, वन्दिमुख्येषु = स्तुतिपाठकेषु, समुदितमुखेषु = साधितैकस्वरेषु, युवतिजने = स्त्रीजने, अग्रमहिषी = राजमहिषी, कृकालिका = पक्षिविशेषः।

हिन्दी—भद्राकृति वाले उलूक को देखकर सभी पक्षियों ने एक स्वर से प्रस्ताव किया कि—"यह उलूक हम लोगों का राजा होगा। अतः राज्याभिषेक की सामग्रियों को एकत्र किया जाय।"

उक्त निर्णय के पश्चात् राज्याभिषेक की तैयारी प्रारम्भ हो गयी। विविध तीर्थों का जल एकत्र किया गया। १०८ औषधियों का मूल जुटाया गया। सिंहासन को उचित स्थान पर रख दिया गया। सातों द्वीपों और सम्पूर्ण पर्वतों से चित्रित विचित्र-चौक बनाकर पृथ्वी का एक अत्यन्त मनोहर चित्र बना दिया गया। व्याघ्रचर्म बिछा दिया गया। स्वर्ण-कलशों को जल से भर दिया गया। दीपमालायें जला दी गयीं। चारों ओर सुन्दर बाजे बजने लगे। माङ्गलिक सामग्रियों को एकत्र कर यथास्थान रख दिया गया। वन्दीगण ने स्तुतिपाठ, वैदिकों ने समवेत स्वरों से वेदपाठ करना आरम्भ कर दिया। युवतियों ने मङ्गलगान प्रारम्भ कर दिया। राजमहिषी के स्थान पर कृकालिका को लाकर बैठा दिया गया। इस प्रकार राज्याभिषेक की सम्पूर्ण तैयारी हो जाने के बाद जब वह उलूक अभिषेक के लिए सिंहासनपर बैठ ही रहा था तभी एक काक कहीं से उड़ता हुआ आ पहुंचा।

सोऽचिन्तयत्—"अहो, किमेष सकलपक्षिसमागमो महोत्सवश्च?"।

अथ ते पक्षिणस्तं दृष्ट्वा मिथः प्रोचुः—"पक्षिणां मध्ये वायसश्चतुरः श्रूयते। उक्तञ्च—

> नराणां नापितो धूर्तः पक्षिणाञ्चैव वायसः।
> दंष्ट्रिणाञ्च शृगालस्तु श्वेतभिक्षुस्तपस्विनाम् ॥ ७४ ॥

तदस्यापि वचनं ग्राह्यम्। उक्तञ्च—

> बहुधा बहुभिः सार्धं चिन्तिताः सुनिरूपिताः।
> कथञ्चिन्न विलीयन्ते विद्वद्भिश्चिन्तिता नयाः ॥ ७५ ॥

व्याख्या—पक्षिसमागमः = पक्षिसम्मेलनम्। श्वेतभिक्षुः = जैनभिक्षुः ॥ ७४ ॥ अस्य = काकस्य, चिन्तिताः = विचारिताः, = सुनिरूपिताः = सुनिर्णीताः, न विलीयन्ते = निष्फलतां न यान्ति ॥ ७५ ॥

हिन्दी—पक्षियों के उस सम्मेलन को देखकर वायस ने अपने मन में सोचा—पक्षियों का यह सम्मेलन कैसा हो रहा है ? यह कैसा उत्सव मनाया जा रहा है ?"।

उन पक्षियों ने उस वायस को देखकर आपस में विचार किया कि पक्षियों में वायस सबसे अधिक चतुर होता है, यह सुना जाता है। कहा भी गया है कि—

'मनुष्यों में नाई सबसे चतुर एवं धूर्त होता है। पक्षियों में वायस सबसे चतुर होता है। हिंस्र जन्तुओं में ( नखजीवी जन्तुओं में ) शृगाल चतुर होता है और साधुओं में जैनभिक्षु सबसे अधिक धूर्त एवं चतुर होता है ॥ ७४ ॥

अतः इस वायस से भी परामर्श कर लेना चाहिए। कहा भी गया है कि—

अनेक व्यक्तियों के द्वारा चिन्तित, एवं सुनिर्णीत, तथा विद्वानों के द्वारा बताये हुए उपाय कभी व्यर्थ नहीं होते है ॥ ७५ ॥

**अथ वायसः समेत्य तानाह—"अहो किं महाजनसमागमोऽयं, परममहोत्सवश्च।"**

**ते प्रोचुः—"भोः! नास्ति कश्चिद् विहङ्गमानां राजा, तदस्योलूकस्य विहङ्गम-राज्याभिषेको निरूपितस्तिष्ठति समस्तपक्षिभिः। तत्त्वमपि स्वमतं देहि, प्रस्तावे समागतोऽसि।**

**अथासौ काको विहस्याऽऽह—"अहो! न युक्तमेतत्, यन्मयूरहंसकोकिलचक्र-वाकशुककारण्डवहारीतसारसादिषु पक्षिप्रधानेषु विद्यमानेषु दिवान्धस्यास्य करालवक्त्र-स्याभिषेकः क्रियते। तन्नैतन्मम मतम्।**

व्याख्या—समेत्य = आगत्य, महाजनसमागमः = जनसम्मेलनम्, निरूपितः = निर्णीतः, प्रस्तावे = समुचितेऽवसरे, कारण्डवः = पक्षिविशेषः ( बत्तख ), करालवक्त्रस्य = विकृताननस्य ( भीषणाकारस्य )।

हिन्दी—वायस ने उन पक्षियों के समीप जाकर पूछा—इतना बड़ा यह जनसमुदाय क्यों एकत्र हुआ है ? यह कैसा महोत्सव मनाया जा रहा है ?"।

उन पक्षियों ने उत्तर में कहा—"महाशय ! पक्षियों का कोई राजा नहीं है। अतः पक्षियों ने सर्वसम्मत प्रस्ताव के द्वारा उलूक को ही पक्षियों का राजा बनाने का निर्णय किया है। आप अत्यन्त उचित समय पर उपस्थित हुये हैं। अतः आप भी अपनी सम्मति प्रदान करें।"

वायस ने ईषत् हँसकर कहा—"अरे भाई ! यह उचित तो नहीं हो रहा है। मयूर, हंस, कोकिल, चक्रवाक, शुक, बत्तख, हारीत एवं सारस आदि प्रमुख पक्षियों के रहते हुये इस दिवान्ध एवं करालवदन वाले उलूक का राज्याभिषेक किया जा रहा है, यह कितनी अनुचित बात है !

अतः आप के उक्त प्रस्ताव से मैं सहमत नहीं हूँ। मैं इसमें अपनी सम्मति नहीं दे सकता।

यतः—

वक्रनासं सुजिह्माक्षं क्रूरमप्रियदर्शनम्।
अक्रुद्धस्येदृशं वक्त्रं भवेत्क्रुद्धस्य कीदृशम् ? ॥ ७६ ॥

तथा च—

स्वभावरौद्रमत्युग्रं क्रूरमप्रियवादिनम्।
उलूकं नृपतिं कृत्वा का नः सिद्धिर्भविष्यति ? ॥ ७७ ॥

अपरं वैनतेये स्वामिनि स्थिते किमेष दिवान्धः क्रियते राजा ? तद् यद्यपि गुणवान् भवति तथाप्येकस्मिन् स्वामिनि स्थिते, नान्यो भूपः प्रशस्यते।

व्याख्या—वक्रनासं=वक्रनासिकायुतं, सुजिह्माक्षं=कुटिलनेत्रं, क्रूरं=दुष्टम्, अप्रियदर्शनम्=अशुभदर्शनं, वक्त्रं=मुखम् ॥ ७६ ॥ रौद्रं=भयङ्करं, नः=अस्माकम् ॥ ७७ ॥ गुणवान्=गुणयुक्तः।

हिन्दी—क्योंकि—

विना क्रुद्ध हुये ही जिसकी नासिका टेढ़ी है, जिसके नेत्र कुटिल हैं, जो क्रूर एवं अप्रियदर्शन है, वह क्रुद्ध होने पर कैसा होगा ? ॥ ७६ ॥

और भी—स्वभाव से भयङ्कर, अत्युग्र, क्रूर तथा अप्रियवादी उलूक को राजा बनाकर हम लोगों का क्या हित हो सकेगा ? ॥ ७७ ॥

यदि इसपर कोई विचार न भी किया जाय तब भी गरुड़ जैसे राजा के होते हुये इस दिवान्ध उलूक को क्यों राजा बनाया जा रहा है ?। यदि यह गुणवान् हो तब भी एक राजा के होते हुये दूसरे को राजा बनाना उत्तम नहीं कहा जा सकता।

एक एव हितार्थाय तेजस्वी पार्थिवो भुवः।
युगान्त इव भास्वन्तो बहवोऽत्र विपत्तये ॥ ७८ ॥

तत्तस्य नाम्नापि यूयं परेषामगम्या भविष्यथ। उक्तञ्च—

गुरूणां नाममात्रेऽपि गृहीते स्वामिसम्भवे।
दुष्टानां पुरतः क्षेमं तत्क्षणादेव जायते ॥ ७९ ॥

तथा च—

व्यपदेशेन महतां सिद्धिः सञ्जायते परा।
शशिनो व्यपदेशेन वसन्ति शशकाः सुखम्" ॥ ८० ॥

पक्षिण ऊचुः—"कथमेतत् ?"। स आह—

व्याख्या—भुवः=पृथिव्याः, पार्थिवः=राजा, हितार्थाय=उपकाराय, बहवः=अनेके, विपत्तये=अपकाराय ॥ ७८ ॥ गुरूणां=महतां, क्षेमं=कल्याणम् ॥ ७९ ॥ व्यपदेशेन=नामग्रहणेन ॥ ८० ॥

हिन्दी—एक ही तेजस्वी राजा पृथ्वी के लिये कल्याणकारक होता है। अनेक राजाओं का होना तो युगान्तकालिक द्वादशादित्यों के समान विपत्तिकारक ही होता है ॥ ७८ ॥

गरुड़ के राजा रहने पर उनका नाम मात्र लेने से ही आप लोग दूसरों के लिये दुर्दमनीय बने रहेंगे। कहा भी गया है कि—

महान् व्यक्ति के राजा होने पर उसका नाम ग्रहण करने मात्र से ही दुष्टों के हाथ से तत्काल प्रजा की रक्षा हो जाती है ॥ ७९ ॥

और भी—

महान् व्यक्ति का नाम ग्रहण करने मात्र से ही कभी-कभी बहुत बड़ा कार्य सिद्ध हो जाता है। चन्द्रमा का नाम लेने मात्र से ही शशक सरोवर में सुखपूर्वक निवास करने लगे थे" ॥ ८० ॥

पक्षियों ने पूछा—"यह कैसे" ?

उसने उत्तर में कहा—

[ २ ]

## ( शशक-गजयूथप-कथा )

कस्मिंश्चिद्वने चतुर्दन्तो नाम महागजो यूथाधिपः प्रतिवसति स्म। तत्र कदाचिन्महत्यनावृष्टिः सञ्जाता, प्रभूतवर्षाणि यावत्। तया तडागह्रदपल्वलसरांसि शोषमुपगतानि।

अथ तैः समस्तगजैः स गजराजः प्रोक्तः—"देव! पिपासाकुला गजकलभा मृतप्रायाः अपरे मृताश्च। तदन्विष्यतां कश्चिज्जलाशयो यत्र जलपानेन ते स्वस्थतां व्रजन्ति।"

ततश्चिरं ध्यात्वा तेनाभिहितम्—"अस्ति महाह्रदो विविक्ते प्रदेशे स्थलमध्यगतः पातालगङ्गाजलेन सदैव पूर्णः, तत्तत्र गम्यताम्" इति।

व्याख्या—यूथाधिपः = यूथनायकः, अनावृष्टिः = अवर्षणम्, ( पानी का अभाव ) प्रभूतवर्षाणि = बहुवर्षाणि, तया = अनावृष्ट्या, पल्वलम् = अल्पसरः, शोषमुपगतानि = शुष्कतां गतानि। पिपासाकुलाः = तृषार्ताः, गजकलभाः = गजशिशवः, ( गजों के बच्चे ), स्वस्थतां = प्राणधारणक्षमाः ( जीने योग्य, स्वस्थ ), विविक्ते = जनशून्ये, स्थलमध्यगतः = भूमध्यगतः।

हिन्दी—किसी वन में चतुर्दन्त नाम का गजों का एक यूथाधिप रहता था। वहां कभी बहुत बड़ा अवर्षण हुआ जो कई वर्षों तक चलता रहा। उस अवर्षण के कारण सभी तडाग, झील, पोखरे तथा छोटे-बड़े सरोवर आदि सूख गये।

एक दिन सभी गजों ने मिलकर उस यूथाधिप से कहा—'देव! तृषार्त होने के कारण बहुत से गज-शिशु मरणासन्न हो गये हैं और कुछ मर भी चुके हैं, अतः किसी ऐसे जलाशय का अन्वेषण किया जाय, जिसका जल पीकर ये स्वस्थ हो सकें।

बहुत देर तक सोचने के बाद उस यूथाधिप ने कहा—"निर्जन स्थान में समतल भूमि

पर ही एक अतिविशाल जलाशय है, जो पाताल-गङ्गा के जल से सर्वदा परिपूर्ण रहता है। अतः आप लोग वहीं चले जाँय !"।

तथानुष्ठिते पञ्चरात्रमुपसर्पद्भिः समासादितस्तैः स ह्रदः। तत्र स्वेच्छया जलमवगाह्यास्तमनवेलायां निष्क्रान्ताः। तस्य च ह्रदस्य समन्ताच्छशकबिलान्यसङ्ख्यानि सुकोमलभूमौ तिष्ठन्ति। तान्यपि समस्तैरपि तैर्गजैरितस्ततो भ्रमद्भिः परिभग्नानि। बहवः शशका भग्नपादशिरोग्रीवा विहिताः, केचिन्मृताः, केचिज्जीवशेषा जाताः।

व्याख्या—उपसर्पद्भिः = गच्छद्भिः, जलमवगाह्य = जले प्रविश्य स्नात्वा, जलं पीत्वा च, अस्तमनवेलायां = सन्ध्याकाले, परिभग्नानि = स्फुटितानि उच्छिन्नतां गतानि। जीवशेषाः = प्राणमात्रशेषाः।

हिन्दी—गजाधिप की आज्ञा से उसके यूथ के गजों ने तत्काल प्रस्थान कर दिया। पाँच रात्रि तक निरन्तर चलते रहने के पश्चात् उन गजों को वह जलाशय मिला। जलाशय में प्रवेश करके स्वेच्छापूर्वक स्नानादि करने के बाद सन्ध्या-काल में वे उससे बाहर निकले। उस जलाशय के चारों ओर कोमल भूमि में शशकों के असङ्ख्य बिल बने हुये थे। उन सम्पूर्ण गजों के स्वेच्छापूर्वक इधर-उधर घूमने के कारण शशकों के वे बिल टूट-फूट गये। गजों के पैरों से कुचल जाने के कारण अनेक शशकों के पैर तथा शिर आदि टूट गये, बहुत से तो मर भी गये। और कुछ अधमरे हुये जीवितमात्र पड़े रहे।

अथ गते तस्मिन् गजयूथे शशकाः सोद्वेगा गजपादक्षुण्णसमावासाः केचिद्भग्नपादाः, अन्ये जर्जरितकलेवरा रुधिरप्लुताः, अन्ये हतशिशवो बाष्पपिहितलोचनाः समेत्य मन्त्रं चक्रुः—"अहो! विनष्टा वयम्, नित्यमेवैतद् गजयूथमागमिष्यति, यतो नान्यत्र जलमस्ति। तत्सर्वेषां नाशो भविष्यति। उक्तञ्च—

स्पृशन्नपि गजो हन्ति जिघ्रन्नपि भुजङ्गमः।
हसन्नपि नृपो हन्ति मानयन्नपि दुर्जनः॥ ८१॥

व्याख्या—सोद्वेगाः = उद्विग्नाः सन्तः, गजपादक्षुण्णसमावासाः = गजचरणैर्विनष्टाश्रयाः, भग्नपादाः = त्रुटितचरणाः, जर्जरितकलेवराः = विशीर्णदेहाः, बाष्पपिहितलोचनाः = बाष्पावरुद्धनेत्राः।

हिन्दी—उस गज-यूथ के चले जानेपर हाथियों के पैरों से जो आवासरहित हो चुके थे, जिनके पैर टूट गये थे, जिनका शरीर विशीर्ण हो चुका था, जो खून से लथपथ हो चुके थे, जिनके बच्चे कुचलकर मर चुके थे और उस प्रलयकारी विनाश के कारण जिनके नेत्र आँसुओं से भर चुके थे, वे सभी शशक उद्विग्न होकर एकत्र हुये और परस्पर में यह विचार करने लगे—हमलोग तो अब विनष्ट हो ही गये। गजों का यह यूथ नित्य यहाँ आता ही रहेगा; क्योंकि अन्य किसी जलाशय में जल नहीं रह गया है। अतः सबका विनाश सुनिश्चित है। कहा भी गया है कि—

गज स्पर्शमात्र से ही मार डालता है। सर्प घ्राण मात्र (सूंघने मात्र) से ही मार डालता है। राजा हँसते हुये भी प्राणदण्ड दे देता है और दुर्जन व्यक्ति सम्मान करते हुये भी मार डालता है ॥ ८१ ॥

तच्चिन्त्यतां कश्चिदुपायः"। तत्रैकः प्रोवाच—"गम्यतां देशत्यागेन। किमन्यत्। उक्तञ्च मनुना व्यासेन च—

त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ ८२ ॥
क्षेम्यां सस्यप्रदां नित्यं पशुवृद्धिकरीमपि।
परित्यजेन्नृपो भूमिमात्मार्थमविचारयन् ॥ ८३ ॥
आपदर्थे धनं रक्षेद्, दारान् रक्षेद्धनैरपि।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि" ॥ ८४ ॥

व्याख्या—देशत्यागेन=देशं त्यक्त्वा, कुलं=गोत्रम् ॥८२॥ क्षेम्यां=क्षेमकरीं, सस्यप्रदां =धान्यप्रदाम्, अविचारयन् ॥ ८३ ॥ दारान्=स्त्रीः ॥ ८४ ॥

हिन्दी—अतः आत्मरक्षार्थ कोई न कोई उपाय अवश्य सोचना चाहिए।

उनमें से एक ने कहा—"हम को यह स्थान ही छोड़ देना चाहिए। अन्य उपाय ही क्या हो सकता है? मनु और व्यास ने कहा भी है कि—

कुल की रक्षा के लिये एक व्यक्ति का, ग्राम की रक्षा के लिये कुल का, जनपद के लिये ग्राम का परित्याग कर देना चाहिये और अपनी रक्षा के लिये आवश्यक हो तो सम्पूर्ण पृथिवी का भी त्याग करने में सङ्कोच नहीं करना चाहिये ॥ ८२ ॥

यदि सङ्कट की स्थिति आ जाय और आवश्यक हो तो कल्याणदायिनी, धान्य से परिपूर्ण तथा पशुवृद्धिकरी पृथिवी को बिना विचार के ही छोड़ देना चाहिये" ॥ ८३ ॥

आपत्तिकालीन स्थिति के लिये धन की रक्षा करनी चाहिये। धन से स्त्री की रक्षा करनी चाहिये और स्त्री तथा धन दोनों ही से अपनी रक्षा करनी चाहिये ॥ ८४ ॥

ततश्चान्ये प्रोचुः—भोः, पितृपैतामहं स्थानं न शक्यते सहसा त्यक्तुम्। तत्क्रियतां तेषां कृते काचिद् बिभीषिका यत्कथमपि दैवान्न समायान्ति।

उक्तञ्च—

निर्विषेणापि सर्पेण कर्तव्या महती फटा।
विषं भवतु मा वास्तु फटाटोपो भयङ्करः" ॥ ८५ ॥

व्याख्या—पितृपैतामहं=वंशक्रमादागतं, बिभीषिका=भयोत्पादनोपायः। निर्विषेण= विषरहितेनापि ॥ ८५ ॥

हिन्दी—उसकी बात को सुनकर दूसरों ने कहा—"नहीं भाई! पिता एवं पितामहों के काल से चले आने वाले स्थान को सहसा छोड़ देना सम्भव नहीं है। अतः उनको डराने के

लिए ही कोई अन्य उपाय किया जाना चाहिए। हो सकता है कि उस उपाय से भयभीत होकर संयोग वश वे फिर यहाँ न आ सकें। कहा भी गया है कि—

विषरहित सर्प को भी अपने फणों को उठाकर फुफुकारते रहना चाहिये। उनके मुख में विष हो या न हो, फण की भयङ्करता लोगों को भयभीत करने के लिये पर्याप्त होती है। उसके डर से कोई भी आक्रमण करने का साहस नहीं करता" ॥ ८५ ॥

अथान्ये प्रोचुः—"यद्येवं ततस्तेषां महद्बिभीषिकास्थानमस्ति, येन नागमिष्यन्ति। सा च चतुरदूतायत्ता विभीषिका। यतो विजयदत्तो नाम राजाऽस्मत्स्वामी शशकश्चन्द्र-मण्डले निवसति। तत्प्रेष्यतां कश्चिन्मिथ्यादूतो यूथाधिपसकाशं यत् चन्द्रस्त्वामत्र ह्रदे आगच्छन्तं निषेधयति। यतोऽस्मत्परिग्रहोऽस्य समन्ताद् वसति। एवमभिहिते श्रद्धेय-वचनात् कदाचिन्निवर्तते।"

व्याख्या—विभीषिकास्थानं = भयोत्पादनोपायः, दूतायत्ता = दूताधीना, मिथ्यादूतः = कल्पितो दूतः। श्रद्धेयवचनात् = विश्वासयोग्यवचनात्।

हिन्दी—उनकी बात को सुनकर अन्य शशकों ने कहा—"यदि ऐसी बात है तो उनको त्रस्त करने का एक उपाय है जिससे वे पुनः नहीं आयेंगे। वह उपाय चतुर दूत के आधीन है। हमलोगों का राजा विजयदत्त चन्द्रमा के मण्डल में निवास करता है। अतः चन्द्रमा की ओर से एक झूठा दूत बनाकर उस गजाधिप के पास भेजा जाय जो वहाँ जाकर यह सन्देश कहे कि—"महाराज चन्द्र तुमको इस ह्रद में आने से रोकते हैं।" उनका कथन है कि—"इस ह्रद के चारों ओर मेरे कुटुम्बीजन निवास करते हैं।" संभव है कि इस वचन में विश्वास करके वह गजाधिप वापस लौट जाय।"

अथान्ये प्रोचुः—"यद्येवं तदस्ति लम्बकर्णो नाम शशकः। स च वचनरचना-चतुरो दूतकर्मज्ञः। स तत्र प्रेष्यताम्, इति। उक्तञ्च—

साकारो निस्पृहो वाग्मी नानाशास्त्रविचक्षणः।
परचित्तावगन्ता च राज्ञो दूतः स इष्यते ॥ ८६ ॥

अन्यच्च—

यो मूर्खं लौल्यसम्पन्नं राजा दूतं समाचरेत्।
मिथ्यावादं विशेषेण तस्य कार्यं न सिध्यति ॥ ८७ ॥

तदन्विष्यतां, यथास्माद् व्यसनाद्ात्मनां सुनिर्मुक्तिः"।

व्याख्या—वचनरचनाचतुरः = वाक्पटुः, दूतकर्मज्ञः = दूतकर्मवित्, साकारः = सुन्दरः, निःस्पृहः = त्यागी, वाग्मी = वाक्पटुः (वक्ता) विचक्षणः = विलक्षणः, परचित्तावगन्ता = परभावाभिज्ञः ॥ ८६ ॥ लौल्यसम्पन्नं = चापल्ययुक्तं (लोभयुक्तमित्यर्थः), मिथ्यावादं = मिथ्या-वादिनम् ॥ ८७ ॥ व्यसनात् = आपत्ते, कष्टादित्यर्थः।

हिन्दी—दूसरों ने कहा—"यदि ऐसी बात है, तो लम्बकर्ण नाम का एक शशक है।

वह वाक्पटु होने के साथ ही दूत के कार्य में भी निपुण है, उसी को वहाँ भेजा जाय। कहा भी गया है कि—

राजदूत उसी व्यक्ति को बनाना चाहिये जो सुरूपवान्, निःस्पृह, वाक्पटु, विभिन्न-शास्त्रों का ज्ञाता, विलक्षणबुद्धिसम्पन्न तथा दूसरों के मनोगत भावों को समझने में प्रवीण हो ॥ ८६ ॥

और भी—जो राजा मूर्ख, लोभी, चञ्चल तथा असत्यवादी व्यक्ति को अपना दूत बनाकर भेजता है, उसके अभिप्रायों की सिद्धि नहीं होती ॥ ८७ ॥

अतः उसको खोजकर शीघ्र भेजने का प्रबन्ध करना चाहिये जिससे इस भयङ्कर विपत्ति से हमलोगों को मुक्ति मिल जाय।"

**अथान्ये प्रोचुः—"अहो, युक्तमेतद्। नान्यः कश्चिदुपायोऽस्माकं जीवितस्य। तत्तथैव क्रियताम्।"**

**अथ लम्बकर्णो गजयूथाधिपसमीपे निरूपितो गतश्च। तथानुष्ठिते लम्बकर्णोऽपि गजमार्गमासाद्यागम्यस्थलमारुह्य तं गजमुवाच—**

**"भो, भो दुष्टगज! किमेवं लीलया निःशङ्कतयात्र चन्द्रह्रदे आगच्छसि। तन्नागन्तव्यं, निवर्त्यताम्" इति।**

**तदाकर्ण्य विस्मितमना गज आह—"भोः, कस्त्वम्?"।**

**स आह—"अहं लम्बकर्णो नाम शशकश्चन्द्रमण्डले वसामि। साम्प्रतं भगवता चन्द्रमसा तव पार्श्वे प्रहितो दूतः। जानात्येव भवान् यथार्थवादिनो दूतस्य न दोषः करणीयः। दूतमुखा हि राजानः सर्व एव।**

व्याख्या—निरूपितः = निर्णीतः, अगम्यं = दुर्गमं, निःशङ्कतया = निर्भयो भूत्वा प्रेषितः। यथार्थवादिनः = सत्यसन्देशवक्तुः, दोषः = अपराधः।

हिन्दी—अन्य शशकों ने कहा—"यही उचित उपाय है। हमलोगों के जीवन को सुरक्षित रखने के लिये इससे अच्छा कोई दूसरा उपाय नहीं हो सकता। अतः वही किया जाय।"

अन्त में लम्बकर्ण को ही दूत बनाकर भेजने का निश्चय किया गया और वह वहाँ गया भी। गजाधिप के समीप पहुँचने के बाद वह एक ऊँचे स्थान पर चढ़ गया और उस गज को सम्बोधित करके बोला—"अरे दुष्ट गज! इसप्रकार निःशङ्कभाव से तुम इस चन्द्रमा के जलाशय में क्यों आया करते हो? अबसे कभी यहाँ मत आना। अभी यहाँ से लौट जाओ।"

उसकी बात को सुनकर साश्चर्य उस गज ने पूछा—"तुम कौन हो?"

शशक ने कहा—"मै लम्बकर्ण नाम का शशक हूँ। मै चन्द्रमण्डल में निवास करता हूँ। इस समय महाराज चन्द्रमा के द्वारा आप के पास भेजा हुआ दूत हूँ। आप जानते ही है

कि यथार्थवादी दूत को अपराधी नहीं समझा जाता। क्योंकि राजा के दूत ही उनके मुख होते हैं।

उक्तञ्च—

> उद्यतेष्वपि शस्त्रेषु बन्धुवर्गवधेष्वपि।
> परुषाण्यपि जल्पन्तो वध्या दूता न भूभुजा॥ ८८॥

तच्छ्रुत्वा स आह—"भोः शशक! तत्कथय भगवतश्चन्द्रमसः सन्देशं, येन सत्वरं क्रियते।"

स आह—"भवतातीतदिवसे यूथेन सहागच्छता प्रभूताः शशका निपातिताः। तत्किं न वेत्ति भवान् यन्मम परिग्रहोऽयम्। तद्यदि जीवितेन ते प्रयोजनं, तदा केनापि प्रयोजनेनात्र ह्रदे नागन्तव्यम्" इति सन्देशः।

व्याख्या—उद्यतेषु=प्रोन्नतेषु, परुषाणि=कठोराणि वाक्यानि, जल्पन्तः=कथयन्तः, भूभुजा=राज्ञा ॥ ८८ ॥ अतीतदिवसे=गतदिवसे, प्रभूताः=अनेके, निपातिताः=हताः। वेत्ति=जानाति, परिग्रहः=परिवारः।

हिन्दी—कहा भी गया है कि—

दूत यदि क्रोधवश शस्त्र भी उठा ले या अपने किसी आत्मीय जन को मार ही डाले अथवा कठोरतर वाक्यों का प्रयोग करे तो भी वह वध्य नहीं होता। राजा को उसका वध नहीं करना चाहिए॥ ८८॥

लम्बकर्ण के कथन को सुनकर उस गजराज ने कहा—"अरे भाई शशक! भगवान् चन्द्रमा का सन्देश कहो, जिससे उसका पालन शीघ्र किया जा सके।"

उसने कहा—"कल अपने समूह के साथ आकर आपने अनेक शशकों का वध किया है। क्या आप यह नहीं जानते हैं कि यहाँ मेरा परिवार रहता है। अतः यदि आप जीवित रहना चाहते हों, तो कभी भी किसी भी प्रयोजन से इस जलाशय में आने का प्रयास न कीजिएगा"—भगवान् चन्द्रमा का सन्देश यही है।"

गज आह—"अथ क्व वर्तते भगवान् स्वामी चन्द्रः"?।

स आह—"अत्र ह्रदे साम्प्रतं शशकानांभव यूथमथितानां हतशेषाणां समाश्वासनाय समायातस्तिष्ठति। अहं पुनस्तवान्तिकं प्रेषितः।"

गज आह—"यद्येवं, तद् दर्शय मे तं स्वामिनं, येन प्रणम्यान्यत्र गच्छामि।"

शशक आह—"भोः! आगच्छ मया सहैकाकी, येन दर्शयामि।"

तथानुष्ठिते शशको निशासमये तं गजं ह्रदतीरे नीत्वा जलमध्ये स्थितं चन्द्रबिम्बमदर्शयत। आह च—"भो! एष नः स्वामी जलमध्ये समाधिस्थस्तिष्ठति तन्निभृतं प्रणम्य सत्वरं व्रज, इति। नो चेत्समाधिभङ्गाद् भूयोऽपि प्रभूतं कोपं करिष्यति।"

व्याख्या—मथितानां=मर्दितानां, हतशेषाणां=मृतावशिष्टानां, समाश्वासनाय=

आश्वासनाय, तवान्तिकं=तव समीपम्। निशासमये=रात्रौ, नः=अस्माकं, समाधिस्थः=ध्यानस्थः।

हिन्दी—गज ने पूछा—"महाराज चन्द्र कहाँ हैं" ?।

शशक ने कहा—"आपके समूह द्वारा विमर्दित मृत्यु से अवशिष्ट शशकों को आश्वासन देने के लिए इस समय इसी जलाशय में आकर बैठे हुये हैं। उन्होंने मुझे दूत बनाकर यहाँ से आपके पास भेजा था।"

गज ने कहा—"यदि ऐसी बात है, तो मुझे महाराज चन्द्र को दिखा तो दो, जिससे मैं उनको प्रणाम कर कहीं अन्यत्र चला जाऊँ।"

शशक ने कहा—"आप मेरे साथ एकाकी चलें, जिससे मैं आपको उनका दर्शन करा दूँ"।

गज के प्रस्तुत हो जानेपर शशक ने रात्रि में उस गज को जलाशय के किनारे ले जाकर जल में स्थित चन्द्रमा के प्रतिबिम्ब को दिखा दिया और कहा—"ये ही हमारे महाराज चन्द्र हैं जो जल में समाधिस्थ होकर बैठे हुये हैं। अतः आप शान्त, बिना कुछ कहे सुने इनको प्रणाम करके शीघ्र यहाँ से चले जाइये। यदि आपकी बात को सुनकर कहीं इनकी समाधि टूट गयी तो आप पर और अधिक क्रुद्ध हो जायेंगे।"

अथ गजोऽपि त्रस्तमनास्तं प्रणम्यापुनरागमनाय प्रस्थितः। शशकाश्च तद्दिना-दारभ्य सपरिवाराः सुखेन स्वेषु स्थानेषु तिष्ठन्ति स्म। अतोऽहं ब्रवीमि—"व्यपदेशेन महताम्" इति। अपि च क्षुद्रमलसं कापुरुषं व्यसनिनमकृतज्ञं पृष्ठप्रलपनशीलं स्वामित्वेन नाभियोजयेज्जीवितकामः। उक्तञ्च—

क्षुद्रमर्थपतिं प्राप्य न्यायान्वेषणतत्परौ।
उभावपि क्षयं प्राप्तौ पुरा शशकपिञ्जलौ" ॥ ८९ ॥

ते प्रोचुः—"कथमेतत् ?" स आह—

व्याख्या—त्रस्तमनाः=भयभीतः सन्, क्षुद्रं=खलम्, अलसं=आलस्ययुक्तं, व्यसनिनं=व्यसनासक्तं (विपद्ग्रस्तं), पृष्ठप्रलपनशीलम्=अप्रत्यक्षनिन्दकं, जीवितकामः=जीवनेच्छुः, कपिञ्जलः=पक्षिविशेषः ॥ ८९ ॥

हिन्दी—शशक के कथन से भयभीत गज चन्द्रमा को प्रणाम करके फिर कभी न लौटने के उद्देश्य से वहां से चला गया। शशक भी उस दिन से सुखपूर्वक अपने बिलों में निवास करने लगे।"

उपर्युक्त कथा को सुनाने के बाद वायस ने कहा—"इसीलिए मैं कहता हूँ कि कभी-कभी बड़े लोगों का नाम लेने मात्र से ही मनुष्य का त्राण हो जाता है। और भी एक बात यह है कि—यदि मनुष्य अपने जीवन की कामना करता हो तो उसे नीच, आलसी, कापुरुष, विपद्ग्रस्त (व्यसनी), कृतघ्न तथा पीठ-पीछे निन्दा करने वाले व्यक्ति को कभी भी राजा नहीं बनाना चाहिये। कहा भी गया है कि—

क्षुद्र राजा के यहाँ न्याय की आशा में जाकर शशक एवं कपिञ्जल दोनों ही विनष्ट हो गये थे" ॥ ८९ ॥

पक्षियों ने पूछा—"यह कैसे" ?।

वायस ने अग्रिम कथा को आरम्भ करते हुए उत्तर दिया—

## [ २ ]

## ( शशकपिञ्जल-कथा )

कस्मिंश्चिद् वृक्षे पुराहमवसम् । तत्राधस्तात्कोटरे कपिञ्जलको नाम चटकः प्रतिवसति स्म । अथ सदैवास्तमनवेलायामागतयोर्द्वयोरनेकसुभाषितगोष्ठ्या देवर्षिब्रह्मर्षिपुराणचरितकीर्तनेन च पर्यटनदृष्टानेककौतूहलप्रकथनेन च परमसुखमनुभवतोः कालो व्रजति । अथ कदाचित्कपिञ्जलः प्राणयात्रार्थमन्यैश्चटकैः सहान्यं पक्वशालिप्रायं देशङ्गतः ।

व्याख्या—कोटरे = निष्कुहे, चटकः = कलविङ्कः, अस्तमनवेलायां = सूर्यास्तकाले, पर्यटनदृष्टेन = भ्रमणकाले दृष्टेन, प्राणयात्रार्थं = जीविकोपार्जनार्थं, पक्वशालिप्रायं = पक्वशालिसम्पन्नम् ।

हिन्दी—मैं कभी एक वृक्षपर निवास करता था । उस वृक्ष के नीचे कोटर में कपिञ्जल नाम का एक चटक ( गौरा ) रहा करता था । सूर्यास्त हो जाने पर हम दोनों वहाँ आकर देवर्षि, ब्रह्मर्षि तथा ऋषि-मुनियों के प्राचीन चरितों और भ्रमणकाल में दृष्ट विविध आश्चर्यजनक घटनाओं का वर्णन करके अत्यन्त सुख के साथ अपना समय व्यतीत किया करते थे । एकबार कपिञ्जल अपनी आजीविका के लिये अन्य चटकों के साथ पके हुये धान से युक्त प्रदेश की ओर चला गया ।

ततो यावन्निशासमयेऽपि नायातस्तावदहं सोद्वेगमनास्तद्वियोगदुःखितश्चिन्तितवान्—"अहो, किमद्य कपिञ्जलो नायातः ? किं केनापि पाशेन बद्धः, आहोस्वित्केनापि व्यापादितः ? सर्वथा यदि कुशली भवति, तन्मां विना न तिष्ठति ।" एवं चिन्तयतो बहून्यहानि व्यतिक्रान्तानि । ततश्च तत्र कोटरे कदाचिच्छीघ्रगो नाम शशकोऽस्तमनवेलायामागत्य प्रविष्टः । मयापि कपिञ्जलनिराशत्वेन न निवारितः ।

व्याख्या—निशासमये = रात्रावपि, सोद्वेगमनाः = उद्विग्नमनाः, आहोस्विद् = उत्वा ( किं वा ), व्यापादितः = हतः । अहानि = दिनानि, व्यतिक्रान्तानि = व्यतीतानि । न निवारितः = न वारितः ।

हिन्दी—जब वह रात्रिकाल में भी नहीं आया तो मैं उसके वियोग से उद्विग्न होकर दुःखी मन से सोचने लगा—"आज कपिञ्जल क्यों नहीं आया ? क्या किसी के पाश में फँस गया है, अथवा किसी ने उसे मार डाला है । यदि वह सकुशल होता तो मेरे विना अन्यत्र नहीं रुकता ।" इस प्रकार सोचते हुए मुझे कई दिन व्यतीत हो गये । किन्तु कपिञ्जल लौटा नहीं । एक दिन शीघ्रगति नामक एक शशक सूर्यास्त हो जाने पर आकर वृक्ष के उस

कोटर में घुस गया। कपिञ्जल के आगमन से निराश हो जाने के कारण मैंने भी उसे रोका नहीं।

अथान्यस्मिन्नहनि कपिञ्जलः शालिभक्षणादतीव पीवरतनुः स्वमाश्रयं स्मृत्वा भूयोऽपि तत्रैव समायातः। अथवा साध्विदमुच्यते—

न तादृग्जायते सौख्यमपि स्वर्गे शरीरिणाम्।
दारिद्र्येऽपि हि यादृक् स्यात्स्वदेशे स्वपुरे गृहे ॥ ९० ॥

अथासौ कोटरान्तर्गतं शशकं दृष्ट्वा साक्षेपमाह—भोः शशक! न त्वया सुन्दरं कृतं यन्ममावसथस्थाने प्रविष्टोऽसि। तच्छीघ्रं निष्क्रम्यताम्।

व्याख्या—पीवरः = स्थूलः, स्वमाश्रयं = स्वगृहं, सौख्यं = सुखं, स्वपुरे = स्वनगरे ॥ ९० ॥ साक्षेपं = सनिन्दम्, आवसथस्थाने = वासस्थाने, निष्क्रम्यतां = निर्गम्यताम्।

हिन्दी—तण्डुलों को खाने से खूब स्थूलकाय होकर वह कपिञ्जल भी अपने आश्रय को स्मरण करके दूसरे दिन लौट आया। अथवा, ठीक ही कहा गया है कि—जो सुख मनुष्य को अपने दारिद्र्ययुक्त देश, नगर एवं घर में मिलता है, वह स्वर्ग में भी उसे प्राप्त नहीं होता ॥ ९० ॥

अपने कोटर में प्रविष्ट हुये उस शशक को देखकर कपिञ्जल ने उसे फटकारते हुये कहा—"अरे शशक! तुमने यह अच्छा कार्य नहीं किया। तुम मेरे इस आवास के भीतर क्यों घुस आये हो? यहाँ से शीघ्र निकल जाओ।"

शशक आह—"न तवेदं गृहं, किन्तु ममैव। तत्किं मिथ्या परुषाणि जल्पसि?

उक्तञ्च—

वापीकूपतडागानां देवालयकुजन्मनाम्।
उत्सर्गात्परतः स्वाम्यमपि कर्तुं न शक्यते ॥ ९१ ॥

तथा च—

प्रत्यक्षं यस्य यद्भुक्तं क्षेत्राद्यं दश वत्सरान्।
तत्र भुक्तिः प्रमाणं स्यान्न साक्षी नाक्षराणि वा ॥ ९२ ॥
मानुषाणामयं न्यायो मुनिभिः परिकीर्तितः।
तिरश्चां च विहङ्गानां यावदेव समाश्रयः ॥ ९३ ॥

तन्ममैतद् गृहं, न तव" इति।

व्याख्या—परुषाणि = कठोराणि वचनानि, जल्पसि = प्रलपसि। कुजन्मा = वृक्षः, उत्सर्गात् = त्यागात्, परतः = पश्चात्, स्वाम्यम् = आधिपत्यम् ॥ ९१ ॥ क्षेत्राद्यं = क्षेत्रादिकं, वत्सरान् = वर्षाणि यावत्, भुक्तम् = उपभुक्तं तस्यैव तद् भवति। भुक्तिः = पूर्वभोगः, अक्षराणि = लिखितानि कमलादीनि वा (लेख), प्रमाणं न स्यादिति ॥ ९२ ॥ परिकीर्तितः = कथितः, तिरश्चां = पश्वादीनां, विहङ्गानां = खगानां, समाश्रयः = वसतिः ॥ ९३ ॥

हिन्दी—शशक ने उत्तर में कहा—"यह तुम्हारा घर नहीं है ! यह मेरा घर है। क्यों तुम इस प्रकार परुष-वाक्यों का प्रयोग कर रहे हो ? कहा भी गया है कि—

वापी, कूप, तडाग, देवालय अथवा वृक्षपर जीवों का आधिपत्य तभी तक होता है जब तक वे वहाँ रहते हैं। वहाँ से एक बार हट जाने के बाद पुनः उनका आधिपत्य नहीं रह जाता (क्योंकि त्याग के बाद स्वतः इनपर किसी का अधिकार नहीं होता) ॥ ९१ ॥

और भी—क्षेत्रादि पर तो जिस व्यक्ति का दश वर्ष तक प्रत्यक्ष अधिकार रहा हो, उसी का वह होता है। उसके विषय में प्राचीनकालिक भोग, साक्षी या लिखे हुए लेखों को प्रमाण नहीं माना जाता ॥ ९२ ॥

मनुष्यों के लिये भी मुनियों ने यही न्याय लिखा है। पशु-पक्षियों का तो जबतक वे निवास करते हैं तभीतक उनका अधिकार माना जाता है ॥ ९३ ॥

अतः यह घर मेरा है, तुम्हारा नहीं।"

**कपिञ्जल आह—"भोः ! यदि स्मृतिं प्रमाणीकरोषि, तदागच्छ मया सह, येन स्मृतिपाठकं पृच्छावः। स यस्य ददाति स गृह्णातु।"**

**तथानुष्ठिते मयापि चिन्तितं—किमत्र भविष्यति ? मया द्रष्टव्योऽयं न्यायः"। ततः कौतुकादहमपि तावनुप्रस्थितः। अत्रान्तरे तीक्ष्णदंष्ट्रो नामारण्यमार्जारस्तयोर्विवादं श्रुत्वा मार्गासन्न नदीतटमासाद्य कृतकुशोपग्रहो निमीलितनयन ऊर्ध्वबाहुरर्धपादस्पृष्टभूमिः श्रीसूर्याभिमुख इमां धर्मोपदेशनामकरोत्—"अहो, असारोऽयं संसारः। क्षणभङ्गुराः प्राणाः। स्वप्नसदृशः प्रियसमागमः। इन्द्रजालवत्कुटुम्बपरिग्रहोऽयम्। तद्धर्मं मुक्त्वा नान्या गतिरस्ति।**

व्याख्या—स्मृतिं = धर्मशास्त्रं, स्मृतिपाठकं = धर्मशास्त्रिणं, कौतुकात् = आश्चर्यात्, अनु = पृष्ठतः, मार्जारः = बिडालः, कृतकुशोपग्रहः = कुशहस्तः, अर्धपादस्पृष्टभूमिः = अर्धपादेन भूमिं स्पृशन् (अर्धपादेन स्पृष्टा भूमिर्येनासौ), धर्मोपदेशनां = धर्मोपदेशम्, असारः = निस्तत्त्वः। क्षणभङ्गुराः = अल्पकालिकाः, प्रियसमागमः = स्वजनसमागमः। गतिः = मार्गः।

हिन्दी—शशक की बात को सुनकर कपिञ्जल ने कहा—"यदि तुम स्मृति को ही प्रमाण मानते हो, तो मेरे साथ चलो। हमलोग चलकर किसी धर्मशास्त्री से पूछ लें। वह जिसको देगा, वही इस घर को लेगा।"

इस प्रकार निर्णय करने के बाद जब वे दोनों चलने लगे तो मैंने भी सोचा—कि "इस विषय में क्या न्याय होता है, इसे मुझे भी देखना चाहिए।"

उक्त बात को सोचकर मैं भी उन दोनों के पीछे-पीछे चल पड़ा। इसी बीच में तीक्ष्णदन्त नाम का एक बिडाल उनके विवाद को सुनकर मार्ग में पड़नेवाली एक नदी के किनारे जाकर बैठ गया और हाथ में कुश लेकर नेत्रों को बन्द करके अपनी भुजाओं को ऊपर की ओर उठाकर एक पैर से भूमि का स्पर्श करता हुआ श्रीभगवान् सूर्य की ओर मुख करके धर्मोपदेश करने लगा कि—"यह संसार तत्त्वहीन है। प्राण भी क्षणभङ्गुर है। इष्टमित्रों का

संयोग स्वप्न की तरह अल्पकालिक एवं असत्य है। यह कुटुम्ब और परिवार इन्द्रजाल से बनाये हुये आकर्षक दृश्य की तरह अनित्य एवं असत् है। अतः इस संसार की माया से बचने के लिए धर्म के अतिरिक्त कोई भी दूसरा मार्ग नहीं है।

उक्तञ्च—

अनित्यानि शरीराणि विभवो नैव शाश्वतः।
नित्यं संनिहितो मृत्युः कर्तव्यो धर्मसङ्ग्रहः॥ ९४॥
यस्य धर्मविहीनानि दिनान्यायान्ति यान्ति च।
स लोहकारभस्त्रेव श्वसन्नपि न जीवति॥ ९५॥
नाच्छादयति कौपीनं न दंशमशकापहम्।
शुनः पुच्छमिव व्यर्थं पाण्डित्यं धर्मवर्जितम्॥ ९६॥

व्याख्या—अनित्यानि = विनश्वराणि। सन्निहितः = आसन्नः॥ ९४॥ लोहकारभस्त्रेव = लोहकारस्य चर्मप्रसेविका इव, (लोहार की भाथी)॥ ९५॥ कौपीनं = गुह्यस्थानं (गुदा को), दंशमशकापहं = मशकादिनिवर्तकं, शुनः = कुक्कुरस्य॥ ९६॥

हिन्दी—कहा भी गया है कि—

यह शरीर अनित्य है। ऐश्वर्य भी शाश्वत नहीं होता। मृत्यु निरन्तर आसन्न रहती है। अतः मनुष्य को धर्म का सङ्ग्रह करते रहना चाहिये॥ ९४॥

जिस व्यक्ति के दिन धर्मादि शुभ कर्मों के अभाव में व्यर्थ ही आते और चले जाते हैं, वह श्वास लेते हुये भी लोहार की भाथी की तरह निर्जीव ही होता है॥ ९५॥

जैसे कुत्ते की पूँछ न तो उसके गुह्यप्रदेश (गुदा) को ही ढक पाती है और न मक्खियों एवं मच्छरों को ही उड़ा पाती है, वह व्यर्थ ही होती है, उसी प्रकार धर्मरहित पाण्डित्य भी व्यर्थ ही होता है॥ ९६॥

अन्यच्च—

पुलाका इव धान्येषु पुत्तिका इव पक्षिषु।
मशका इव मर्त्येषु येषां धर्मो न कारणम्॥ ९७॥
श्रेयः पुष्पफलं वृक्षाद्दध्नः श्रेयो घृतं स्मृतम्।
श्रेयस्तैलञ्च पिण्याकाच्छ्रेयान् धर्मस्तु मानुषात्॥ ९८॥
सृष्टा मूत्रपुरीषार्थमाहाराय च केवलम्।
धर्महीनाः परार्थाय पुरुषाः पशवो यथा॥ ९९॥

व्याख्या—पुलाकाः = धान्यविशेषाः (एक प्रकार का तृण), पुत्तिका = पतङ्गिका॥ ९७॥ श्रेयः = तत्त्वम्, पिण्याकः = तिलकल्कः॥ ९८॥ मूत्रपुरीषार्थं = मलमूत्रादिविसर्जनार्थम्॥ ९९॥

हिन्दी—जैसे धान्यों में पुलाक व्यर्थ होता है, पक्षियों में पुत्तिका व्यर्थ होती है और

मच्छर आदि तुच्छ जीव व्यर्थ होते हैं, उसी प्रकार मनुष्यों में भी वे मनुष्य व्यर्थ होते हैं जिनकी धर्म में प्रवृत्ति नहीं होती ॥ ९७ ॥

जैसे—वृक्षों का सार उनका फलपुष्प, दधि का सार घृत और खली का सार तैल होता है। उसी प्रकार मनुष्य का सार धर्म होता है ॥ ९८ ॥

जैसे पशुओं का जन्म केवल मलमूत्र-विसर्जन करने के लिए, आहार करने के लिए और दूसरों का बोझ ढोने के लिये ही होता है, उसी प्रकार धर्महीन मनुष्यों का भी जन्म केवल आहार करने के लिए और दूसरों की मजदूरी करने के लिये ही हुआ समझना चाहिये। (धर्महीन मनुष्य पशुओं की तरह केवल मलमूत्र करता है, भोजन करता है और बोझ ढोता रहता है। वह जीवन का अपने लिये कोई भी उपयोग नहीं कर पाता) ॥ ९९ ॥

स्थैर्यं सर्वेषु कृत्येषु शंसन्ति नयपण्डिताः।
बह्वन्तराययुक्तस्य धर्मस्य त्वरिता गतिः ॥ १०० ॥
संक्षेपात् कथ्यते धर्मो जनाः किं विस्तरेण वः।
परोपकारः पुण्याय पापाय परपीडनम् ॥ १०१ ॥
श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम्।
आत्मनः प्रतिकूलानि परेषां न समाचरेत्" ॥ १०२ ॥

व्याख्या—नयपण्डिताः = नीतिकुशलाः, त्वरिता = चपला ॥१००॥ अवधार्यताम् = मनसि धार्यतामित्यर्थः। आत्मनः प्रतिकूलानि = आत्मविपरीतानि कार्याणि, परेषाम् = अन्येषाम् ॥१०२॥

हिन्दी—अनेक अन्तरायों से युक्त धर्म की गति अत्यन्त चपल होती है। अत एव नीतिकुशल विद्वानों का कहना है कि अन्य कार्यों को करने में शीघ्रता नहीं करना चाहिये। स्थिर बुद्धि से सोच-विचार करके ही किसी कार्य को आरम्भ करना चाहिये, किन्तु धर्मकृत्यों में शीघ्रता करनी चाहिये। अधिक सोच-विचार से उसमें विघ्न का भय बना रहता है ॥१००॥

अरे मनुष्यो! अधिक विस्तार करने की आवश्यकता नहीं है, अतः संक्षेप में ही मैं धर्म के तत्त्व को कह देता हूँ। परोपकार करना पुण्यदायक और दूसरों को कष्ट पहुँचाना पापदायक होता है। अतः दूसरों को कष्ट न पहुँचाते हुये सतत परोपकार में लीन रहना चाहिये ॥ १०१ ॥

धर्म के तत्त्व को कहता हूँ सुनो और सुनकर उसे अपने मन में धारण कर लो। जो बात अपने को अच्छी न लगती हो, वह दूसरों के प्रति नहीं कहनी चाहिये और जो कार्य अपने को अच्छा न लगे वह दूसरों के लिये भी नहीं करना चाहिये" ॥ १०२ ॥

अथ तस्य तां धर्मोपदेशनां श्रुत्वा शशक आह—"भो भोः कपिञ्जल! एष नदीतीरे तपस्वी धर्मवादी तिष्ठति, तदेनं पृच्छावः"।

कपिञ्जल आह—"ननु स्वभावतोऽस्माकं शत्रुभूतोऽयमस्ति, तद्दूरे स्थितौ पृच्छावः। कदाचिदस्य व्रतवैकल्यं सम्पद्यते"। ततो दूरस्थितावूचतुः—"भो भोस्तपस्विन्!

धर्मोपदेशक ! आवयोर्विवादो वर्त्तते । तद्धर्मशास्त्रद्वारेणास्माकं निर्णयं कुरु। यो हीनवादी स ते भक्ष्यः" इति।

व्याख्या—धर्मवादी = धर्मशास्त्री, न्यायवादी, व्रतवैकल्यं = व्रतभङ्गः, निर्णयं = न्यायं, हीनवादी = दोषी।

हिन्दी—उस विडाल के धर्मोपदेश को सुनकर शशक ने कहा—"अरे कपिञ्जल ! नदी के किनारे यह तपस्वी महात्मा एवं धर्मवादी बैठा हुआ है। चलो, इसी से पूछ लिया जाय।"

कपिञ्जल ने कहा—"यह तो हमारा स्वाभाविक शत्रु है। अतः दूर से ही पूछा जाय। हमारे सन्निकट जाने से कहीं इसका व्रत टूट न जाय (और यह हम लोगों पर झपट पड़े)।"

उन दोनों ने दूर से ही कहा—"तपस्विन् ! धर्मोपदेशक महाराज ! हमदोनों के मध्य कुछ पारस्परिक विवाद है। अतः आप धर्मशास्त्रानुसार उसका निर्णय कर दें ! आपकी दृष्टि में जो दोषी होगा, उसे आप मारकर खा जाइयेगा।"

स आह—"भद्रौ ! मा मैवं वदतम्। निवृत्तोऽहं नरकपातकमार्गात्। अहिंसैव धर्ममार्गः। उक्तञ्च—

अहिंसापूर्वको धर्मो यस्मात्सद्भिरुदाहृतः।
यूकामत्कुणदंशादींस्तस्मात्तानपि रक्षयेत् ॥ १०३ ॥
हिंसकान्यपि भूतानि यो हिनस्ति स निर्घृणः।
स याति नरक घोरं किं पुनर्यः शुभानि च ॥ १०४ ॥

व्याख्या—नरकपातकमार्गात् = नरकप्रदमार्गात्, सद्भिः = सज्जनैः, उदाहृतः = कथितः ॥ १०३ ॥ भूतानि = जीवान्, निर्घृणः = निर्दयः, शुभानि = अहिंसकानि ॥ १०४ ॥

हिन्दी—विडाल ने कहा—"सज्जनो ! आप लोगों को ऐसी बात नहीं कहनी चाहिये। नरक को देने वाले मार्ग से मैं विरत हो चुका हूँ। अहिंसा ही धर्म का मार्ग है। कहा भी गया है कि—

सज्जनों ने अहिंसा को ही धर्म कहा है। अतः यूका, मत्कुण तथा मच्छर आदि छोटे-छोटे जीवों की भी रक्षा करनी चाहिये ॥ १०३ ॥

हिंसक जीवों को मारने वाला व्यक्ति भी निर्दय होता है। अतः वह भी नरकगामी होता है। जो व्यक्ति अहिंसक जीवों को मारता है उसके विषय में तो कहने की आवश्यकता ही नहीं। वह तो नरकगामी होता ही है ॥ १०४ ॥

एतेऽपि ये याज्ञिका यज्ञकर्मणि पशून् व्यापदयन्ति, ते मूर्खाः परमार्थं श्रुतेर्न जानन्ति। तत्र किलैतदुक्तम्—"अजैर्यष्टव्यम्" इति। अजा व्रीहयस्तावत्सप्तवार्षिकाः कथ्यन्ते, न पुनः पशुविशेषाः। उक्तञ्च—

वृक्षांश्छित्वा पशून् हत्वा कृत्वा रुधिरकर्दमम्।
यद्येवं गम्यते स्वर्गो नरके केन गम्यते ॥ १०५ ॥

व्याख्या—याज्ञिकाः = वैदिकाः, व्यापादयन्ति = घ्नन्ति, श्रुतेः = वेदस्य, परमार्थं = तत्त्वार्थं, रुधिरकर्दमं = रुधिरपङ्कम् ॥ १०५ ॥

हिन्दी—जो वैदिक यज्ञकर्मों में पशुओं को मारते हैं, वे मूर्ख वेद के तत्त्वार्थ को नहीं जानते। वेद में जो यह लिखा है कि अजा से यज्ञ करना चाहिये (अजा-बलि करनी चाहिये), उसका अभिप्राय यह है कि सात वर्ष के पुराने धान से यज्ञ करना चाहिये। वहाँ अजा का अर्थ छाग नहीं होता। कहा भी गया है कि—

वृक्षों को काटकर, पशुओं की हत्या करके और खून की नदी बहाकर (खून से पृथ्वी को पङ्किल बनाकर) ही यदि कोई स्वर्ग जाता है, तो नरक किस कार्य को करने वाला जायगा? (नरकगामी कौन सा व्यक्ति होगा) ॥ १०५ ॥

तन्नाहं भक्षयिष्यामि, परं जयपराजयनिर्णयं करिष्यामि। किन्त्वहं वृद्धो दूराद्युवयोर्भाषान्तरं सम्यङ् न शृणोमि। एवं ज्ञात्वा मम समीपवर्तिनौ भूत्वा ममाग्रे न्यायं वदतं, येन विज्ञाय विवादपरमार्थं वचो वदतो मे परलोकबाधो न भवति। उक्तञ्च यतः—

मानाद्वा यदि वा लोभात्क्रोधाद्वा यदि वा भयात्।
यो न्यायमन्यथा ब्रूते स याति नरकं नरः ॥ १०६ ॥

व्याख्या—भाषान्तरम् = उत्तरप्रत्युत्तरं, न्यायं = स्वाभियोगं, विवादपरमार्थं = धर्मनिर्णयं, परलोकबाधः = परलोकहानिः। मानात् = अभिमानात्, लोभात् = धनलोभात्, अन्यथा = विपरीतं, ब्रूते = वदति ॥ १०६ ॥

हिन्दी—मैं तुम लोगों को खाऊँगा नहीं, बल्कि तुमलोगों के जय तथा पराजय का निर्णय करूँगा। परन्तु मैं वृद्ध हो चुका हूँ। दूर रहनेपर तुमलोगों के उत्तर-प्रत्युत्तर को ठीक से सुन नहीं सकूँगा। अतः मेरे सन्निकट आकर मेरे सामने अपने-अपने अभियोग को कहो जिससे मैं तुमलोगों के कथन को समझकर अपना धर्मसंमत निर्णयात्मक उत्तर दे सकूँ। उचित निर्णय देने में जिससे मेरा परलोक भी न बिगड़ने पाये। कहा भी गया है कि—

अभिमान, लोभ, क्रोध या भय के कारण जो व्यक्ति अनुचित न्याय करता है, वह नरकगामी होता है ॥ १०६ ॥

पञ्च पश्वनृते हन्ति दश हन्ति गवानृते।
शतं कन्यानृते हन्ति सहस्रं पुरुषानृते ॥ १०७ ॥
उपविष्टः सभामध्ये यो न वक्ति स्फुटं वचः।
तस्माद् दूरेण स त्याज्यो न्यायं वा कीर्तयेदृतम् ॥ १०८ ॥

तस्माद्विश्रब्धौ मम कर्णोपान्तिके स्फुटं निवेदयतम्।"

किं बहुना, तेन क्षुद्रेण तथा तौ पूर्णं विश्वासितौ यथा तस्योत्सङ्गवर्तिनौ सञ्जातौ।

व्याख्या—पश्वनृते = पश्वादीनां विवादेऽनुचिते निर्णये कृते सति, हन्ति = पञ्चपशुवधस्य पापमवाप्नोति। गवानृते = गवां विवादे मिथ्यानिर्णये, कन्यानृते = कन्यानां विवादेऽनृत-

न्यायकरणे, पुरुषानृते=पुरुषाणां विवादेऽनुचितन्यायकरणे ॥ १०७ ॥ स्फुटं=स्पष्टं सत्यमिति भावः । ऋतं=सत्यम् ॥ १०८ ॥ विश्रब्धौ=विश्वस्तौ, कर्णोपान्तिके=कर्णप्रदेशे, क्षुद्रेण=दुष्टेन, उत्सङ्गवर्तिनौ=क्रोडवर्तिनौ ।

हिन्दी—पशुओं के विवाद में अनुचित निर्णय देने पर पांच पशुओं के वध का पाप होता है। गौओं के विवाद में अनुचित निर्णय देने पर दश गायों के वध का पाप होता है। कन्याओं के विवाद में अनुचित निर्णय करने पर सौ कन्याओं के वध का पाप होता है और मनुष्यों के विवाद में अनुचित निर्णय करने पर हजार मनुष्यों के वध का पाप होता है ॥ १०७ ॥

सभा के बीच में (न्यायालय में) बैठकर यदि वादी या प्रतिवादी कुछ अस्पष्ट या असत्य बात कहता हो तो न्यायवादी व्यक्ति को उस सभा का परित्याग कर देना चाहिये। यदि सभा का परित्याग करना संभव न हो तो उचित एवं यथार्थ निर्णय ही करना चाहिये ॥ १०८ ॥

अतः मेरे समीप आकर विश्वास के साथ मेरे कान में स्पष्टरूप से सच्ची बातों को बता दो।"

अधिक क्या कहा जाय, उस क्षुद्र ने उन दोनों को शीघ्र ही इतना अधिक विश्वस्त बना दिया कि वे दोनों उसकी गोद में ही जाकर बैठ गये।

**ततश्च तेनापि समकालमेवैकः पादान्तेनाक्रान्तः, अन्यो दंष्ट्राक्रकचेन च। एवं द्वावपि गतप्राणौ भक्षिताविति।**

**अतोऽहं ब्रवीमि—"क्षुद्रमर्थपतिं प्राप्य···इति।**

**भवन्तोऽप्येनं दिवान्धं क्षुद्रमर्थपतिमासाद्य रात्र्यन्धाः सन्तः शशकपिञ्जलमार्गेण यास्यन्ति। एवं ज्ञात्वा यदुचितं तद्विधेयमतः परम्"।**

व्याख्या—समकालम्=एककालावच्छेदेन, पादान्तेन=चरणान्तभागेन, आक्रान्तः=गृहीतः, दंष्ट्राक्रकचेन=दंष्ट्राक्रकरेण (दाँतरूपी आरे से), गतप्राणौ=मृतप्रायौ। अर्थपतिं=स्वामिनं, विधेयं=कर्तव्यमिति।

हिन्दी—उन दोनों को अपनी गोद में पाकर उस बिडाल ने एक ही काल में एक को अपने पैर से दबोच लिया और दूसरे को दाँतरूपी आरे के बीच में डाल दिया। इस प्रकार वे दोनों ही मार डाले गये।

उक्त कथा को समाप्त करने के बाद उस वायस ने कहा—"इसीलिए मैं कहता हूँ कि क्षुद्र राजा को पाकर प्रजा विनष्ट हो जाती है। आपलोग भी इस दिवान्ध एवं क्षुद्र स्वामी को पाकर रात्र्यन्ध होने के कारण शशक तथा कपिञ्जल के ही पथ से एकदिन यमलोक चले जायेंगे।

मुझे जो कुछ कहना था, मैंने कह दिया। इसके बाद आप लोगों को जो उचित प्रतीत होता हो वह करें।"

अथ तस्य तद्वचनमाकर्ण्य "साध्वनेनाभिहितम्" इत्युक्त्वा "भूयोऽपि पार्थिवार्थं समेत्य मन्त्रयिष्यामहे," इति ब्रुवाणाः सर्वे पक्षिणो यथाभिमतं जग्मुः। केवलमवशिष्टो भद्रासनोपविष्टोऽभिषेकाभिमुखो दिवान्धः कृकालिकया सहास्ते। आह च—"कः कोऽत्र भोः! किमद्यापि न क्रियते ममाभिषेकः? इति।

तच्छ्रुत्वा कृकालिकयाभिहितं—"भद्र! तवाभिषेके कृतोऽयं विघ्नो वायसेन। गताश्च सर्वे विहगा यथेप्सितासु दिक्षु। केवलमेकोऽयं वायसोऽवशिष्टः केनापि हेतुना तिष्ठति। तत्त्वरितमुत्तिष्ठ, येन त्वां स्वाश्रयं प्रापयामि।"

व्याख्या—साधु = युक्तम्। पार्थिवार्थं = नृपतिचयनार्थं, यथाभिमतं = यथेप्सितं, विहगाः = पक्षिणः, हेतुना = कारणेन।

हिन्दी—वायस के वचन को सुनकर पक्षियों ने कहा—"इस वायस का कथन ठीक है। फिर कभी राजा के चुनाव के लिये एकत्र होकर विचार किया जायगा।" यह कहकर सभी पक्षी अपने-अपने अभिमत स्थान को चले गये। केवल वह दिवान्ध उलूक कृकालिका के साथ सिंहासन पर बैठकर अभिषेक की प्रतीक्षा करता रहा। अभिषेक में देर होते देखकर कुछ समय के बाद उसने कहा—"यहाँ कौन उपस्थित है? मेरा राज्याभिषेक क्यों नहीं किया जा रहा है?"।

उलूक की बात को सुनकर कृकालिका ने कहा—"भद्र! आपके अभिषेक में इस वायस ने विघ्न डाल दिया है। पक्षिगण अपने-अपने अभिमत स्थानों को चले गये। एकमात्र यह वायस किसी कारण से यहाँ बैठा हुआ है। अतः आप भी अब शीघ्र उठें, जिससे मैं आपको आपके निवासस्थान तक पहुँचा दूँ।"

तच्छ्रुत्वा सविषादमुलूको वायसमाह—"भो भो दुष्टात्मन्! किं मया तेऽपकृतं यद्राज्याभिषेको मे विघ्नितः? तदद्य प्रभृति सान्वयमावयोर्वैरं सञ्जातम्। उक्तञ्च—

रोहति सायकैर्विद्धं छिन्नं रोहति चासिना।
वाचा दुरुक्तं बीभत्सं न प्ररोहति वाक्क्षतम्" ॥ १०९॥

इत्येवमभिधाय कृकालिकया सह स्वाश्रयं गतः। अथ भयव्याकुलो वायसो व्यचिन्तयत्—"अहो, अकारणं वैरमासादितं मया। किमिदं व्याहृतम्।

व्याख्या—सविषादं = सदुःखम्, अपकृतम् = अपकारः कृतः। सान्वयम् = अनुवंशिकम्। सायकैः = बाणैः, विद्धं = हतं, असिना = खड्गेन, दुरुक्तं = कटुभाषितं, वाक्क्षतं = वचनक्षतम्। व्याहृतं = कथितम्।

हिन्दी—कृकालिका के वचन को सुनकर उलूक ने दुःख के साथ वायस से पूछा—"अरे दुष्ट! मैंने तुम्हारा क्या अपकार किया था कि तुमने मेरे राज्याभिषेक में विघ्न डाल दिया है? अतः आज से हमारा और तुम्हारा आनुवंशिक वैर चलेगा। कहा भी गया है कि—

बाणों द्वारा उत्पन्न घाव जुट सकता है और तलवार के काटने से हुआ घाव भी भर सकता है। किन्तु कटु एवं बीभत्स वचनों द्वारा बना हुआ घाव कभी नहीं भरता" ॥ १०९ ॥

उक्त वचन कहने के बाद वह उलूक कृकालिका के साथ अपने निवासस्थान को चला गया। उसके चले जानेपर भयग्रस्त होकर वायस ने अपने मन में सोचा—"यह वैर अकारण ही मैंने मोल ले लिया। मैंने यह क्या कह दिया कि जिससे उलूक का राज्याभिषेक ही रुक गया।

उक्तञ्च—

अदेशकालज्ञमनायतिक्षमं, यदप्रियं लाघवकारि चात्मनः।
यच्चाब्रवीत् कारणवर्जितं वचो, न तद्वचः स्याद्विषमेव तद्वचः॥ ११०॥
बलोपपन्नोऽपि हि बुद्धिमान्नरः, परं नयेन्न स्वयमेव वैरिताम्।
भिषङ्ममास्तीति विचिन्त्य भक्षयेदकारणात्को हि विचक्षणो विषम्॥ १११॥

व्याख्या—अदेशकालज्ञं = देशकालादिविरुद्धम्, अनायतिक्षमम् = परिणामेऽशुभप्रदं, लाघवकारि = लघुत्वप्रदायकं, कारणवर्जितम् = अकारणम् ॥ ११० ॥ बलोपपन्नः = बलयुक्तोऽपि परम् = अन्यं, वैरितां = शत्रुत्वम्। भिषक् = वैद्यः, विचक्षणः = मतिमान्॥ १११॥

हिन्दी—कहा भी गया है कि—

देश और काल को बिना जाने हुए देशविरुद्ध, कालविरुद्ध, परिणाम में अशुभदायक, अप्रिय, अपनी लघुता को प्रकट करने योग्य और बिना किसी कारण के ही यदि किसी वचन को कोई बोलता है, तो उसके वचन को विष ही समझना चाहिये। (उसको वचन नहीं समझना चाहिए)॥ ११०॥

बलवान् होनेपर भी बुद्धिमान् व्यक्ति को अनायास किसी दूसरों को शत्रु नहीं बनाना चाहिये। "वैद्य मेरे घर का ही है" यह सोचकर कौन ऐसा बुद्धिमान् व्यक्ति है, जो अकारण ही विष खा लेगा?॥ १११॥

परपरिवादः परिषदि न कथञ्चित्पण्डितेन वक्तव्यः।
सत्यमपि तन्न वाच्यं यदुक्तमसुखावहं भवति॥ ११२॥
सुहृद्भिराप्तैरसकृद् विचारितं, स्वयं च बुद्ध्या प्रविचारिताश्रयम्।
करोति कार्यं खलु यः स बुद्धिमान्, स एव लक्ष्म्या यशसां च भाजनम्"॥११३॥

व्याख्या—परिषदि = सभायां, परपरिवादः = परनिन्दावचनम्, असुखावहं = दुःखकारकम्॥ ११२॥ आप्तैः = विश्वस्तैः, सुहृद्भिः = मित्रैः, असकृद्विचारितं = पुनः पुनश्च विचारितं, प्रविचारिताश्रयं = स्वबुद्ध्या विचारितं, भाजनं = पात्रं भवतीति॥ ११३॥

हिन्दी—विद्वान् व्यक्ति को सभा के बीच में किसी की निन्दा नहीं करनी चाहिये। यदि कोई बात सत्य भी हो, तो भी जिस बात को कहने से किसी को कष्ट हो, उस बात को कहना नहीं चाहिये॥ ११२॥

विश्वस्त मित्रों के साथ बार-बार परामर्श करके और स्वयं भी बुद्धिपूर्वक पूर्णरूपसे विचार करके ही जो व्यक्ति किसी कार्य को आरम्भ करता है, वही बुद्धिमान् समझा जाता है और वही लक्ष्मी एवं यश का भी भाजन होता है॥ ११३॥

एवं विचिन्त्य काकोऽपि प्रयातः। तदा प्रभृत्यस्माभिः सह कौशिकानामन्वयगतं वैरमस्ति।

मेघवर्ण आह—"तात एवं गतेऽस्माभिः किं कृत्यमस्ति ?"।

स आह—"वत्स ! एवं गतेऽपि षाड्गुण्यादपरश्छलोऽप्युपायोऽस्ति। तमङ्गीकृत्य स्वयमेवाहं तद्विजयाय यास्यामि। रिपून् वञ्चयित्वा वधिष्यामि। उक्तञ्च यतः—

बहुबुद्धिसमायुक्ताः सुविज्ञानाश्छलोत्कटाः।
शक्ता वञ्चयितुं धूर्ता ब्राह्मणं छगलादिव" ॥ ११४ ॥

मेघवर्ण आह—"कथमेतत् ?" सोऽब्रवीत्—

व्याख्या—प्रयातः=गतः। कौशिकानाम्=उलूकानाम्, अन्वयगतं=कुलागतं, छलः=कपटः, अङ्गीकृत्य=स्वीकृत्य, सुविज्ञानाः=उपायज्ञाः, छलोत्कटाः=कपटयुक्ताः, धूर्ताः=वञ्चकाः, छगलः=अजः ॥ ११४ ॥

हिन्दी—उपर्युक्त बातों का विचार करके वह वायस भी वहाँ से चला गया। उसी दिन से हमारा इन उलूकों के साथ अन्वयागत वैर चला आ रहा है।

मेघवर्ण ने पूछा—"तात ! इस परिस्थिति में हमारा क्या कर्तव्य होता है ?"।

उसने कहा—"वत्स ! इस स्थिति में षाड्गुण्य (सन्धि, विग्रह, यान, आसन, द्वैधीभाव तथा समाश्रय) से अतिरिक्त एक उपाय छल भी है। उसको स्वीकार करके मैं स्वयं शत्रु-विजय के लिये जाऊँगा। छल द्वारा शत्रुओं को वञ्चित करके मैं उनका विनाश करूँगा। कहा भी गया है कि—

अनेक प्रकार की चातुरी से युक्त, विभिन्न उपायों को जानने वाले और छल करने में निपुण धूर्त जन किसी को भी ठग सकते हैं। जैसे—अजा को ले जाने वाले ब्राह्मण को धूर्तों ने ठग लिया था" ॥ ११४ ॥

मेघवर्ण ने पूछा—"यह कैसे ?"।

स्थिरजीवी ने अग्रिम कथा को आरम्भ करते हुए कहा—

[ ४ ]

## ( धूर्तब्राह्मणछाग-कथा )

कस्मिंश्चिदधिष्ठाने मित्रशर्मा नाम ब्राह्मणः कृताग्निहोत्रपरिग्रहः प्रतिवसति स्म। तेन कदाचिन्माघमासे सौम्यानिले प्रवाति मेघाच्छादिते गगने मन्दं मन्दं प्रवर्षति पर्जन्ये पशुप्रार्थनाय कञ्चिद् ग्रामान्तरङ्गत्वा कश्चिद्यजमानो याचितः—"भो यजमान ! आगामिन्याममावस्यायामहं यक्ष्यामि यज्ञं, तद्देहि मे पशुमेकम्।

व्याख्या—अग्निहोत्रपरिग्रहः=कृताग्निहोत्रव्रतः (कृतोऽग्निहोत्रपरिग्रहो येनाऽसौ), अनिले=पवने, गगने=आकाशे, पर्जन्ये=मेघे, याचितः=प्रार्थितः।

हिन्दी—किसी नगर में मित्रशर्मा नाम का एक अग्निहोत्री ब्राह्मण रहता था। माघ के महीने में जबकि शीतल मन्द पवन चल रहा था, आकाश मेघों से आच्छन्न ( घिरा हुआ ) था और मन्द-मन्द वृष्टि हो रही थी, किसी ग्राम में जाकर उसने किसी यजमान से एक पशु के लिए प्रार्थना करते हुए कहा—यजमान! आगामी अमावस्या को मैं यज्ञ करूँगा, अतः मुझे एक पशु दे दो।"

अथ तेन तस्य शास्त्रोक्तः पीवरतनुः पशुः प्रदत्तः। सोऽपि तमसमर्थमितश्चेतश्च गच्छन्तं विज्ञाय स्कन्धे कृत्वा सत्वरं स्वपुराभिमुखः प्रतस्थे। अथ तस्य गच्छतो मार्गे त्रयो धूर्ताः क्षुत्क्षामकण्ठाः संमुखा बभूवुः। तैश्च तादृशं पीवरं पशुं स्कन्धे आरूढमवलोक्य मिथोऽभिहितम्—"अहो, अस्य पशोर्भक्षणादद्यतनीयो हिमपातो व्यर्थतां नीयते। तदेनं वञ्चयित्वा पशुमादाय शीतत्राणं कुर्मः।

व्याख्या—पीवरः=स्थूलः, समर्थ=स्थूलं ( गमनानर्हमिति भावः ), शीतत्राणं= शीतादात्मत्राणम्।

हिन्दी—यजमान ने उस ब्राह्मण को एक पुष्टांग एवं पर्याप्त स्थूल पशु दे दिया। वह पशु स्थूल होने के कारण बहुत अधिक चलने में असमर्थ था अतः कतराकर इधर उधर भाग रहा था। उसको इधर-उधर भागते हुए देखकर ब्राह्मण ने उसे अपने कन्धे पर उठा लिया। और शीघ्रतापूर्वक वह अपने नगर की ओर चल पड़ा। मार्ग में उसे तीन धूर्त मिले जो भूख से अत्यन्त व्याकुल थे। ब्राह्मण के कन्धे पर आरूढ़ उस स्थूलकाय पशु को देखकर उन धूर्तों ने आपस में कहा—"इस स्थूलकाय पशु को खाकर आज का यह शीत मिटाया जा सकता है। अतः ब्राह्मण को ठगकर इस पशु को ले लिया जाय और शीत से आत्मरक्षा कर ली जाय।"

अथ तेषामेकतमो वेषपरिवर्तनं विधाय संमुखो भूत्वापरमार्गेण तमाहिताग्निमूचे—"भो भो बालाग्निहोत्रिन्! किमेवं जनविरुद्धं हास्यकार्यमनुष्ठीयते, यदेष सारमेयोऽपवित्रः स्कन्धाधिरूढो नीयते। उक्तञ्च यतः—

> श्वानकुक्कुटचाण्डालाः समस्पर्शाः प्रकीर्तिताः।
> रासभोष्ट्रौ विशेषेण तस्मात्तान्नैव संस्पृशेत्"॥ ११५॥

व्याख्या—एकतमः=एकः, संमुखो भूत्वा=तस्याग्रे गत्वा, आहिताग्निम्=अग्निहोत्रिणं, बालः=शिशुः ( अज्ञः ), जनविरुद्धं=लोकविरुद्धं, सारमेयः=कुक्कुरः, चाण्डालः= अन्त्यजः, समस्पर्शाः=स्पर्शे समाः, रासभः=गर्दभः॥ ११५॥

हिन्दी=उनमें से एक ने अपना वेशपरिवर्तन करके दूसरे मार्ग से उस ब्राह्मण के आगे जाकर कहा—"अरे अज्ञ अग्निहोत्रिन्! लोक के विरुद्ध यह हास्यास्पद कार्य क्यों कर रहे हो? इस अपवित्र कुत्ते को अपने कन्धेपर रखकर क्यों ढो रहे हो? कहा गया है कि—

कुत्ता, कुक्कुट तथा चाण्डाल—ये तीनो अस्पृश्य एवं समान अशुचि होते हैं। रासभ एवं उष्ट्र उनसे भी अधिक अस्पृश्य होते हैं। अतः इनका स्पर्श नहीं करना चाहिए॥ ११५॥

ततश्च तेन कोपाभिभूतेनाभिहितम्—"अहो, किमन्धो भवान् ? यत्पशुं सारमेयं प्रतिपादयसि।"

सोऽब्रवीत्—ब्रह्मन् ! कोपस्त्वया न कार्यः। यथेच्छं गम्यताम्" इति।

अथ यावत्किञ्चिदध्वनोऽन्तरं गच्छति, तावद् द्वितीयो धूर्तः संमुखे समुपेत्य तमुवाच—"भो ब्रह्मन् ! कष्टं कष्टम् ! यद्यपि वल्लभोऽयं ते मृतवत्सस्तथापि स्कन्धमारोपयितुमयुक्तम्। उक्तञ्च यतः—

तिर्यंचं मानुषं वापि यो मृतं संस्पृशेत्कुधीः।
पंचगव्येन शुद्धिः स्यात्तस्य चान्द्रायणेन वा॥ ११६॥

व्याख्या—कोपाभिभूतेन=क्रोधाविष्टेन, प्रतिपादयसि=कथयसि। यथेच्छं=यथासुखम्। अध्वनोऽन्तरं=मार्गान्तरं, समुपेत्य=आगत्य, कष्टं=धिक् धिक्, वल्लभः=प्रियः, वत्सः=तर्णकः (गोवत्सः), अयुक्तम्=अनुचितम्। तिर्यञ्चं=पशुं, कुधीः=मूर्खः॥ ११६॥

हिन्दी—ब्राह्मण ने क्रुद्ध होकर कहा—"अरे ! तुम अन्धे हो क्या ? जो इस पशु को कुत्ता बता रहे हो।"

उसने कहा—"ब्रह्मन् ! कोप न कीजिये। अपनी इच्छानुसार आप जाइये, मुझे आपके इस कार्य से क्या प्रयोजन है ?"

वह ब्राह्मण जब कुछ और आगे गया तो, दूसरे धूर्त ने सामने आकर उससे कहा—"ब्रह्मन् ! छीः छीः, तुम यह क्या अनर्थ कर रहे हो ?। यद्यपि यह मरा हुआ बछड़ा तुम्हें अत्यन्त प्रिय है, तो भी इसे कन्धे पर रखकर ढोना अत्यन्त अनुचित है। कहा भी गया है कि—

पशु हो या मनुष्य, जो व्यक्ति मृतक का स्पर्श करता है वह पञ्चगव्य अथवा चान्द्रायण से ही शुद्ध होता है॥ ११६॥

अथासौ सकोपमिदमाह—"भोः किमन्धो भवान् ? यत्पशुं मृतवत्सं वदसि।"

सोऽब्रवीत्—"भगवन् ! मा कोपं कुरु। अज्ञानान्मयाभिहितं, तत्त्वमात्मरुचिं समाचर" इति।

अथ यावत्स्तोकं वनान्तरं गच्छति तावत्तृतीयोऽन्यवेषधारी धूर्तः संमुखः समुपेत्य तमुवाच—"भो ! अयुक्तमेतत्, यत्त्वं रासभं स्कन्धाधिरूढं नयसि। तत्त्यज्यतामेषः। उक्तञ्च—

यः स्पृशेद्रासभं मर्त्यो ज्ञानादज्ञानतोऽपि वा।
सचैलं स्नानमुद्दिष्टं तस्य पापप्रशान्तये॥ ११७॥

व्याख्या—आत्मरुचि=स्वाभिलषितम्, समाचर=कुरु। स्तोकं=किञ्चिदल्पं, मर्त्यः=मनुष्यः, सचैलं=सवस्त्रं, पापप्रशान्तये=पापप्रशमनाय।

हिन्दी—धूर्त की बात सुनकर ब्राह्मण ने क्रुद्ध होकर कहा—"तुम अन्धे हो क्या, जो पशु को मृत गोवत्स कह रहे हो ?"

उसने कहा—"भगवन्! कोप न कीजिये। मैंने अज्ञानवश ऐसा कहा है। आपको जो अच्छा लगे वही करें।"

पुनः जब वह ब्राह्मण वन में कुछ और दूर गया तो अन्यवेशधारी तृतीय धूर्त ने उसके सामने आकर कहा—"अरे महाराज! यह तो बहुत अनुचित कार्य आप कर रहे हैं कि एक गदहे को अपने कन्धेपर रखकर ढो रहे हैं। अतः इसको उतारकर फेंक दीजिये। कहा गया है कि—

ज्ञान से अथवा अज्ञान से, यदि कोई व्यक्ति गदहे का स्पर्श कर लेता है तो उसे उस पाप की शान्ति के लिए सवस्त्र स्नान करना चाहिये॥ ११७॥

तत्त्यजैनं यावदन्यः कश्चिन्न पश्यति"। अथासौ तं पशुं रासभं मन्यमानो भयाद् भूमौ प्रक्षिप्य स्वगृहमुद्दिश्य प्रपलायितः।

ततस्ते त्रयो मिलित्वा तं पशुमादाय यथेच्छया भक्षयितुमारब्धाः। अतोऽहं ब्रवीमि—"बहुबुद्धिसमायुक्ता···इति। अथवा साध्विदमुच्यते—

अभिनवसेवकविनयैः प्राघुणिकोक्तैर्विलासिनीरुदितैः।
धूर्तजनवचननिकरैरिह कश्चिदवञ्चितो नास्ति॥ ११८॥

किञ्च, दुर्बलैरपि बहुभिः सह विरोधो न युक्तः। उक्तञ्च—

बहवो न विरोद्धव्या दुर्जयो हि महाजनः।
स्फुरन्तमपि नागेन्द्रं भक्षयन्ति पिपीलिकाः"॥ ११९॥

मेघवर्ण आह—"कथमेतत्"?। स्थिरजीवी कथयति—

व्याख्या—मन्यमानः=स्वीकृत्य, प्रपलायितः=गतः। अभिनवः=नवीनः प्राघुणिकोक्तैः=अतिथिवचनैः, विलासिनी=कामिनी (स्त्री), वचननिकरैः=रुचिकरैर्वंचननिचयैः॥ ११८॥ महाजनः=जनसमूहः, नागेन्द्रं=सर्पेन्द्रम्।

हिन्दी—इससे पूर्व कि आपको इस प्रकार से गदहे को ढोते हुए कोई देख ले आप इसको फेंक दीजिये।"

ब्राह्मण ने उस पशु को गदहा समझकर भय से भूमिपर फेंक दिया। उस पशु को फेंककर वह अपने घर की ओर भाग गया। उसके भाग जाने पर उन तीनों धूर्तों ने मिलकर उस पशु को यथेच्छ खाना आरम्भ कर दिया।"

उक्त कथा को सुनाने के बाद स्थिरजीवी ने कहा—"इसीलिये मैं कहता हूँ कि छल एवं कपट को जानने वाले बुद्धिमान् व्यक्ति किसी को भी ठग सकते हैं। अथवा, ठीक ही कहा गया है कि—

नवीन सेवकों के विनयभाव से, अतिथियों के वचन से, कामिनियों के रोने से और धूर्तजनों के प्रवञ्चनामय वचनों से कोई भी व्यक्ति बिना ठगाये हुए नहीं बचा है॥ ११८॥

किञ्च, दुर्बल व्यक्ति भी यदि संगठित हों तो उनसे विरोध नहीं करना चाहिए। कहा भी गया है कि—

बहुतों के साथ विरोध नहीं करना चाहिए। जनसमूह अत्यन्त दुर्जय होता है। अपने फण को फैलाकर फुफुकार मारने वाले अत्यन्त भीषण एवं सशक्त सर्प को भी चीटियाँ खा जाया करती है॥ ११९॥

मेघवर्ण ने पूछा—"यह कैसे ?"

स्थिरजीवी ने कहा—

[५]

## ( पिपीलिकाभुजङ्गमकथा )

अस्ति कस्मिंश्चिद् वल्मीके महाकायः कृष्णसर्पोऽतिदर्पो नाम। स कदाचिद् बिलानुसारिमार्गमुत्सृज्यान्येन लघुद्वारेण निष्क्रामितुमारब्धः। निष्क्रामतश्च तस्य महाकायत्वाद्दैववशतया लघुविवरत्वाच्च शरीरे व्रणः समुत्पन्नः। अथ व्रणशोणितगन्धानुसारिणीभिः पिपीलिकाभिः सर्वतो व्याप्तो व्याकुलीकृतश्च। कति व्यापादयति, कति वा ताडयति। अतिप्रभूतत्वाद्विस्तारितबहुव्रणाभिः क्षतसर्वाङ्गोऽतिदर्पः पञ्चत्वमुपगतः। अतोऽहं ब्रवीमि—'बहवो न विरोद्धव्या···' इति।

व्याख्या—वल्मीके = वामलूरे, उत्सृज्य = परित्यज्य, निष्क्रमितुं = बहिर्निर्गन्तुं, महाकायत्वात् = स्थूलशरीरत्वात्, दैववशतया = संयोगेन, व्रणः = अरुः (घाव), कति = कियतोः, अतिप्रभूतत्वात् = बहुत्वात्।

हिन्दी—किसी वाल्मीक में अतिदर्प नाम का एक विशालकाय काला सर्प रहा करता था। बिल से बाहर निकलने वाले मार्ग को छोड़कर किसी दिन वह एक अत्यन्त संकरे मार्ग से बाहर निकलने लगा, बाहर निकलते समय संयोग से उसके स्थूल शरीर और अत्यन्त सँकरे मार्ग के कारण उसका शरीर छिल· गया और उसमें घाव हो गया। घाव से बहने वाले रक्त के गन्ध का अनुसरण करने वाली चीटियों ने उसके सम्पूर्ण शरीर को छाप लिया। चीटियों ने उसको अत्यधिक व्याकुल कर दिया। किन्तु वह कर ही क्या सकता था! कितनी चींटियों को मारता और कितनी को भगाता! अत्यधिक संख्या में होने के कारण चीटियों ने उसके घाव को इतना अधिक बढ़ा दिया कि उसका सम्पूर्ण शरीर ही क्षत विक्षत हो गया और वह मर गया।

इसीलिए मैं कहता हूँ कि—"जनसमूह के साथ विरोध नहीं करना चाहिए।"

तदत्रास्ति किञ्चिन्मे वक्तव्यम्। देव! तदवधार्य यथोक्तमनुष्ठीयताम्।"

मेघवर्ण आह—"तात! समादेशय। तवादेशो नान्यथा कर्तव्यः।"

स्थिरजीवी आह—"वत्स! समाकर्णय तर्हि सामादीनतिक्रम्य यो मया पञ्चम उपायो निरूपितः। तन्मां विपक्षभूतं कृत्वातिनिष्ठुरवचनैर्निर्भर्त्स्य यथा विपक्षप्रणिधीनां प्रत्ययो भवति तथा समाहृतरुधिरेणालिप्यास्यैव न्यग्रोधस्याधस्तात्प्रक्षिप्य, गम्यतां पर्वतमृष्यमूकं प्रति।

व्याख्या—वक्तव्यं=कथनीयम्, तदवधार्य=तच्छ्रुत्वा, अनुष्ठीयतां=विधीयताम्। नान्यथा कर्तव्यः=नोल्लङ्घनीयो मया। सामादीन्=सामदानदण्डभेदान्, अतिक्रम्य=समुल्लङ्घ्य, निरूपितः=निर्णीतः, विपक्षभूतं=शत्रुपक्षीभूतं, निष्ठुरवचनः=कठोरवाक्यैः, निर्भर्त्स्य=विनिन्द्य, विपक्षप्रणिधीनां=शत्रुपक्षीयगुप्तचराणां, प्रत्ययः=विश्वासः, समाहृतरुधिरैः=कुतश्चिदानीतैः शोणितैः, आलिप्य=विलिप्य, न्यग्रोधस्य=वटवृक्षय. प्राक्षिप्य=संस्थाप्य (त्यक्त्वा)।

हिन्दी—महाराज! इस विषय में मुझे कुछ कहना है। आप मेरी बात को सुन लें और उसी के अनुसार कार्य भी करें।"

मेघवर्ण ने कहा—तात! मुझे आदेश दें। आपका आदेश मेरे लिए पालनीय है। उसके विपरीत आचरण हम नहीं कर सकते है।"

स्थिरजीवी ने कहा—"वत्स! साम, दान, दण्ड और भेद को छोड़कर जो छलरूपी पञ्चम उपाय मैंने निश्चित किया है, उसका स्वरूप बताता हूँ, सुनो। मुझे शत्रुपक्षीय घोषित करके अत्यन्त कठोर शब्दों में मेरी भर्त्सना करो जिससे शत्रुपक्षीय गुप्तचरों को यह विश्वास हो जाय कि तुमने मुझे पदच्युत कर दिया है। पुनः कहीं से रुधिर मँगाकर मेरे सम्पूर्ण शरीर में लेप करवा दो और इसी वटवृक्ष के नीचे मुझे छोड़ कर तुम ऋष्यमूक पर्वत की ओर चले जाओ।

तत्र सपरिवारस्तिष्ठ। यावदहं समस्तान् सपत्नान् सुप्रणीतेन विधिना विश्वास्याभिमुखान् कृत्वा कृतार्थो ज्ञातदुर्गमध्यो दिवसे तानन्धतां प्राप्तान् ज्ञात्वा व्यापादयामि। ज्ञातं मया सम्यक्, नान्यथास्माकं सिद्धिरिति। यतो दुर्गमेतदपसाररहितं केवलं वधाय भविष्यति। उक्तञ्च यतः—

अपसारसमायुक्तं नयज्ञैर्दुर्गमुच्यते।
अपसारपरित्यक्तं दुर्गव्याजेन बन्धनम्॥ १२०॥

व्याख्या—सपरिवारः=सान्वयः, सपत्नान्=शत्रून्, सुप्रणीतेन=सुनियोजितेन (स्वनिर्मितेन), कृतार्थः=विहितार्थः, ज्ञातदुर्गमध्यः=ज्ञातदुर्गभेदः, सिद्धिः=कार्यसिद्धिः (त्राणोपायः)। अपसाररहितम्=अपसरणमार्गशून्यं, वधाय=विनाशाय। नयज्ञैः=नीतिज्ञैः, बन्धनं=कारागृहम्॥ १२०॥

हिन्दी—वहाँ जाकर तुम सपरिवार निवास करो। इधर मैं शत्रुओं को सुनियोजित विधि से विश्वस्त बनाकर अपने पक्ष में कर लेता हूँ। पुनः शत्रुओं के दुर्ग का गुप्त भेद जानकर कभी दिन में जब वे अन्धे हो जायेंगे तो मैं उनको मार डालूँगा। मैंने खूब सोच समझ लिया है। अन्य उपाय से हमें सफलता मिलने वाली नहीं है। यतः शत्रुओं के दुर्ग में भागने के लिये कोई गुप्त द्वार नहीं है, अतः वह स्वयं उनके विनाश में सहायक होगा। कहा भी गया है कि—

नीतिशास्त्र के जानने वाले विद्वानों ने पलायन के लिये गुप्तद्वार से युक्त दुर्ग को ही

श्रेष्ठ माना है। पलायन के योग्य गुप्तद्वार से रहित दुर्ग को किले के रूप में कारागार ही समझना चाहिये ॥ १२० ॥

न च त्वया मदर्थं कृपा कार्या। उक्तञ्च—

अपि प्राणसमानिष्टान् पालिताँल्लालितानपि।
भृत्यान् युद्धे समुत्पन्ने पश्येच्छुष्कमिवेन्धनम् ॥ १२१ ॥

तथा च—

प्राणवद्रक्षयेद् भृत्यान् स्वकायमिव पोषयेत्।
सदैकदिवसस्यार्थे यत्र स्याद्रिपुसङ्गमः ॥ १२२ ॥

तत्त्वयाहं नात्र विषये प्रतिषेधनीयः।" इत्युक्त्वा तेन सह शुष्ककलहं कर्तुमारब्धः।

व्याख्या—कृपा=दया, प्राणसमान्=प्राणतुल्यान्, इष्टान्=प्रियान्, पालितान् पोषितान् (वर्द्धितान्) लालितान्=तोषितान्, इन्धनं=काष्ठमिव ॥ १२१ ॥ स्वकायमिव=स्वशरीरमिव, पोषयेत्=पालयेत्। एकदिवसस्यार्थे=एकस्य दिनस्योपयोगार्थं, तच्च दिनं, रिपुसङ्गमः=शत्रुसमागमः, यत्र=यस्मिन् दिने स्यादिति भावः ॥ १२२ ॥ न प्रतिषेधनीयः=न निवारणीयः। शुष्ककलहं=मिथ्याविवादम्।

हिन्दी—इस समय तुमको मुझपर दया नहीं करनी चाहिये। कहा भी गया है कि—

राजा को अपने प्राणों के समान प्रिय, पालित एवं लालित भृत्यों को भी युद्ध का समय उपस्थित हो जानेपर शुष्क काष्ठ के ही समान समझना चाहिये। जैसे शुष्क काष्ठ को विना किसी मोह के अग्नि में झोंक दिया जाता है, उसी प्रकार भृत्यों को भी विना किसी मोह के युद्धाग्नि में झोंक देना चाहिये ॥ १२१ ॥

और भी—राजा को चाहिये कि वह केवल एक ही दिन के लिये भृत्यों को अपने प्राणों के समान सुरक्षित रखे और अपने शरीर की तरह उनका पालन-पोषण करता रहे। जब वह दिन आ जाय और शत्रु का आक्रमण हो जाय, तब विना किसी मोह के उनको युद्ध की ज्वाला में झोंक देना चाहिये ॥ १२२ ॥

अतः इस समय तुम्हें मुझे रोकना नहीं चाहिये।" यह कहकर स्थिरजीवी ने काकराज मेघवर्ण के साथ शुष्क-कलह करना प्रारम्भ कर दिया।

अथान्ये तस्य भृत्याः स्थिरजीविनमुच्छृङ्खलवचनैर्जल्पन्तमवलोक्य तस्य वधायोद्यता मेघवर्णेनाभिहिताः—"अहो, निवर्तध्वं यूयम्। अहमेवास्य शत्रुपक्षपातिनो दुरात्मनः स्वयं निग्रहं करिष्यामि।" इत्यभिधाय तस्योपरि समारुह्य लघुभिश्चञ्चुप्रहारैस्तं प्रहृत्य आहतरुधिरेण प्लावयित्वा तदुपदिष्टमृष्यमूकपर्वतं सपरिवारो गतः।

एतस्मिन्नन्तरे कृकालिकया द्विषत्प्रणिधीभूतया तत्सर्वं मेघवर्णस्यामात्यव्यसनमुलूकराजस्य निवेदितं यत्—"तवारिः सम्प्रति भीतः क्वचित्प्रचलितः सपरिवारः" इति।



व्याख्या—उच्छृङ्खलवचनैः=उद्दण्डशब्दैः, जल्पन्तं=प्रलपन्तं, दुरात्मनः=दुष्टाश-

यस्य, निग्रहं = दण्डं, लघुभिः = सोढुं शक्यैः, प्रहृत्य = प्रहारं विधाय, आहृतरुधिरेण = आनीतेन रुधिरेण, द्विषत्प्रणिधीभूतया = शत्रोः प्रणिधीभूतया, अमात्यव्यसनं = मन्त्रिशोकं, तवारिः = तव शत्रुः।

हिन्दी—स्थिरजीवी को राजा के प्रति उच्छृङ्खल शब्दों का प्रयोग करते हुये देखकर राजा के अन्य सेवक स्थिरजीवी को मारने के लिए उद्यत हो गये। किन्तु मेघवर्ण ने उन्हें रोकते हुए कहा—"तुम लोग रहने दो। मैं स्वयं इस शत्रुपक्षपाती दुष्ट को दण्ड दूँगा।" यह कहकर वह स्थिरजीवी को पटककर उसके वक्ष पर चढ़ गया। पुनः अपनी चोंच द्वारा धीरे-धीरे कृत्रिम रूप से उसको आहत कर मँगाये हुये रक्त से उसने उसके शरीर को लथपथ कर दिया। तदुपरान्त उसके कथनानुसार वह सपरिवार ऋष्यमूक पर्वत पर चला गया।

इसी बीच में शत्रुपक्षीय गुप्तचर कृकालिका ने मन्त्री से हुए काकराज मेघवर्ण के कलह का समाचार उलूकराज को देते हुए कहा—"आपका शत्रु भयभीत होकर इस समय सपरिवार कहाँ चला गया है।"

अथोलूकाधिपस्तदाकर्ण्यास्तमनवेलायां सामात्यः सपरिजनो वायसवधार्थं प्रचलितः, प्राह च—"त्वर्यतां त्वर्यतां, भीतः शत्रुः पलायनपरः पुण्यैर्लभ्यते। उक्तञ्च—

शत्रोः प्रचलने छिद्रमेकमन्यच्च सश्रयम्।
कुर्वाणो जायते वश्यो व्यग्रत्वे राजसेविनाम्" ॥ १२३ ॥

एवं ब्रुवाणः समन्तान्न्यग्रोधपादपमधः परिवेष्टय व्यवस्थितः। यावन्न कश्चिद्वायसो दृश्यते, तावच्छाखाग्रमधिरूढो हृष्टमना बन्दिभिरभिष्टूयमानोऽरिमर्दनस्तान् प्रोवाच—"अहो, ज्ञायतां तेषां मार्गः। कतमेन मार्गेण प्रनष्टाः काकाः? तद्यावन्न दुर्गं समाश्रयन्ति तावदेव पृष्ठतो गत्वा व्यापादयामि।

व्याख्या—उलूकाधिपः = उलूकराजः, अस्तमनवेलायां = सूर्यास्तकाले, प्रचलने = पलायने, व्यग्रत्वे = वैकल्ये सति, अभिष्टूयमानः = वन्द्यमानः, प्रनष्टाः = पलायिताः।

हिन्दी—कृकालिका के वचन को सुनकर उलूकराज सूर्यास्तकाल में अपने अमात्यों और परिजनों को लेकर वायसों के वध के लिए चल पड़ा। अपने अनुगामियों को प्रोत्साहित करते हुए उसने कहा "दौड़ो-दौड़ो! डरकर भागता हुआ शत्रु बड़े भाग्य से मिलता है। कहा भी गया है कि—

शत्रु जब भागने लगता है तो उसमें दो कमजोरियाँ आजाती हैं। एक तो वह अपना स्थान छोड़कर पलायन करता है और दूसरे एक अपरिचित स्थान में जाकर वास करता है। यदि ठीक इसी समय उसपर आक्रमण कर दिया जाय तो इन दोनों स्थितियों की व्यग्रता से वह वश में आ जाता है" ॥ १२३ ॥

अनुचरों को प्रोत्साहित करते हुए उसने वटवृक्ष को चारों ओर से घेरकर उसके नीचे ही अपना डेरा डाल दिया। जब कोई भी वायस उसकी दृष्टि में नहीं आया, तो बन्दिगणों के द्वारा स्तुत वह वृक्ष की एक ऊँची शाखा पर चढ़ गया और प्रसन्न मन से अपने परिजनों को

आदेश देते हुए बोला—"शत्रुओं के मार्ग का अन्वेषण करो। आखिर ये वायस किस मार्ग से निकलकर भाग गये हैं। अन्य दुर्ग में प्रविष्ट होने से पहले ही उनका पीछा करके उन्हें मार डालो।

उक्तञ्च—

वृतिमप्याश्रितः शत्रुरवध्यः स्याज्जिगीषुणा।
किं पुनः संश्रितो दुर्गं सामग्र्या परया युतम्"॥ १२४॥

अथैतस्मिन् प्रस्तावे स्थिरजीवी चिन्तयामास—"यदेतेऽस्मच्छत्रवोऽनुपलब्धास्मद्वृत्तान्ता यथागतमेव यान्ति, तता मया न किञ्चित्कृतं भवति। उक्तञ्च—

अनारम्भो हि कार्याणां प्रथमं बुद्धिलक्षणम्।
आरब्धस्यान्तगमनं द्वितीयं बुद्धिलक्षणम्॥ १२५॥

व्याख्या—जिगीषुणा=विजयार्थिना, संश्रितः=आश्रितः ॥ १२४॥ प्रस्तावे=विषये, अनुपलब्धाः=अप्राप्ताः। अनारम्भः=कार्यारम्भाभावः। अन्तगमनं=समाप्तिः।

हिन्दी—कहा भी गया है कि—

वृति ( टाट ) का सहारा पाजाने मात्र से भी शत्रु जयार्थियों के लिए अवध्य हो जाता है। यदि उसे सम्पूर्ण सामग्रियों से युक्त दुर्ग का आश्रय मिल जाता है, तब तो वह अवध्य होता ही है, इसमें कहने की कोई बात ही नहीं" ॥ १२४॥

शत्रु की उपर्युक्त स्थिति को देखकर स्थिरजीवी ने उस विषय में सोचा—"यदि मेरा शत्रु मेरे वृत्तान्त को बिना जाने ही, जैसे आया है उसीप्रकार लौट गया तो मैंने कुछ नहीं किया, यही समझना चाहिए। कहा भी गया है कि—

किसी कार्य को प्रारंभ न करना बुद्धिमत्ता का प्रथम लक्षण माना गया है और प्रारंभ किए कार्य की समाप्ति कर लेना बुद्धिमत्ता का द्वितीय लक्षण माना जाता है॥ १२५॥

तद्वरमनारम्भो, न चारम्भविघातः। तदहमेताञ्छब्दं संश्राव्यात्मानं दर्शयामि।" इति विचार्य मन्दं मन्दं शब्दमकरोत्। तच्छ्रुत्वा ते सकला अप्युलूकास्तद्वधाय प्रजग्मुः। अथ तेनोक्तम्—"अहो! अहं स्थिरजीवी नाम मेघवर्णस्य मन्त्री। मेघवर्णेनैवेदृशीमवस्थां नीतः। तन्निवेदयतात्मस्वाम्यग्रे। तेन सह बहु वक्तव्यमस्ति!

अथ तैर्निवेदितः स उलूकराजो विस्मयाविष्टस्तत्क्षणात्तस्य सकाशं गत्वा प्रोवाच—"भो भोः! किमेतां दशां गतस्त्वं, तत्कथ्यताम्।"

व्याख्या—आरम्भविघातः=कार्यारम्भे कृते सति विघातः, संश्राव्य=श्रावयित्वा, सकलाः=सर्वे, निवेदितः=कथितः। विस्मयाविष्टः=आश्चर्यान्वितः सन्, सकाशं=समीपं, किमेतां=कथमेतादृशीं, दशाम्=अवस्थाम्।

हिन्दी—कार्यारम्भ करने के बाद विघ्न पड़ जानेपर उसे मध्य में ही छोड़ दिया जाय, इससे उस कार्य को आरम्भ न करना ही उत्तम होता है। अतः मैं अपने शब्दों को सुनाकर ही

इनको अपनी उपस्थिति का ज्ञान कराऊँगा।" यह सोचकर उसने मन्द-मन्द शब्द करना प्रारंभ कर दिया।

उसके शब्द को सुनते ही सभी उलूक उसको मारने के लिए उधर दौड़ पड़े। उनको अपनी ओर आते हुए देखकर उसने कहा—"अरे भाई! मैं स्थिरजीवी नाम का मेघवर्ण का मन्त्री हूँ। मेघवर्ण ने ही मुझे इस अवस्था को पहुँचाया है। अतः मेरे इस वृत्तान्त को अपने स्वामी से कह दो। उनके साथ मुझे बहुत सी बातें करनी है।"

उलूकराज के अनुचरों ने जाकर स्थिरजीवी के सम्पूर्ण वृत्तान्त को अपने स्वामी से कहा। उसके वृत्तान्त को सुनते ही उलूकराज आश्चर्यचकित होकर तत्क्षण स्थिरजीवी के समीप पहुँच गया। वहाँ पहुँचकर उसने पूछा—"कहिये आपकी यह दशा कैसे हो गयी?"

**स्थिरजीवी प्राह—"देव! श्रूयतां मे एतदवस्थाकारणम्। अतीतदिने स दुरात्मा मेघवर्णो युष्मद्व्यापादितान् प्रभूतवायसान् दृष्ट्वा युष्माकमुपरि कोपशोकग्रस्तो युद्धार्थं प्रचलित आसीत्। ततो मयाभिहितम्—**

**"स्वामिन्! न युक्तं भवतस्तदुपरि गन्तुं; बलवन्त एते, बलहीनाश्च वयम्। उक्तञ्च—**

**बलीयसा हीनबलो विरोधं न भूतिकामो मनसापि वाञ्छेत्।**
**न बध्यतेऽत्यन्तबलो हि यस्माद्व्यक्तं प्रणाशोऽस्ति पतङ्गवृत्तेः॥ १२६॥**

**तत्तस्योपायनप्रदानेन सन्धिरेव युक्तः।**

व्याख्या—व्यापादितान्=हतान्, प्रभूतान्=प्रचुरान्, कोपशोकग्रस्तः=क्रुद्धः शोकग्रस्तश्च। भूतिकामः=ऐश्वर्यमिच्छन्, मनसापि=बुद्ध्यापि, यतः स न बध्यते किन्तु पतङ्गवृत्तेः=पतङ्गवत् स्वनाशाय वह्नौ पतनशीलस्य, प्रणाशः=विनाशः, व्यक्तं=सुनिश्चितमेवेति भावः॥ १२६॥ उपायनप्रदाननेन=उपहारप्रदानेन।

हिन्दी—स्थिरजीवी ने कहा—"देव! मेरी इस अवस्था का कारण सुन लीजिये, कह रहा हूँ। वह दुरात्मा मेघवर्ण कल आपके द्वारा मारे हुये असङ्ख्य वायसों को देखकर शोकाकुल हो उठा था और क्रुद्ध होकर आप पर चढ़ाई करने के उद्देश्य से चल पड़ा था। उसको रोकते हुये मैंने कहा था कि—"स्वामिन्! उनपर चढ़ाई करना आपके लिये उचित नहीं होगा। वे आपसे अधिक बलवान् है। उनकी अपेक्षा हम लोग बहुत निर्बल है। कहा भी गया है कि—

ऐश्वर्य एवं सुख की कामना करने वाले व्यक्ति को अपने मन में भी अपने से बलवान् शत्रु के साथ विरोध करने की बात नहीं सोचनी चाहिये। क्योंकि सबल होने के कारण उस शत्रु का विनाश तो होता नहीं है, प्रत्युत दीपशिखा पर टूटने वाले पतङ्ग की तरह अपना ही विनाश हो जाता है॥ १२६॥

अतः उपहार आदि देकर उनके साथ सन्धि कर लेना ही उचित होगा।

**उक्तञ्च—**

**बलवन्तं रिपुं दृष्ट्वा सर्वस्वमपि बुद्धिमान्।**
**दत्त्वा हि रक्षयेत्प्राणान् रक्षितैस्तैर्धनं पुनः॥" १२७॥**

तच्छ्रुत्वा तेन दुर्जनप्रकोपितेन त्वत्पक्षपातिनं मामाशङ्कमानेनेमां दशां नीतः। तत्तव पादौ साम्प्रतं मे शरणम्। किं बहुना विज्ञप्तेन—यावदहं प्रचलितुं शक्नोमि तावत्त्वां तस्यावासे नीत्वा सर्ववायसक्षयं विधास्यामि" इति।

व्याख्या—रिपुं=शत्रुं, तैः=प्राणैः, रक्षितैर्धनं पुनश्चापि भवतीति भावः॥ १२७॥ दुर्जनप्रकोपितेन=दुष्टजनैरुत्साहितेन, आशङ्कमानेन=शङ्कमानेन, विज्ञप्तेन=कथनेन।

हिन्दी—कहा भी गया है कि—

बुद्धिमान् व्यक्ति को चाहिये कि वह अपने से बलवान् शत्रु को देखते ही अपना सर्वस्व देकर भी अपने प्राणों को बचा ले। क्योंकि प्राणों के सुरक्षित रहनेपर धन बाद में भी हो सकता है॥ १२७॥

मेरी बात को सुनकर दुष्टों द्वारा प्रोत्साहित वह मेघवर्ण मुझ पर भी क्रुद्ध हो गया और मुझे आपका पक्षपाती समझकर उसने मुझे इस दशा को पहुँचा दिया है। अतः मैं आपके चरणों में ही शरण लेना चाहता हूँ। अधिक क्या कहना है, मैं चलने-फिरने योग्य हो जाऊँ, तो आपको उसके आवासस्थान में ले चलकर सम्पूर्ण वायसों का विनाश कराऊँगा।"

अथारिमर्दनस्तदाकर्ण्य पितृपितामहक्रमागतमन्त्रिभिः सार्धं मन्त्रयाञ्चक्रे। तस्य च पञ्च मन्त्रिणः। तद्यथा रक्ताक्षः, क्रूराक्षः, दीप्ताक्षः, वक्रनासः, प्राकारकर्णश्चेति। तत्रादौ रक्ताक्षमपृच्छत्—"भद्र! एष तावत्तस्य रिपोः मन्त्री मम हस्तगतः। तत्किं क्रियताम्?" इति।

रक्ताक्ष आह—"देव! किमत्र चिन्त्यते। अविचारमयं हन्तव्यः। यतः—

हीनः शत्रुर्निहन्तव्यो यावन्न बलवान् भवेत्।
प्राप्तस्वपौरुषबलः पश्चाद्भवति दुर्जयः॥ १२८॥

व्याख्या—मन्त्रयाञ्चक्रे=मन्त्रयामास। अविचारं=विचारं विनैव, हीनः=निर्बलः॥ १२८॥

हिन्दी—उसकी बात सुनकर अरिमर्दन ने अपने पिता और पितामह के समय से चले आनेवाले मन्त्रियों के साथ विचार-विमर्श करना आरम्भ कर दिया। उसके पाँच मन्त्री थे। उनके नाम ये थे १—रक्ताक्ष २—क्रूराक्ष ३—दीप्ताक्ष ४—वक्रनास और ५—प्राकारकर्ण। सर्वप्रथम उसने रक्ताक्ष से पूछा—"भद्र! शत्रुपक्ष का एक मन्त्री मेरे नियन्त्रण में आ गया है। इस स्थिति में हमें क्या करना चाहिये।"

रक्ताक्ष ने उत्तर में कहा—"देव! इसमें विचार करने की क्या आवश्यकता है। विना विचार किये ही उसको मार डालना चाहिये। यतः कहा गया है कि—

शत्रु दुर्बल हो तभी उसको मार डालना चाहिये। उसको सशक्त होने का अवसर नहीं देना चाहिये। बल एवं पराक्रम को पाकर जब वह बलवान् हो जाता है, तो बाद में दुर्जेय हो जाता है। उससमय उसको मारना बहुत कठिन कार्य हो जाता है॥ १२८॥



किञ्च स्वयमुपागता श्रीस्त्यज्यमाना शपतीति लोके प्रवादः। उक्तञ्च—

काले हि सकृदभ्येति यन्नरं कालकाङ्क्षिणम्।
दुर्लभः स पुनस्तेन कालः कर्मचिकीर्षता ॥ १२९ ॥

श्रूयते च यथा—

चितिकां दीपितां पश्य फटां भग्नां ममैव च।
भिन्नश्लिष्टा तु या प्रीतिर्न सा स्नेहेन वर्धते" ॥ १३० ॥

अरिमर्दनः प्राह—"कथमेतत्" ? । रक्ताक्षः कथयति—

व्याख्या—श्रीः=लक्ष्मीः, प्रवादः=प्रसिद्धिः। कालकाङ्क्षिणं, नरं=पुरुषं, कालः=समयः ( अनुकूलावसरः ), ॥ १२९ ॥ दीपितां=प्रज्वलितां, भिन्नश्लिष्टा=आदौ भिन्ना पुनश्च श्लिष्टा=संयोजिता, स्नेहेन=प्रेम्णा ॥ १३० ॥

हिन्दी—किञ्च–स्वयं आयी हुई लक्ष्मी को छोड़ देने पर वह शाप देती है, यह लोकप्रसिद्धि है। कहा भी गया है कि—

समय की प्रतीक्षा करनेवाले व्यक्ति के पास समय एकबार अवश्य आता है। यदि समय को प्राप्त करने पर भी व्यक्ति अपने आलस्य के कारण कार्य करना नहीं चाहता है; तो आया हुआ समय चला जाता है और पुनः लौटकर नहीं आता ॥ १२९ ॥

सुना भी जाता है कि—

इस जलने वाली चिता को देखो और मेरे क्षतविक्षत हुये फणों को भी देखो। एक बार टूट जाने पर जोड़ी जाने वाली प्रीति ( मित्रता ) स्नेह प्रदर्शित करने से कभी जुटती नहीं है" ॥ १३० ॥

अरिमर्दन ने पूछा—"यह कैसे ?"

रक्ताक्ष ने अग्रिम कथा को आरम्भ करते हुये कहा—

## [ ६ ]

## ( ब्राह्मणसर्प-कथा )

अस्ति कस्मिंश्चिदधिष्ठाने हरिदत्तो नाम ब्राह्मणः। तस्य च कृषिं कुर्वतः सदैव निष्फलः कालोऽतिवर्तते। अथैकस्मिन् दिवसे स ब्राह्मण उष्णकालावसाने घर्मार्तः स्वक्षेत्रमध्ये वृक्षच्छायायां प्रसुप्तोऽनतिदूरे वल्मीकोपरि प्रसारितबृहत्फटाटोपभीषणं भुजङ्गमं दृष्ट्वा चिन्तयामास—"नूनमेषा क्षेत्रदेवता मया कदाचिदपि न पूजिता। तेनेदं मे कृषिकर्म विफलीभवति तदस्या अहं पूजामद्य करिष्यामि।

व्याख्या—निष्फलः=फलरहितः, अतिवर्तते=येन केन प्रकारेण गच्छति। उष्णकालावसाने=समाप्तप्राये ग्रीष्मकाले, घर्मार्तः=घर्मेण पीडितः, अनतिदूरे=समीपे ( नातिदूरे ), भीषणं=भयानकं, भुजङ्गमं=सर्पं, क्षेत्रदेवता=क्षेत्राधिष्ठातृदेवता।

हिन्दी—किसी नगर में हरिदत्त नाम का एक ब्राह्मण निवास करता था। खेती के

कार्य में अत्यन्त परिश्रम करते हुये भी उसका समय निष्फल ही बीत जाया करता था। ग्रीष्मकाल के प्रायः समाप्त हो जाने पर किसी दिन वह धूप से पीड़ित होकर अपने क्षेत्र में ही एक वृक्ष की छाया में सोया हुआ था। सोये-सोये उसने समीप के वल्मीकपर अपने फणों को फैलाकर बैठे हुये एक अत्यन्त भयङ्कर सर्प को देखा। उसको देखकर उसने सोचा—"यही मेरे इस क्षेत्र का देवता है। मैंने कभी भी इसकी पूजा नहीं की। जान पड़ता है, इसीलिये मेरा परिश्रम निष्फल चला जाता है और मेरी खेती कभी अच्छी नहीं होती। अतः आज मैं इसकी पूजा अवश्य करूँगा।"

इत्यवधार्य, कुतोऽपि क्षीरं याचित्वा शरावे निक्षिप्य वल्मीकान्तिकमुपगत्योवाच—

"भोः क्षेत्रपाल! मयैतावन्तं कालं न ज्ञातं यत्त्वमत्र वससि, तेन पूजा न कृता। तत्साम्प्रतं क्षमस्व" इति। एवमुक्त्वा दुग्धञ्च निवेद्य गृहाभिमुखं प्रायात्। अथ प्रातर्यावदागत्य पश्यति तावद्दीनारकमेकं शरावे दृष्टवान्। एवञ्च प्रतिदिनमेकाकी समागत्य तस्मै क्षीरं ददाति, एकैकञ्च दीनारं गृह्णाति।

व्याख्या—क्षीरं = दुग्धम्। याचित्वा = सम्प्रार्थ्य, शरावे = वर्धमानके (परई में), निवेद्य = समर्प्य, दीनारकं = निष्कम्, (मोहर, असर्फी)।

हिन्दी—उक्त प्रकार से सोचकर वह कहीं से मांगकर दूध ले आया और उसे शराव (परई) में रखकर वल्मीक के समीप जाकर बोला—"हे क्षेत्रपाल! आजतक मैंने यह नहीं समझा था कि आप मेरे इस खेत में ही निवास करते हैं। अतः इससे पूर्व मैंने कभी आपकी पूजा नहीं की थी। मेरे अपराध को आप क्षमा कर दें।" यह कहकर उसने उस दूध को वल्मीक के पास रख दिया। पुनः प्रार्थना करके वह अपने घर लौट गया।

दूसरे दिन प्रातःकाल आकर जब उसने देखा तो एक असर्फी उस शराव में रखी हुई थी। असर्फी को उठाकर उसने रख लिया। इस प्रकार प्रतिदिन एकाकी आकर वह उस सर्प को दूध चढ़ाने लगा और प्रतिदिन दूध के बदले में उसे एक असर्फी प्राप्त होने लगी।

अथैकस्मिन् दिवसे वल्मीके क्षीरनयनाय पुत्रं निरूप्य ब्राह्मणो ग्रामान्तरं जगाम। पुत्रोऽपि क्षीरं तत्र नीत्वा संस्थाप्य च पुनर्गृहं समायातः। दिनान्तरे तत्र गत्वा दीनारमेकं च दृष्ट्वा गृहीत्वा च चिन्तितवान्—"नूनं सौवर्णदीनारपूर्णो वल्मीकः। तदेनं हत्वा सर्वमेकवारं ग्रहीष्यामि।" इत्येवं सम्प्रधार्यान्येद्युः क्षीरं ददता ब्राह्मणपुत्रेण सर्पो लगुडेन शिरसि ताडितः। ततः कथमपि दैववशादमुक्तजीवित एव रोषात्तमेव तीव्रविषदशनैस्तथादशत् यथा स सद्यः पंचत्वमुपागतः। स्वजनैश्च नातिदूरे क्षेत्रस्य काष्ठसञ्चयैः संस्कृतः।

व्याख्या—क्षीरनयनाय = दुग्धप्रापणाय, सौवर्णदीनारपूर्णः = सुवर्णेन निष्केण च पूर्णः, एनं = सर्पं, सम्प्रधार्य = विचार्य, दैववशात् = भाग्यात्, अमुक्तजीवित एव = जीवनं धारयन्, रोषात् = क्रोधावेगात्, पञ्चत्वमुपागतः = मृतः। काष्ठसञ्चयैः = सञ्चितैः काष्ठैः।

हिन्दी—एक दिन वह ब्राह्मण अपने पुत्र को वल्मीक पर दूध चढ़ाने के लिये कहकर किसी अन्य ग्राम में चला गया। उसका पुत्र दूध लेकर वहाँ गया और वल्मीक पर उसे रख कर वह घर लौट आया। दूसरे दिन जब वह पुनः वहाँ दूध लेकर गया तो उसने देखा कि शराव में एक दीनार रखा हुआ है। उसने उस दीनार को उठा लिया। वह अपने मन में सोचने लगा "कि यह वल्मीक सुवर्णों और दीनारों से भरा हुआ है। क्यों न मैं इस सर्प को मारकर सम्पूर्ण दीनारों को एक ही बार में ले लूँ।" यह सोचकर उसने दूध को पीने के लिये बिल से बाहर निकले हुये सर्प के शिर पर लाठी से प्रहार किया। संयोग से शिरपर प्रहार होने पर भी वह सर्प मरा नहीं। और लाठी के प्रहार से क्रुद्ध होकर उसने अपने तीव्र-विषयुक्त दाँतों से उस ब्राह्मण के लड़के को ऐसा काटा कि वह तत्काल मर गया। मृत शरीर को उस क्षेत्र के पास ही उसके सम्बन्धियों ने लकड़ी की चिता बनाकर जला दिया।

अथ द्वितीयदिने तस्य पिता समायातः। स्वजनेभ्यः सुतविनाशकारणं श्रुत्वा तथैव समर्थितवान्। अब्रवीच्च—

"भूतान् यो नानुगृह्णाति ह्यात्मनः शरणागतान्।
भूतार्थास्तस्य नश्यन्ति हंसाः पद्मवने यथा" ॥ १३१ ॥

पुरुषैरुक्तं—"कथमेतत् ?" ब्राह्मणः कथयति—

व्याख्या—स्वजनेभ्यः=स्वेष्टजनेभ्यः। तथैव समर्थितवान्=मत्पुत्रेण स्वकर्मणः फलमासादितमिति विचार्य सर्पेण युक्तमेव कृतमिति समर्थितवान्। भूतान्=जीवान्, नानुगृह्णाति=उपकारैर्न योजयति ॥ १३१ ॥

हिन्दी—दूसरे दिन घर लौटने के बाद उसके पिता ने सम्बन्धियों के मुख से अपने पुत्र के निधन का सही कारण जानकर उसके औचित्य का समर्थन करते हुये कहा—

"शरणागत आये हुये जीवों की जो व्यक्ति रक्षा नहीं करता है, उसके विभवादि उसके हाथ से उसी प्रकार निकल जाते हैं, जैसे—पद्मवन के निवासी हंस राजा के हाथ से निकल गये थे" ॥ १३१ ॥

उसकी बात को सुनकर उसके सम्बन्धियों ने पूछा—"यह कैसे"?।

ब्राह्मण ने अग्रिम कथा को प्रारम्भ करते हुये कहा—

[ ७ ]

## ( हैमहंस-कथा )

"अस्ति कस्मिंश्चिदधिष्ठाने चित्ररथो नाम राजा। तस्य योधैः सुरक्ष्यमाणं पद्मसरो नाम सरस्तिष्ठति। तत्र च प्रभूता जाम्बूनदमया हंसास्तिष्ठन्ति। षण्मासे-षण्मासे पिच्छमेकैकं परित्यजन्ति।

अथ तत्र सरसि सौवर्णो बृहत्पक्षी समायातः। तैश्चोक्तः—"अस्माकं मध्ये त्वया

न वस्तव्यम्। येन कारणेनास्माभिः षण्मासान्ते पिच्छैकैकदानं कृत्वा गृहीतमेतत्सरः। एवञ्च, किं बहुना, परस्परं द्वैधमुत्पन्नम्।

व्याख्या—योधैः = भटैः, प्रभूताः = बहवः, जाम्बूनदमयाः = हेमवर्णाः, पिच्छं = पक्षं, द्वैधं = विवादः।

हिन्दी—किसी नगर में चित्ररथ नाम का एक राजा रहा करता था। उसके सिपाहियों द्वारा सुरक्षित पद्मसर नाम का एक अत्यन्त मनोहर सरोवर था जिसमें हेमवर्ण के बहुत से हंस निवास किया करते थे। वे छः छः महीने पर अपने एक-एक पंख गिराया करते थे, जिन्हें राजा ले लिया करता था।

एकदिन उस सरोवर में हेमवर्ण नाम का अतिविशालकाय एक दूसरा पक्षी आया। उसको देखकर उन हंसों ने कहा—"हमलोगों के बीच में तुम नहीं रह सकते हो। इस सरोवर को हमने किराये पर ले रखा है। इस सरोवर के बदले में हम छः छः महीने पर अपना एक-एक पंख राजा को दिया करते हैं।"

अधिक क्या कहा जाय—उस सरोवर में निवास करने के प्रश्न को लेकर उन पक्षियों के बीच में एक बहुत बड़ा विवाद उत्पन्न हो गया।

स च राज्ञः शरणं गतोऽब्रवीत्—"देव! एते पक्षिण एवं वदन्ति यत्—अस्माकं राजा किं करिष्यति! न कस्याप्यावासं दद्मः।"

मया चोक्तं—"न शोभनं युष्माभिरभिहितम्। अहं गत्वा राज्ञे निवेदयिष्यामि। एवं स्थिते, देवः प्रमाणम्।"

ततो राजा भृत्यानब्रवीत्—"भो भो! गच्छत सर्वान् पक्षिणो गतासून् कृत्वा शीघ्रमानयत"।

व्याख्या—आवासं = निवासस्थानं, गतासून् कृत्वा = मृतान् विधाय।

हिन्दी—वह बृहत्काय पक्षी राजा की शरण में जाकर बोला—"देव! ये पक्षी कहते हैं कि—राजा हमारा कर ही क्या सकता है। हमलोग किसी को वहाँ ठहरने के लिये स्थान नहीं देंगे।"

उनकी उक्त बात को सुनकर मैंने कहा कि—"तुम लोगों की यह गर्वोक्ति ठीक नहीं है। मैं राजा से जाकर कहूँगा। महाराज! मैं आपकी शरण में आया हूँ। जो सच्ची बात थी, मैंने कह दिया। आपकी जैसी आज्ञा हो।"

उस बृहत्काय पक्षी की बात को सुनकर राजा ने अपने सिपाहियों से कहा—"वहाँ शीघ्र चले जाओ, और उन सम्पूर्ण पक्षियों को मारकर यहाँ उठा ले आओ।"

राजादेशान्तरमेव प्रचेलुस्ते। अथ लगुडहस्तान् राजपुरुषान् दृष्ट्वा तत्रैकेन पक्षिणा वृद्धेनोक्तम्—"भोः स्वजनाः! न शोभनमापतितम्। सर्वैरेकमतीभूय शीघ्रमुत्पतित-व्यम्।"

तैश्च तथानुष्ठितम्। अतोऽहं ब्रवीमि—"भूतान् यो नानुगृह्णाति" इति। इत्युक्त्वा पुनरपि ब्राह्मणः प्रत्यूषे क्षीरं गृहीत्वा तत्र गत्वा तारस्वरेण सर्पमस्तौत्।

व्याख्या—राजादेशान्तरमेव = अनुज्ञाप्राप्त्यनन्तरमेव, प्रचेलुः = जग्मुः। वृद्धेन = जठरेण, उत्पतितव्यम् = उड्डयनं विधातव्यम्। तथानुष्ठितं = तथैव कृतम्। प्रत्यूषे = प्रातःकाले।

हिन्दी—राजा की आज्ञा प्राप्त करते ही सिपाही वहाँ पहुँच गये। हाथ में लाठी लेकर सरोवर की ओर आने वाले उन सिपाहियों को देखकर उनमें से एक वयोवृद्ध हंस ने कहा—"स्वजनों! यह तो बहुत बुरा समय आ गया। तुम लोग एकमत होकर शीघ्र यहाँ से उड़ चलो।"

पक्षियों ने उस वृद्ध की बात को मान लिया और एकमत होकर वे वहाँ से उड़ गये।

उक्त कथा को सुनाकर ब्राह्मण ने कहा—"इसीलिए मैं कहता हूँ कि—जो मनुष्य शरणागत व्यक्ति की रक्षा नहीं करता उसका विभव उसके हाथ से निकल कर पद्मवन के निवासी हंसों की भाँति चला जाता है। यह कहकर वह ब्राह्मग दूसरे दिन प्रातःकाल दूध लेकर पुनः वहाँ गया और ऊँचे स्वर से उस सर्प की स्तुति करने लगा।

तदा सर्पश्चिरं वल्मीकद्वारान्तर्लीन एव ब्राह्मणं प्रत्युवाच—"त्वं लोभादत्रागतः पुत्रशोकमपि विहाय। अतः परं तव मम च प्रीतिर्नोचिता। तव पुत्रेण यौवनोन्मदेनाहं ताडितः, मया स दष्टः। कथं मया लगुडप्रहारो विस्मर्तव्यः, त्वया च पुत्रशोकदुःखं विस्मर्तव्यम्? इत्युक्त्वा बहुमूल्यं हीरकमणिं तस्मै दत्त्वा—"अतः परं पुनस्त्वया नागन्तव्यम्" इति पुनरुक्त्वा विवरान्तर्गतः।

ब्राह्मणश्च मणिं गृहीत्वा पुत्रबुद्धिं निन्दयन् स्वगृहमागतः। अतोऽहं ब्रवीमि—"चितिकां दीप्तां पश्य" इति।

व्याख्या—द्वारान्तर्लीनः = विलद्वारमध्ये स्थितः सन्, यौवनोन्मदेन = स्वयौवनबलदर्पेण, विवरान्तर्गतः = विवरमध्ये प्रविष्टः।

हिन्दी—ब्राह्मण की स्तुति को सुनकर बहुत काल तक मौन रहने के बाद सर्प ने बिल के भीतर से ही कहा—"पुत्रशोक को भूलकर तुम लोभ के कारण यहाँ आये हो। इसके बाद अब मेरी और तुम्हारी मित्रता उचित नहीं होगी। अपने यौवन के मद में आकर तुम्हारे पुत्र ने मेरे शिरपर लाठी से प्रहार किया था और मैंने क्रोध में आकर उसको काट दिया था। मैं लाठी के उस प्रहार को कैसे भूल सकता हूँ? और तुम अपने पुत्रशोक को कैसे भुला सकते हो? अतः मेरी और तुम्हारी मित्रता अब अच्छा नहीं होगी।" यह कहकर उस सर्प ने एक बहुमूल्य हीरकमणि को प्रदान करते हुए उस ब्राह्मण से पुनः कहा—"इसके बाद फिर कभी न आना।" यह कहकर वह बिल में चला गया।

ब्राह्मण भी उस हीरक-मणि को लेकर अपने पुत्र की बुद्धि पर पश्चात्ताप करता हुआ अपने घर लौट आया।

उक्त कथा कहकर रक्ताक्ष ने कहा—"इसीलिए मैं कहता हूँ कि—जलती हुई

इस चिता को देखो और लाठी के प्रहार से फटे हुए मेरे इस फण को भी देख लो। मित्रता एकबार टूट जानेपर कृत्रिम स्नेह से नहीं जुटती है।"

तदस्मिन् हतेऽयत्नादेव राज्यमकण्टकं भवतो भवति"।

तस्यैतद्वचनं श्रुत्वा क्रूराक्षं पप्रच्छ—"भद्र ! त्वं किं मन्यसे ?"।

सोऽब्रवीत्—"देव ! निर्दयमेतद्यदनेनाभिहितम्। यत्कारणं "शरणागतो न वध्यते। सुष्ठु खल्विदमाख्यानम्—

श्रूयते हि कपोतेन शत्रुः शरणमागतः।
पूजितश्च यथान्यायं स्वैश्च मांसैर्निमन्त्रितः" ॥ १३२ ॥

अरिमर्दनोऽब्रवीत्—"कथमेतत्" ? क्रूराक्षः कथयति—

व्याख्या—अस्मिन्=शत्रुमन्त्रिणि, अयत्नात्=अनायासात्, अकण्टकं=शत्रुरहितं, मन्यसे=स्वीकरोषि, निर्दयम्=अदाक्षिण्यं, सुष्ठु=शोभनम्, आख्यानं=चरितं (कथा), निमन्त्रितः=भोजितः ॥ १३२ ॥

हिन्दी—शत्रु के इस मन्त्री को मार डालनेपर आपका राज्य अनायास ही निष्कण्टक हो जायगा।"

रक्ताक्ष की बात को सुनकर उलूकराज ने क्रूराक्ष से पूछा—"भद्र ! आप क्या उचित समझते हैं ?"।

उसने कहा—"देव ! इसने जो कहा है वह अत्यन्त निर्दयतापूर्ण है। शरणागत का वध नहीं किया जाता। इस विषय में यह आख्यान कितना सुन्दर एवं अनुकरणीय है—

सुना कहा जाता है कि—कपोत ने शरण में आये हुये शत्रु की भी यथोचित पूजा की थी और अपने मांस से उसको भोजन भी कराया था" ॥ १३२ ॥

अरिमर्दन ने पूछा—"यह कैसे"।

क्रूराक्ष ने अग्रिम कथा को आरम्भ करते हुये कहा—

## [ ८ ]

## ( कपोतलुब्धक-कथा )

कश्चित्क्षुद्रसमाचारः प्राणिनां कालसन्निभः।
विचचार महारण्ये घोरः शकुनिलुब्धकः ॥ १३३ ॥
नैव कश्चित्सुहृत्तस्य न सम्बन्धी न बान्धवः।
स तैः सर्वैः परित्यक्तस्तेन रौद्रेण कर्मणा ॥ १३४ ॥

अथवा—

ये नृशंसा दुरात्मानः प्राणिनां प्राणनाशकाः।
उद्वेजनीया भूतानां व्याला इव भवन्ति ते ॥ १३५ ॥

व्याख्या—क्षुद्रसमाचारः=क्षुद्रवृत्तः, कालसंनिभः=यमसदृशः, घोरः=पापः, शंकुनिलुब्धकः=पक्षिमांसरुचिर्व्याधः ॥ १३३ ॥ रौद्रेण=क्रूरेण, कर्मणा=कार्येण ॥१३४॥ नृशंसाः=क्रूराः, उद्वेजनीयाः=उद्वेगकारकाः । व्यालाः=हिंस्रजन्तवः ॥ १३५ ॥

हिन्दी—एक अत्यन्त दुर्वृत्त, यमसदृश क्रूर तथा पापी बहेलिया पक्षियों के मांस की खोज में किसी वन में इधर-उधर घूम रहा था ॥ १३३ ॥

उसका न तो कोई मित्र था, न सम्बन्धी था, और न बान्धव ही था। उसके उस क्रूर कर्म के कारण सभी लोगों ने उसको छोड़ दिया था ॥ १३४ ॥

अथवा—नृशंस, दुष्ट, जीवघाती तथा प्राणियों के हृदय में उद्वेग उत्पन्न करने वाले व्यक्ति भी सिंह, व्याघ्र, गज तथा सर्प आदि हिंस्र पशुओं के ही समान होते हैं ॥ १३५ ॥

स पञ्जरकमादाय पाशञ्च लगुडं तथा।
नित्यमेव वनं याति सर्वप्राणिविहिंसकः ॥ १३६ ॥
अन्येद्युर्भ्रमतस्तस्य वने कापि कपोतिका।
जाता हस्तगता तां स प्राक्षिपत्पञ्जरान्तरे ॥ १३७ ॥
अथ कृष्णा दिशः सर्वा वनस्थस्याभवन् घनैः।
वातवृष्टिश्च महती क्षयकाल इवाभवत् ॥ १३८ ॥

व्याख्या—पञ्जरकं=पञ्जरं, पाशं=बन्धनं, लगुडं=दण्डं, सर्वप्राणिविहिंसकः=बधकः ॥ १३६ ॥ पञ्जरान्तरे=पञ्जरे, ॥ १३७ ॥ वनस्थस्य=वने संस्थितस्य तस्य, कृष्णाः=असिताः, घनैः=मेघैः, क्षयकालः=सृष्टेर्विनाशकालः ( लयकालः ) ॥ १३८ ॥

हिन्दी—वह व्याध हाथ में पिंजड़ा, पाश और लगुड लेकर नित्य वन में जाया करता था ॥ १३६ ॥

एकदिन वन में घूमते समय उसके हाथ में एक कपोती आगयी। उस कपोती को उसने अपने पिंजड़े में बन्द कर दिया ॥ १३७ ॥

अभी वह वन में ही था कि सम्पूर्ण दिशायें काली हो गयीं। सम्पूर्ण आकाश मेघाच्छन्न हो उठा और झंझावात के साथ सघन वृष्टि होने लगी। देखते ही देखते वहाँ प्रलयकालिक दृश्य उपस्थित हो गया ॥ १३८ ॥

ततः स त्रस्तहृदयः कम्पमानो मुहुर्मुहुः।
अन्वेषयन्परित्राणमाससाद वनस्पतिम् ॥ १३९ ॥
मुहूर्तं पश्यते यावद् वियद्विमलतारकम्।
प्राप्य वृक्षं वदत्येवं—"योऽत्र तिष्ठति कश्चन ॥ १४० ॥
तस्याहं शरणं प्राप्तः स परित्रातु मामिति।
शीतेन भिद्यमानं च क्षुधया गतचेतसम्" ॥ १४१ ॥

व्याख्या—त्रस्तहृदयः=भयग्रस्तहृदयः, परित्राणं=सुरक्षितस्थानं, वनस्पतिं=वृक्षं

( वनस्पतिः=वृक्षभेदः ) ॥ १३९ ॥ विमलतारकं=विमलनक्षत्रं, वियत्=गगनं, कश्चन=यः कोऽपि ॥ १४० ॥ परित्रातु=रक्षतु, भिद्यमानं=खिद्यमानं, क्षुधया=बुभुक्षया, गतचेतसं= विगतचैतन्यम् ॥ १४१ ॥

हिन्दी—भयभीतहृदय, बार-बार कांपता हुआ वह सुरक्षित स्थान के अन्वेषण में एक वृक्ष के नीचे जा पहुँचा ॥ १३९ ॥

कुछ देर के बाद वृष्टि कुछ कम हो गयी और आकाश निर्मल हो गया। निर्मल नक्षत्रों से युक्त आकाश को देखकर वह उस वृक्ष के नीचे खड़ा होकर यह प्रार्थना करने लगा कि— "जो कोई भी इस वृक्षपर रहता हो, मैं उसकी शरण में आया हूँ। वह मेरी रक्षा करे। इस समय मैं शीत से अत्यन्त व्यथित हूँ और भूख से बेसुध होता जा रहा हूँ" ॥ १४०-१४१ ॥

अथ तस्य तरोः स्कन्धे कपोतः सुचिरोषितः।
भार्याविरहितस्तिष्ठन् विललाप सुदुःखितः ॥ १४२ ॥
"वातवर्षो महानासीन्न चागच्छति मे प्रिया।
तया विरहितं ह्येतच्छून्यमद्य गृहं मम ॥ १४३ ॥
पतिव्रता पतिप्राणा पत्युः प्रियहिते रता।
यस्य स्यादीदृशी भार्या धन्यः स पुरुषो भुवि ॥ १४४ ॥
न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते।
गृहं हि गृहिणीहीनमरण्यसदृशं मतम्" ॥ १४५ ॥

व्याख्या—तरोः=वृक्षस्य, स्कन्धे=शाखायां, सुचिरोषितः=बहुकालं यावत् स्थितः सन् विललाप=विलापं कर्तुमारब्धः ॥ १४२ ॥ वातवर्षः=वातो; वृष्टिश्च विरहितं=शून्यम् ॥१४३॥ पतिव्रता=साध्वी, पतिप्राणा=पतिजीवना, प्रियहिते=प्रियसम्पादने ॥ १४४ ॥

हिन्दी—उस तरु की शाखापर एकाकी अपनी स्त्री के आगमन की बहुत देर तक प्रतीक्षा करने के बाद वह कपोत अन्त में निराश एवं दुःखित होकर विलाप करने लगा ॥१४२॥

"इतना विशाल तूफान आया और इतनी भीषण वृष्टि हुई, फिर भी मेरी प्रेयसी नहीं आयी। न जाने वह कहाँ पड़ी होगी। उसके अभाव में मेरा यह घर आज शून्य हो गया है ॥ १४३ ॥

जिस व्यक्ति की स्त्री पतिव्रता, पतिप्राणा एवं पति के ही हित में लगी रहने वाली हो, वही इस विश्व में धन्य एवं भाग्यवान् होता है ॥ १४४ ॥

घर को घर नहीं कहा जाता, गृहिणी ही घर होती है। जिस घर में गृहिणी न हो वह घर भी वन के ही समान होता है" ॥ १४५ ॥

पञ्जरस्था ततः श्रुत्वा भर्तुर्दुःखान्वितं वचः।
कपोतिका सुसन्तुष्टा वाक्यञ्चेदमथाह सा ॥ १४६ ॥
"न सा स्त्रीत्यभिमन्तव्या यस्या भर्ता न तुष्यति।
तुष्टे भर्तरि नारीणां तुष्टाः स्युः सर्वदेवताः ॥ १४७ ॥

दावाग्निना विदग्धेव सपुष्पस्तवका लता।
भस्मीभवतु सा नारी यस्या भर्ता न तुष्यति ॥ १४८ ॥

व्याख्या—दुःखान्वितं=दुःखयुक्तम् ॥ १४६ ॥ अभिमन्तव्या=स्वीकर्तव्या ॥ १४७ ॥ दावाग्निना=दावानलेन, सपुष्पस्तवका=गुच्छान्विता सपुष्पा, लता=वल्ली ॥ १४८ ॥

हिन्दी—पति के दुःखयुक्त एवं करुण वचनों को सुनकर पति के व्यवहार से सन्तुष्ट उस कपोती ने कहा—॥ १४६ ॥

"जिस स्त्री का पति उसके व्यवहार से सन्तुष्ट नहीं होता है, उसको स्त्री कहना ही नहीं चाहिये। क्योंकि पति ही स्त्री का ईश्वर होता है। उसके प्रसन्न रहने पर अन्य देवतागण स्वतः प्रसन्न एवं सन्तुष्ट रहा करते हैं ॥ १४७ ॥

जिस स्त्री के व्यवहार से उसका पति प्रसन्न नहीं होता, उसके जीने से कोई लाभ भी नहीं होता। उसके जीवित रहने से तो यही अच्छा होता कि—पुष्पों एवं गुच्छों से युक्त लता जैसे दावाग्नि में जलकर भस्म हो जाती है, उसी तरह से वह भी अग्नि में जलकर भस्म हो जाय ॥ १४८ ॥

मितं ददाति हि पिता मितं भ्राता मितं सुतः।
अमितस्य हि दातारं भर्तारं का न पूजयेत्" ॥ १४९ ॥

पुनश्चाऽब्रवीत्—

"शृणुष्वावहितः कान्त! यत्ते वक्ष्याम्यहं हितम्।
प्राणैरपि त्वया नित्यं संरक्ष्यः शरणागतः ॥ १५० ॥
एष शाकुनिकः शेते तवावासं समाश्रितः।
शीतार्त्तश्च क्षुधार्त्तश्च पूजामस्मै समाचर ॥ १५१ ॥

व्याख्या—अमितस्य=अपरिमितस्य ॥ १४९ ॥ अवहितः=दत्तावधानः सन्, हितं=प्रियम् ॥ १५० ॥ शाकुनिकः=व्याधः, आवासं समाश्रितः=तव गृहाश्रितः, शीतार्त्तः=शीत-पीडितः, क्षुधार्त्तः=क्षुधापीडितः ॥ १५१ ॥

हिन्दी—भ्राता, पिता एवं पुत्र स्त्री को जो दे सकते हैं वह परिमित ही होगा। इस विश्व में स्त्री को यदि कोई अपरिमित वस्तु दे सकता है तो वह पति ही है। ऐसी कौन सी स्त्री होगी जो अपरिमित वस्तुओं एवं सुखों को देने वाले पति की पूजा नहीं करेगी ॥ १४९ ॥

उसने आगे फिर कहा—

हे कान्त! जो कुछ मैं आपके हित एवं शुभ के लिये कह रही हूँ, उसको ध्यानपूर्वक सुनो। अपने प्राणों को देकर भी तुम शरणागत की रक्षा करते रहना ॥ १५० ॥

यह व्याध तुम्हारे घर में शीत तथा भूख से पीड़ित होकर सोया हुआ है। यह तुम्हारे यहाँ आया हुआ अतिथि है। अतः इसकी पूजा एवं शुश्रूषा करो ॥ १५१ ॥

श्रूयते च—

यः सायमतिथिं प्राप्तं यथाशक्ति न पूजयेत् ।
तस्यासौ दुष्कृतं दत्त्वा सुकृतं चापकर्षति ॥ १५२ ॥
मा चास्मै त्वं कृथा द्वेषं बद्धानेनेति मत्प्रिया ।
स्वकृतैरेव बद्धाहं प्राक्तनैः कर्मबन्धनैः ॥ १५३ ॥

यतः—

दारिद्र्यरोगदुःखानि बन्धनव्यसनानि च ।
आत्मापराधवृक्षस्य फलान्येतानि देहिनाम् ॥ १५४ ॥

व्याख्या—असौ = अतिथिः, दुष्कृतं = पापं, सुकृतं = पुण्यम् ॥ १५१ ॥ प्राक्तनैः = पूर्वजन्मनि कृतैः ॥ १५३ ॥ व्यसनानि = विपत्तयः, अपराधवृक्षस्य = स्वपापवृक्षस्य ॥ १५४ ॥

हिन्दी—सुना जाता है कि सूर्यास्त काल में आये हुये अतिथि की पूजा एवं शुश्रूषा आदि न करने से वह अतिथि गृहस्थ के सम्पूर्ण पुण्यों को लेकर चला जाता है और उन पुण्यों के बदले में अपना सम्पूर्ण पाप उस गृहस्थ को प्रदान कर जाता है ॥ १५२ ॥

'इस दुरात्मा ने मेरी प्रिया को बन्धन में डाल दिया है', यह सोचकर तुम इसके प्रति द्वेष न करना। मुझे इसने नहीं बाँधा है। मैं स्वयं अपने पूर्वकर्मों का फल भोगने के लिए अदृष्टवश इसके पाश में आकर आबद्ध हो गयी हूँ ॥ १५३ ॥

क्योंकि दरिद्रता, रोग, दुःख, बन्धन एवं आपत्तियाँ—ये आत्मापराधरूपी वृक्ष के फल हैं। इन फलों का उपभोग मनुष्य को करना ही पड़ता है ॥ १५४ ॥

तस्मात्त्वं द्वेषमुत्सृज्य मद्बन्धनसमुद्भवम् ।
धर्मे मनः समाधाय पूजयैनं यथाविधि" ॥ १५५ ॥
तस्यास्तद्वचनं श्रुत्वा धर्मयुक्तसमन्वितम् ।
उपगम्य ततोऽधृष्टः कपोतः प्राह लुब्धकम् ॥ १५६ ॥
"भद्र ! सुस्वागतं तेऽस्तु ब्रूहि किङ्करवाणि ते ।
सन्तापश्च न कर्त्तव्यः स्वगृहे वर्तते भवान्" ॥ १५७ ॥

व्याख्या—मद्बन्धनसमुद्भवं = मद्बन्धनाज्जातम्। समाधाय = कृत्वा ॥ १५५ ॥ १५६ ॥ किङ्करवाणि = किं ते प्रियं करोमि, सन्तापः = दुःखम् ॥ १५७ ॥

हिन्दी—अतः मेरे इस बन्धन से उत्पन्न होने वाले द्वेष को छोड़कर तुम धर्मबुद्धि से इसकी पूजा करो" ॥ १५५ ॥

धार्मिक युक्तियों से ओतप्रोत प्रिया के वाक्यों को सुनकर कपोत ने निःशङ्क भाव से उस बहेलिये के समीप जाकर कहा—॥ १५६ ॥

"भद्र ! आपका स्वागत है। कहिये, मैं आपकी क्या सेवा करूँ ?। आपको अपने मन में किसी प्रकार का पश्चात्ताप एवं दुःख नहीं करना चाहिये। यह समझिये कि आप अपने ही घर में हैं" ॥ १५७ ॥

तस्य तद्वचनं श्रुत्वा प्रत्युवाच विहङ्गहा ।
"कपोत ! खलु शीतं मे हिमत्राणं विधीयताम्" ॥ १५८ ॥
स गत्वाऽङ्गारकं नीत्वा पातयामास पावकम् ।
ततः शुष्केषु पर्णेषु तमाशु समदीपयत् ॥ १५९ ॥
सुसन्दीप्तं ततः कृत्वा तमाह शरणागतम् ।
"प्रतापयस्व विश्रब्धं स्वगात्राण्यत्र निर्भयः ॥ १६० ॥

व्याख्या—विहङ्गहा = व्याधः ॥ १५८ ॥ पावकम् = अग्निम् । पर्णेषु = पत्रेषु ॥ १५९ ॥ प्रतापयस्व = अग्निसेवनं कुरु ॥ १६० ॥

हिन्दी—कपोत के उपर्युक्त वाक्यों को सुनकर उस व्याध ने कहा—"कपोत ! मुझे बहुत अधिक ठण्ढ लग गयी है । किसी प्रकार इस ठण्ढ से मेरी रक्षा करो" ॥ १५८ ॥

व्याध की बात को सुनकर वह कपोत जाकर कहीं से अङ्गार ले आया और उसको सूखे हुये पत्तोंपर गिराकर तत्काल अग्नि प्रज्वलित कर दिया ॥ १५९ ॥

उस अग्नि को खूब तीव्र करके उसने शरण में आये हुये उस अतिथि से कहा—"स्वस्थ एवं निश्चिन्त होकर आप इस अग्नि का सेवन कीजिये और अपने सम्पूर्ण अङ्गों को सेंक लीजिये ॥ १६० ॥

न चास्ति विभवः कश्चिन्नाशये येन ते क्षुधम् ।
सहस्रं भरते कश्चिच्छतमन्यो दशापरः ।
मम त्वकृतपुण्यस्य क्षुद्रस्यात्मापि दुर्भरः ॥ १६१ ॥
एकस्याप्यतिथेरन्नं यः प्रदातुं न शक्तिमान् ।
तस्यानेकपरिक्लेशे गृहे किं वसतः फलम् ? ॥ १६२ ॥
तत्तथा साधयाम्येतच्छरीरं दुःखजीवितम् ।
यथा भूयो न वक्ष्यामि नास्तीत्यर्थिसमागमे" ॥ १६३ ॥

व्याख्या—विभवः = धनम् । क्षुधं = बुभुक्षाम् । भरते = पालयति, अकृतपुण्यस्य = मन्दभाग्यस्य ॥ १६१ ॥ अनेकपरिक्लेशे = अनेकदुःखयुक्ते ॥ १६२ ॥ साधयामि = करोमि । अर्थिसमागमे = याचके समागते सति ॥ १६३ ॥

हिन्दी—मेरे पास कोई ऐसा विभव नहीं है कि जिससे मैं आपकी क्षुधाको शान्त कर सकूँ । इस विश्व में अनेक लोग ऐसे हैं, जो दस बीस या सौ व्यक्तियों का भी पालन-पोषण कर सकते हैं और करते हैं, किन्तु मेरे जैसे क्षुद्र एवं पापी के लिये अपना ही पेट पालना कठिन है ॥ १६१ ॥

घर में आये हुये एक भी अतिथि को भोजन कराने की शक्ति जिसमें नहीं है, उस व्यक्ति के अनेक क्लेशों से युक्त घर में रहने से अतिथि को लाभ ही क्या हो सकता है ? ॥ १६२ ॥

अतः मैं दुःखी जीवन को व्यतीत करने वाले इस शरीर से आज कोई ऐसा कार्य कर डालना चाहता हूँ कि जिससे भविष्य में किसी अतिथि के उपस्थित होनेपर "नहीं" जैसे शब्द

का उच्चारण न कर सकूँ। (आज अपने इस दुःखी जीवन को समाप्त करके मैं आपका आतिथ्य करना चाहता हूँ) ॥ १६३ ॥

स निनिन्द किलात्मानं न तु तं लुब्धकं पुनः।
उवाच "तर्पयिष्ये त्वां मुहूर्तं प्रतिपालय" ॥ १६४ ॥
एवमुक्त्वा स धर्मात्मा प्रहृष्टेनान्तरात्मना।
तमग्निं सम्परिक्रम्य प्रविवेश स्ववेश्मवत् ॥ १६५ ॥
ततस्तं लुब्धको दृष्ट्वा कृपया पीडितो भृशम्।
कपोतमग्नौ पतितं वाक्यमेतदभाषत ॥ १६६ ॥

व्याख्या—तर्पयिष्ये=तव क्षुधायास्तृप्तिं विदधामि। मुहूर्तं=क्षणं यावत्, प्रतिपालय=प्रतीक्षस्व ॥ १६४ ॥ प्रहृष्टेन=प्रसन्नेन, स्ववेश्मवत्—स्वगृहवत्। ॥ १६५ ॥ कृपया=दयया ॥ १६६ ॥

हिन्दी—उस कपोत ने अपनी असमर्थता के कारण अपनी ही निन्दा की। उसने अतिथि के रूप में समागत उस व्याध की निन्दा नहीं की। आगे उसने पुनः कहा—"आप केवल एक क्षणतक और प्रतीक्षा करें। मैं आपकी क्षुधा को भी शान्त करने का प्रबन्ध कर रहा हूँ" ॥ १६४ ॥

उक्त वाक्यों को कहकर वह धर्मात्मा कपोत प्रसन्न मन से उस अग्नि की प्रदक्षिणा करके उसमें इस प्रकार प्रविष्ट हो गया, मानो वह अपने घर में प्रविष्ट हो रहा हो ॥ १६५ ॥

अग्नि में प्रविष्ट हुये उस कपोत को देखकर वह व्याध दयार्द्र हो उठा। उस कपोत के निधन से उसको बड़ा कष्ट हुआ। मृत कपोत के लिये विलाप करते हुये उसने कहा—॥१६६॥

"यः करोति नरः पापं न तस्यात्मा ध्रुवं प्रियः।
आत्मना हि कृतं पापमात्मनैव हि भुज्यते ॥ १६७ ॥
सोऽहं पापमतिश्चैव पापकर्मरतः सदा।
पतिष्यामि महाघोरे नरके नात्र संशयः ॥ १६८ ॥
नूनं मम नृशंसस्य प्रत्यादर्शः प्रदर्शितः।
प्रयच्छता स्वमांसानि कपोतेन महात्मना ॥ १६९ ॥

व्याख्या—पापमतिः=पापबुद्धिः, महाघोरे=भयानके रौरवाख्ये ॥ १६८ ॥ नृशंसस्य=पिशुनस्य (हिंसापरायणस्य), प्रत्यादर्शः=निदर्शनम् ॥ १६९ ॥

हिन्दी—"यह सुनिश्चित है कि जो मनुष्य पापकर्म में रत रहता है, उसको अपनी भी आत्मा प्रिय नहीं होती। क्योंकि—आत्मा द्वारा किया हुआ पाप आत्मा को ही भोगना पड़ता है। (यदि उसे अपनी आत्मा प्रिय होती तो उसे कष्ट देने के उद्देश्य से वह पापकर्म में प्रवृत्त ही न होता) ॥ १६७ ॥

मैं अत्यन्त पापी हूँ। मेरी बुद्धि भी पापिनी है। आज तक मैं सदा पाप में ही

रत रहा हूँ। अब इसमें लेश मात्र भी सन्देह नहीं रह गया है कि—मैं अत्यन्त घोर नरक में पड़ूँगा ॥ १६८ ॥

अपने मांस को प्रदान करते हुये इस महात्मा कपोत ने मुझ जैसे पापी एवं नृशंस के लिये एक आदर्श उपस्थित कर दिया है ॥ १६९ ॥

अद्यप्रभृति देहं स्वं सर्वभोगविवर्जितम् ।
तोयं स्वल्पं यथा ग्रीष्मे शोषयिष्याम्यहं पुनः ॥ १७० ॥
शीतवातातपसहः कृशाङ्गो मलिनस्तथा ।
उपवासैर्बहुविधैश्चरिष्ये धर्ममुत्तमम्" ॥ १७१ ॥
ततो यष्टिं शलाकां च जालकं पञ्जरं तथा ।
बभञ्ज लुब्धको दीनां कपोतीञ्च मुमोच ताम् ॥ १७२ ॥

**व्याख्या**—सर्वभोगविवर्जितं = भोगैर्विच्युतं, तोयं = जलम् ॥ १७० ॥ आतपः = घर्मः ॥ १७१ ॥ यष्टिं = लगुडं, दीनां = कातरान् ॥ १७२ ॥

**हिन्दी**—अतः आज से मैं इस पापी शरीर को सम्पूर्ण भोगों से विच्युत करके ग्रीष्मकाल में सूखने वाले अल्पजलयुक्त तडाग की तरह सुखा डालूँगा ॥ १७० ॥

शीत, वात तथा आतप को सहते हुये दुर्बल एवं उदास होकर अनेक उपवासों के द्वारा तप करूँगा।" (अपने इस पापी शरीर से किये हुये पापों का पूर्ण प्रायश्चित करूँगा) ॥ १७१ ॥

उक्त बातों को कहने के पश्चात् उसने लाठी, शलाका, जाल तथा पिंजड़े को तोड़ कर वहीं फेंक दिया और उस दीन कपोती को भी बन्धन से विमुक्त कर दिया ॥ १७२ ॥

लुब्धकेन ततो मुक्ता दृष्ट्वाऽग्नौ पतितं पतिम् ।
कपोती विललापार्त्ता शोकसन्तप्तमानसा ॥ १७३ ॥
"न कार्यमद्य मे नाथ ! जीवितेन त्वया विना ।
दीनायाः पतिहीनायाः किं नार्या जीविते फलम् ॥ १७४ ॥
मानो दर्पस्त्वहङ्कारः कुलपूजा च बन्धुषु ।
दासभृत्यजनेष्वाज्ञा वैधव्येन प्रणश्यति ॥ १७५ ॥

**व्याख्या**—आर्त्ता = दुःखिता, शोकसन्तप्तमानसा = शोकाकुला, (शोकेन सन्तप्तं मानसं यस्याः सा) ॥ १७३ ॥ कार्यं = प्रयोजनम् ॥ १७४ ॥

**हिन्दी**—व्याध के द्वारा विमुक्त वह कपोती अग्नि में प्रविष्ट अपने पति को देखकर शोकाकुल हो उठी और शोकसन्तप्त हृदय से आर्त्तस्वर में विलाप करने लगी—॥ १७३ ॥

"हे नाथ आपके विना इस संसार में मेरे जीवित रहने से कोई लाभ नहीं है। मुझे अब इस जीवन से कोई प्रयोजन नहीं रह गया है। दीन, पतिहीन तथा अभागिनी नारी के जीवित रहने से लाभ ही क्या है ? ॥ १७४ ॥

मान, दर्प, अहङ्कार, कुल की पूजा, बन्धुओं का स्नेह, दासों को आज्ञा देने की स्थिति, स्त्री के विधवा होने के साथ ही उसके ये अधिकार भी समाप्त हो जाते हैं ॥ १७५ ॥

एवं विलप्य बहुशः कृपणं भृशदुःखिता।
पतिव्रता सुसन्दीप्तं तमेवाग्निं विवेश सा ॥ १७६ ॥
ततो दिव्याम्बरधरा दिव्याभरणभूषिता।
भर्तारं सा विमानस्थं ददर्श स्वं कपोतिका ॥ १७७ ॥
सोऽपि दिव्यतनुर्भूत्वा यथार्थमिदमब्रवीत्।
अहो ममानुगच्छन्त्या कृतं साधु शुभे! त्वया ॥ १७८ ॥

व्याख्या—कृपणं=दीनं, भृशदुःखिता=शोकाकुला, सुसन्दीप्तं=प्रज्वलितं, विवेश=प्रविवेश ॥ १७६ ॥ दिव्याम्बरधरा=दिव्यवस्त्रा, भर्तारं=पतिं, स्वं=स्वकीयम् ॥ १७७ ॥ अनुगच्छन्त्या=अनुव्रजन्त्या, त्वया=कपोतिकया, शुभे=कल्याणि ! ॥ १७८ ॥

हिन्दी—उक्त प्रकार से बहुत देर तक करुण विलाप करने के पश्चात् वह कपोती भी शोकाकुल होकर उसी प्रज्वलित अग्नि में प्रविष्ट हो गयी ॥ १७६ ॥

भौतिक शरीर को छोड़ने के पश्चात् अलौकिक वस्त्रों एवं आभूषणों से विभूषित होकर उस कपोती ने दिव्य विमानपर आरूढ हुये अपने पति को देखा ॥ १७७ ॥

दिव्यवपुधारी उसके पति ने अपनी साध्वी स्त्री को देखकर कहा—"शुभे ! मेरा अनुगमन करके तुमने बहुत अच्छा कार्य किया है ॥ १७८ ॥

तिस्रः कोट्योऽर्धकोटी च यानि रोमाणि मानुषे।
तावत्काल वसेत्स्वर्गे भर्तारं याऽनुगच्छति" ॥ १७९ ॥
कपोतदेहः सूर्यास्ते प्रत्यहं सुखमन्वभूत्।
कपोतदेहवत्साऽसीत् प्राक्पुण्यप्रभवं हि तत् ॥ १८० ॥
शोकाविष्टस्ततो व्याधो विवेश च वनं घनम्।
प्राणिहिंसां परित्यज्य बहुनिर्वेदवान् भृशम् ॥ १८१ ॥
तत्र दावानलं दृष्ट्वा विवेश विरताशयः।
निर्दग्धकल्मषो भूत्वा स्वर्गसौख्यमवाप्तवान् ॥ १८२ ॥

व्याख्या—कपोतदेहः=कपोततनुः, प्राक्पुण्यप्रभवं=पूर्वजन्मोपार्जितं पुण्यम् ॥ १८० ॥ प्राणिहिंसां=जीवहिंसां, बहुनिर्वेदवान्=पश्चात्तापयुक्तः (परम वैराग्ययुक्तः सन्) ॥ १८१ ॥ विरताशयः=विरक्तहृदयः (विरक्तभावमाश्रित्य), निर्दग्धकल्मषः=गतकल्मषः (गतपापः) ॥ १८२ ॥

हिन्दी—पति का अनुगमन करने वाली साध्वी स्त्री साढ़े तीन करोड़ वर्षों तक स्वर्गीय सुख का उपभोग करती रहती है" ॥ १७९ ॥

स्वर्गवासी वह कपोत अपनी स्त्री के साथ सूर्यास्तकाल में प्रतिदिन स्वर्ग का आनन्द लिया करता था। उसकी स्त्री भी कपोती के ही रूप में उसके साथ रहा करती थी। दोनों के मिलन का यह संयोग उनके पूर्वजन्म के अर्जित पुण्य का फल था ॥ १८० ॥

उन दोनों के जल जानेपर वह व्याध भी शोकाकुल होकर एक सघन वन में प्रविष्ट हो गया और जीवहिंसा से विरत होकर परम वैराग्य के साथ वहाँ रहने लगा ॥ १८१ ॥

उस वन में व्याप्त दावाग्नि को देखकर एकदिन विरक्तभाव से वह भी उसी में प्रविष्ट हो गया । पुनः पापरहित होकर वह भी स्वर्गीय सुख का आनन्द लेने लगा ॥ १८२ ॥

अतोऽहं ब्रवीमि—"श्रूयते हि कपोतेन" इति । तच्छ्रुत्वाऽरिमर्दनो दीप्ताक्षं पृष्टवान्—"एवमवस्थिते किं भवान् मन्यते" ? ।

सोऽब्रवीत्—"देव ! न हन्तव्य एवायम् । यतः—

या ममोद्विजते नित्यं सा मामद्यावगूहते ।
प्रियकारक ! भद्रं ते यन्ममास्ति हरस्व तत्" ॥ १८३ ॥

चौरेण चाप्युक्तम्—

"हर्तव्यं ते न पश्यामि हर्तव्यं चेद्भविष्यति ।
पुनरप्यागमिष्यामि यदीयं नावगूहते" ॥ १८४ ॥

अरिमर्दनः पृष्टवान्—"का च नाऽवगूहते ? कश्चाऽयं चौरः ? इति विस्तरतः श्रोतुमिच्छामि" ।

दीप्ताक्षः कथयति—

व्याख्या—अवस्थिते=स्थिते, उद्विजते=समुद्विग्ना भवति, अवगूहते=आलिङ्गनं करोति, भद्रं=शुभमस्तु ।। १८३ ।। नावगूहते=आलिङ्गनं न करिष्यतीति भावः ॥ १८४ ॥

हिन्दी—उक्त कथा को समाप्त करके क्रूराक्ष ने कहा—"देव ! इसीलिये मैं कहता हूँ कि—कपोत ने शरण में आये हुये शत्रु की भी पूजा की थी और अपना मांस खिला दिया था ।"

क्रूराक्ष की बात को सुनकर अरिमर्दन ( उलूकराज ) ने दीप्ताक्ष से पूछा—"इस स्थिति में आप क्या मत देते हैं ?"

उसने कहा—"देव ! इसको मारना उचित नहीं । कभी-कभी अहितकारी व्यक्ति भी अपना हितकारक हो जाता है । यतः कहा गया है कि—

"जो मुझसे सदा उद्विग्न रहा करती थी, वही आज मेरा आलिङ्गन कर रही है । हे प्रियकारक ! तुम्हारा कल्याण हो । मेरे पास जो कुछ भी हो उसे चुरा ले जाओ ॥ १८३ ॥"

चोर ने भी कहा—

"तुम्हारे पास चुराने योग्य कोई वस्तु देख नहीं रहा हूँ । यदि चुराने योग्य कभी कुछ होगा और तुम्हारी यह स्त्री तुम्हारा आलिङ्गन नहीं करेगी तो फिर कभी आ जाऊँगा" ॥ १८४ ॥

अरिमर्दन ने पूछा—"कौन आलिङ्गन नहीं करती है ? यह चोर कौन है ? सब विस्तारपूर्वक सुनना चाहता हूँ ।"

दीप्ताक्ष ने अग्रिम कथा को प्रारम्भ करते हुये कहा—

[ ९ ]

## ( चौरवृद्धवणिक्-कथा )

अस्ति कस्मिंश्चिदधिष्ठाने कामातुरो नाम वृद्धवणिक्। तेन च कामोपहतचेतसा मृतभार्येण काचिन्निर्धनवणिक्सुता प्रभूतं धनं दत्त्वोद्वाहिता। अथ सा दुःखाभिभूता तं वृद्धवणिजं द्रष्टुमपि न शशाक। युक्तश्चैतत्—

श्वेतं पदं शिरसि यत्तु शिरोरुहाणां,
स्थानं परं परिभवस्य तदेव पुंसाम्।
आरोपिताऽस्थिशकलं परिहृत्य यान्ति,
चाण्डालकूपमिव दूरतरं तरुण्यः॥ १८५॥

व्याख्या—कामोपहतचेतसा = कामातुरेण, प्रभूतं = विपुलम् उद्वाहिता = विवाहिता। शिरोरुहाणां = केशानां, परिभवस्य = तिरस्कारस्य, आरोपितास्थिशकलं = प्रक्षिप्तास्थिखण्डं, तरुण्यः = युवतयः॥ १८५॥

हिन्दी—किसी नगर में कामातुर नाम का एक वृद्ध वणिक् रहा करता था। स्त्री के मर जाने पर कामातुरता के कारण उसने एक निर्धन वणिक् को पर्याप्त धन आदि देकर उसकी कन्या से विवाह कर लिया था। वृद्ध के साथ विवाह होने के कारण वह वणिक्पुत्री इतना अधिक दुःखित रहा करती थी कि वह अपने उस पति को अपनी आँख से देखना भी नहीं चाहती थी। ठीक ही कहा गया है कि—

मनुष्य के शिरपर शुभ्र केशों का चरणपात होते ही उसका अपमान एवं तिरस्कार प्रारंभ हो जाता है। अतः श्वेत केश ही उसके तिरस्कार के विषय होते हैं। जैसे—सफेद हड्डी के टुकड़ों को रख देने मात्र से पिपासित होने पर भी चाण्डालों के कूप को लोग दूर से ही छोड़ दिया करते हैं, उसीप्रकार तरुणियाँ भी मनुष्य के सफेद केशों को देखकर ( वासनावासित होती हुई भी ) उसे छोड़ दिया करती हैं॥ १८५॥

तथा च—

गात्रं सङ्कुचितं गतिर्विगलिता दन्ताश्च नाशङ्गताः,
दृष्टिर्भ्राम्यति रूपमप्युपहतं वक्त्रञ्च लालायते।
वाक्यं नैव करोति बान्धवजनः पत्नी न शुश्रूषते,
धिक्कष्टं जरयाभिभूतपुरुषं पुत्रोऽप्यवज्ञायते॥ १८६॥

व्याख्या—गात्रं = शरीरं, सङ्कुचितम् = सङ्कुचितचर्मयुक्तं भवति, गतिः = विगलिता = स्खलिता भवति। रूपम्, उपहतं = विनष्टं, वक्त्रं = मुखं, लालायते = लालामुद्गमति। वाक्यम् = आज्ञां, जरयाभिभूतं = वृद्धं, पुत्रोऽप्यवज्ञायते = पुत्रोऽपि तिरस्करोति, तस्याज्ञां न पालयतीति॥ १८६॥

हिन्दी—वृद्ध होते ही व्यक्ति का शरीर सङ्कुचित हो जाता है। गति स्खलित हो जाती

है। रूप विनष्ट हो जाता है। मुख से लाला ( लार ) गिरा करता है। कुटुम्बीजन उसकी आज्ञा का पालन नहीं करते। स्त्री सेवा विमुख हो जाती है। कितने कष्ट की बात है कि मनुष्य के वृद्ध होते ही उसका औरस पुत्र भी उसकी आज्ञा पालन नहीं करता। बात-बात में वह उसका तिरस्कार किया करता है। ( बुढ़ापा से आक्रान्त मनुष्य का जीवन अत्यन्त दुःखमय हो जाता है। ) ॥ १८६ ॥

अथ कदाचित्सा तेन सकशयने पराङ्मुखी यावत्तिष्ठति तावद् गृहे चोरः प्रविष्टः। सापि तं चौरं दृष्ट्वा भयव्याकुलिता वृद्धमपि तं पतिं गाढं समालिलिङ्ग। सोऽपि विस्मयात्पुलकाङ्कितसर्वगात्रश्चिन्तयामास—"अहो, किमेषा मामद्यावगूहते?" यावन्निपुणतया पश्यति तावद् गृहकोणैकदेशे चौरं दृष्ट्वा व्यचिन्तयत्—नूनमेषास्य भयान्मामालिङ्गति।" इति ज्ञात्वा तं चौरमाह—

"या ममोद्विजते नित्यं सा मामद्यावगूहते।
प्रियकारक! भद्रं ते यन्ममास्ति हरस्व तत्" ॥ १८७ ॥

व्याख्या—एकशयने=एकासने, पुलकाङ्कितसर्वगात्रः=रोमाञ्चितवपुः, निपुणतया= सावधानतया।

हिन्दी—किसी दिन वह अपने पति के साथ एकही आसन पर मुँहफेर कर ( करवट बदलकर ) सोयी हुई थी। इसी समय उसके घर में एक चोर घुस आया। उस चोर को देखते ही वह भयभीत हो उठी। उसने अपने पति को खूब कसकर अपनी छाती से लगा लिया। उसके उस अप्रत्यासित व्यवहार से उसका पति आश्चर्य चकित हो गया और पत्नी के अङ्गस्पर्श से उसका सम्पूर्ण शरीर रोमाञ्चित हो उठा। उसने मन ही मन सोचा—"अरे, क्या बात है कि आज यह मेरा इतना प्रगाढ़ अलिङ्गन कर रही है?"। जब उसने इधर-उधर ध्यानपूर्वक देखा तो उसे घर के एक कोने में छिपा हुआ एक चोर दिखाई पड़ा। चोर को देखकर उसने सोचा— "इस चोर के ही भय से आज इसने मेरा आलिङ्गन किया है। इसलिए चोर ने मेरे घर में घुस कर मेरा भला ही किया है।" पुनः उसने चोर को सम्बोधित करते हुये कहा—"मेरे प्रियकारक! तुम्हारा कल्याण हो। मुझे देखकर जो सदा उद्विग्न हो जाया करती थी, वही आज तुम्हारे भय से मेरा आलिङ्गन कर रही है। अतः मेरे पास जो भी हो, तुम चुरा ले जाओ। ( तुम्हारे चोरी करने से मुझे लेशमात्र भी दुःख नहीं होगा ) ॥ १८७ ॥

तच्छ्रुत्वा चौरोऽप्याह—

"हर्तव्यं ते न पश्यामि हर्तव्यं चेद्भविष्यति।
पुनरप्यागमिष्यामि यदीयं नावगूहते" ॥ १८८ ॥

'तस्माच्चौरस्याऽप्युपकारिणः श्रेयश्चिन्त्यते, किं पुनर्नः शरणागतस्य?। अपि चायं तैर्विप्रकृतोऽस्माकमेव पुष्टये भविष्यति, तदीयरन्ध्रदर्शनाय च; इत्यनेककारणेनायमवध्यः" इति।

एतदाकर्ण्यारिमर्दनोऽन्यं सचिवं वक्रनासं पप्रच्छ—"भद्र ! साम्प्रतमेव स्थिते किं कर्तव्यम्" ? ।

सोऽब्रवीत्—देव ! अवध्योयम् । यतः—

शत्रवोऽपि हितायैव विवदन्तः परस्परम् ।
चौरेण जीवितं दत्तं राक्षसेन तु गोयुगम्" ॥ १८९ ॥

अरिमर्दनः प्राह—कथमेतत्" ? ।

वक्रनासः कथयति—

व्याख्या—श्रेयः=कल्याणं, तैः=काकैः, विप्रकृतः=प्रकोपितः, पुष्टये=लाभाय, तदीयरन्ध्रदशनाय=शत्रोश्छिद्रदर्शनाय ( तेषां दोषदर्शनाय ) विवदन्तः=कलहं कुर्वन्तः, जीवितं=जीवनं, गोयुगं=वृषभद्वयम् ॥ १८९ ॥

हिन्दी—वणिक् की बात को सुनकर चोर ने भी कहा—

"तुम्हारे घर में इससमय मेरे चुराने योग्य कोई वस्तु दिखाई नहीं पड़ रही है । जब कभी चुराने योग्य कोई वस्तु हो होगी और तुम्हारी स्त्री फिर कभी तुमसे रूठकर विमुख सोने लगेगी तो स्वतः चला आऊँगा ।" ( यह कहकर वह चला गया ) ॥ १८८ ॥

उक्त कथा को सुनाकर दीप्ताक्ष ने कहा—"देव ! अपने उपकारी चोर का भी कल्याण सोचा जाता है । यह तो हमारी शरण में आया हुआ है । इसका तो उपकार करना ही चाहिये इसके अतिरिक्त शत्रुओं के द्वारा तिरस्कृत और हमारे द्वारा उपकृत होने के कारण यह हमारा हितकारक ही होगा । क्योंकि—यह शत्रु के गुप्त भेदों को हमें बतायेगा और उनकी आभ्यन्तरिक स्थिति को हमलोगों के समक्ष प्रकट करेगा । मेरे द्वारा कथित उपर्युक्त कारणों के अतिरिक्त और भी अनेक कारणों से यह अवध्य है ।" ।

दीप्ताक्ष की बात को सुनकर अरिमर्दन ने अपने चतुर्थ मन्त्री वक्रनास से पूछा—"भद्र ! इस परिस्थिति में मुझे क्या करना चाहिये ?"

उसने कहा—"देव ! वह सर्वथा अवध्य है । क्योंकि—शत्रु भी कभी-कभी हितकारक हो जाते हैं । देखिये, ब्राह्मण का अहित करने के लिये आये हुये शत्रुओं ने आपस में कलह करके उसका कितना बड़ा हित किया था कि—चोर ने ब्राह्मण की जान बचा दी थी और राक्षस ने उसके दोनों बैलों को बचा दिया था ॥ १८९ ॥

उक्त बात को सुनकर अरिमर्दन ने पूछा—"यह कैसे ?" ।

वक्रनास ने अग्रिम कथा को कहना आरम्भ किया—

[ १० ]

## ( ब्राह्मणचौरपिशाच-कथा )

अस्ति कस्मिंश्चिदधिष्ठाने दरिद्रो द्रोणनामा ब्राह्मणः प्रतिग्रहधनः, सततं विशिष्टवस्त्रानुलेपनगन्धमाल्यालङ्कारताम्बूलादिभोगपरिवर्जितः, प्ररूढकेशश्मश्रुनखरोमोपचितः

शीतोष्णवातवर्षादिभिः परिशोषितशरीरः। तस्य च केनापि यजमानेनानुकम्पया शिशुगोयुगं दत्तम्। ब्राह्मणेन च बालभावादारभ्य याचितघृततैलयवसादिभिः सम्वर्ध्य सुपुष्टं कृतम्।

व्याख्या—प्रतिग्रहधनः=दानधनः, विशिष्टं=महार्हं, श्रेष्ठजनोचितम्, अनुलेपनम्=कुङ्कुमादिकं, भोगपरिवर्जितः=भोगरहितः, प्ररूढकेशश्मश्रुनखरोमोपचितः=प्रवृद्धकेशश्मश्रुनखरोमादिव्याप्तकायः, परिशोषितशरीरः=शुष्कतनुः, अनुकम्पया=कृपया, शिशुगोयुगं=गोवत्सद्वयम्। बालभावात्=बाल्यकालात्, यवसं=तृणम्। सम्वर्ध्य=परिपाल्य।

हिन्दी—किसी नगर में द्रोण और नाम का एक अत्यन्त निर्धन ब्राह्मण रहा करता था। प्रतिग्रह और भिक्षा से ही उसका जीवन चलता था। अपने जीवन में उसने कभी भी उत्तम वस्त्र, कुङ्कुमादि अङ्गराग, गन्ध, माल्य, आभूषण एवं ताम्बूल आदि का उपभोग नहीं किया था। उसके दाढ़ी, मोंछ एवं शिर के बाल तथा नाखून सदा बढ़े ही रहते थे। गर्मी तथा बरसात आदि के सहने से उसका शरीर अत्यन्त सूख गया था। ब्राह्मण की पूर्वोक्त दीनता को देखकर किसी यजमान ने उसे कृपापूर्वक दो बछड़े दे दिये थे। इधर-उधर से घी, तैल तथा घास आदि मांगकर उस ब्राह्मण ने उन बछड़ों का उनके बाल्यकाल से ही खूब पालन-पोषण किया था। उसके पालन-पोषण से वे पर्याप्त पुष्ट हो गये और शीघ्र ही बढ़ भी गये।

तच्च दृष्ट्वा सहसैव कश्चिच्चौरश्चिन्तितवान्—"अहमस्य ब्राह्मणस्य गोयुगमिदमपहरिष्यामि" इति निश्चित्य निशायां बन्धनपाशं गृहीत्वा यावत्प्रस्थितस्तावदर्धमार्गे प्रविरलतीक्ष्णदन्तपङ्क्तिः, उन्नतनासावंशः, प्रकटरक्तान्तनयनः, उपचितस्नायुसन्ततगात्रः, शुष्ककपोलः, सुहुतहुतवहपिङ्गलश्मश्रुकेशशरीरः कश्चिद् दृष्टः। दृष्ट्वा च तं तीव्रभयत्रस्तोऽपि चौरोऽब्रवीत्—"को भवान्?" इति।

स आह—"सत्यवचनोऽहं ब्रह्मराक्षसः। भवानप्यात्मानं निवेदयतु।"

व्याख्या—निशायां=रात्रौ, बन्धनपाशं=रज्जुं (पगहा), प्रविरलतीक्ष्णदन्तपङ्क्तिः=विरलतीक्ष्णदन्तश्रेणिः (प्रविरला तीक्ष्णा च दन्तानां पङ्क्तिर्यस्याऽसौ), उन्नतनाशावंशः=उन्नतनासिकादण्डः (उन्नतो नाशादण्डो यस्याऽसौ), प्रकटरक्तान्तनयनः=सुव्यक्तारुणनयनः (प्रकटे रक्तान्तनयने यस्याऽसौ), उपचितस्नायुसन्ततगात्रः=बृहन्नाडिकाबद्धवपुः (उपचितस्नायुभिः सन्ततं गात्रं यस्याऽसौ) सुहुतहुतवहपिङ्गलश्मश्रुकेशशरीरः=सुहुताग्निसन्निभपिङ्गलश्मश्रुकेशयुक्ततनुः (हुतवहः=अग्निः)।

हिन्दी—ब्राह्मण के उन दोनों बछड़ों को देखकर एक दिन किसी चोर ने सोचा कि—"ब्राह्मण के उन दोनों बछड़ों को आज मैं चुरा ले आऊँगा।" यह सोचकर वह रात्रि में उनको बांधने के लिये रस्सी (पगहा) आदि लेकर अपने घर से चल दिया। जब वह आधे मार्ग में आया तो उसे विरल तीक्ष्ण दन्तपङ्क्ति, ऊपर को उठी हुई लम्बी नाक, स्पष्टरूप से लाल बड़ी-बड़ी आँखें, उभड़ी हुई बड़ी-बड़ी नाड़ियों से युक्त शरीर, शुष्क कपोल और हवन से प्रदीप्त अग्निशिखा के समान पिङ्गलवर्ण की दाढ़ी तथा मोंछों से अत्यन्त भीषण लगने वाला एक व्यक्ति

दिखायी पड़ा। उसको देखते ही वह भयभीत हो उठा। फिर भी साहस करके उसने उस व्यक्ति से पूछा—"आप कौन हैं ?"।

उस व्यक्ति ने कहा—"मैं सत्यवचन नाम का ब्राह्मराक्षस हूँ। कृपया आप भी अपना परिचय प्रदान करें।"

**सोऽब्रवीत्—"अहं क्रूरकर्मा चौरो, दरिद्रब्राह्मणस्य गोयुगं हर्तुं प्रस्थितोऽस्मि।"**

**अथ जातप्रत्ययो राक्षसोऽब्रवीत्—"भद्र! षष्ठाह्नकालिकोऽहम्। अतस्तमेव ब्राह्मणमद्य भक्षयिष्यामि। तत्सुन्दरमिदम्। एककार्यवेलायाम्।"**

**अथ तौ तत्र गत्वैकान्ते कालमन्वेषयन्तौ स्थितौ।**

व्याख्या—प्रस्थितः=चलितः, जातप्रत्ययः=जातविश्वासः, षष्ठाह्नकालिकः (अह्नः षष्ठः कालो भोजनस्य कालो यस्यासौ, षष्ठोऽह्नः कालो भोजनस्य कालो यस्यासौ वा), सुन्दरं=शोभनम्। एककार्यौ=तुल्यकार्यौ, कालमन्वेषयन्तौ=समयं प्रतीक्ष्यमाणौ।

हिन्दी—चोर ने कहा—"मैं क्रूरकर्मा नाम का चोर हूं। दरिद्र ब्राह्मण के दोनों बछड़ों को चुराने के लिये घर से चला हूँ।"

उसकी बात पर विश्वास करके राक्षस ने कहा—"मित्र! मैं छः दिनों का भूखा हूँ (और दिन के छठवें प्रहर में ही भोजन किया करता हूँ) मेरे भोजन का समय हो चुका है। अतः चलो आज उसी ब्राह्मण को खाकर अपनी उदरपूर्ति करूँगा। यह बड़ा ही अच्छा हुआ है कि हम दोनों से भेंट हो गयी है। हम दोनों एक-से कार्य (चोरी के उद्देश्य से) चले हैं और हमें एक ही स्थान पर चलना भी है।"

उस ब्राह्मण के यहाँ पहुँचकर वे दोनों अवसर की प्रतीक्षा में किसी एकान्त स्थान में बैठ गये।

**प्रसुप्ते च ब्राह्मणे तद्भक्षणार्थं प्रस्थितं राक्षसं दृष्ट्वा चौरोऽब्रवीत्—"भद्र! नैष न्यायः। यतो गोयुगे मयाऽपहृते पश्चात्त्वमेनं ब्राह्मणं भक्षय।"**

**सोऽब्रवीत्—"कदाचिदयं ब्राह्मणो गोशब्देन बुध्येत तदानर्थकोऽयं ममारम्भः स्यात्।"**

**चौरोऽप्यब्रवीत्—"तवापि यदि भक्षणायोपस्थितस्यान्तरे एकोऽप्यन्तरायः स्यात्, तदाहमपि न शक्नोमि गोयुगमपहर्तुम्। अतः प्रथमं मयापहृते गोयुगे पश्चात्त्वया ब्राह्मणो भक्षयितव्यः।"**

**इत्थं चाहमहमिकया तयोर्विवदतोः समुत्पन्ने द्वैधे प्रतिरववशाद् ब्राह्मणो जजागार।**

व्याख्या—अनर्थकः=विपद्ग्रस्तः। अनन्तरे=मध्ये, अन्तरायः=विघ्नः, अहमहमिकया=अहं पूर्वमहं पूर्वमिति विवादेन, द्वैधे=विरोधे, प्रतिरववशात्=कोलाहलवशात्।

हिन्दी—ब्राह्मण के सो जाने पर उसको खाने के लिये चलने को उद्यत राक्षस को

देखकर चोर ने कहा—"महाशय! आपका यह कार्य उचित नहीं है। बछड़ों को चुराकर मेरे चले जाने के बाद आप इस ब्राह्मण को खाइयेगा।"

राक्षस ने कहा—"बछड़ों के चिल्लाने से कहीं इस ब्राह्मण की नींद खुल गयी तो मेरा यहाँ आना ही बेकार हो जायगा।"

चोर ने भी कहा—"ब्राह्मण को खाने के लिये उपस्थित होने पर अथवा खाते समय ही यदि कोई विघ्न पड़ गया तो मैं इन बछड़ों को चुरा भी नहीं सकूँगा। अतः पहले मैं बछड़ों को चुराकर चला जाता हूँ, तब आप इस ब्राह्मण को खाइयेगा।"

उपर्युक्त अहमहमिकता में बढ़े हुये विवाद से इधर उन दोनों के मध्य में विरोध की स्थिति उत्पन्न हो गयी और उधर विवादात्मक कोलाहल से ब्राह्मण भी जाग गया।

**अथ तं चौरोऽब्रवीत्—"ब्राह्मणं! त्वामेवायं राक्षसो भक्षयितुमिच्छति" इति।**

**राक्षसोऽप्याह—"ब्राह्मण! चौरोऽयं गोयुगं तेऽपहर्तुमिच्छति।"**

**एवं श्रुत्वोत्थाय ब्राह्मणः सावधानो भूत्वेष्टदेवतामन्त्रध्यानेनात्मानं राक्षसादुद्गूर्णलगुडेन च चौराद् गोयुगं ररक्ष। अतोऽहं ब्रवीमि—"शत्रवोऽपि हितायैव" इति।**

व्याख्या—इष्टदेवतामन्त्रध्यानेन = स्वेष्टदेवस्मरणेन, उद्गूर्णलगुडेन = प्रोद्यतदण्डेन।

हिन्दी—ब्राह्मण को जागृत अवस्था में देखकर चोर ने उसके पास जाकर कहा—"ब्राह्मण! यह राक्षस तुम्हें खाना चाहता है।"

चोर की बात को सुनकर राक्षस ने भी कहा—"ब्राह्मण! यह चोर तुम्हारे बछड़ों को चुराना चाहता है।"

उन दोनों की बात को सुनकर वह ब्राह्मण चारपाई से उतर कर जमीन पर खड़ा हो गया और सावधान होकर अपने इष्ट देवता का स्मरण करने लगा। इष्टदेव के स्मरण, ध्यान एवं मन्त्रजप से उसने राक्षस से अपने को बचा लिया। पुनः लाठी उठाकर चोर से अपने उन दोनों बछड़ों को भी बचा लिया।

उक्त कथा को समाप्त करके वक्रनास ने कहा—"इसीलिये मैं कहता हूँ कि—कभी-कभी शत्रु भी अपने हितकारक हो जाते हैं"।

**अथ तस्य वचनमवधार्यारिमर्दनः पुनरपि प्राकारकर्णमपृच्छत्—"कथय किमत्र मन्यते भवान्?"**

**सोऽब्रवीत्—"देव! अवध्य एवायम्। यतो रक्षितेनानेन कदाचित्परस्परप्रीत्या कालः सुखेन गच्छति। उक्तञ्च—**

**परस्परस्य मर्माणि ये न रक्षन्ति जन्तवः।**
**त एव निधनं यान्ति वल्मीकोदरसर्पवत्" ॥ १९० ॥**

**अरिमर्दनोऽब्रवीत्—"कथमेतत्"?।**

**प्राकारकर्णः कथयति—**

व्याख्या—अवधार्य=विचार्य (श्रुत्वा वा), परस्परप्रीत्या=काकोलूकयोः परस्परानुरागेण। मर्माणि=अप्रकाश्यानि रहस्यानि, न रक्षन्ति=न गोपयन्ति ॥ १९० ॥

हिन्दी—वक्रनास से सम्मति लेने के बाद अरिमर्दन ने प्राकारकर्ण से पूछा—"कहिये, आप इस विषय में क्या मत दे रहे हैं ?"।

उसने कहा—"देव ! यह अवध्य तो है ही। क्योंकि इसकी सुरक्षा से संभव है कि काकों और उलूकों में पारस्परिक प्रेम हो जाय सब लोग शान्ति का जीवन व्यतीत करने लगें। कहा भी गया है कि—आपस के रहस्यों को जो लोग गुप्त नहीं रखते वे विल उदर में रहने वाले सर्पों की तरह शीघ्र ही विनष्ट हो जाते हैं ॥ १९० ॥

अरिमर्दन ने पूछा—"यह कैसे ?"।

प्राकारकर्ण ने उत्तर में कहा—

[ ११ ]

## ( वल्मीकोदरस्थसर्प-कथा )

अस्ति कस्मिश्चिन्नगरे देवशक्तिर्नाम राजा। तस्य च पुत्रो जठरवल्मीकाश्रयेणोरगेण प्रतिदिनं प्रत्यङ्गं क्षीयते। अनेकोपचारैः सद्वैद्यैः सच्छास्त्रोपदिष्टौषधयुक्त्या चिकित्स्यमानोऽपि न स्वास्थ्यमाप्नोति।

अथासौ राजपुत्रो निर्वेदाद् देशान्तरं गतः। कस्मिंश्चिन्नगरे भिक्षाटनं कृत्वा महति देवालये कालं यापयति।

व्याख्या—जठरवल्मीकाश्रयेण=उदरविवरनिवासिना, उरगेण=सर्पेण। अनेकोपचारैः =अनेकोपायैः सच्छास्त्रोपदिष्टौषधयुक्त्या=युक्तौषधप्रदानेन, स्वास्थ्यम्=आरोग्यम्, निर्वेदात् =परमवैराग्यात् (औदासीन्यात्) भिक्षाटनं=भिक्षावृत्ति, देवालये=देवमन्दिरे, कालं यापयति=समयमतिवाहयति।

हिन्दी—किसी नगर में देवशक्ति नाम का एक राजा रहता था। उसके लड़के के पेट में एक सर्प रहा करता था। उस उदरस्थ सर्प के कारण वह दिनप्रतिदिन क्षीण होता चला जा रहा था। अच्छे-अच्छे वैद्यों, शास्त्रीय विधि से निर्मित औषधियों तथा अन्य अनेक प्रकार के उपचारों द्वारा चिकित्सित होनेपर भी वह स्वस्थ नहीं हो पा रहा था।

अन्त में वह राजकुमार अपने जीवन से निराश हो गया और उदास होकर विदेश चला गया। वहाँ एक नगर में भिक्षाटन करके वह अपनी जीविका चलाने लगा और रात में एक विशाल देवालय में सोकर अपना समय व्यतीत करने लगा।

अथ तत्र नगरे बलिर्नाम राजाऽऽस्ते। तस्य च द्वे दुहितरौ यौवनस्थे तिष्ठतः। ते च प्रतिदिवसमादित्योदये पितुः पादान्तिकमागत्य नमस्कारं चक्रतुः। तत्र चैकाऽब्रवीत्—"विजयस्व महाराज ! यस्य प्रसादात्सर्वं सुखं लभ्यते।"

द्वितीया तु "विहित भुङ्क्ष्व महाराज।" इति ब्रवीति।

तच्छ्रुत्वा प्रकुपितो राजाऽब्रवीत्—"भो मन्त्रिणः! एनां दुष्टभाषिणीं कुमारिकां कस्यचिद्वैदेशिकस्य प्रयच्छत, येन निजविहितमियमेव भुङ्क्ते।

व्याख्या—दुहितरौ = कन्ये, आदित्योदये = सूर्योदये, अन्तिकं = समीपं, विहितं = पूर्वजन्मनि कृतम्। दुष्टभाषिणीं = कटुभाषिणीम्।

हिन्दी—जिस नगर में वह राजकुमार रहता था, उस नगर के राजा का नाम बलि था। उसकी दो कन्यायें थी जो युवती हो चुकी थीं। सूर्योदयकाल में वे दोनों प्रतिदिन पिता के समीप आकर उनका चरणस्पर्श किया करती थी। किसी दिन उनमें से एक ने नमस्कार करते हुये कहा—"महाराज विजयी हो। आपकी ही कृपा से मुझे सम्पूर्ण सुख भोगने को मिलता है।"

इसपर दूसरी ने कहा—"महाराज! अपने कर्मफल का उपभोग करें।"

दूसरी कन्या के वाक्य को सुनकर राजा को बड़ा क्रोध आया। उन्होंने मन्त्रियों से कहा—"मन्त्रियों! इस कटुभाषिणी कुमारी को ले जाकर इसका किसी परदेशी के साथ विवाह कर दो जिससे यह अपने किये हुए कर्म का भोग स्वयं करे।"

अथ तथेति प्रतिपद्य, अल्पपरिवारा सा कुमारिका मन्त्रिभिस्तस्य देवकुलाश्रित-राजपुत्रस्य प्रतिपादिता। सापि प्रहृष्टमनसा तं पतिं देववत् प्रतिपद्यादाय चान्य-विषयं गता।

ततः कस्मिंश्चिद्दूरतरनगरप्रदेशे गत्वा तडागतटे राजपुत्रमावासरक्षार्थं निरूप्य स्वयञ्च घृततैलवणतण्डुलादिक्रयार्थमात्त सपरिवारा गता। कृत्वा च क्रयविक्रयं यावदागच्छति तावत्स राजपुत्रो वल्मीकोपरि कृतमूर्धा प्रसुप्तः। तस्य च मुखाद् भुजगः फणं निष्कास्य वायुमश्नाति। तत्रैवं च वल्मीकेऽपरः सर्पो निष्क्रम्य तथैवासीत्।

व्याख्या—प्रतिपद्य = स्वीकृत्य, अल्पपरिवारा = अल्पपरिजनाऽनुगता, प्रतिपादिता = विवाहिता। अन्यविषयम् = अन्यराज्यम्, आवासरक्षार्थं = स्थानरक्षार्थं, निरूप्य = नियोज्य, कृतमूर्धा = न्यस्तमस्तकः, भुजगः = सर्पः, अश्नाति = पिबति (भक्षयति)। निष्क्राम्य = निष्काश्य निष्क्रम्य = विलान्निर्गत्य।

हिन्दी—"जैसी आज्ञा" कहकर मन्त्रियों ने राजपुत्री को दो-एक भृत्य देकर उसका विवाह देवालयवासी उस राजकुमार के साथ कर दिया। राजपुत्री ने भी प्रसन्न मन से उस पति को देवता की तरह स्वीकार कर लिया और उसको लेकर वह किसी दूसरे राज्यमें चली गयी।

सुदूर देश के एक नगर में पहुँचकर वह एक तालाव के किनारे रुकी और पति को स्थान की सुरक्षा के लिए नियुक्त कर स्वयं परिजनों के साथ घी, तेल, नमक तथा चावल आदि खरीदने के लिये चली गयी। क्रय-विक्रय करके लौटने पर उसने देखा कि वह राजकुमार किसी सर्प के बिलपर शिर रखकर सोया हुआ है और उसके मुख से अपने फण को निकालकर एक सर्प

वायु-पान कर रहा है। राजकुमारी ने आगे देखा कि जिस बिलपर शिर रखकर उसका पति सोया हुआ था। उसी बिल से निकलकर एक दूसरा सर्प भी पूर्व सर्प की ही भाँति वायु-पान कर रहा था।

अथ तयोः परस्परदर्शनेन क्रोधसंरक्तलोचनयोर्मध्याद्वल्मीकस्थेन सर्पेणोक्तं—भो भो दुरात्मन्! कथं सुन्दरसर्वाङ्गं राजपुत्रमित्थं कदर्थयसि?"।

(ततो) मुखस्थोऽहिरब्रवीत्—"भो भोः! त्वयापि दुरात्मनास्य वल्मीकस्य मध्ये कथमिदं दूषितं हाटकपूर्णं कलशयुगलम्?"

एवं परस्परस्य मर्माण्युद्घाटितवन्तौ।

व्याख्या—दर्शनेन=साक्षात्कारेण (अवलोकनेन), क्रोधसंरक्तलोचनयोः=क्रोधारुणनेत्रयोः, वल्मीकस्थेन=विवरस्थेन, कदर्थयसि=पीडयसि। हाटकपूर्णं=सुवर्णपूर्णं, कलशयुगलम्=घटद्वयम्। मर्माणि=रहस्यानि, उद्घाटितवन्तौ=प्रकाशितवन्तौ।

हिन्दी—परस्पर एक दूसरे को देखते ही उन दोनों सर्पों के नेत्र क्रोध से लाल हो गये। उनमें से विवरस्थ सर्प ने क्रोधातुर होकर पूछा—"अरे दुष्ट! सर्वाङ्गसुन्दर इस राजकुमार को तुम इस प्रकार से कष्ट क्यों दे रहे हो?"।

उसकी बात को सुनकर मुखस्थ सर्प ने भी क्रोधाभिभूत होकर प्रश्न किया—"इस विवर में रखे हुये सुवर्णमुद्राओं से युक्त दोनों घड़ों को तुमने क्यों दूषित कर रखा है?"

उक्त प्रकार से प्रश्न करके दोनों ने एक दूसरे के रहस्य को उद्घाटित कर दिया।

पुनर्वल्मीकस्थोऽहिरब्रवीत्—"भो दुरात्मन्! भेषजमिदं ते किं कोऽपि न जानाति यज्जीर्णोत्कालितकाञ्जिकराजिकापानेन भवान् विनाशमुपयाति।"

अथोदरस्थोऽहिरब्रवीत्—तवाप्येतद्भेषजं किं कश्चिदपि न वेत्ति यदुष्णतैलेन महोष्णोदकेन वा तव विनाशः स्यात्?" इति।

एवञ्च सा राजकन्या विटपान्तरिता तयोः परस्परालापान् मर्ममयानाकर्ण्य तथैवानुष्ठितवती। विधायाव्यङ्गनीरोगं भर्तारं निधिञ्च परमासाद्य स्वदेशाभिमुखं प्रायाव। पितृमातृस्वजनैः प्रतिपूजिता विहितोपभोगं प्राप्य सुखेनावस्थिता।

अतोऽहं ब्रवीमि—"परस्परस्य मर्माणि"—इति।

व्याख्या—भेषजम्=औषधम्। जीर्णं=पुरातनम्, उत्कालितम्=अत्युष्णीकृतं, काञ्जिकं=द्रव्यविशेषः (एक प्रकार का पेय), राजिका=असितसर्षपः। उदकेन=जलेन, विटपान्तरिता=वृक्षान्तरिता मर्ममयान्=रहस्ययुक्तान्, अनुष्ठितवती=कृतवती। अव्यङ्गम्=अविकलाङ्गम्। विहितोपभोगं=स्वकर्मफलम्।

हिन्दी—वल्मीकस्थ सर्प ने पुनः कहा—"अरे दुष्ट! क्या तुम्हारी यह औषधि कोई नहीं जानता है कि पुरानी काँजी और काली सरसों (राई) को पीसकर गर्म जल के साथ पीने से तुम मर सकते हो?"।

इसपर उदरस्थ सर्प ने कहा—"तुम्हारी भी इस औषधि को क्या कोई नहीं जानता कि गर्म तेल अथवा खौलते हुये जल को बिल में डालने से तुम भी मर सकते हो ?"।

विटप की ओट में छिपी हुई वह राजकन्या उनके मर्मोद्घाटक वार्तालाप को सुन रही थी। अतः उसने उन्ही उपायों को किया। उक्त उपाय से दोनों ही सर्प मर गये। अपने पति को नीरोग एवं स्वस्थ बनाकर उसने बिल में संरक्षित उस धन को भी निकाल लिया। पुनः पति और परिजनों को साथ में लेकर वह अपने पिता के यहाँ लौट आयी। उसको देखकर उसके माता तथा पिता ने उसका बड़ा आदर-सत्कार किया। इसप्रकार अपने पूर्वसञ्चित कर्मों का फल प्राप्त करके वह सुखपूर्वक वहाँ ( अपने माता-पिता के यहाँ ) रहने लगी।

उक्त कथा को कहकर प्राकारकर्ण ने कहा—"देव ! इसीलिये मैं कहता हूँ कि पारस्परिक विवाद में एक दूसरे के रहस्यों को व्यक्त करने वाले व्यक्ति पूर्वोक्त सर्पों की तरह विनष्ट हो जाते हैं।"

**तच्च श्रुत्वा स्वयमरिमर्दनोऽप्येवं समर्थितवान्। तथा चानुष्ठितं दृष्ट्वान्तर्लीनं विहस्य रक्ताक्षः पुनरब्रवीत्—"कष्टम् ! विनाशितोऽयं भवद्भिरन्यायेन स्वामी। उक्तञ्च—**

**अपूज्या यत्र पूज्यन्ते पूज्यानां तु विमानना।**
**त्रीणि तत्र प्रवर्तन्ते दुर्भिक्षं मरणं भयम् ॥ १९१ ॥**
**प्रत्यक्षेऽपि कृते पापे मूर्खः साम्ना प्रशाम्यति।**
**रथकारः स्वकां भार्यां सजारां शिरसावहत्' ॥ १९२ ॥**

**मन्त्रिणः प्राहुः—"कथमेतत्" ?।**

**रक्ताक्षः कथयति—**

व्याख्या—समर्थितवान्=स्वीकृतवान्। अन्तर्लीनं=मनस्येव, अन्यायेन=दुष्टमन्त्रेण। विमानना=अवमानना ( अपमान ), प्रवर्तन्ते=भवन्ति, दुर्भिक्षं=दुष्कालः, भयम्=उपद्रवादिकम् ॥ १९१ ॥ साम्ना=सामोपायेन, प्रशाम्यति=तुष्यति। स्वकां=स्वकीयां, सजारां=जारसहिताम् ॥ १९२ ॥

हिन्दी—प्राकारकर्ण की बात को सुनकर अरिमर्दन ने भी उसी का समर्थन किया। पुनः अन्य मन्त्रियों के परामर्शानुसार ही कार्यान्वयन भी होते देखकर रक्ताक्ष ने मन ही मन हँसकर कहा—"बड़े ही दुःख की बात है। आपलोगों ने महाराज को अनुचित परामर्श देकर उनका सर्वनाश ही कर दिया। कहा भी गया है कि—

जहाँ अपूज्य व्यक्तियों की पूजा होती है और पूज्य व्यक्तियों का अपमान किया जाता है, वहाँ तीन ही बातें होती हैं—या तो दुर्भिक्ष पड़ता है, या महामारी फैल जाती है अथवा अग्नि आदि का उपद्रव होने लगता है ॥ १९१ ॥

और भी—प्रत्यक्ष रूप से पापादि को करने पर भी मूर्ख व्यक्ति उल्टी-सीधी सफाई आदि देकर मना लेने से मान जाता है। जैसे—अपनी स्त्री की झूठी सफाई से वह रथकार सन्तुष्ट हो

गया था और अपनी स्त्री के साथ-साथ उसके जारपति को भी अपने कन्धेपर बैठाकर ग्राम में घुमाया करता था ॥ १९२ ॥

उसकी बात को सुनकर मन्त्रियों ने पूछा—"यह कैसे ?"

रक्ताक्ष ने अग्रिम कथा को आरम्भ करते हुए कहा—

[ १२ ]

## ( रथकारवधू-कथा )

अस्ति कस्मिंश्चिदधिष्ठाने वीरवरो नाम रथकारः। तस्य भार्या कामदमनी। सा च पुंश्चली जनापवादयुक्ता। सोऽपि तस्याः परीक्षणार्थं व्यचिन्तयत्—"अथ मयास्याः परीक्षणं कर्तव्यम्। उक्तञ्च यतः—

यदि स्यात्पावकः शीतः प्रोष्णो वा शशलाञ्छनः।
स्त्रीणां तदा सतीत्वं स्याद्यदि स्याद् दुर्जनो हितः ॥ १९३ ॥

जानामि चैनां लोकवचनादसतीम्।

व्याख्या—पुंश्चली = व्यभिचारिणी, जनापवादयुक्ता = लोकनिन्दान्विता। पावकः = अग्निः, शीतः = शान्तः, प्रोष्णः = अत्युष्णः, शशलाञ्छनः = चन्द्रः। हितः = हितकारकः ॥१९३॥ लोकवचनात् = जनापवादात्।

हिन्दी—किसी नगर में वीरवर नाम का एक रथकार रहता था। उसकी स्त्री का नाम कामदमनी था। वह अत्यन्त व्यभिचारिणी एवं लोकनिन्दायुक्त ( बदनाम ) थी। स्त्री की परीक्षा करने के उद्देश्य से एक दिन उस रथकार ने अपने मन में सोचा कि—"मुझे इसकी परीक्षा करनी ही होगी। यतः कहा गया है कि—

यदि पावक शीतल हो जाय, चन्द्रमा अत्यन्त उष्ण हो जाय और दुर्जन लोग दूसरों के हितकारी बन जाय तो कदाचित् स्त्रियाँ भी सती हो सकती हैं ॥ १९३ ॥

इसके व्यभिचारिणी होने की चर्चा तो मैं सुन ही चुका हूँ। लोकचर्चा के अनुसार तो यह व्यभिचारिणी सिद्ध ही है।

उक्तञ्च—

यच्च वेदेषु शास्त्रेषु न दृष्टं न च संश्रुतम्।
तत्सर्वं वेत्ति लोकोऽयं यत्स्याद् ब्रह्माण्डमध्यगम्" ॥ १९४ ॥

एवं सम्प्रधार्य भार्यामवोचत्—"प्रिये! प्रभातेऽहं ग्रामान्तरं यास्यामि। तत्र कतिचिद्दिनानि लगिष्यन्ति। तत्त्वया किमपि पाथेयं मम योग्यं विधेयम्।"

सापि तद्वचनं श्रुत्वा हर्षितचित्ता औत्सुक्यात्सर्वकार्याणि सन्त्यज्य सिद्धमन्नं घृतशर्कराप्रायमकरोत्।

व्याख्या—वेत्ति = जानाति, ब्रह्माण्डमध्यगं = विश्वगतम् ॥१९४॥ हर्षितचित्ता = सुप्रसन्नचित्ता, घृतशर्कराप्रायं = घृतशर्करया निर्मितं पक्वान्नम्।

हिन्दी--कहा भी गया है कि—

जो वस्तु वेदों और शास्त्रों में भी देखी एवं सुनी नहीं जाती है, उसको भी लोग जान लेते हैं। इतना ही नहीं, विश्व के किसी भी कोने में कोई बात होती है तो लोग उसे जान ही जाते हैं ॥ १९४ ॥

उक्तप्रकार से सोचकर उसने अपनी स्त्री से कहा—"प्रिये! कल प्रातःकाल मैं एक दूसरे ग्राम को जानेवाला हूँ। वहाँ मुझे कुछ दिन लग जायेंगे। अतः मेरे भोजन के लिये कोई चीज वना दो तो अच्छा हो।"

रथकार की बात को सुनकर उसकी स्त्री बहुत प्रसन्न हुई। घर के सम्पूर्ण कार्यों को तत्काल छोड़कर वह उत्सुकतापूर्वक जल्दी-जल्दी घी तथा चीनी से कोई बढ़िया पदार्थ ( पक्वान्न विशेष ) वनाने लगी।

**अथवा साध्विदमुच्यते—**

**दुर्दिवसे घनतिमिरे दुःसञ्चारेषु नगरमार्गेषु।**
**पत्युर्विदेशगमने परमसुखं जघनचपलायाः ॥ १९५ ॥**

**अथासौ प्रत्यूषे उत्थाय स्वगृहान्निर्गतः। सापि तं प्रस्थितं विज्ञाय प्रहसितवदनाऽङ्गसंस्कारं कुर्वाणा कथञ्चित्तं दिवसमत्यवाहयत्। अथ पूर्वपरिचितविटगृहे गत्वा तं प्रत्युक्तवती—"स दुरात्मा मे पतिर्ग्रामान्तरं गतः। तत्त्वयास्मद्गृहे प्रसुप्ते जने समागन्तव्यम्।"**

व्याख्या—दुर्दिवसे=दुर्दिने जाते, घनतिमिरे=घनान्धकाराच्छन्ने, जघनचपलायाः=कुलटायाः ॥ १९५ ॥ प्रहसितवदना=सुप्रसन्नानना, अङ्गसंस्कारं=वस्त्राभूषणैः शृङ्गारादिकं, कुर्वाणा, विटगृहे=जारगृहे।

हिन्दी—अथवा, किसी ने ठीक ही कहा है कि—

दुर्दिन हो जाने से जब घनान्धकार छा जाता है और नगर की गलियों में चलना-फिरना कठिन हो जाता है अथवा पति जब विदेश चला जाता है तो पुंश्चली स्त्रियों को बहुत बड़े सुख का अनुभव होता है ॥ १९५ ॥

दूसरे दिन प्रातःकाल होते ही शयन से उठकर वह रथकार घर से बाहर निकल गया। निकल गया। पति को बाहर गया हुआ समझकर उसने अपना शृङ्गार आदि करके किसी प्रकार उस दिन को व्यतीत किया। शाम हो जानेपर वह पूर्व परिचित विट के यहाँ गयी। वहाँ जाकर उसने अपने जारपति से कहा—"मेरा दुष्टपति किसी अन्य ग्राम को चला गया है। जब लोग सो जांय, तब चुपचाप मेरे यहाँ चले आना।"

**तथानुष्ठिते स रथकारोऽरण्ये दिनमतिवाह्य प्रदोषे स्वगृहेऽपरद्वारेण प्रविश्य शय्याधस्तले निभृतो भूत्वा स्थितः। एतस्मिन्नन्तरे स देवदत्तः समागत्य तत्र शयने उपविष्टः। तं दृष्ट्वा रोषाविष्टचित्तो रथकारो व्यचिन्तयत्—"किमेनमुत्थाय हन्मि?**

अथवा हेलयैव प्रसुप्तौ द्वावप्येतौ व्यापादयामि ? परं पश्यामि तावदस्याश्चेष्टितं, शृणोमि चानेन सहालापान्"।

व्याख्या—अरण्ये=वने, प्रदोषे=सायङ्काले, अपरद्वारेण, निभृतः=सुगुप्तः सन्। रोषाविष्टचित्तः=क्रोधाविष्टचित्तः, हेलयैव=सहसैव, चेष्टितं=कृत्यम्।

हिन्दी—वह रथकार भी वन में जाकर दिन भर बैठा रहा। शाम हो जाने, पर वह खिड़की से आकर अपने घर में घुस गया और शय्या के नीचे छिपकर बैठ गया। इसी बीच में उसकी स्त्री का जारपति देवदत्त भी आकर उसी चारपाई पर बैठ गया। उसको देखते ही वह रथकार क्रोध से लाल हो उठा और अपने मन में सोचने लगा—"क्या अभी उठकर इसको मार डालूँ? अथवा जब ये दोनों सो जाँय तब उठकर सहसा दोनों को एक ही साथ मार डालूँगा। किन्तु ऐसा करना ठीक नहीं होगा। पहले देख तो लूँ कि यह इसके साथ क्या-क्या करती है! दोनों आपस में क्या बातचीत करते हैं, वह भी सुन लूँ। फिर जैसा उचित होगा, करूँगा!"

अत्रान्तरे सा गृहद्वारं निभृतं पिधाय शयनतलमारूढा। अथ तस्यास्तत्रारोहन्त्या रथकारशरीरे पादो विलग्नः। ततः सा व्यचिन्तयत्—"नूनमेतेन दुरात्मना रथकारेण मत्परीक्षणार्थं भाव्यम्। ततः स्त्रीचरित्रविज्ञानं किमपि करोमि"।

एवं तस्याश्चिन्तयन्त्याः स देवदत्तः स्पर्शोत्सुको बभूव। अथ तया कृताञ्जलिपुटयाऽभिहितं—भो महानुभाव! न मे शरीरं त्वया स्पर्शनीयं, यतोऽहं पतिव्रता महासती च। न चेच्छापं दत्वा त्वां भस्मसात्करिष्यामि।"

व्याख्या—शयनतलं=मञ्चकं, स्त्रीचरित्रविज्ञानं=स्त्रीचरित्रकौशलं, स्पर्शोत्सुकः=तस्याः शरीरस्पर्शोत्सुकः।

हिन्दी—अभी रथकार चारपाई के नीचे पड़ा हुआ सोच ही रहा था, कि उसकी स्त्री भी दरवाजों को ठीक से बन्द करके उसी चारपाई पर आकर बैठ गयी। चारपाई पर बैठते समय संयोग से उसका पैर चारपाई के नीचे बैठे हुये रथकार के शरीर में लग गया। पैर के लगते ही वह ताड़ गयी कि उसका पति चारपाई के नीचे बैठा हुआ है। अतः उसने अपने मन में सोचा कि "यह दुष्ट मेरी परीक्षा लेने के लिये चारपाई के नीचे बैठा हुआ है। अतः इसको भी कुछ स्त्रीचरित्र (त्रियाचरित्र) दिखा ही दूँ!"

अभी वह उक्त बातों को सोच ही रही थी कि उसका जार पति देवदत्त आलिङ्गन करने के लिये अपना हाथ बढ़ाने लगा। उसे अपनी ओर हाथ बढ़ाते हुये देखकर रथकार की स्त्री ने हाथ जोड़कर कहा—"महानुभाव! आप मेरे शरीर का स्पर्श न करें, क्योंकि—मैं अत्यन्त साध्वी, पतिव्रता एवं महासती हूँ। यदि आपने मेरा कहना नहीं माना तो मैं शाप देकर आपको भस्म कर दूँगी।"

स आह—"यद्येवं तर्हि त्वया किमहमाहूतः?"



साऽब्रवीत्—"भोः! शृणुष्वैकाग्रमनाः, अहमद्य प्रत्यूषे देवतादर्शनार्थं चण्डिका-

यतनं गता। तत्राकस्मात्खे वाणी सञ्जाता—"पुत्रि! किं करोमि, भक्तासि मे त्वं, परं षण्मासाभ्यन्तरे विधिनियोगाद्विधवा भविष्यसि।"

ततो मयाभिहितं—"भगवति! यथा त्वमापदं वेत्सि, तथा तत्प्रतीकारमपि जानासि। तदस्ति कश्चिदुपायो येन मे पतिः शतसंवत्सरंजीवी भवति?"

ततस्तयाऽभिहितं—"वत्से! सन्नपि नास्ति, यतस्त्वदायत्तः स प्रतीकारः।"

तच्छ्रुत्वा मयाभिहितं—"देवि! यदि तन्मम प्राणैर्भवति तदादेशय, येन करोमि।"

व्याख्या—एकाग्रमनाः=सावधानः सन्, आयतनं=मन्दिरम्। खे=आकाशे, वाणी=शब्दः, विधिनियोगात्=भाग्यात्, प्रतीकारं=दूरीकरणोपायम्, त्वदायत्तः=तवाधीनः। प्राणैः=जीवनत्यागेनापि।

हिन्दी—रथकार की स्त्री के उक्त वचनों को सुनकर देवदत्त ने पूछा—"यदि ऐसा ही करना था तो तुमने मुझे यहाँ बुलाया ही क्यों?"

उत्तर में उसने कहा—"ध्यान से सुनिये, आपको यहाँ बुलाने का कारण अभी बता रही हूँ। आज प्रातःकाल मैं चण्डिका के मन्दिर में दर्शन करने के लिये गयी हुई थी। मेरे वहाँ पहुँचते ही अकस्मात् यह आकाशवाणी हुई कि—'पुत्री! मैं तुमसे कैसे कहूँ? क्योंकि—तुम मेरी भक्त हो, किन्तु सच्ची बात कहनी ही पड़ती है। दुर्भाग्य से तुम छः महीने के भीतर ही विधवा हो जाओगी।'

उक्त आकाशवाणी को सुनकर मैंने देवी से पूछा—'भगवति! जैसे आप मेरे ऊपर आनेवाली आपत्ति को जानती हैं, उसीप्रकार उस आपत्ति का प्रतीकार भी जानती हैं। क्या ऐसा कोई उपाय है कि जिससे पति शतायु हो सकते हैं?'

मेरी प्रार्थना सुनकर देवी ने कहा—'वत्से! उपाय होते हुये भी नहीं है। क्योंकि तुम्हारी आपत्ति का प्रतीकार तुम्हारे ही अधीन है।'

भगवती की उक्त बात को सुनकर मैंने पुनः निवेदन किया कि—"देवि! यदि वह उपाय मेरे प्राणों के परित्याग से भी सम्भव हो, तो कृपा करके मुझसे अवश्य कहिये, जिससे मैं शीघ्र उस उपाय को कर सकूँ।"

अथ देव्याभिहितं—"यद्यद्य परपुरुषेण सहैकस्मिञ्छयने समारुह्यालिङ्गनं करोषि, तत्त्वद्भर्तृसक्तोऽपमृत्युस्तस्य सञ्चरति। भर्त्तापि पुनर्वर्षशतं जीवति। तेन त्वं मयाऽभ्यर्थितः। तद्यत्किञ्चित्कर्तुमनास्तत्कुरुष्व। न हि देवतावचनमन्यथा भविष्यतीति निश्चयः।"

ततोऽन्तर्हासविकासमुखः स तदुचितमाचचार। सोऽपि रथकारो मूर्खस्तस्यास्तद्वचनमाकर्ण्य पुलकाञ्चिततनुः शय्याधस्तलान्निष्क्रम्य तामुवाच—"साधु पतिव्रते! साधु कुलनन्दिनि! अहं दुर्जनवचनशङ्कितहृदयस्त्वत्परीक्षानिमित्तं ग्रामान्तरव्याजं कृत्वा खट्वाधस्तले निभृतं लीनः। तदेहि, आलिङ्ग माम्। त्वं स्वभर्तृभक्तानां मुख्या नारीणां

यदेवं ब्रह्मव्रतं परसङ्गेऽपि पालितवती । ममायुर्वृद्धिकृतेऽपमृत्युविनाशार्थञ्च त्वमेवं कृतवती ।" तामेवमुक्त्वा सस्नेहमालिङ्गितवान् ।

व्याख्या—भर्तृसक्तः=पत्यावासक्तः, तस्य=अन्यपुरुषस्य, सञ्चरति=सङ्क्रामति । अभ्यर्थितः=प्रार्थनयाहूतः । अन्तर्हासविकासमुखः=ईषद्धासयुक्तः, अन्तर्हासेन विकसितं मुखं यस्यासौ, पुलकाञ्चिततनुः=पुलकितवपुः, दुर्जनवचनशङ्कितहृदयः (दुर्जनवचनेन शङ्कितं हृदयं यस्यासौ), भर्तृभक्तानां=पतिभक्तानां, ब्रह्मव्रतं=संयमव्रतम् ।

हिन्दी—मेरी प्रार्थना सुनकर देवी ने पुनः कहा—'यदि तुम किसी अन्यपुरुष के साथ एक शयन पर सोकर उसका आलिङ्गन करो तो तुम्हारे पति में आसक्त अपमृत्यु उसमें चली जायगी । इसप्रकार तुम्हारा पति शतायु हो सकता है ।' इसीलिए मैंने आपको यहाँ बुलाया था । अतः यदि आप मेरे साथ जो कुछ करना चाहते हो कर सकते हैं । यह निश्चित है कि देवता का कथन असत्य नहीं होगा" ।

रथकार की स्त्री के उक्त वचनों को सुनकर उसके जार पति ने मुस्करा दिया । पुनः प्रसन्न मन से वह उसके साथ सुरतव्यापार में प्रवृत्त हो गया ।

वह मूर्ख रथकार अपनी स्त्री के वचनों को सुनकर बहुत प्रसन्न हुआ । उसका शरीर आनन्द से पुलकित हो उठा । शय्या के नीचे से निकलकर उसने अपनी स्त्री से कहा—"साधु पतिव्रते ! साधु ! हे कुलनन्दिनि ! दुर्जनों के कहने से मेरे हृदय में तुम्हारे प्रति सन्देह हो गया था । तुम्हारी परीक्षा करने के लिए ही मैं दूसरे ग्राम जाने का बहाना बनाकर चारपाई के नीचे छिपकर बैठा हुआ था । अब मेरा वह सन्देह समाप्त हो गया है । आओ, मेरी छाती से लग जाओ । तुम पतिभक्त नारियों में सबसे श्रेष्ठ हो । क्योंकि परपुरुष के साथ रहने पर भी तुमने बहुत बड़े संयम का पालन किया है । अब मैं यह भलीभाँति समझ गया हूँ कि तुमने मेरी अपमृत्यु को दूर करने के लिए और मेरी आयु को बढ़ाने के लिए ही ऐसा कार्य किया है ।" यह कहकर वह सस्नेह उसका आलिङ्गन करने लगा ।

स्कन्धे तामारोप्य तमपि देवदत्तमुवाच—"भो महानुभाव ! मत्पुण्यैस्त्वमिहागतः । त्वत्प्रसादान्मया प्राप्तं वर्षशतप्रमाणमायुः । तत्त्वमपि मामालिङ्ग्य मत्स्कन्धे समारोह" इति जल्पन्ननिच्छन्तमपि देवदत्तमालिङ्ग्य बलात्स्वकीयस्कन्धे आरोपितवान् । ततश्च नृत्यं कृत्वा—"हे ब्रह्मव्रतधारिणां धुरीण ! त्वयापि मय्युपकृतम्" इत्याद्युक्त्वा स्कन्धादुत्तार्य यत्र यत्र स्वजनगृहद्वारादिषु बभ्राम तत्र तत्र तयोरुभयोरपि तद्गुणवर्णनमकरोत् । अतोऽहं ब्रवीमि—'प्रत्यक्षेऽपि कृते पापे" इति ।

व्याख्या—आरोप्य=संस्थाप्य, आयुः=जीवनम् ।

हिन्दी—स्त्री को अपने कन्धे पर चढ़ाकर उसने देवदत्त से कहा—"महानुभाव ! मेरे पूर्वपुण्यों के प्रभाव से ही आप यहाँ आये हैं । आपकी ही कृपा से मुझे सौ वर्ष की आयु मिली है । अतः आप भी मुझे आलिङ्गन करें और मेरे कन्धेपर चढ़ जायँ ।" यह कहकर उसने न चाहते

हुए भी देवदत्त को बलात् आलिङ्गन करके अपने कन्धे पर चढ़ा लिया। पुनः प्रसन्नता से नाचकर वह बोला—"हे ब्रह्मव्रतधारियों में धुरीण! आपने मेरा बहुत बड़ा उपकार किया है।" यह कह कर उसने उनको अपने कन्धे से उतार दिया। पुनः उनको साथ में लेकर वह अपने सम्पूर्ण सम्बन्धियों के यहाँ घूमने लगा। जहाँ-जहाँ वह जाता था वहाँ उनके उक्त गुणों की प्रशंसा किया करता था।

उक्त कथा को सुनकर रक्ताक्ष ने कहा—"इसीलिये मैं कहता हूँ कि प्रत्यक्षरूप से पाप करते हुये देखकर भी मूर्ख व्यक्ति झूठे समाधान से सन्तुष्ट हो जाता है···आदि।

तत्सर्वथा मूलोत्खाता वयं विनष्टाः स्मः। सुष्ठु खल्विदमुच्यते—

मित्ररूपा हि रिपवः सम्भाव्यन्ते विचक्षणः।
ये हितं वाक्यमुत्सृज्य विपरीतोपसेविनः॥ १९६॥

तथा च—

सन्तोऽप्यर्था विनश्यन्ति देशकालविरोधिनः।
अप्राज्ञान् मन्त्रिणः प्राप्य तमः सूर्योदये यथा॥ १९७॥

व्याख्या—मूलोत्खाताः=मूलोच्छिन्नाः, सम्भाव्यन्ते=स्वीक्रियन्ते, हितं=प्रियं, विपरीतोपसेविनः=अनुचितोपदेष्टारः॥ १९६॥ देशकालविरोधिनः=देशकालविरुद्धाः, अप्राज्ञान्=मूर्खान्॥ १९७॥

हिन्दी—रक्ताक्ष ने अन्य मन्त्रियोंको सम्बोधित करते हुये आगे पुनः कहा—"आपलोगों ने मूल ही खोद डाला है। अब हमलोगों का विनाश सुनिश्चित हो गया है। ठीक ही कहा गया है कि—

जो हित को छोड़कर अहित का परामर्श दिया करते हैं, ऐसे मित्रों को बुद्धिमान् जन शत्रु ही समझते हैं॥ १९६॥

और भी—देश तथा काल को न जानने वाले मूर्ख मन्त्रियों को पाकर राजा का वैभव भी उसी प्रकार से विनष्ट हो जाता है जैसे—सूर्योदय काल में तम विनष्ट हो जाता है॥ १९७॥

ततस्तद्वचोऽनादृत्य सर्वे ते स्थिरजीविनमुत्क्षिप्य स्वदुर्गमानेतुमारब्धाः। अथानीयमानः स्थिरजीव्याह—"देव! अद्याकिञ्चित्करेणैतदवस्थेन किं मयोपसङ्गृहीतेन? यत्कारणमिच्छामि दीप्तं वह्निमनुप्रवेष्टुम्। तदर्हसि मामग्निप्रदानेन समुद्धर्तुम्"।

अथ रक्ताक्षस्तस्यान्तर्गतभावं ज्ञात्वाऽब्रवीत्—"किमर्थमग्निपतनमिच्छसि?" सोऽब्रवीत्—"अहं तावद्युष्मदर्थे इमामापदं मेघवर्णेन प्रापितः, तदिच्छामि तेषां वैरयातनार्थमुलूकत्वम्" इति।

व्याख्या—तद्वचः=रक्ताक्षस्य वचनं, स्थिरजीविनमुत्क्षिप्य=स्थिरजीविनमुत्थाप्य, अकिञ्चित्करेण=असमर्थेन, एतदवस्थेन=एतादृशीमवस्थां प्राप्तेन, उपसङ्गृहीतेन=स्वदुर्गमानीय

रक्षितेन ? अग्निपतनम्=अग्निप्रवेशं, तेषां=वायसानां, वैरयातनार्थं वैरशोधनार्थम्, उलूकत्वम्=उलूकयोनावात्मन उत्पत्तिम्।

हिन्दी—रक्ताक्ष के परामर्श को तिरस्कृत करके वे उलूक स्थिरजीवी को उठाकर अपने दुर्ग में ले जाने लगे। अपने को ले जाते हुए देखकर स्थिरजीवी ने कहा—"देव! मुझ जैसे अकिञ्चित्कर और इस अवस्था को प्राप्त व्यक्ति की रक्षा करने से आपका क्या लाभ होगा? अतः मैं अग्नि में प्रविष्ट हो जाना चाहता हूँ। कृपया मुझे अग्नि प्रदान करके मेरा उद्धार करें।"

रक्ताक्ष ने उसके मनोगत भावों को जानकर पूछा—"आप अग्नि में क्यों प्रविष्ट होना चाहते हैं?" स्थिरजीवी ने कहा—"आप लोगों का पक्ष लेने के कारण ही मेघवर्ण ने मेरी यह दुर्दशा की है! अतः उससे बदला लेने के लिये मैं उलूक-योनि में जन्म लेना चाहता हूँ।"

**तच्च श्रुत्वा राजनीतिकुशलो रक्ताक्षः प्राह—'भद्र! कुटिलस्त्वं कृतकवचनचतुरश्च। त्वमुलूकयोनिगतोऽपि स्वकीयामेव वायसयोनिं बहु मन्यसे। श्रूयते चैतदाख्यानकम्—**

**सूर्यं भर्तारमुत्सृज्य पर्जन्यं मारुतं गिरिम्।**
**स्वजातिं मूषिका प्राप्ता स्वजातिर्दुरतिक्रमा॥ १९८॥**

**मन्त्रिणः प्रोचुः—"कथमेतत्"? । रक्ताक्षः कथयति—**

व्याख्या—कुटिलः=दुष्टाशयः, कृतवचनचतुरः=कपटवचनरचनाचतुरः। भर्तारं=पतिं, पर्जन्यं=मेघं, मारुतं=पवनं, गिरिं=पर्वतम्। दुरतिक्रमा=दुस्त्याज्या भवतीति॥ १९८॥

हिन्दी—स्थिरजीवी की बात सुनकर राजनीतिकुशल रक्ताक्ष ने कहा—'भद्र! आप अत्यन्त कुटिल हैं। कपटपूर्ण बातों को बनाने में भी आप अत्यन्त निपुण हैं। अतः उलूक-योनि में उत्पन्न होकर भी आप अपनी इसी योनि को उत्तम समझियेगा। इसी प्रसङ्ग में एक कथा सुनी जाती है कि—

एक चुहिया ने सूर्य, मेघ, पवन एवं पर्वत को छोड़कर स्वजातीय चूहे को ही अपना पति चुना था। जाति का मोह सहज में ही नहीं छूट जाता॥ १९८॥

रक्ताक्ष की बात को सुनकर मन्त्रियों ने पूछा—"यह कैसे?"।
रक्ताक्ष ने चुहिया की कथा को आरम्भ करते हुए कहा—

[ १३ ]

## ( मूषिकाविवाह-कथा )

**अस्ति विषमशिलातलस्खलिताम्बुनिर्घोषश्रवणसन्त्रस्तमत्स्यपरिवर्तनसञ्जनितश्वेतफेनशबलतरङ्गाया गङ्गायास्तटे जपनियमतपःस्वाध्यायोपवासयोगक्रियानुष्ठानपरायणैः परिपूतपरिमितजलजिघृक्षुभिः कन्दमूलफलशैवालाभ्यवहारकदर्थितशरीरवल्क-**

लकृतकौपीनमात्रप्रच्छादनैस्तपस्विभिराकीर्णमाश्रमपदम्। तत्र याज्ञवल्क्यो नाम कुलपतिरासीत्।

व्याख्या—विषमाः = उच्चावचाः, शिलातलानि = प्रस्तरखण्डतलानि, अम्बुनिर्घोषः = प्रवाहध्वनिः, मत्स्यपरिवर्तनसञ्जनितः = मत्स्यपरिलुण्ठनोत्पन्नः, शबलतरङ्गायाः = चित्रितधारायाः (विषमशिलातलात् स्खलितं यज्जलं तस्य निर्घोषश्रवणेन सन्त्रस्ता ये मत्स्यास्तेषां परिवर्तनेन सञ्जनिता ये श्वेतफेनास्तैः शबलास्तरङ्गा यस्याः सा, तस्याः), परिपूतपरिमितजलजिघृक्षुभिः = पवित्रपरिमितजलग्रहणेच्छुभिः (परिपूतं परिमितं च यज्जलं तद्ग्रहीतुमिच्छा येषां तैः), कन्दमूलफलशैवालाभ्यवहारकदर्थितशरीरैः—कन्दमूलफलशैवालानाम् अभ्यवहारेण = व्यवहारेण आहारकरणेन) कदर्थितानि = क्लेशितानि स्वशरीराणि यैस्तैः, कौपीनमात्रप्रच्छादनैः = कौपीनमात्रं प्रच्छादनं येषां तैः, तपस्विभिः = तापसैः, आकीर्णं = व्याप्तम्, आश्रमपदम् = आश्रमस्थानम्। कुलपतिः = आचार्यः।

हिन्दी—विषम शिलाखण्डों से गिरनेवाले जल प्रवाह से उत्पन्न हुये निर्घोष को सुनकर भयभीत हो उठने वाली मछलियों के उलटने-पलटने से निष्पन्न श्वेत फेनों द्वारा विचित्रवर्ण की लगने वाली तरङ्गों से युक्त गङ्गा के तटपर जप, नियम, तप, स्वाध्याय, उपवास एवं योग क्रियाओं में लगे हुये पवित्र परिमित जल को पीकर और कन्द, मूल, फल एवं शैवाल आदि को खाकर अपने शरीर को सुखा डालने वाले तथा वल्कल द्वारा निर्मित कौपीन मात्र से अपने शरीर को ढकने वाले तपस्वियों से परिपूर्ण एक आश्रम था। उस आश्रम में याज्ञवल्क्य नाम के एक ऋषि रहा करते थे जो वहाँ के कुलपति थे।

तस्य जाह्नव्यां स्नात्वोपस्प्रष्टुमारब्धस्य करतले श्येनमुखात्परिभ्रष्टा मूषिका पतिता। तां दृष्ट्वा न्यग्रोधपत्रेऽवस्थाप्य पुनः स्नात्वोपस्पृश्य च प्रायश्चित्तादिक्रियां कृत्वा मूषिकां तां स्वतपोबलेन कन्यकां कृत्वा समादाय स्वाश्रममानिनाय। अनपत्यां च जायामाह—"भद्रे! गृह्यतामियं तव दुहितोत्पन्ना, प्रयत्नेन संवर्द्धनीया" इति। ततस्तया संवर्द्धिता लालिता पालिता च यावद् द्वादशवर्षा सञ्जाता।

व्याख्या—उपस्प्रष्टुमारब्धस्य = आचमनं कर्तुमुद्यतस्य, करतले = करे, श्येनमुखात् = पतत्रिमुखात्, परिभ्रष्टा = च्युता, न्यग्रोधपत्रे = वटपत्रे, उपस्पृश्य = आचमनं कृत्वा, अनपत्याम् = अपत्यहीनां, जायां = भार्यां, दुहिता = पुत्री, सञ्जाता = जाता।

हिन्दी—गङ्गा के पवित्र जल में स्नान करके आचमन करने को उद्यत महर्षि याज्ञवल्क्य के हाथ में श्येन के मुख से छूटी हुई एक चुहिया आ गिरी। उसको देखकर उन्होंने एक वटपत्र पर रख दिया और पुनः स्नान करने के बाद आचमन एवं प्रायश्चित्त आदि करके उन्होंने उस चुहिया को अपने तपोबल से कन्या के रूप में परिवर्तित कर दिया। तदनन्तर वे उसको लेकर अपने आश्रम में लौट आये। आश्रम में आकर उन्होंने अपनी अपत्यहीन स्त्री से कहा—भद्रे! इस कन्या को ले जाओ, इसे अपनी ही कन्या समझना और प्रयत्नपूर्वक

इसका पालन करना।" ऋषिपत्नी के द्वारा संवर्द्धित, लालित एवं पालित वह कन्या धीरे-धीरे बारह वर्ष की हो गयी।

अथ विवाहयोग्यां तां दृष्ट्वा भर्तारमेवं जायोवाच—"भो भर्तः! किमिदं नावबुध्यसे यथास्याः स्वदुहितुर्विवाहसमयातिक्रमो भवति?"

असावाह—"साधूक्तम्। उक्तञ्च—

स्त्रियः पुरा सुरैर्भुक्ता सोमगन्धर्ववह्निभिः।
भुञ्जते मानुषाः पश्चात्तस्माद्दोषो न विद्यते॥ १९९॥
सोमस्तासां ददौ शौचं गन्धर्वाः शिक्षितां गिरम्।
पावकः सर्वमेध्यत्वं तस्मान्निष्कल्मषाः स्त्रियः॥ २००॥

व्याख्या—नावबुध्यसे=नावगच्छसि, शौचं=शुद्धिं, शिक्षितां=मधुरां, गिरं=वाणीं सर्वमेध्यत्वं=सर्वशौचं यज्ञार्हत्वञ्च। निष्कल्मषाः=निष्पापाः॥ १९९–२००॥

हिन्दी—विवाह के योग्य हुई उस कन्या को देखकर याज्ञवल्क्य की स्त्री ने अपने पति से कहा—"पतिदेव! आप यह क्यों नहीं समझ रहे हैं कि आपकी इस कन्या के विवाह का समय व्यतीत होता जा रहा है?।"

स्त्री की बात को सुनकर याज्ञवल्क्य ने कहा—"देवि! तुमने ठीक कहा है। कहा भी गया है कि—

सोम, गन्धर्व तथा अग्नि सर्वप्रथम स्त्रियों का उपभोग करते हैं। उनके उपभोग कर लेने के बाद ही मनुष्य उनका उपभोग करता है। अतः स्त्रियों में किसी प्रकार का दोष नहीं आता। वे सर्वदा निर्दोष ही बनी रहती हैं॥ १९९॥

यतः सोम ने स्त्रियों को पवित्रता दी है, गन्धर्वों ने उन्हें मधुर एवं चतुर वाणी दी है और अग्नि ने उन्हें सर्वमेध्यत्व (सर्वाङ्गीण पवित्रता) प्रदान की है, अतः वे निष्पाप होती हैं। उनका शरीर सर्वदा शुद्ध रहता है॥ २००॥

असम्प्राप्तरजा गौरी प्राप्ते रजसि रोहिणी।
अव्यञ्जना भवेत्कन्या कुचहीना च नग्निका॥ २०१॥
व्यञ्जनैस्तु समुत्पन्नैः सोमो भुङ्क्ते हि कन्यकाम्।
पयोधराभ्यां गन्धर्वा रजस्यग्निः प्रतिष्ठितः॥ २०२॥
तस्माद्विवाहयेत्कन्यां यावन्नर्तुमती भवेत्।
विवाहश्चाष्टवर्षायाः कन्यायास्तु प्रशस्यते॥ २०३॥

व्याख्या—असम्प्राप्तरजा=अप्राप्तपुष्पा, अव्यञ्जना=अप्राप्तरोमा, व्यञ्जनैः=रोमादिभिः, पयोधराभ्यां=स्तनाभ्यां, रजसि=पुष्पे, ऋतुमती=स्त्रीधर्मिणी॥ २०१–२०३॥

हिन्दी—रजोदर्शन से पूर्व कन्या को 'गौरी' कहा गया है। रजोदर्शन के बाद वह 'रोहिणी' हो जाती है। जबतक उसके शरीर में रोंए नहीं आ जाते हैं तबतक वह कन्या कहलाती है और स्तनरहित होने तक 'नग्निका' कही जाती है॥ २०१॥

रोमादि के उत्पन्न हो जाने पर कन्या का उपभोग सोम करता है। पयोधरों के आ जाने पर गन्धर्व उसका उपभोग करते हैं और रजोदर्शन के बाद अग्नि उसका उपभोग करता है ॥ २०२ ॥

व्यञ्जनं हन्ति वै पूर्वं परं चैव पयोधरौ।
रतिरिष्टांस्तथा लोकान् हन्याच्च पितरं रजः ॥ २०४ ॥
ऋतुमत्यां तु तिष्ठन्त्यां स्वेच्छादानं विधीयते।
तस्मादुद्वाहयेन्नग्नां मनुः स्वायम्भुवोऽब्रवीत् ॥ २०५ ॥
पितृवेश्मनि या कन्या रजः पश्यत्यसंस्कृता।
अविवाह्या तु सा कन्या जघन्या वृषली मता ॥ २०६ ॥

व्याख्या—पूर्वं=पूर्वकृतं पुण्यं, रतिः=भोगेच्छा ॥ २०४ ॥ असंस्कृता=अविवाहिता, पितृवेश्मनि=पितृगृहे, जघन्या=विनिन्दिता (सपापा), वृषली=शूद्रा ॥ २०६ ॥

हिन्दी—विवाह से पूर्व ही यदि कन्या के गुप्ताङ्ग में रोम उत्पन्न हो जाता है तो वह पिता के पूर्वसञ्चित पुण्य को नष्ट कर देता है। यदि स्तन उभड़ आते हैं तो भावी पुण्य को विनष्ट कर देते हैं। यदि पिता के घर में ही कन्या को पति-समागम की इच्छा हो जाती है तो वह पिता के परलोक को विनष्ट कर डालती है और यदि रजोदर्शन हो जाता है तो पिता का ही विनाश समझना चाहिये ॥ २०४ ॥

यदि कन्या पिता के घर में ही ऋतुमती हो गयी हो तो उसके विवाह के लिये गोत्रादि का विशेष विचार नहीं करना चाहिये। तत्काल जो भी वर उपलब्ध हो उससे उसका विवाह कर देना चाहिये। उक्त परिस्थितियों से बचने के लिये मनु का कथन है कि—"नग्ना" कन्या का ही विवाह सर्वोत्तम होता है ॥ २०५ ॥

पिता के ही घर में यदि कन्या अविवाहित अवस्था में रजोदर्शन कर लेती है तो वह वृषली एवं जघन्या हो जाती है। ऐसी कन्या से विवाह नहीं करना चाहिये। (रजोदर्शन के पश्चात् शास्त्रीय विधि से कन्या का विवाह करना आवश्यक नहीं रह जाता है। इसको बिना विवाह के ही प्रदान कर देना चाहिये) ॥ २०६ ॥

श्रेष्ठेभ्यः सदृशेभ्यश्च जघन्येभ्यो रजस्वला।
पित्रा देया विनिश्चित्य यतो दोषो न विद्यते ॥ २०७ ॥

अतोऽहमेनां सदृशाय प्रयच्छामि, नान्यस्मै। उक्तञ्च—

ययोरेव समं वित्तं ययोरेव समं कुलम्।
तयोर्विवाहः सख्यञ्च न तु पुष्टविपुष्टयोः ॥ २०८ ॥

तथा च—

कुलञ्च शीलञ्च सनाथता च, विद्या च वित्तञ्च वपुर्वयश्च।
एतान् गुणान् सप्त विचिन्त्य देया, कन्या बुधैः शेषमचिन्तनीयम् ॥ २०९ ॥

व्याख्या—सदृशाय=अनुरूपाय, सख्यं=मित्रत्वं, बुधैः=पण्डितैः ॥ २०७–२०९ ॥

हिन्दी—यदि कन्या पिता के यहाँ ही रजस्वला हो जाती है तो यथाशक्य उससे श्रेष्ठ एवं उसके अनुरूप वर से ही उसका विवाह करना चाहिये। यदि ऐसा करना शक्य न हो तो उससे हीन एवं असदृश वर से भी विवाह कर देना चाहिये। उक्त अवस्था में पिता को बहुत अधिक विचार नहीं करना चाहिये। ऋतुमती कन्या के विवाह में योग्यायोग्य दोष नहीं लगता ॥ २०७ ॥

अतः इसका विवाह मैं इसके योग्य एवं अनुरूप वर से ही करूँगा। अन्य किसी से नहीं करूँगा। कहा भी गया है कि—

जिन व्यक्तियों का कुल तथा वित्त समान हो, उन्हीं व्यक्तियों को आपस में मैत्री या शत्रुता का सम्बन्ध करना चाहिये। पुष्ट एवं हीन व्यक्तियों के मध्य में उक्त सम्बन्ध नहीं होना चाहिये ॥ २०८ ॥

और भी—कुल, शील, सनाथता, विद्या, वित्त, शरीर तथा वय—केवल इन्हीं सात गुणों का विचार कन्यादान के समय में करना चाहिये। शेष बातों की चिन्ता नहीं करनी चाहिये ॥ २०९ ॥

**तद्यद्यस्या रोचते तदा भगवन्तमादित्यमाहूय तस्मै प्रयच्छामि।"**

**सा प्राह—"इह को दोषः? क्रियतामेतत्।" अथ मुनिना रविराहूतः। वेद-मन्त्रामन्त्रणप्रभावात्तत्क्षणादेवाऽभ्युपराभ्यादित्यः प्रोवाच—"भगवन्! किमहमाहूतः?"। सोऽब्रवीत्—"एषा मदीया कन्यका तिष्ठति। यद्येषा त्वां वृणोति तदुद्वहस्व" इति। एवमुक्त्वा स्वदुहितरमुवाच—"पुत्रि! किं तव रोचते एष भगवांस्त्रैलोक्यदीपो भानुः"?। पुत्रिकाऽब्रवीत्—"तात! अतिदहनात्मकोऽयं नाऽहमेनमभिलषामि। तदस्मादन्यः प्रकृष्टतरः कश्चिदाहूयताम्।"**

व्याख्या—रविः=सूर्यः, उद्वहस्व=अनया सह विवाहं कुरु। भानुः=सूर्यः। दहनात्मकः=दाहकः। प्रकृष्टतरः=श्रेष्ठतरः।

हिन्दी—अतः यदि यह प्रस्तुत हो तो भगवान् सूर्य को बुलाकर उनके साथ इसका विवाह कर दूँ।"

पति की बात को सुनकर पत्नी ने कहा—"इसमें दोष ही क्या है! यही कीजिये।" पत्नी की सम्मति से मुनि ने सूर्य का आवाहन किया। वेदमन्त्रों के द्वारा किये गये आमन्त्रण के प्रभाव से भगवान् सूर्य ने तत्काल आकर पूछा—"भगवन्! आपने मुझे क्यों बुलाया है?" मुनि ने कहा—"यह मेरी कन्या है। यदि यह आपके साथ विवाह करना चाहे तो आप इसका विवाह अपने साथ कर लीजिये।" मुनि ने पुनः अपनी कन्या को सम्बोधित करके कहा—"पुत्रि! क्या भगवान् भुवनभास्कर तुमको पसन्द हैं?"। पुत्री ने कहा—"तात! ये तो अत्यन्त दाहक हैं। मैं इनके साथ विवाह करना नहीं चाहती। अतः इनसे भी प्रकृष्टतर किसी वर का आवाहन कीजिये।"



**अथ तस्यास्तद्वचनं श्रुत्वा मुनिर्भास्करमुवाच—"भगवन्! त्वत्तोऽप्यधिकोऽस्ति**

कश्चित् ?"। भास्करः प्राह—"अस्ति मत्तोऽप्यधिको मेघो येनाच्छादितोऽहमदृश्यो भवामि।" अथ मुनिना मेघमप्याहूय कन्याभिहिता—"पुत्रिके ! किमस्मै त्वां प्रयच्छामि ?" सा प्राह—"कृष्णवर्णोऽयं जडात्मा च। तदस्मादन्यस्य प्रधानस्य कस्यचिन्मां प्रयच्छ।" अथ मुनिना मेघोऽपि पृष्टः—"भो मेघ ! त्वत्तोऽप्यधिकोऽस्ति कश्चित् ?"। मेघेनोक्तं—"मत्तोऽधिकोऽस्ति वायुः। वायुना हतोऽहं सहस्रधा यामि।" तच्छ्रुत्वा मुनिना वायुराहूतः। आह च—"पुत्रिके ! किमेष वायुस्ते विवाहायोत्तमः प्रतिभाति ?"। साऽब्रवीत्—"तात ! अतिचपलोऽयं, तदस्मादप्यधिकः कश्चिदानीयताम्।"

व्याख्या—अधिकः=प्रकृष्टतरः, जडः=मूर्खः, सहस्रधा यामि=विच्छिन्नो भवामि, प्रतिभाति=रोचते।

हिन्दी—कन्या की बात को सुनकर मुनि ने भास्कर से पूछा—"भगवन् ! क्या आप से श्रेष्ठ कोई है !"। भास्कर ने उत्तर दिया—"भगवन् ! है, मेघ मुझसे भी श्रेष्ठ होता है। क्योंकि उसके द्वारा आच्छादित होकर मैं अदृश्य हो जाता हूँ।" मुनि ने तत्काल मेघ को बुलाकर अपनी कन्या से कहा—"पुत्रि ! इनके साथ तुम्हारा विवाह कर दूँ !" कन्या ने कहा—"यह तो बहुत काला और मूर्ख है। अतः इससे श्रेष्ठ कोई हो तो उसी के साथ मेरा विवाह कीजिये।" मुनि ने मेघ से पूछा—"मेघ ! क्या आपसे भी श्रेष्ठ कोई दूसरा है ?"।

मेघ ने उत्तर दिया—भगवन् ! मुझसे श्रेष्ठ तो वायु है। वायु के आघात से मैं छिन्न-भिन्न होकर हजारों भागों में विभक्त हो जाता हूँ।"

पुनः मुनि ने वायु का आवाहन किया। वायु के उपस्थित होनेपर उन्होंने उस कन्या से पूछा—'पुत्रि ! क्या ये पवनदेव विवाह के लिए तुमको पसन्द हैं ?।

कन्या ने उत्तर में कहा—"तात ! यह तो अत्यन्त चपल हैं। अतः इससे भी श्रेष्ठतम कोई हो तो उसको आवाहित कीजिये।"

मुनिराह—"वायो ! त्वत्तोऽप्यधिकोऽस्ति कश्चित् ?"। पवनेनोक्तं—"मत्तोऽप्यधिकोऽस्ति पर्वतः, तेन संस्तभ्य बलवानप्यहं ध्रिये।" अथ मुनिः पर्वतमाहूय कन्यामुवाच—"पुत्रिके ! किं त्वामस्मै प्रयच्छामि ?"। सा प्राह—"तात ! कठिनात्मकोऽयं स्तब्धश्च। तदन्यस्मै देहि माम्।" मुनिना पर्वतः पृष्टः—"भो पर्वतराज ! त्वत्तोऽप्यधिकोस्ति कश्चित् ?"।

गिरिणोक्तं—"मत्तोप्यधिकाः सन्ति मूषका ये मच्छरीरं बलाद्विदारयन्ति।"

व्याख्या—पवनः=वायुः। संस्तभ्य=निगृह्य, कठिनः=कठोरः स्तब्धः=निश्चलः।

हिन्दी—मुनि ने वायु से पूछा—"आप से भी श्रेष्ठ कोई है ?"। पवन ने कहा—'मुझसे भी श्रेष्ठतर पर्वत होता है। बलवान् होनेपर भी मैं उसके द्वारा निगृहीत हो जाता हूँ। उसे हिला डुला भी नहीं पाता। पुनः मुनि ने पर्वत को बुलाकर कन्या से पूछा—

"पुत्रि ! क्या इनके साथ तुम्हारा विवाह कर दूँ ?"। कन्या ने कहा—"तात ! यह तो बहुत कठोर और निश्चल है। अतः किसी अन्य के साथ मेरा विवाह कीजिये तो अच्छा हो।" कन्या के आग्रह को सुनकर मुनि ने पर्वत से पूछा—"पर्वतराज ! क्या आपसे भी श्रेष्ठतर कोई है ?"। पर्वत ने कहा—"मुझसे श्रेष्ठ चूहे होते हैं। वे मेरे शरीर को अनायास ही काट डालते हैं।"

ततो मुनिर्मूषकमाहूय तस्या अदर्शयत्। आह च—"पुत्रिके ! त्वामस्मै प्रयच्छामि ?" किमेष प्रतिभाति ते मूषिकराजः ?"। सापि दृष्ट्वा "स्वजातीय एष' इति मन्यमाना पुलकोद्धुषितशरीरोवाच—"तात ! मां मूषिकां कृत्वाऽस्मै प्रयच्छ, येन स्वजातिविहितं गृहिणीधर्ममनुतिष्ठामि।"

ततः सोऽपि स्वतपोबलेन तां मूषिकां कृत्वा तस्मै प्रादात्। अतोऽहं ब्रवीमि—"सूर्यं भर्तारमुत्सृज्य" इति।

व्याख्या—स्वजातीयः=आत्मसदृशः स्वजातीयश्च। पुलकोद्धुषितशरीरा=पुलकाञ्चितदेहा, स्वजातिविहितं=स्वजातिनिर्मितं, गृहिणीधर्मं=पत्नीधर्मम्।

हिन्दी—कन्या की बात को सुनकर मुनि ने मूषकराज को बुलाकर अपनी कन्या को दिखा दिया और पूछा—"पुत्रि ! इसके साथ तुम्हारा विवाह कर दूँ ? क्या यह मूषकराज तुमको पसन्द है ?"। कन्या ने उस चूहे को देखकर अपने मन में सोचा कि—"यह स्वजातीय है"। उसको देखते ही वह रोमाञ्चित हो उठी। पुनः अपने पिता से उसने कहा—तात ! मुझे चुहिया बनाकर आप इसके साथ मेरा विवाह कर दें, जिससे मैं स्वजातिविहित गृहिणीधर्म का पालन कर सकूँ।"

कन्या की इच्छा को जानकर मुनि ने अपने तपोबल से उसको चुहिया बना दिया और उस चूहे के साथ उसका विवाह भी कर दिया।"

उक्त कथा को सुनाने के बाद रक्ताक्ष ने कहा—"इसीलिये मैं कहता हूँ कि चुहिया ने सूर्य, मेघ, वायु तथा पर्वत को छोड़कर चूहे को ही अपना पति चुना था।"

अथ रक्ताक्षवचनमनादृत्य तैः स्ववंशविनाशाय स स्वदुर्गमुपनीतः। नीयमानश्चान्तर्लीनमवहस्य स्थिरजीवी व्यचिन्तयत्—

"हन्यतामिति येनोक्तं स्वामिनो हितवादिना।
स एवैकोऽत्र सर्वेषां नीतिशास्त्रार्थतत्त्ववित्॥ २१०॥

तद्यदि तस्य वचनमकरिष्यन्नेते ततो न स्वल्पोऽप्यनर्थोऽभविष्यदेतेषाम्"।

व्याख्या—अनादृत्य=तिरस्कृत्य, तैः=उलूकैः, अन्तर्लीनं=स्वगतम्, अवहस्य=विहस्य। हितवादिना=हितचिन्तकेन, नीतिशास्त्रार्थतत्त्ववित्=नीतिज्ञः॥ २१०॥ एते=उलूकाः, अनर्थः=विपत्तिः।



हिन्दी—रक्ताक्ष के कथन को तिरस्कृत करके उलूकों ने आत्मविनाश के लिये उस

स्थिरजीवी को अपने दुर्ग में पहुँचा दिया। उलूकों के दुर्ग में पहुँचाये जाने वाले स्थिरजीवी ने मन ही मन हँसकर सोचा—

"राजा के प्रियविधायक जिस मन्त्री ने मुझे मार डालने का परामर्श दिया था, एकमात्र वही इनमें नीतिज्ञ है ॥ २१० ॥

अतः यदि उसकी बात को ये उलूक मान लिये होते तो इनपर थोड़ी भी विपत्ति नहीं आ पाती"।

अथ दुर्गद्वारं प्राप्यारिमर्दनोऽब्रवीत्—"भो भो ? हितैषिणोऽस्य स्थिरजीविनो यथा समीहितं स्थानं प्रयच्छत।"

तच्च श्रुत्वा स्थिरजीवी व्यचिन्तयत्—"मया तावदेषां वधोपायश्चिन्तनीयः। स मया मध्यस्थेन न साध्यते, यतो मदीयमिङ्गितादिकं विचारयन्तस्तेऽपि सावधाना भविष्यन्ति। तद्दुर्गद्वारमधिश्रितोऽभिप्रेतं साधयामि।" इति निश्चित्य उलूकपतिमाह—"देव! युक्तमिदं यत्स्वामिना प्रोक्तं परमहमपि नीतिज्ञस्तेऽहितश्च। यद्यप्यनुरक्तः शुचिस्तथापि दुर्गमध्ये आवासो नार्हः। तदहमत्रैव दुर्गद्वारस्थः प्रत्यहं भवत्पादपद्मरजःपवित्रीकृततनुः सेवां करिष्यामि।"

व्याख्या—हितैषिणः = प्रियविधायकस्य, यथा समीहितं = यथेच्छितं, = मध्यस्थेन = दुर्गमध्यस्थेन, इङ्गितादिकं = विचेष्टादिकं, सावधानाः = सतर्काः, अभिप्रेतं = स्वाभिप्रायं अहितः = शत्रुः।

हिन्दी—अपने दुर्ग के द्वारपर पहुँचकर अरिमर्दन ने सेवकों से कहा—"सेवको! स्थिरजीवी मेरे हितैषी हैं। इनकी इच्छानुसार इनको स्थान दे दो।"

अरिमर्दन की आज्ञा को सुनकर स्थिरजीवी ने सोचा—उलूकों के दुर्ग तक तो मैं पहुँच गया। अब मुझे इनके वध का उपाय सोचना चाहिये। किन्तु उस कार्य को मैं दुर्ग के भीतर रहकर नहीं कर सकता हूँ। क्योंकि—मेरी चेष्टाओं को देखकर ये सावधान हो जायेंगे। अतः दुर्ग के द्वार पर रहकर ही मुझे अपने उद्देश्य की पूर्ति करनी चाहिये।" यह सोचकर उसने उलूकाधिपति से कहा—"देव! आप ने जो आदेश दिया है, वह तो ठीक ही है। किन्तु मैं भी तो नीतिज्ञ हूँ और आपका शत्रु भी हूँ यद्यपि इस समय मैं आपका भक्त, हितैषी तथा विश्वस्त हो चुका हूँ तथापि मेरा दुर्ग के भीतर रहना अच्छा नहीं होगा।

अतएव मैं दुर्ग के द्वारपर ही रहकर आपके चरण-रज से अपने शरीर को पवित्र करके आपकी सेवा करता रहूँगा!"

"तथा" इति प्रतिपन्ने प्रतिदिनमुलूकपतिसेवकास्ते प्रकाममाहारं कृत्वोलूकराजादेशात्प्रकृष्टमांसाहारं स्थिरजीविने प्रयच्छन्ति।

अथ कतिपयैरहोभिर्मयूर इव स बलवान् संवृत्तः। अथ रक्ताक्षः स्थिरजीविनं पोष्यमाणं दृष्ट्वा सविस्मयो मन्त्रिजनं राजानञ्च प्रत्याह—"अहो, मूर्खोऽयं मन्त्रिजनो भवांश्चेत्येवमहमवगच्छामि। उक्तञ्च—

पूर्वन्तादहं मूर्खो द्वितीयः पाशवन्धकः।
ततो राजा च मन्त्री च सर्वं वैं मूर्खमण्डलम्" ॥ २११ ॥

व्याख्या—प्रतिपन्ने स्वीकृते सति, प्रकाममाहार=यथेच्छं भोजनं, प्रकृष्टमांसाहारं= प्रभूतमुत्तमं च मांसाहारं, अहोभिः=दिनैः, पोष्यमाणं=परिपोष्यमाणम्।

हिन्दी—राजा के स्वीकार कर लेने पर वह स्थिरजीवी दुर्गद्वार पर रहने लगा। उलूकराज के सेवक यथेच्छ आहार-विवार के बाद राजा की आज्ञा से उत्कृष्ट एवं पर्याप्त मांसाहार लाकर स्थिरजीवी को दिया करते थे।

कुछ ही दिनों में वह स्थिरजीवी मयूर की तरह खूब बलवान् एवं पुष्ट हो गया। स्थिरजीवी को उक्त प्रकार से पालित एवं पोषित होते देखकर विस्मयान्वित होकर रक्ताक्ष ने मन्त्रियों एवं राजा को सम्बोधित करके कहा—"महाराज! आपके ये मन्त्री परम मूर्ख हैं और आप भी मूर्ख ही हैं। कम से कम मैं तो यही समझ रहा हूँ। कहा भी गया है कि—

पहले तो मैं ही सब से अधिक मूर्ख हूँ। दूसरा मूर्ख यह पाशवन्धक है। इसके बाद यह राजा मूर्ख है और इसका मन्त्री भी मूर्ख है। जान पड़ता है यह मूर्खों का ही समूह है ॥ २११ ॥

मन्त्रियों ने पूछा—"यह कैसे?" रक्ताक्ष ने कहा—

[ १३ ]

## ( स्वर्णपुरीषपक्षि-कथा )

अस्ति कस्मिंश्चित्पर्वतैकदेशे महान् वृक्षः। तत्र च सिन्धुकनामा कोऽपि पक्षी प्रतिवसति स्म। तस्य पुरीषे सुवर्णमुत्पद्यते। अथ कदाचित्तमुद्देशं व्याधः कोऽपि समाययौ। स च पक्षी तदग्रत एव पुरीषमुत्ससर्ज। अथ पातसमकालमेव तत्सुवर्णीभूतं दृष्ट्वा व्याधो विस्मयमगमत्—"अहो, मम शिशुकालादारभ्य शकुनिवन्धव्यसनिनोऽशीतिवर्षाणि समभूवन्, न च कदाचिदपि पक्षिपुरीषे सुवर्णं दृष्टम्" इति विचिन्त्य तत्र वृक्षे पाशं ववन्ध।

व्याख्या—उद्देशं=प्रदेशं, पातसमकालमेव=भूमौ पुरीषे पतिते सत्येव, शिशुकालात् =बाल्यात्।

हिन्दी—पर्वतीय प्रदेश के किसी एक भाग में बड़ा वृक्ष था। उस वृक्ष पर सिन्धुक नाम का एक पक्षी रहा करता था। उसके पुरीष में सुवर्ण उत्पन्न हुआ करता था। एक दिन एक व्याध आखेट करने के उद्देश्य से उसी प्रदेश में गया और उस पक्षी ने उस व्याध के आगे ही पुरीषोत्सर्ग किया। पुरीष के पृथ्वी पर गिरते ही सुवर्ण हो जाते हुये देखकर व्याध ने साश्चर्य अपने मन में सोचा—"पक्षियों को फँसाने का व्यवसाय करते हुये बचपन से लेकर आजतक मेरी आयु के अस्सी वर्ष व्यतीत हो गये किन्तु कभी भी मैंने किसी पक्षी के पुरीष में सुवर्ण उत्पन्न होते नहीं देखा था।" यह सोचकर उसने उसी वृक्ष पर अपने पाश को बांध दिया और स्वयं थोड़ी दूर पर बैठकर प्रतीक्षा करने लगा।

अथासावपि पक्षी मूर्खस्तत्रैव विश्वस्तचित्तो यथापूर्वमुपविष्टस्तत्कालमेव पाशेन बद्धः। व्याधस्तु तं पाशादुन्मुच्य पञ्जरके संस्थाप्य निजावासं नीतवान्। अथ चिन्तयामास—"किमनेन सापायेन पक्षिणाहं करिष्यामि? यदि कदाचित्कोऽप्यमुमीदृशं ज्ञात्वा राज्ञे निवेदयिष्यति तन्नूनं प्राणसंशयो मे भवेदतः स्वयमेव पक्षिणं राज्ञे निवेदयामि" इति विचार्य तथैवानुष्ठितवान्।

व्याख्या—पाशात्=बन्धनात्, उन्मुच्य=विमुच्य, सापायेन=विपद्बहुलेन (विपत्तिकरेणेत्यर्थः)।

हिन्दी—वह पक्षी अपनी मूर्खता के कारण विश्वस्त होकर पाशयुक्त अपने स्थान पर पूर्ववत् जाकर बैठ गया। उस स्थान पर बैठते ही वह जाल में फँस गया। व्याध ने जाल में फँसे हुये उस पक्षी को जाल से निकाल कर पिंजड़े में बन्द कर दिया और उसे लेकर वह अपने घर चला आया। घर आकर उसने सोचा कि—"इस आपद्युक्त पक्षी को लेकर मैं क्या करूँगा? यदि किसी ने इस विचित्र पक्षी को देख लिया तो वह जाकर राजा से अवश्य कहेगा। और राजा को इस बात की जानकारी होते ही मेरे प्राणों पर सङ्कट आजायगा। अतः मैं स्वयं इसे लेजाकर राजा को दे आता हूँ।" यह सोचकर व्याध ने उस विचित्र पक्षी को ले जाकर राजा को दे दिया।

अथ राजापि तं पक्षिणं दृष्ट्वा विकसितनयनवदनकमलः परां तुष्टिमुपागतः। प्राह चैवं—"हंहो रक्षापुरुषाः! एनं पक्षिणं यत्नेन रक्षत। अशनपानादिकं चास्य यथेच्छं प्रयच्छत।"

अथ मन्त्रिणाभिहितं—"किमनेनाश्रद्धेयव्याधवचनप्रत्ययमात्रपरिगृहीतेनाण्डजेन? किं कदाचित्पक्षिपुरीषे सुवर्णं सम्भवति? तन्मुच्यतां पञ्जरबन्धनादयं पक्षी" इति।

मन्त्रिवचनाद्राज्ञा मोचितोऽसौ पक्ष्युन्नतद्वारतोरणे समुपविश्य सुवर्णमयीं विष्ठां विधाय—"पूर्वं तावदहं मूर्खः" इति श्लोकं पठित्वा यथासुखमाकाशमार्गेण प्रायात्। अतोऽहं ब्रवीमि—"पूर्वं तावदहं मूर्खः" इति।

व्याख्या—विकसितनयनवदनकमलः=प्रसन्नाननः, तुष्टिं=सन्तोषं, यत्नेन=विशेषरूपेण अशनं=भोजनं, पानं=जलम्, अश्रद्धेयः=विश्वासानर्हः, अण्डजेन=खगेन, उन्नतद्वारतोरणे=दुर्गद्वारतोरणे। विष्ठां=पुरीषं, यथासुखं=यथेच्छम्।

हिन्दी—राजा उस पक्षी को देखकर बहुत प्रसन्न हुआ और उस पक्षी को पाकर उसे बड़ा सन्तोष हुआ। उसने अपने सेवकों को सम्बोधित करके कहा—"रक्षकों! इस पक्षी को प्रयत्नपूर्वक पालो। जैसा और जितना भी यह चाहे भोजन तथा जल आदि प्रदान करते रहना।"

राजा के उक्त आदेश को सुनकर उसके मन्त्री ने कहा—"अविश्वस्त व्याध के कथन में विश्वास करके इस पक्षी को पिंजड़े में बन्द कर रखने से क्या लाभ है? क्या कभी किसी पक्षी के

पुरीष में सोना उत्पन्न हो सकता है? अतः इस पक्षी को पिंजड़े के बन्धन से मुक्त कर देना चाहिए।"

मन्त्री बात को मानकर राजा ने उस पक्षी को मुक्त करा दिया। अपनी विमुक्ति के बाद वह पक्षी मुख्य द्वार के तोरण पर जाकर बैठ गया और वहाँ स्वर्णमय पुरीषोत्सर्ग करके उसने कहा—'सर्वप्रथम तो मैं मूर्ख हूं। इसके बाद राजा और मन्त्री भी मूर्ख हैं' इत्यादि।

उक्त श्लोक पढ़ने के बाद वह आकाश में उड़ गया और अभिलषित दिशा की ओर चला गया।

उक्त कथा को सुनने के बाद रक्ताक्ष ने कहा—इसीलिए मैं कहता हूँ कि सर्वप्रथम तो मैं ही मूर्ख हूँ। पुनः यह राजा मूर्ख है। तदन्तर यह मन्त्री मूर्ख है। तत्पश्चात् यह समुदाय भी मूर्ख है। अभिप्राय यह है कि सम्पूर्ण मण्डली ही मूर्खों की है।"

अथ ते पुनरपि प्रतिकूलदैवतया हितमपि रक्ताक्षवचनमनादृत्य भूयस्तं प्रभूत-मांसादिविधिनाहारेण पोषयामासुः। अथ रक्ताक्षः स्ववर्गमाहूय रहः प्रोवाच—"अहो, एतावदेवास्मद्भूपतेः कुशलं दुर्गश्च। तदुपदिष्टं मया यत्कुलक्रमागतः सचिवोऽभिधत्ते। तद्वयमन्यत्पर्वतदुर्गं सम्प्रति समाश्रयामः। उक्तञ्च यतः—

अनागतं यः कुरुते स शोभते, स शोच्यते यो न करोत्यनागतम्।
वनेऽत्र संस्थस्य समागता जरा, बिलस्य वाणी न कदापि मे श्रुता" ॥ २१२ ॥

ते प्रोचुः—"कथमेतत्" ? रक्ताक्षः कथयति—

व्याख्या—प्रतिकूलदैवतया = भाग्यस्य वामतया, स्ववर्गं = स्वसमर्थकान्, एतावदेव = एतावत्कालमेव, तदुपदिष्टं = निवेदितम्। अनागतं = सुविचारितं कर्म, जरा = वृद्धावस्था ॥२१२॥

हिन्दी—भाग्य के विपरीत होने से उलूकों ने फिर भी रक्ताक्ष के कथन को तिरस्कृत कर दिया। और स्थिरजीवी के आहार के लिये पूर्ववत् पर्याप्त मांस आदि देकर वे उसका पालन-पोषण करने लगे। उक्त आचरण को देखकर रक्ताक्ष ने अपने अनुयायी सेवकों को बुलाकर एकान्त में कहा—आजतक ही इस राजा का कुशल था और इसके दुर्ग की भी सुरक्षा थी। जो एक कुलक्रमागत मन्त्री को कहना चाहिए, मैंने सब कह दिया है और राजा को समझा भी दिया है। किन्तु वह मेरे कथन पर विश्वास करने को प्रस्तुत नहीं है। अतः हम लोगों को अब किसी अन्य पर्वत-दुर्ग को आश्रयण कर लेना चाहिये। यतः कहा गया है कि—

जो व्यक्ति अपने भविष्य को भलीभाँति से समझ कर ही किसी कार्य को आरंभ करता है- वही बाद में प्रशंसार्ह होता है। जो व्यक्ति अपने भविष्य को बिना सोचे ही कार्यारम्भ कर देता है, वह बाद में कष्ट तो पाता ही है, लोक निन्दा का भी पात्र बनता है। इस वन में रहते हुये मेरी वृद्धावस्था आ गयी किन्तु कभी भी मुझे बिल की वाणी सुनने को नहीं मिली थी ॥ २१२ ॥

रक्ताक्ष की बात को सुनकर उसके अनुचरों ने पूछा—"यह कैसे ?

रक्ताक्ष ने अग्रिम कथा को आरम्भ करते हुए कहा—

[ १४ ]

## ( सिंहजम्बुकगुहा-कथा )

कस्मिंश्चिद्वनोद्देशे खरनखरो नाम सिंहः प्रतिवसतिस्म। स कदाचिदितिश्चेतश्च परिभ्रमन् क्षुत्क्षामकण्ठो न किञ्चिदपि सत्त्वमाससाद। ततश्चास्तमनसमये महतीं गिरि-गुहामासाद्य प्रविष्टश्चिन्तयामास—"नूनमेतस्यां गुहायां रात्रौ केनापि सत्त्वेनागन्तव्यं तन्निभृतो भूत्वा तिष्ठामि।"

व्याख्या—क्षुत्क्षामकण्ठः=बुभुक्षाकुलः, सत्त्वं=जीवम्, अस्तमनसमये=सूर्यास्तकाले, निभृतः=प्रच्छन्नो गुप्तः सन्।

हिन्दी—किसी वन के एक भाग में खरनखर नाम का एक सिंह रहा करता था। एक दिन भूख से व्याकुल होकर वह दिन भर इधर-उधर जीवों की खोज में घूमता रहा किन्तु उसको कोई भी जीव नहीं मिला। सूर्यास्त हो जाने पर किसी गुहा को देखकर वह उसी में घुस गया। गुहा के भीतर जाकर उसने सोचा कि रात्रि में कोई न कोई जीव विश्राम करने के लिये यहाँ अवश्य आयेगा। अतः छिपकर यहीं बैठ जाता हूँ। उक्त प्रकार से सोचकर वह उस गुफा में छिपकर बैठ गया।

एतस्मिन्नन्तरे तत्स्वामी दधिपुच्छो नाम शृगालः समायातः। स च यावत्पश्यति तावत्सिंहपदपद्धतिर्गुहायां प्रविष्टा, न च निष्क्रमणं गता। ततश्चाचिन्तयत्—"अहो, विनष्टोऽस्मि। नूनमस्यामन्तर्गतेन सिंहेन भाव्यम्। तत्किं करोमि? कथं ज्ञास्यामि?"। एवं विचिन्त्य द्वारस्थः फूत्कर्तुमारब्धः—अहो बिल! अहो बिल!" इत्युक्त्वा तूष्णींभूयं भूयोऽपि तथैव प्रत्यभाषत—"भोः! किं न स्मरसि, यन्मया त्वया सह समयः कृतोऽस्ति यन्मया बाह्यात्समागतेन त्वं वक्तव्यः, त्वया चाहमाकारणीयः इति। तद्यदि मां नाह्वयसि ततोऽहं द्वितीयं बिलं यास्यामि।"

व्याख्या—तत्स्वामी=गुहानिवासी, पदपद्धतिः=पदचिह्नपंक्तिः। फूत्कर्तुं=शब्दं कर्तुं, समयः=सप्रतिज्ञो नियमः।

हिन्दी—इसी बीच में उस गुहा में रहने वाला दधिपुच्छ नाम का एक शृगाल वहाँ आ पहुँचा। गुहा के द्वार पर पहुँचते ही उसने देखा कि सिंह के पदचिह्नों की पंक्ति गुहा के भीतर चली गयी है किन्तु बाहर नहीं निकली है! उसको देखकर वह सोचने लगा कि—अब तो मैं मार ही डाला गया। इस गुहा के भीतर कोई न कोई सिंह अवश्य घुसा हुआ है। अब मैं क्या करूँ? कैसे समझूँ कि इसके भीतर सिंह है या निकल गया है।

उक्त प्रकार से सोचकर वह गुफा के द्वार पर खड़ा होकर पुकारने लगा—"हे बिल! हे बिल!" उक्त शब्दों का उच्चारण करके वह मौन हो गया। जब उसे कोई प्रत्युत्तर नहीं मिला तो पुनः कहने लगा—"अरे क्या तुम्हें स्मरण नहीं है कि मैंने तुम्हारे साथ यह शर्त की

है कि जब मैं बाहर से आऊँगा तो तुमको बुलाया करूँगा और तुम भी मुझे बुलाया करोगे। यदि तुम मुझे नहीं बुलाते हो तो मैं किसी दूसरे बिल में चला जाऊँगा।"

अथ तच्छ्रुत्वा सिंहश्चिन्तितवान्—"नूनमेषा गुहास्य समागतस्य सदा समाह्वानं करोति, परमद्य मद्भयान्न किञ्चिद् ब्रूते। अथवा साध्विदमुच्यते—

भयसन्त्रस्तमनसां हस्तपादादिकाः क्रियाः।
प्रवर्तन्ते न वाणी च वेपथुश्चाधिको भवेत् ॥ २१३ ॥

तदहमस्याह्वानं करोमि, येन तदनुसारेण प्रविष्टोऽयं मे भोज्यतां यास्यति।" एवं सम्प्रधार्य सिंहस्तस्याह्वानमकरोत्।

अथ सिंहशब्देन सा गुहा प्रतिरवसम्पूर्णान्यानपि दूरस्थानरण्यजीवांस्त्रासयामास।

व्याख्या—अस्य = शृगालस्य, भयसन्त्रस्तमनसां = भयभीतानां, हस्तपादादिकाः क्रियाः = हस्तपादादिसञ्चालनक्रियाः ॥ २१३ ॥ सम्प्रधार्य = विनिश्चित्य।

हिन्दी—शृगाल की बात को सुनकर सिंह ने सोचा—"यह गुहा इसके आगमन पर इसका आह्वान अवश्य करती है। किन्तु आज मेरे भय से कुछ बोल नहीं रही है। अथवा किसी ने ठीक ही कहा है कि—

भयभीत व्यक्ति की हस्तपाद सम्बन्धी क्रियायें रुक जाती हैं, उसकी वाणी भी रुक जाती है और उसके शरीर में कम्पन भी अधिक होने लगता है ॥ २१३ ॥

अतः मैं ही इसका आह्वान करूँगा। मेरे आह्वान के अनुसार गुहा के भीतर प्रवेश करते ही यह मेरा आहार बन जायगा।" उक्त बातों को सोचकर वह सिंह उसका आह्वान करने लगा।

सिंह के आह्वान से वह गुहा प्रतिध्वनित हो उठी। उसकी प्रतिध्वनि से दूरस्थ अन्य जीव भी संत्रस्त हो उठे।

शृगालोऽपि पलायमान इमं श्लोकमपठत्—

अनागतं यः कुरुते स शोभते, स शोच्यते यो न करोत्यनागतम्।
वनेऽत्र संस्थस्य समागता जरा, बिलस्य वाणी न कदापि मे श्रुता ॥ २१४ ॥

तदेवं मत्वा युष्माभिर्मया सह गन्तव्यम् इति। एवमभिधाय आत्मानुयायिपरिवारानुगतो दूरदेशान्तरं रक्ताक्षो जगाम।

व्याख्या—एवं मत्वा = अनागतं विधातव्यमिति मत्वा, आत्मानुयायिपरिवारानुगतः = स्वानुचरैः स्वपरिवारैश्चानुगतः।

हिन्दी—गुहा की प्रतिध्वनि को सुनकर भागते हुये शृगाल ने इस श्लोक को पढ़ा—

जो व्यक्ति पहिले से ही विचार करके कार्यारम्भ करता है वही सकुशल रह पाता है। जो बिना विचारे ही कार्यारम्भ कर देता है उसे बाद में पश्चात्ताप करना पड़ता है। इसी

वन में रहते हुये मेरी वृद्धावस्था आ गयी किन्तु बिल की वाणी सुनने को मुझे कभी नहीं मिली थी ॥ २१४ ॥

उक्त कथा को सुनाकर रक्ताक्ष ने अपने अनुचरों से कहा—"किसी कार्य के परिणाम को पहिले से ही सोच लेना चाहिये, इस बात को मानकर आप लोगों को भी मेरे साथ यहाँ से निकल चलना चाहिये।" यह कहकर रक्ताक्ष अपने अनुचरों और पारिवारिक सदस्यों को साथ में लेकर अन्यत्र चला गया।

अथ रक्ताक्षे गते स्थिरजीव्यतिहृष्टमना व्यचिन्तयत्—"अहो कल्याणमस्माकमुपस्थितं यद्रक्ताक्षो गतः। यतः स दीर्घदर्शी। एते च मूढमनसः। ततो मम सुखघात्याः सञ्जाता (एते)। उक्तञ्च यतः—

न दीर्घदर्शिनो यस्य मन्त्रिणः स्युर्महीपतेः।
क्रमायाता ध्रुवं तस्य न चिरात्स्यात्परिक्षयः ॥ २१५ ॥

अथवा साध्विदमुच्यते—

मन्त्रिरूपा हि रिपवः सम्भाव्यन्ते विचक्षणैः।
ये हितं वाक्यमुत्सृज्य विपरीतोपसेविनः" ॥ २१६ ॥

व्याख्या—कल्याण=शुभं, दीर्घदर्शी, मूढमनसः=मूर्खाः, सुखघात्याः=सुखोच्छेद्याः। परिक्षयः=विनाशः ॥ २१५ ॥

हिन्दी—रक्ताक्ष के चले जानेपर स्थिरजीवी ने प्रसन्न होकर सोचा—"हमारे लिये बड़ा कल्याणकर हो गया कि रक्ताक्ष यहाँ से चला गया। क्योंकि वह दूरदर्शी था। शेष ये मूर्ख हैं। अब ये मेरे लिये सुवध्य हो गये हैं। कहा भी गया है कि जिस राजा के पास दीर्घदर्शी एवं कुलागत मन्त्री नहीं होते उनका विनाश बहुत शीघ्र हो जाता है ॥ २१५ ॥

अथवा, यह ठीक ही कहा गया है कि—

उन व्यक्तियों को मन्त्री के रूप में शत्रु ही समझना चाहिये जो राजा के हितकारक परामर्शों के स्थानपर अनुचित परामर्श दिया करते हैं ॥ २१६ ॥

एवं विचिन्त्य स्वकुलाये एकैकां वनकाष्ठिकां गुहादीपनार्थं दिने दिने प्रक्षिपति। न च ते मूर्खा उलूका विजानन्ति, यदेष स्वकुलायमस्मद्दाहाय वृद्धिं नयति। अथवा साध्विदमुच्यते—

अमित्रं कुरुते मित्रं मित्रं द्वेष्टि हिनस्ति च।
शुभं वेत्त्यशुभं पापं भद्रं दैवहतो नरः ॥ २१७ ॥

व्याख्या—स्वकुलाये=स्वनीडे, वनकाष्ठिकां=वनकाष्ठं, (वनकठ), अमित्रं=शत्रुं, हिनस्ति=पीडयति, दैवहतः=दुर्भाग्यग्रस्तः ॥ २१७ ॥

हिन्दी—इस प्रकार सोचकर स्थिरजीवी उस गुफा को जलाने के लिये अपने घोंसले में प्रतिदिन एक एक काष्ठ (वनकठ) ले आकर रखने लगा। वे मूर्ख उलूक यह नहीं जान

पाते थे कि स्थिरजीवी उन्हीं की गुफा को जलाने के लिये अपने नीड को बढ़ाता चला जा रहा था। अथवा, यह ठीक ही कहा गया है कि—

भाग्य के प्रतिकूल हो जानेपर दुर्भाग्यग्रस्त व्यक्ति शत्रु को ही अपना मित्र समझता है और मित्र को शत्रु समझकर उससे द्वेष करता है, उसका तिरस्कार करने लगता है और उसी को मारने का षडयन्त्र करने लगता है। वह शुभ को अशुभ समझता है और कल्याणमय पुण्य को पाप समझता है॥ २१७॥

अथ कुलायव्याजेन दुर्गद्वारे कृते काष्ठनिचये सञ्जाते सूर्योदयेऽन्धतां प्राप्तेषूलूकेषु सत्सु स्थिरजीवी शीघ्रं गत्वा मेघवर्णमाह—"स्वामिन्! दाहसाध्या कृता रिपुगुहा। तत्सपरिवारः समेत्यैकैकां वनकाष्ठिकां ज्वलन्तीं गृहीत्वा गुहाद्वारेऽस्मत्कुलाये प्रक्षिप, येन सर्वे शत्रवः कुम्भीपाकनरकप्रायेण दुःखेन म्रियन्ते।"

तच्छ्रुत्वा प्रहृष्टो मेघवर्ण आह—"तात! कथयात्मवृत्तान्तम्। चिरादद्य दृष्टोऽसि।"

व्याख्या—काष्ठनिचये=काष्ठसञ्चये, दाहसाध्या=प्रज्वालयितुं योग्या, कुम्भीपाकनरकप्रायेण=कुम्भीपाकनरकसदृशेन, आत्मवृत्तान्तं=स्वेतिवृत्तम्।

हिन्दी—नीड के व्याज से गुहा के द्वारपर पर्याप्त काष्ठसञ्चय हो जाने के बाद एक दिन सूर्योदय हो जाने पर जब कि उलूक अन्धे हो चुके थे, स्थिरजीवी ने शीघ्रतापूर्वक मेघवर्ण के पास पहुँच कर कहा—"स्वामिन्! शत्रु की उस गुहा को मैंने जलाने योग्य बना दिया है। अतः आप अपने परिजनों के साथ शीघ्र वहाँ चलकर एक-एक जलती हुई लकड़ियों को उठाकर गुफा के द्वार पर स्थित मेरे घोंसले में डाल दीजिये जिससे आपके सम्पूर्ण शत्रु कुम्भीपाक नरक में प्राप्त होने वाले दुःख के समान दुःख से व्याकुल होकर शीघ्र मर जायें।"

स्थिरजीवी की बात सुनकर मेघवर्ण ने प्रसन्न होकर पूछा—"तात! पहिले आप अपना कुशल समाचार तो कहिये। बहुत दिनों के बाद आज दिखायी दिये हैं। अबतक आप कहाँ थे, क्या कर रहे थे?"

स आह—"वत्स! नायं कथनस्य कालः। यतः कदाचित्तस्य रिपोः कश्चित्प्रणिधिर्ममेहागमनं निवेदयिष्यति, तज्ज्ञानादन्धोऽन्यत्रापसरणं करिष्यति। तत्त्वर्यताम्, त्वर्यताम्। उक्तञ्च—

> शीघ्रकृत्येषु कार्येषु विलम्बयति यो नरः।
> तत्कृत्यं देवतास्तस्य कोपाद्विघ्नन्त्यसंशयम्॥ २१८॥

तथा च—

> यस्य यस्य हि कार्यस्य फलितस्य विशेषतः।
> क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम्॥ २१९॥

तद्गुहाया आयातस्य ते हतशत्रोः सर्वं सविस्तरं निर्व्याकुलतया कथयिष्यामि।"

व्याख्या—कथनस्य=आत्मवृत्तान्तकथनस्य, कालः=समयः। प्रणिधिः=गुप्तचरः, अन्धः=दिवान्धः (उलूकराजः) विलम्बयति=विलम्बं करोति, विघ्नन्ति=विघ्नं योजयन्ति

॥ २१८ ॥ फलितस्य = प्राप्तफलाप्तिकालस्य, किन्तु अक्रियमाणस्य = शीघ्रमाणस्य, रसं = सारम् ॥२१९॥ हतशत्रोः = निष्कण्टकस्य, निर्व्याकुलतया = स्थिरतया ।

हिन्दी—स्थिरजीवी ने कहा—"वत्स ! यह आत्मवृत्तान्त सुनाने का समय नहीं है। क्योंकि—यदि शत्रु का कोई गुप्तचर मेरे यहाँ आने के समाचार को जानकर उलूकराज से कह देगा तो वह अन्धा तत्काल वहाँ से भाग जायगा। अतः आप विलम्ब न करें। शीघ्र वहाँ चलें। कहा भी गया है कि—

शीघ्र करने योग्य कार्य में जो व्यक्ति अनावश्यक विलम्ब करता रहता है, वह उसे पूर्ण नहीं ही कर पाता। क्योंकि—उसके विलम्ब से अप्रसन्न होकर देवतागण उसके कार्य को विघ्नित कर देते हैं ॥ २१८ ॥

और भी—विशेषतः ऐसे कार्य में जिसका फलाप्ति-काल अत्यन्त सन्निकट आ गया हो, यदि मनुष्य विलम्ब करता है तो समय उस कार्य के रस को पी जाता है और उसे सारहीन बना देता ॥ २१९ ॥

अतः शत्रु की गुफा को जला कर जब आप लौट आयेंगे और पूर्ण निष्कण्टक हो जायेंगे तो सुस्थिर एवं निश्चिन्त होकर सविस्तार सब सुनाऊँगा।"

अथासौ तद्वचनमाकर्ण्य सपरिजन एकैकां ज्वलन्तीं वनकाष्ठिकां चञ्च्वग्रेण गृहीत्वा तद्गुहाद्वारं प्राप्य स्थिरजीविकुलाये प्राक्षिपत्। ततः सर्वे ते दिवान्धा रक्ताक्षवाक्यानि स्मरन्तो द्वारस्यावृतत्वादनिःसरन्तो गुहामध्ये कुम्भीपाकन्यायमापन्ना मृताश्च।

एवं शत्रूनिःशेषतां नात्वा भूयोऽपि मेघवर्णस्तदेव न्यग्रोधपादपदुर्गं जगाम। ततः सिंहासनस्थो भूत्वा सभामध्ये प्रमुदितमनाः स्थिरजीविनमपृच्छत्—"तात ! कथं त्वया शत्रुमध्ये गतेनैतावत्पर्यन्तं कालो नीतः ? तदत्र कौतुकमस्माकं वर्तते। तत्कथ्यताम्। यतः—

> वरमग्नौ प्रदीप्ते तु प्रपातः पुण्यकर्मणाम्।
> न चारिजनसंसर्गो मुहूर्तमपि सेवितः" ॥ २२० ॥

व्याख्या—ते = उलूकाः, आवृतत्वात् = पिहितत्वात्, कुम्भीपाकन्यायमापन्नाः = कुम्भे संस्थाप्य सन्तापने यथा कष्टं भवति तथैव कष्टमनुभवन्तः, निःशेषतां = निर्मूलतां, प्रमुदितमनाः = प्रहर्षितः सन्, कौतुकम् = आश्चर्यम्। प्रदीप्ते = प्रज्वलिते, प्रपातः = पतनम् ॥ २२० ॥

हिन्दी—स्थिरजीवी की बात को सुनकर मेघवर्ण अपने परिजनों को साथ में लेकर वहाँ पहुँच गया। वायसों ने अपनी-अपनी चोंच में एक-एक जलती हुई लकड़ियों को लेकर गुहा के द्वार पर स्थित स्थिरजीवी के घोंसले में डालना प्रारम्भ कर दिया। दिवान्ध उलूक रक्ताक्ष के कथन को स्मरण करते हुये गुहा के भीतर ही कुम्भ में रखकर पकाये जाने के समान जलकर भस्म हो गये। गुहा के द्वार अवरुद्ध हो जाने के कारण कोई भी बाहर निकलकर भाग नहीं पाया।

उक्त प्रकार से अपने सम्पूर्ण शत्रुओं को निःशेष करके मेघवर्ण पुनः उसी वटवृक्ष पर चला गया। वहाँ सिंहासनस्थ होने के बाद प्रसन्न होकर सभा के मध्य में स्थित स्थिरजीवी से उसने पूछा—"तात! आपने इतने दिनों तक शत्रुओंके मध्य में रहकर अपना समय कैसे व्यतीत किया? इस बात को जानने के लिये हम लोगों के हृदय में बहुत बड़ी उत्सुकता है। कृपया आप अपना वृत्तान्त सुनाकर हमलोगों की उत्सुकता को शान्त करें। यतः कहा गया है कि—

पुण्यात्माओं के लिये प्रदीप्त अग्नि में गिरकर प्राणत्याग कर देना अच्छा होता है किन्तु शत्रुओं के संसर्ग में रहकर एक भी क्षण व्यतीत करना अच्छा नहीं होता"।

तदाकर्ण्य स्थिरजीव्याह—"भद्र! आगामिफलवाञ्छया कष्टमपि सेवको न जानाति। उक्तञ्च यतः—

उपनतभयैर्यो यो मार्गो हितार्थकरो भवेत्,
स स निपुणतया बुद्ध्या सेव्यो महान्कृपणोऽपि वा।
करिकरनिभौ ज्याघाताङ्कौ महास्त्रविशारदौ,
वलयरणितौ स्त्रीवद्बाहू कृतौ न किरीटिना?॥ २२१॥

व्याख्या—आगामिफलवाञ्छया = आगामिफललाभेच्छया। उपनतभयैः = प्राप्तभयैः हितार्थकरः = प्रियकारकः, कृपणः = निकृष्टः। करिकरनिभौ = गजशुण्डतुल्यौ, ज्याघाताङ्कौ = ज्याघाताङ्कितौ, महास्त्रविशारदौ = दिव्यास्त्रकुशलौ; किरीटिना = अर्जुनेन, स्त्रीवत् वलयरणितौ = मणिवलयझङ्कृतौ, बाहू = करौ, न कृतौ = न विहितौ॥ २२१॥

हिन्दी—मेघवर्ण के प्रश्नों को सुनकर स्थिरजीवी ने कहा—"भद्र! सेवकजन भविष्य में मिलने वाले फल की आशा से कष्टों को भूल जाते हैं। वे उनकी परवाह नहीं करते। यतः कहा गया है कि—

आपत्ति के आ जानेपर मनुष्य को जो-जो उपाय हितकर प्रतीत हों, उन सभी उपायों को बुद्धिमत्ता एवं कुशलता के साथ अपनाते जाना चाहिये। वे उपाय उत्कृष्ट हों या निकृष्ट, उनको छोड़ना नहीं चाहिये। यदि निकृष्ट उपाय से ही अपना हित होता हो तो उसका अवलम्बन अवश्य कर लेना चाहिये। विपत्ति काल आ जाने पर अर्जुन ने अपने गजशुण्ड के समान विशाल, गाण्डीव की प्रत्यञ्चा को खींचने से घंताङ्कित एवं दिव्यास्त्रों को चलाने में निपुण हाथों में स्त्रियों की तरह खनखनाती हुई चूड़ियों को क्या धारण नहीं किया था? ॥ २२१॥

शक्तेनापि सदा जनेन विदुषा कालान्तरापेक्षिणा,
वस्तव्यं खलु वक्रवाक्यविषमे क्षुद्रेऽपि पापे जने।
दर्वीव्यग्रकरेण धूम्रमलिनेनायासयुक्तेन च
भीमेनातिबलेन मत्स्यभवने किं नोषितं सूदवत्॥ २२२॥

यद्वा तद्वा विषमपतितः साधु वा गर्हितं वा,
कालापेक्षी पिहितनयनो बुद्धिमान् कर्म कुर्यात्।
किं गाण्डीवस्फुरदुरुगुणास्फालनक्रूरपाणि-
र्नासीलीलानटनविलसन्मेखली सव्यसाची ?॥ २२३ ॥

व्याख्या—कालान्तरापेक्षिणा=समयं प्रतीक्षमाणेन, वक्रवाक्यविषमे=कटुवाक्यविद्धे (वक्रवाक्येनासमीकृते) क्षुद्रे=नीचे, दर्वीव्यग्रकरेण=कम्बियुक्तेन व्यस्तकरेण, धूममलिनेन=धूम्रमलितेन, आयासयुक्तेन=कष्टक्लिन्नेन (पारश्रमयुतेन), मत्स्यभवने=मत्स्यराजविराट-भवने, सूदवत्=पाचकवत्, नोषितं=किं वासो न कृतः ॥२२२॥ विषमपतितः=विपत्तौ पतितः, कालापेक्षी=समयापेक्षी, पिहितनयनः=निमीलितनयनः (आँख बन्द करके, सब कुछ जानते हुये भी मौन रहकर), साधु=उचितं, गर्हितं=निन्दितं वा कर्म कुर्यात्। गाण्डीवस्फुरदुरुगुणा-स्फालनक्रूरपाणिः=गाण्डीवस्य मौर्व्याकर्षणेन क्रूरकरः (गाण्डीवस्य यः स्फुरदुरुगुणस्तस्य स्फाल-नेन क्रूरः पाणिर्यस्यासौ) लीलानटनविलसन्मेखली=मेखलाविभूषितकटिः (लीलानटनेन विलसन्ती मेखला यस्यासौ) सव्यसाची=अर्जुनः ॥ २२३ ॥

हिन्दी—आपत्ति की स्थिति में चतुर व्यक्ति को चाहिये कि वह शक्तिसम्पन्न होते हुए भी कालापेक्षी बनकर अनुकूल समय की प्रतीक्षा करता रहे और यदि आवश्यक हो तो कटुभाषी. क्षुद्र एवं खल व्यक्तियों के बीच में भी विना किसी संकोच के रह जाय। धूम से धूमिल दर्वी के सञ्चालन में व्यग्र, परिश्रमी एवं अत्यन्त व्यस्त जीवन व्यतीत करते हुये भी महाबलशाली भीम ने मत्स्यराज विराट के भवन में पाचक (भण्डारी) के रूप में निवास नहीं किया था क्या ? ॥ २२२ ॥

आपत्ति-काल में फँस जाने की स्थिति में बुद्धिमान् व्यक्ति को चाहिये कि वह कालापेक्षी बनकर सब कुछ जानते हुए भी अपने नेत्रों को बन्द कर ले और अच्छे या बुरे कार्यों को जिस किसी भी भाँति मौन भाव से करता चला जाय। गाण्डीव की प्रचण्ड प्रत्यञ्चा को खींचने के कारण कठोर हो जाने वाले करों से युक्त अर्जुन ने नृत्यकाल में अपनी कमर में सुशोभित होने वाली काञ्ची (करधनी) को धारण करके नर्तकी के रूप में नृत्य नहीं किया था क्या ? ॥२२३॥

सिद्धिं प्रार्थयता जनेन विदुषा तेजो निगृह्य स्वकं,
सत्त्वोत्साहवतापि दैवविधिषु स्थैर्यं प्रकार्यं क्रमात्।
देवेन्द्रद्रविणेश्वरान्तकसमैरप्यन्वितो भ्रातृभिः,
किं क्लिष्टः सुचिरं त्रिदण्डमवहच्छ्रीमान्न धर्मात्मजः ? ॥ २२४ ॥

रूपाभिजनसम्पन्नौ कुन्तीपुत्रौ बलान्वितौ।
गोकर्मरक्षाव्यापारे विराटप्रेष्यतां गतौ ॥ २२५ ॥

व्याख्या—सिद्धि=साफल्यं, सत्त्वोत्साहवता=धैर्योत्साहयुक्तेनाऽपि, दैवविधिषु=भाग्येन विधीयमानेषु कार्येषु (विधि के विपरीत होनेपर उसी की इच्छा से होने वाले कार्यों में), स्थैर्यं=धैर्यं, देवेन्द्रः=इन्द्रः, द्रविणेश्वरः=धनेश्वरः कुबेरः, अन्तकः=यमः, तैः समैः=

तुल्यैः, भ्रातृभिः=बन्धुभिः, अन्वितः=युक्तोऽपि, धर्मात्मजः=युधिष्ठिरः, सुचिरं=चिरकालं यावत्, विलष्टः क्लेशयुक्तः ॥ २२४ ॥ रूपाभिजनसम्पन्नौ=रूपयुक्तौ कुलयुक्तौ च, कुन्तीपुत्रौ =नकुलसहदेवौ, गोकर्मरक्षाव्यापारे=गोचारणे, प्रेष्यतां=भृत्यभावं, गतौ=प्राप्तौ ॥ २२५ ॥

हिन्दी—धैर्य एवं उत्साह से युक्त होते हुए सिद्धि की अपेक्षा रखने वाले व्यक्ति को चाहिये कि वह अपने तेज, प्रताप और बल को रोककर भाग्य के द्वारा स्वतः सिद्ध होने वाले कार्यों में धैर्यपूर्वक स्थिर भाव से समय की प्रतीक्षा करता रहे। इन्द्र, कुबेर तथा यमराज जैसे प्रतापी भाइयों के रहते हुये भी महाराज युधिष्ठिर को विराट के राज्य में त्रिदण्ड धारण करके रहना पड़ा था और अनेक कष्टों को सहना पड़ा था ॥ २२४ ॥

रूपवान् तथा बलवान् होनेपर भी नकुल और सहदेव ने राजा विराट के यहाँ भृत्य के रूप में रहकर गायों को चराने का कार्य किया था ॥ २२५ ॥

रूपेणाप्रतिमेन यौवनगुणैः श्रेष्ठे कुले जन्मना,
कान्त्या श्रीरिव यात्र सापि विदशां कालक्रमादागता।
सैरन्ध्रीति सगर्वितं युवतिभिः साक्षेपमाज्ञप्तया,
द्रौपद्या ननु मत्स्यराजभवने घृष्टं चिरं चन्दनम् ॥ २२६ ॥

मेघवर्ण आह—"तात! असिधाराव्रतमिदं मन्ये यदरिणा सह संवासः।"

सोऽब्रवीत्—"देव! एवमेतत्। परं न तादृङ्मूर्खसमागमः क्वापि मया दृष्टः। न च महाप्रज्ञमनेकशास्त्रेष्वप्रतिमबुद्धिं रक्ताक्षं विना धीमान्। यत्कारणं तेन मदीयं यथास्थितं चित्तं ज्ञातम्।

व्याख्या—अप्रतिमेन=अनुपमेन, विदशां=दुर्दशाम् ॥ २२६ ॥ असिः=खड्गः, प्रज्ञं= ज्ञातारम्, अप्रतिमबुद्धिम्=अनुपमबुद्धिम्। यथास्थितं=द्वेषयुक्तम्।

हिन्दी—अनुपमसुन्दरी, युवतियों में श्रेष्ठ, उत्तमकुल में उत्पन्न और कान्ति में साक्षात् लक्ष्मी के समान लगने वाली द्रौपदी भी समय की विपरीतता के कारण दुर्दशा को प्राप्त हो गयी थी। मत्स्यराज-विराट के अन्तःपुर की युवतियों के द्वारा सगर्व एवं आक्षेप युक्त वाक्यों में "सैरन्ध्री" ( दासी ) कहकर सम्बोधित की जाती थी और वहाँ चन्दन घिसने का कार्य किया करती थी ॥ २२६ ॥

स्थिरजीवी की बात को सुनकर मेघवर्ण ने कहा—"तात! शत्रुओं के साथ निवास करने को मैं तलवार की धारपर चलने के ही समान मानता हूँ।"

स्थिरजीवी ने कहा—"देव! आपका कथन यथार्थ है किन्तु वैसा मूर्खों का समाज भी कहीं मैंने नहीं देखा था। और रक्ताक्ष जैसे महाबुद्धिमान्, बहुशास्त्रज्ञ, मेधावी तथा अप्रतिम बुद्धि का प्राणी भी कभी मैंने नहीं देखा था। क्योंकि मेरे हृदयगत प्रतिशोधात्मक भाव को वह तत्काल समझ गया था।

ये पुनरन्ये मन्त्रिणस्ते महामूर्खा मन्त्रिमात्रव्यपदेशोपजीविनोऽतत्त्वकुशला यैरिदमपि न ज्ञातं यत्—

अरितोऽभ्यागतो भृत्यो दुष्टस्तत्सङ्गतत्परः।
अपसर्पसधर्मत्वान्नित्योद्वेगी च दूषितः॥ २२७॥
आसने शयने याने पानभोजनवस्तुषु।
दृष्ट्वान्तरं प्रमत्तेषु प्रहरन्त्यरयोऽरिषु॥ २२८॥

व्याख्या—अतत्त्वकुशलाः = अतत्त्वज्ञाः, अरितः = शत्रुतः, तत्सङ्गतत्परः = शत्रुसङ्गतत्परः, अपसर्पः = गुप्तचरः॥ २२७॥

हिन्दी—उलूकराज की सभा में स्थित जो अन्य सचिव थे वे महामूर्ख थे। केवल नाम मात्र के ही लिए वे मन्त्री थे। वे इतने मूर्ख थे कि यह भी नहीं जान सके कि—

शत्रु के यहाँ से आया हुआ भृत्य (दूत) शत्रु के सहवास से दुष्ट होता है। वह अपने ही पक्ष का हित करना चाहता है। गुप्तचर होने की संभावना के कारण वह अविश्वस्त तथा भयकारक भी होता है॥ २२७॥

शत्रुगण आसन, शयन, यात्रा, भोजन तथा जलपान आदि के समय में शत्रु को असावधान पाकर उनपर प्रहार किया करते है॥ २२८॥

तस्मात्सर्वं प्रयत्नेन त्रिवर्गनिलयं बुधः।
आत्मानमादृतो रक्षेत्प्रमादाद्धि विनश्यति॥ २२९॥

साधु चेदमुच्यते—

सन्तापयन्ति कमपथ्यभुजं न रोगा, दुर्मन्त्रिणं कमुपयान्ति न नीतिदोषाः।
कं श्रीर्न दर्पयति कं न निहन्ति मृत्युः; कं स्त्रीकृता न विषयाः परिपीडयन्ति॥२३०॥

व्याख्या—त्रिवर्गनिलयं = धर्मार्थकामसाधकं, प्रमादात् = अरक्षणात्॥ २२९॥ नीतिदोषाः = नयकृता दोषाः (पराजय आदि), स्त्रीकृताः = स्त्रीसम्बन्धिनः, विषयाः = कामाः॥ २३०॥

हिन्दी—धर्म अर्थ तथा काम को प्रदान करने वाले अपने इस शरीर की रक्षा मनुष्य को अवश्य करनी चाहिये। प्रमाद करने से यह विनष्ट हो जाता है। अतः शरीर के विषय में किसी प्रकार का प्रमाद नहीं करना चाहिये॥ २२९॥

यह ठीक ही कहा गया है कि—

रोग किस कुपथ्यसेवी को नहीं सताता? अनुचित परामर्श देने वाले मन्त्री से युक्त किस राजा में नीतिसम्बन्धी दोष नहीं आ जाते? लक्ष्मी किसको गर्वित नहीं बना देती? मृत्यु किसका विनाश नहीं करता? और स्त्रीसम्बन्धी विषय (कामवासनादि) किसको पीड़ित नहीं करते?। (कुपथ्यसेवी को रोग होता ही है। दुष्ट मन्त्री से युक्त राजा में नीति-दोष आ ही जाता है। लक्ष्मी को पाकर मनुष्य गर्वित हो ही जाता है। मृत्यु प्राणियों का विनाश करता ही है और स्त्रीसम्बन्धी विषय मनुष्य को सताते ही हैं)॥ २३०॥

लुब्धस्य नश्यति यशः पिशुनस्य मैत्री, नष्टक्रियस्य कुलमर्थपरस्य धर्मः।
विद्या बलं व्यसनिनः कृपणस्य सौख्यं, राज्यं प्रमत्तसचिवस्य नराधिपस्य॥ २३१॥

तद्राजन्! असिधाराव्रतं मयाचरितमरिसंसर्गादिति यद्भवतोक्तं तन्मया साक्षादेवानुभूतम्।

व्याख्या—लुब्धस्य=अर्थलोलुपस्य, पिशुनस्य=खलस्य, व्यसनिनः=दुर्व्यसनयुक्तस्य, सौख्यं=सुखं, प्रमत्तसचिवस्य=प्रमत्तमन्त्रियुक्तस्य ॥ २३१ ॥

हिन्दी—जैसे लोभी व्यक्ति की कीर्ति नष्ट हो जाती है, खल व्यक्ति की मैत्री नष्ट हो जाती है, आचार एवं क्रिया हीन व्यक्ति का कुल विनष्ट हो जाता है, अर्थपरायण व्यक्ति का धर्म नष्ट हो जाता है, व्यसनी व्यक्ति की विद्या एवं शक्ति विनष्ट हो जाती है और कृपण व्यक्ति का सुख नष्ट हो जाता है। उसी प्रकार दुष्ट मन्त्री से युक्त राजा का राज्य भी विनष्ट हो जाता है॥ २३१ ॥

महाराज! वहाँ शत्रुओं के मध्य रहकर मैंने असिधारा व्रत किया है, यह आपका कथन यथार्थ है। मैंने शत्रुओं के मध्य निवास करके इसका स्वयं अनुभव किया है।

अपमानं पुरस्कृत्य मानं कृत्वा तु पृष्ठतः।
स्वार्थमभ्युद्धरेत्प्राज्ञः स्वार्थभ्रंशो हि मूर्खता ॥ २३२ ॥
स्कन्धेनापि वहेच्छत्रुं कालमासाद्य बुद्धिमान्।
वहता कृष्णसर्पेण मण्डूका विनिपातिताः" ॥ २३३ ॥

मेघवर्ण आह—"कथमेतत्?" स्थिरजीवी कथयति—

व्याख्या—पुरस्कृत्य=अग्रे विधाय, स्वार्थमुद्धरेत्=स्वार्थं साधयेत् ॥ २६२ ॥ विनिपातिताः=विनिहताः ॥ २३३ ॥

हिन्दी—आत्मसम्मान को पीछे और अपमान को आगे करके अपना कार्य बनाले। आत्मसंमान को बचाने या अपमान को सहने के भय से स्वार्थहानि कर लेना मनुष्य की सबसे बड़ी मूर्खता समझी जाती है॥ २३२ ॥

यदि आवश्यक हो तो समयानुसार शत्रु को अपनी पीठ पर बैठाकर भी ढोना चाहिए। समयानुसार अपनी पीठ पर बैठा कर शत्रुओं को ढोने वाले सर्प ने मण्डूकों का विनाश ही कर दिया था" ॥ २३३ ॥

स्थिरजीवी की बात को सुनकर मेघवर्ण ने पूछा—"यह कैसे"?

स्थिरजीवी ने अग्रिम कथाको प्रारंभ करते हुए कहा—

## [ १५ ]

## ( मण्डूकमन्दविषसर्प-कथा )

अस्ति वरुणाद्रिसमीपे एकस्मिन् प्रदेशे परिणतवया मन्दविषो नाम कृष्णसर्पः। स एवं चित्ते सञ्चिन्तितवान्—'कथं नाम मया सुखोपायवृत्त्या वर्तितव्यम्" इति।

ततो बहुमण्डूकं ह्रदमुपगम्य[illegible]तिपरीतमिवात्मानं दर्शितवान्। अथ तथास्थिते

तस्मिन्नुदकप्रान्तगतेनैकेन मण्डूकेन पृष्टः—"माम ! किमद्य यथापूर्वमाहारार्थं न विहरसि ?"

व्याख्या—वरुणाद्रिः = पर्वतविशेषः । परिणतवयाः = वृद्धः, सुखोपायवृत्त्या = आयासविरहितया जीविकया, अधृतिपरीतमिव = अधैर्ययुक्तमिव ( व्याकुलमिव ) ।

हिन्दी—वरुणाद्रिपर्वत के समीपस्थ किसी प्रदेश में मन्दविष नाम का एक वृद्धसर्प रहा करता था । एकदिन उसने अपने मन में सोचा कि—"कौन ऐसा उपाय किया जाय कि जिससे विना किसी आयास के ही मेरी जीविका चलती रहे ?"

सुखकर जीविका के विषय में निर्णय करने के पश्चात् वह मण्डूकों से युक्त एक तालाब के पास जाकर अपने को कुछ अधीर सा प्रदर्शित करता हुआ इधर-उधर घूमने लगा । उसकी उपर्युक्त दशा को देखकर जलके समीप में ही तीरपर बैठे हुए एक मेंढक ने उससे पूछा—"मामा ! पहले की तरह आज तुम भोजन के प्रबन्ध में व्यस्त नहीं दिखाई पड़ रहे हो ?"

सोऽब्रवीत्—"भद्र ! कुतो मे मन्दभाग्यस्याहाराभिलाषः ! यत्कारणम्—अद्य रात्रौ प्रदोषे एव मयाहारार्थं विहरमाणेन दृष्ट एको मण्डूकः । तद्ग्रहणार्थं मया क्रमः सज्जितः । सोऽपि मां दृष्ट्वा मृत्युभयेन स्वाध्यायप्रसक्तानां ब्राह्मणानामन्तरपक्रान्तो न विभावितो मया क्वापि गतः । तत्सदृशमोहितचित्तेन मया कस्यचिद्ब्राह्मणसूनोर्हृदतटजलान्तःस्थोऽङ्गुष्ठो दष्टः । ततोऽसौ सपदि पञ्चत्वमुपागतः ।

व्याख्या—मन्दभाग्यस्य = भाग्यहीनस्य, प्रदोषे = सन्ध्याकाले, क्रमः = आक्रमणार्थमुपक्रमः, अपक्रान्तः = पलायितः, न विभावितः = नावलोकितः, ब्राह्मणसूनोः = विप्रवटोः ।

हिन्दी—सर्प ने उत्तर में कहा—"भद्र ! मुझ जैसे अभागे को अब भोजन की अभिलाषा ही कहाँ रह गयी है ? क्योंकि आज रात्रि के प्रदोष काल में ही मैं आहार के अन्वेषण में निकल पड़ा था । आहार की खोज में भटकते हुये मैंने किसी तरह से एक मण्डूक को देखा । उसको पकड़ने के उद्देश्य से अभी मैं उपक्रम कर ही रहा था कि उसने भी मुझे देख लिया । मुझे देखते ही मृत्यु के भय से तत्काल वह स्वाध्याय में लीन ब्राह्मणों के बीच में जाकर छिप गया । पुनः मैंने उसे देखा नहीं । वह कहीं अन्यत्र चला गया ।

किन्तु उसके वहाँ से हट जाने का ज्ञान मुझे नहीं रहा और उसके भ्रम में पड़कर मैंने एक ब्राह्मण के लड़के के अंगूठे में काट दिया । वह लड़का तीर के जल में प्रविष्ट होकर स्नान कर रहा था । मेरे काटने से वह तत्काल मर गया ।

अथ तस्य पित्रा दुःखितेनाहं शप्तो यथा—"दुरात्मन् ! त्वया निरपराधो मत्सुतो दष्टः । तदनेन दोषेण त्वं मण्डूकानां वाहनं भविष्यसि । तत्प्रसादलब्धजीविकया च वर्तिष्यसे" इति । ततोऽहं युष्माकं वाहनार्थमागतोऽस्मि ।

तेन स सर्वमण्डूकानामिदमावेदितम् । ततस्तैः प्रहृष्टमनोभिः सर्वैरेव गत्वा जलपादनाम्नो दर्दुरराजस्य विज्ञप्तम् । अथासावपि मन्त्रिपरिवृतोऽत्यद्भुतमिदमिति

मन्यमानः ससम्भ्रमं ह्रदादुत्तीर्य मन्दविषस्य फणिनः फणप्रदेशमधिरूढः। शेषा अपि यथा ज्येष्ठं तत्पृष्ठोपरि समारुरुहुः। किं बहुना, तदुपरि स्थानमप्राप्नुवन्तस्तस्यानुपदं धावन्ति।

व्याख्या—तत्प्रसादात=मण्डूकवाहनप्रसादात्, आवेदितं=कथितम्। दर्दुरः=मण्डूक, फणिनः=सर्पस्य, यथाज्येष्ठं=ज्येष्ठकनिष्ठक्रमेण, अनुपदं=पृष्ठतः।

हिन्दी=अतः उस लड़के के पिता ने मेरी धृष्टता से क्रुद्ध एवं शोकाकुल होकर मुझे शाप देते हुये कहा—दुष्ट! तुमने मेरे लड़के को बिना किसी अपराध के ही काट दिया है। अपने इस अपराध के कारण तुम मण्डूकों के वाहन बनोगे और उनका वाहन बनने से ही तुम्हारी जीविका भी चलेगी।" अतः मैं तुम लोगों का वाहन बनकर तुम लोगों के पास आया हूँ।"

सर्प की बात को सुनकर मण्डूक ने उस वृत्तान्त को अन्य मेढकों से भी कहा। उन मेढकों ने अपने राजा जलपाद से कहा। जलपाद इस अद्भुत वृत्तान्त को सुनकर मन ही मन बहुत प्रसन्न हुआ। वह साश्चर्य तालाब से निकलकर उस सर्प के फ़ण पर आरूढ़ हो गया और उसके बाद अन्य मेढक भी यथाक्रम उस सर्प के शरीर पर चढ़ गये। यहाँ तक हुआ कि जिन मेढकों को उसके शरीर पर चढ़ने का अवसर या स्थान नहीं मिला वे उसके पीछे-पीछे ही दौड़ने लगे।

मन्दविषोऽपि तेषां तुष्ट्यर्थमनेकप्रकारान् गतिविशेषानदर्शयत्। अथ जलपादो लब्धतदङ्गसंस्पर्शसुखस्तमाह—

न तथा करिणा यानं तुरगेण रथेन वा।
नरयानेन नावा वा यथा मन्दविषेण मे॥ २३३॥

अथाऽन्येद्युर्मन्दविषश्छद्मना मन्दं-मन्दं विसर्पति। तच्च दृष्ट्वा, जलपादोऽब्रवीत्—"भद्र मन्दविष! यथापूर्वं किमद्य साधु नोह्यते?"। मन्दविषोऽब्रवीत्—"देव! अद्याहारवैकल्यान्न मे वोढुं शक्तिरस्ति।" अथासावब्रवीत्—भद्र! भक्षय क्षुद्रमण्डूकान्। तच्छ्रुत्वा प्रहर्षितसर्वगात्रो मन्दविषः ससम्भ्रमब्रवीत्—"ममायमेव विप्रशापोऽस्ति। तत्तवानेनानुज्ञावचनेन प्रीतोऽस्मि।"

व्याख्या—तेषां=मण्डूकानां, छद्मना=कपटेन, अनुज्ञावचनेन=आज्ञावाक्येन।

हिन्दी—मन्दविष भी उन मेढकों को प्रसन्न करने के उद्देश्य से उन्हें अनेक प्रकार की चालों को दिखाने लगा सर्प के कोमल शरीर का स्पर्श होने से प्रसन्न होकर जलपाद ने कहा—

'हाथी, घोड़ा, रथ, मनुष्य तथा नौका आदि पर चढ़कर मुझे यह आनन्द नहीं मिला था जो आज इस मन्दविष के शरीर पर चढ़ने से मिल रहा है॥ २३३॥

दूसरे दिन वह छली सर्प उनको लेकर धीरे-धीरे चलने लगा। उसकी उस मन्दचाल को देखकर जलपाद ने पूछा—"भद्र! पहले की तरह आज तेज नहीं चल रहे हो क्या बात है?" मन्दविष ने कहा—देव! आज मैंने कुछ खाया नहीं है। भूख के कारण आपको लेकर चलने की शक्ति मुझमें नहीं रह गयी है।" जलपाद ने कहा—भद्र! यदि यही बात है तो कुछ

साधारण कोटि के मेढकों को खा लिया करो।" उसकी बात से प्रसन्न होकर मन्दविष ने उसके प्रति सम्मान प्रदर्शित करते हुये कहा—"देव! ब्राह्मण ने मुझे यही शाप भी दिया था। अतः आपकी इस आज्ञा से मैं बहुत अनुगृहीत हुआ हूँ। मुझे इससे बहुत बड़ी प्रसन्नता हुई है।"

ततोऽसौ नैरन्तर्येण मण्डूकान् भक्षयन् कतिपयैरहोभिर्बलवान् संवृत्तः। प्रहृष्टश्चान्तर्लीनसवहस्येदमब्रवीत्—

मण्डूका विविधास्वादाश्छलपूर्वोपसाधिताः।
कियन्तं कालमक्षीणा भवेयुः खादतो मम॥ २३४॥

जलपादोऽपि मन्दविषेण कृतकवचनव्यामोहितचित्तः किमपि नाऽवबुध्यते। अत्रावसरेऽन्यो महाकायः कृष्णसर्पस्तमुद्देशं समायातः। तं च मण्डूकैर्वाह्यमानं दृष्ट्वा विस्मयमगमत्। आह च—"वयस्य! यदस्माकमशनं तैः कथं वाह्यसे? विरुद्धमेतत्।" मन्दविषोऽब्रवीत्—

"सर्वमेतद्विजानामि यथा वाह्योऽस्मि दर्दुरैः।
किञ्चित्कालं प्रतीक्षेऽहं घृतान्धो ब्राह्मणो यथा"॥ २३५॥

सोऽब्रवीत्—"कथमेतत्?" मन्दविषः कथयति—

व्याख्या—विविधास्वादाः=विविधपदार्थभक्षकाः (विविधस्वादयुक्ता वा), छलपूर्वोपसाधिताः=कपटेनासादिताः॥ २३४॥ कृतकवचनव्यामोहितचित्तः=कपटवाक्येन मोहितः, अशनं=भोजनम्। दर्दुरः=मण्डूकैः॥ २३५॥

हिन्दी—मण्डूकों को निरन्तर खाने से वह सर्प कुछ ही दिनों में अत्यन्त बलवान् हो गया। मनही मन प्रसन्न होकर मुस्कराते हुये उसने कहा—"विविधस्वादों से युक्त ये मण्डूक छल के द्वारा मिलते जा रहे हैं। मेरे खाने पर ये बहुत दिनों में समाप्त होगे। अतः बहुत दिनों के लिये मैंने भोजन का प्रबन्ध कर लिया है"॥ २३४॥

मन्दविष के कपटवाक्यों से व्यामोहित वह जलपाद यह भी नहीं समझ पा रहा था कि मन्दविष उसी के कुल का विनाश कर रहा है। किसी दिन संयोग से एक दूसरा अत्यन्त विशालकाय सर्प उस स्थान पर आया। मण्डूकों को ढोते हुये उस सर्प को देखकर उसे बहुत आश्चर्य हुआ। अपनी उत्सुकता को शान्त करने के लिये उसने मन्दविष से पूछा—"मित्र! ये मेंढक तो हमारे भक्ष्य हैं। तुम इनकी सवारी बनकर यहाँ कैसे रह रहे हो? यह तो बिल्कुल विरुद्ध बात है।" उसकी बात को सुनकर मन्दविष ने कहा—"मैं इस बात को खूब अच्छी तरह से जान रहा हूँ कि मैं इन मेंढकों की सवारी बना हुआ हूँ। किन्तु उस घृतान्ध ब्राह्मण की तरह मैं भी कुछ दिनों तक प्रतीक्षा में काल्यापन कर रहा हूँ"॥ २३५॥

नवागन्तुक सर्प ने पूछा—"यह कैसे?"। मन्दविष ने कहा—

[ १६ ]

## ( घृतान्धब्राह्मण-कथा )

अस्ति कस्मिंश्चिन्नदधिष्ठाने यज्ञदत्तो नाम ब्राह्मणः। तस्य भार्या पुंश्चल्यन्यासक्तमना अजस्रं विटाय सखण्डघृतान् घृतपूरान् कृत्वा भर्तुश्चौरिकया प्रयच्छति। अथ कदाचिद् भर्ता दृष्ट्वाब्रवीत्—"भद्रे! किमेतत्परिपच्यते? कुत्र वाजस्रं नयसीदम्? कथय सत्यम्।"

सा चोत्पन्नप्रतिभा कृतकवचनैर्भर्तारमब्रवीत्—"अस्त्यत्र नातिदूरे भगवत्या देव्या आयतनं तत्राहमुपोषिता सती बलिं भक्ष्यविशेषांश्चापूर्वान्नयामि।"

व्याख्या—पुंश्चली = कुलटा, अजस्रं = सततं (प्रत्यहम्), विटाय = स्वजाराय, सखण्डघृतान् = घृतशर्करायुतान्, घृतपूरान् = भक्ष्यविशेषान् (घेवर), उत्पन्नप्रतिभा = प्रत्युत्पन्नमतिः, कृतकवचनैः = कपटवाक्यैः, उपोषिता = कृतव्रता।

हिन्दी—किसी नगर में यज्ञदत्त नाम का एक ब्राह्मण रहा करता था। उसकी स्त्री अत्यन्त व्यभिचारिणी एवं परपुरुषासक्त थी। अपने पति से छिपाकर वह अपने जारपति के लिये प्रतिदिन घेवर बनाकर दिया करती थी। एक दिन उसके पति ने उसको उक्त कार्य को करते हुए देख लिया। उसने अपनी स्त्री से पूछा—"प्रिये! यह क्या बना रही हो? प्रतिदिन इसे कहाँ ले जाया करती हो? सच्ची बात मुझे बता दो।"

प्रत्युपन्न मतिवाली उसकी स्त्री ने कहा—"यहाँ से थोड़ी दूर पर देवी का एक मन्दिर है। मैं देवी का व्रत कर रही हूँ। इन विशेष प्रकार के भोजनों को बनाकर मैं देवी के मन्दिर में बलि के लिये ले जाया करती हूँ।"

अथ तस्य पश्यतो गृहीत्वा तत्सकलं देव्यायतनाभिमुखी प्रतस्थे। यत्कारणं देव्यां निवेदितेनानेन मदीयो भर्तैवं मंस्यते यत् मम ब्राह्मणी भगवत्याः कृते भक्ष्यविशेषान्नित्यमेव नयतीति। अथ देव्यायतने गत्वा स्नानार्थं नद्यामवतीर्य यावत्स्नानक्रियां करोति तावद् भर्तापि मार्गान्तरेणागत्य देव्याः पृष्ठतोऽदृश्योऽवतस्थे।

अथ सा ब्राह्मणी स्नात्वा देव्यायतनमागत्य स्नानानुलेपनमाल्यधूपबलिक्रियादिकं कृत्वा देवीं प्रणम्य व्यजिज्ञपत्—"भगवति केन प्रकारेण मम भर्ताऽन्धो भविष्यति?।

व्याख्या—तत्सकलं = सम्पूर्णं भक्ष्यविशेषं, मार्गान्तरेण = द्वितीयमार्गेण, व्यजिज्ञपत् = प्रार्थयामास।

हिन्दी—ब्राह्मणी अपने पति के सामने ही उन पकवानों को लेकर देवी के मन्दिर की ओर चल पड़ी जिससे उसके पति को यह पूर्ण विश्वास हो जाय कि वह पकवानों को लेकर देवी के मन्दिर में ही प्रतिदिन जाया करती है। क्योंकि उसने अपने पति को यही विश्वास भी दिलाया था।

देवी के मन्दिर में पहुँचकर उसने उन पकवानों को मन्दिर में रख दिया स्वयं नदी में

स्नान करने के लिये चली गयी। जब वह स्नान करने लगी तो उसका पति भी किसी दूसरे मार्ग से आकर उस मन्दिर के पीछे खड़ा हो गया।

स्नान के पश्चात् वह देवी के मन्दिर में आकर गन्ध, धूप, पुष्प तथा बलि आदि से देवी का पूजन करने लगी। पूजा के बाद देवी को प्रणाम करके उसने कहा—"भगवति ऐसा कौन सा उपाय मैं करूँ कि जिससे मेरा पति अन्धा हो जाय ?।"

**तच्छ्रुत्वा स्वरभेदेन देवीपृष्ठस्थितो ब्राह्मणो जगाद—"यदि त्वमजस्रं घृतपूरादि-भक्ष्यं तस्मै भत्र प्रयच्छसि ततः स शीघ्रमन्धो भविष्यति।"**

**सा तु बन्धकी कृतकवचनवञ्चितमानसा तस्मै ब्राह्मणाय तदेव नित्यं प्रददौ। अथान्येद्युर्ब्राह्मणेनाभिहितम्—"भद्रे ! नाहं सुतरां पश्यामि।" तच्छ्रुत्वा चिन्तित-मनया—"देव्याः प्रसादोऽयं प्राप्तः" इति।**

**अथ तस्या हृदयवल्लभो विटस्तत्सकाशम् "अन्धीभूतोऽयं ब्राह्मणः किं मम करि-ष्यतीति" निःशङ्कं प्रतिदिनमभ्येति। अथान्येद्युस्तं प्रविशन्तमभ्याशगतं दृष्ट्वा केशै-र्गृहीत्वा लगुडपार्ष्णिप्रभृतिप्रहारैस्तावदताडयद् यावदसौ पञ्चत्वमाप। तामपि दुष्टपत्नीं छिन्ननासिकां कृत्वा विससर्ज। अतोऽहं ब्रवीमि—"सर्वमेतद्विजानामि"—इति।**

व्याख्या—बन्धकी = कुलटा, कृतकवचनवञ्चिता = कपटवचनवञ्चिता, तदेव = घृतपूरा-दिकं, सुतरां = यथावत्, प्रसादः = वरः। अभ्याशगतं = समीपस्थं, पार्ष्णिः = चरणप्रान्तभागः (एड़ी)।

हिन्दी—स्त्री की प्रार्थना को सुनकर उसके पति ने अपने स्वर को बदलकर कहा—"यदि तुम प्रतिदिन घेवर आदि बनाकर अपने पति को खिलाया करो तो वह बहुत शीघ्र अन्धा हो जायगा।"

पति के कपट-वाक्यों द्वारा वञ्चित वह कुलटा ब्राह्मणी अपने पति को प्रतिदिन वह पकवान बनाकर खिलाने लगी। कुछ दिनों के बाद एक दिन उसके पति ने कहा—"प्रिये ! मैं भलीभाँति देख नहीं पा रहा हूँ।"

पति के वचन को सुनकर उस ब्राह्मणी ने सोचा कि—'देवी का वर पूर्ण हो गया' वह बहुत प्रसन्न हुई। उधर उसके प्रिय जारपति ने भी सोचा कि—'यह ब्राह्मण तो अन्धा हो चुका है। अब यह मेरा कर ही क्या सकता है'। अतः वह प्रतिदिन निःशंक भाव से वहाँ आने लगा। एकदिन घर में निःशङ्क भाव से प्रवेश करते हुए उस व्यभिचारी को अपने समीप में पाकर उस ब्राह्मण ने उसकी चोटी पकड़ ली और दण्डों एवं एड़ियों के प्रहार से उसको इतना अधिक मारा कि वह वहीं मर गया। पुनः उसने अपनी उस दुष्ट स्त्री की नाक काट कर उसको घर से निकाल दिया।

उक्त कथा को सुनाकर मन्दविष ने कहा—"इसीलिए मैं कहता हूँ कि मैं यह खूब अच्छी तरह से जानता हूँ कि मैं इन मेंढकों का वाहन क्यों बना हुआ हूँ। किन्तु मैं भी उस ब्राह्मण की तरह समय की ही प्रतीक्षा कर रहा हूँ।"

अथ मन्दविषोऽन्तर्लीनमवहस्य पुनरपि "मण्डूका विविधास्वादाः"—इति तदेवाब्रवीत्। अथ जलपादस्तच्छ्रुत्वा सुतरां व्यग्रहृदयः-किमनेनाभिहितम् इति, तमपृच्छत्—"भद्र ! किं त्वयाभिहितमिदं विरुद्धं वचः" ?।

अथासावाकारप्रच्छादनार्थं "न किञ्चित्"—इत्यब्रवीत। तथैव कृतकवचनव्यामोहितचित्तो जलपादस्तस्य दुरभिसन्धिं नावबुध्यते। किं बहुना—तथा तेन सर्वेऽपि भक्षिताः, यथा बीजमात्रमपि नावशिष्टम्। अतोऽहं ब्रवीमि—"स्कन्धेनापि वहेच्छत्रुम्" इति।

व्याख्या—व्यग्रहृदयः = चञ्चलमनाः, आकारप्रच्छादनार्थं = स्वाभिप्रायगोपनार्थं, बीजमात्रं = वंशबीजमात्रम्।

हिन्दी—मन्दविष नाम का वह सर्प मुस्कराता हुआ पुनः मन ही मन उसी श्लोक को दुहराने लगा— 'विभिन्न स्वादों से युक्त ये मेंढक बहुत दिनों तक मेरे भोजन का कार्य चलाते रहेंगे।" जलपाद उसकी उक्त बात को सुनकर बहुत चिन्तित हुआ और यह जानने के लिए व्यग्र हो उठा कि इस सर्प ने क्या कहा है। उसने मन्दविष से पूछा—"भद्र ! अभी तुमने कैसी विरुद्ध बात कही है ?"

सर्प ने अपने अभिप्राय को छिपाने के लिए उत्तर दिया—"नहीं देव ! मैंने आपके विरुद्ध कुछ नहीं कहा है।" जलपाद उसके कपटयुक्त वाक्यों में विश्वास करके उसके द्वारा विहित दुष्ट सन्धि को जान नहीं सका और पूर्ववत् उसको अपना वाहन समझकर उसके साथ अपना मनोविनोद करता रहा। अन्ततो गत्वा वह सर्प उन सभी मेंढकों को खा गया और मेंढकों के वंश में बीजमात्र भी अवशिष्ट नहीं रह गया।

उक्त आख्यान को सुनाकर स्थिरजीवी ने कहा—"महाराज ! इसीलिए मैं कहता हूँ कि आवश्यकतानुसार शत्रु को अपने कन्धे पर भी चढ़ाया जाता है।

अथ राजन् ! यथा मन्दविषेण बुद्धिबलेन मण्डूका निहताः, तथा मयापि सर्वेऽपि वैरिण इति। साधु चेदमुच्यते—

वने प्रज्वलितो वह्निर्दहन्मूलानि रक्षति।
समूलोन्मूलनं कुर्याद्वायुर्यो मृदुशीतलः" ॥ २३६ ॥

मेघवर्ण आह—"तात ! सत्यमेवैतत्, ये महात्मानो भवन्ति ते महासत्त्वा आपद्गता अपि प्रारब्धं न विसर्जयन्ति।

उक्तञ्च यतः—

महत्त्वमेतन्महतां नयालङ्कारधारिणाम्।
न मुञ्चन्ति यदारब्धं कृच्छ्रेऽपि व्यसनोदये ॥ २३७ ॥

व्याख्या—वैरिणः = रिपवः, मृदुशीतलः = मृदुः शीतलश्चापि, वायुः समूलमुन्मलयति। ॥२३६॥ नयालङ्कारधारिणां = नीतिभूषितानां, व्यसनोदये = विपत्तावपि ॥ २३७ ॥

हिन्दी—महाराज ! जैसे मन्दविष ने अपनी बुद्धि से उन मेंढकों का विनाश किया था

उसी प्रकार मैंने भी बुद्धि से ही आप के शत्रुओं का विनाश किया है। यह ठीक ही कहा गया है कि—

अत्यन्त उग्र होते हुए भी दावाग्नि वन को जलाते समय वृक्षों के मूल को नहीं जला पाता है। किन्तु मृदु एवं शीतल पवन उनको समूल नष्ट कर देता है। (अतः यह स्पष्ट है कि—युद्ध से शत्रुओं के मूल का विनाश नहीं हो पाता हैं और शान्तभाव से छल-बुद्धि का प्रयोग करने से शत्रुओं का मूल भी विनष्ट हो जाता हैं)" ॥ २३६ ॥

मेघवर्ण ने कहा—"तात ! आपका कथन यथार्थ हैं। महान् व्यक्ति आपत्तिग्रस्त होने पर भी अपने आरम्भ किये हुये कार्य को विघ्नों के भय से छोड़ते नहीं है। कहा भी गया है कि—

नीतिरूपी आभूषणों से विभूषित महान् व्यक्तियों की महत्ता ही यही होती है कि वे आपत्तिग्रस्त होने पर भी अपने आरम्भ किए हुए कार्य को छोड़ते नहीं हैं ॥ २३७ ॥

तथा च—

प्रारभ्यते न खलु विघ्नभयेन नीचैः,
प्रारभ्य विघ्नविहिता विरमन्ति मध्याः।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः,
प्रारभ्य चोत्तमजना न परित्यजन्ति ॥ २३८ ॥

तत्कृतं निष्कण्टकं मम राज्यं शत्रून्निःशेषतां नयता त्वया। अथवा युक्तमेतन्नयवेदिनाम्। उक्तञ्च यतः—

ऋणशेषं चाग्निशेषं शत्रुशेषं तथैव च।
व्याधिशेषञ्च निःशेषं कृत्वा प्राज्ञो न सीदति" ॥ २३९ ॥

**व्याख्या**—निष्कण्टकं=शत्रुशल्यं, प्राज्ञः=बुद्धिमान्। न सीदति=दुःखं नानुभवति ॥ २३७ ॥

**हिन्दी**—और भी—

नीच जन विघ्नों के भय से किसी कार्य को आरम्भ ही नहीं करते हैं। मध्यकोटि के लोग कार्य को आरम्भ तो कर देते हैं किन्तु विघ्न पड़ते ही उसे छोड़ देते हैं। परन्तु उत्तम कोटि के व्यक्ति बार बार विघ्नों के द्वारा प्रताड़ित होने पर भी अपने प्रारम्भ किये हुये कार्य को छोड़ते नहीं हैं ॥ २३८ ॥

आपने अपनी बुद्धि के द्वारा मेरे शत्रुओं का विनाश करके मेरे राज्य को निष्कण्टक कर दिया है। अथवा नीतिमान् पुरुषों के लिये यह उचित ही है। कहा भी गया है कि—

जो व्यक्ति ऋण, अग्नि, शत्रु तथा व्याधि के शेष को नहीं छोड़ता है और उसको निःशेष कर डालता है, वह कभी भी दुःखी नहीं होता" ॥ २३९ ॥

सोऽब्रवीत्—"देव ! भाग्यवांस्त्वमेवासि यस्यारब्धं सर्वमेव संसिध्यति। तत्र

केवलं शौर्यं कृत्यं साधयति, किन्तु प्रज्ञया यत्क्रियते तदेव विजयाय भवति। उक्तञ्च यतः—

"शस्त्रैर्हता न हि हता रिपवो भवन्ति,
प्रज्ञाहतास्तु रिपवः सुहता भवन्ति।
शस्त्रं निहन्ति पुरुषस्य शरीरमेकं
प्रज्ञा कुलञ्च विभवञ्च यशश्च हन्ति ॥ २४० ॥

तदेवं प्रज्ञापुरुषकाराभ्यां युक्तस्यायत्नेन कार्यसिद्धयः सम्भवन्ति।

व्याख्या—शरीरमेकं=केवलं शरीरमेव, प्रज्ञा=बुद्धिः ॥ २४० ॥

हिन्दी—स्थिरजीवी ने कहा—"देव! भाग्यवान मैं नहीं हूँ, आप ही हैं कि जिसके द्वारा प्रारम्भ किया हुआ सम्पूर्ण कार्य स्वयं सिद्ध होता चला जा रहा है। केवल पराक्रम से ही कार्यों की सिद्धि नहीं होती अपितु जो कार्य विचार एवं बुद्धि पूर्वक किया जाता है, वही विजयकारक होता है। कहा भी गया है कि—

शस्त्रों द्वारा मारे गये शत्रु आमूल विनष्ट नहीं होते हैं किन्तु बुद्धि द्वारा मारे गये शत्रु आमूल विनष्ट हो जाते हैं। शस्त्र केवल शत्रु के शरीर का ही विनाश करता है किन्तु बुद्धि शत्रु के कुल, विभव तथा यश सबका विनाश कर डालती है ॥ २४० ॥

अतः बुद्धि और पराक्रम, दोनों के सहयोग से ही कार्यों की सिद्धि होती है।

यतः—

प्रसरति मतिः कार्यारम्भे दृढीभवति स्मृतिः,
स्वयमुपनमन्त्यर्था मन्त्रो न गच्छति विप्लवम्।
स्फुरति सफलस्तर्कश्चित्तं समुन्नतिमश्नुते,
भवति च रतिः श्लाघ्ये कृत्ये नरस्य भविष्यतः ॥ २४१ ॥

तथा नयत्यागशौर्यसम्पन्ने पुरुषे राज्यमिति। उक्तञ्च—

त्यागिनि शूरे विदुषि च संसर्गरुचिर्जनो गुणी भवति।
गुणवति धनं धनाच्छ्रीः श्रीमत्याज्ञा ततो राज्यम्" ॥ २४२ ॥

व्याख्या—स्मृतिः=स्मरणशक्तिः, अर्थाः=मनोरथाः (अभिप्रायाः), विप्लवं=फलहीनतां, समुन्नतिम्=अभ्युन्नतिम्, अश्नुते=आप्नोति, श्लाघ्ये=प्रशंसार्हे ॥ २४१ ॥ संसर्गरुचिः=संसर्गवान् ॥ २४२ ॥

हिन्दी—क्योंकि—

जिस व्यक्ति का भाग्य अनुकूल होता है और अभ्युन्नति होने वाली होती है, उसकी बुद्धि स्वतः अच्छे कार्यों में प्रवृत्त हो जाती है। उसकी स्मरणशक्ति स्वतः बढ़ जाती है। उसके मनोरथ स्वयं फलद होने लगते हैं। उसके द्वारा किये गये विचारादि कभी निष्फल नहीं होते। उसके मन में तर्क स्वयं विस्फुरित होने लगता है। उसका चित्त सदा प्रसन्नता

एवं अभ्युन्नति से व्याप्त रहने लगता है और प्रशंसनीय कार्यों को करने में उसका अनुराग बढ़ जाता है ॥ २४१ ॥

नीति, त्याग और शौर्य से युक्त पुरुष को ही राज्य-लाभ होता है। कहा भी गया है कि—

त्यागियों वीरों और विद्वानों के संसर्ग से ही मनुष्य गुणवान् होता है और गुणवान् व्यक्ति को ही धन-लाभ होता है। धन से श्री की प्राप्ति होती है, श्री से आज्ञा बढ़ने लगती है और आज्ञा के बढ़ने से ही राज्य लाभ होता है" ॥ २४२ ॥

मेघवर्ण आह—"नूनं सद्यःफलानि नीतिशास्त्राणि यत्त्वयानुकूल्येनानुप्रविश्यारिमर्दनः सपरिजनो निःशेषितः।

स्थिरजीव्याह—

"तीक्ष्णोपायप्राप्तिगम्योऽपि योऽर्थस्तस्याप्यादौ संश्रयः साधु युक्तः।
उत्तुङ्गाग्रः सारभूतो वनानां, नानभ्यर्च्यच्छिद्यते पादपेन्द्रः ॥ २४३ ॥

अथवा, स्वामिन्! किं तेनाभिहितेन, यद् अनन्तरकाले क्रियारहितम्, असुखसाध्यं वा भवति।

व्याख्या—आनुकूल्येन = तस्यानुकूलभावेन, अनुप्रविश्य = तस्यान्तःप्रविश्य निःशेषितः = विनाशितः। उत्तुङ्गाग्रः = अत्युन्नतः, सारभूतः = तत्त्वभूतः, अनभ्यर्च्य = अपूजयित्वा, पादपेन्द्रः = वृक्षः ॥ २४३ ॥

हिन्दी—मेघवर्ण ने कहा—"नीतिशास्त्र निश्चय ही सद्यः फलकारक होता है। नीतिशास्त्र के ही बल से आप मेरे शत्रु अरिमर्दन के विश्वस्त एवं अनुकूल बन गये थे और उसके गुप्त भेदों को जानकर आपने सपरिजन उसका विनाश किया है।" स्थिरजीवी ने कहा—

अत्युग्र (युद्धादि) उपायों से साध्य होने योग्य कार्यों में भी संश्रय ग्रहण करना उचित एवं उपयुक्त ही होता है। क्योंकि—वन में प्रविष्ट होकर पूजा आदि करने के बाद ही वन के सारभूत विशाल वृक्षों को काटा जाता है ॥ २४३ ॥

महाराज! ऐसे परामर्श से लाभ ही क्या हो सकता है कि जिसका कार्यान्वयन संभव न हो, अथवा उसके अनुसार कार्य करने से दुःख ही प्राप्त होता हो और सुख की प्राप्ति की आशा भी न हो।

साधु चेदमुच्यते—

अनिश्चितैरध्यवसायभीरुभिः, पदे पदे दोषशतानुदर्शिभिः।
फलर्विसंवादमुपागता गिरः, प्रयान्ति लोके परिहासवस्तुताम् ॥ २४४ ॥

न च लघुष्वपि कर्तव्येषु धीमद्भिरनादरः कार्यः। यतः—

शक्ष्यामि कर्तुमिदमल्पमयत्नसाध्यमत्रादरः क इति कृत्यमुपेक्षमाणः।
केचित्प्रमत्तमनसः परितापदुःखमापत्प्रसङ्गसुलभं पुरुषाः प्रयान्ति ॥ २४५ ॥

तदद्य जितारेमंद्विभोर्यथापूर्वं निद्रालाभो भविष्यति। उच्यते चैतत्—

व्याख्या—अनिश्चितैः=अस्थिरबुद्धिभिः, अध्यवसायभीरुभिः=अध्यवसायकातरैः, दोषज्ञतानुदर्शिभिः=छिद्रान्वेषणतत्परैः, विसंवादमुपागताः=विपरीततामुपागताः, गिरः=वचनानि, परिहासवस्तुतां=परिहासविषयतां, प्रयान्ति=गच्छन्ति, ॥ २४४ ॥ अनादरः=उपेक्षाभावः। अयत्नसाध्यं=सुखसाध्यम् आयासं विनैव साध्यमिति भावः। आदरः=आग्रहः, परितापदुःखं=पश्चात्तापादिदुःखम्, आपत्-प्रसङ्गसुलभं=विपत्सुलभम् ॥ २४५ ॥

हिन्दी—यह ठीक ही कहा गया है कि अस्थिर बुद्धिवाले, अध्यवसाय से डरनेवाले, पद-पदपर छिद्रान्वेषण करनेवाले व्यक्तियों की वाणी जब फलागमकाल में झूठी सिद्ध हो जाती है तो वे लोकनिन्दा एवं परिहास के ही पात्र बनते हैं ॥ २४४ ॥

साधारण से साधारण कार्य में भी बुद्धिमान् व्यक्तियों को उपेक्षाभाव नहीं रखना चाहिये, क्योंकि—

'यह कार्य तो अत्यन्त छोटा है। इसको तो मैं अनायास ही कर सकता हूँ। मेरे लिये यह कोई कठिन कार्य नहीं है, अतः इसके विषय में अधिक ध्यान देने की आवश्यकता ही क्या है' इत्यादि वाक्यों का प्रयोग करके किसी कार्य को करने के समय उपेक्षाभाव प्रदर्शित करनेवाले आलसी एवं प्रमादी व्यक्ति बाद में कार्य के अपूर्ण रह जानेपर या विगड़ जानेपर आपत्तिसुलभ पश्चात्ताप आदि दुःखों को ही प्राप्त करते हैं ॥ २४५ ॥

निःसर्पे हतसर्पे वा भवने सुप्यते सुखम्।
दृष्टनष्टभुजङ्गे तु निद्रा दुःखेन लभ्यते ॥ २४६ ॥

तथा च—

विस्तीर्णव्यवसायसाध्यमहतां स्निग्धोपयुक्ताशिषां,
कार्याणां नयसाहसोन्नतिमतामिच्छापदारोहिणाम्।
मानोत्सेकपराक्रमव्यसनिनः पारं न यावद् गतः,
सामर्षे हृदयेऽवकाशविषमा तावत्कथं निर्वृतिः ॥ २४७ ॥

व्याख्या—विस्तीर्णव्यवसायसाध्यानां = विपुलश्रमसाध्यानां, नयसाहसोन्नतिमतां= नीतिसाहसादिसाध्यानाम्, इच्छापदारोहिणां=चिकीर्षितानां, सामर्षे=चिन्ताव्यग्रे, निर्वृतिः= शान्तिः ॥ २४७ ॥

हिन्दी—शत्रुओं को जीतने के पश्चात् आज महाराज को पूर्ववत् निद्रा आयेगी। कहा भी जाता है कि—

उसी घर में शान्तिपूर्वक सोया जा सकता है जिस घर में या तो सर्प रहता ही न हो, अथवा मार डाला गया हो। एक बार दृष्टि में आकर भाग जाने वाले सर्प से युक्त घर में सुखपूर्वक निद्रा नहीं आ सकती ॥ २४७ ॥

और भी—

जिन कार्यों की सिद्धि के लिये आशीर्वाद एवं शुभकामना की अपेक्षा की जाती है,

जो कठोर एवं पर्याप्त परिश्रमसाध्य होते हैं, जिनकी सिद्धि में नय, साहस, धैर्य आदि का अवलम्बन करना आवश्यक होता है और जिनको पूर्ण करने की प्रबल इच्छा होती है, उन कार्यों को जब तक समाप्त नहीं कर लिया जाता तब तक मानी, पराक्रमी, एवं साहसी व्यक्तियों के हृदय में शान्ति तथा सुख के विश्राम का अवकाश ही कहाँ मिलता है ? ॥ २४८ ॥

तदवसितकार्यारम्भस्य विश्राम्यतीव मे हृदयम् । तदिदमधुना निहतकण्टकं राज्यं प्रजापालनतत्परो भूत्वा पुत्रादिक्रमेणाचलच्छत्रासनश्रीश्चिरं भुङ्क्ष्व । अपि च—

प्रजा न रञ्जयेद्यस्तु राजा रक्षादिभिर्गुणैः ।
अजागलस्तनस्येव तस्य राज्यं निरर्थकम् ॥ २४८ ॥

गुणेषु रागो व्यसनेष्वनादरो, रतिः सुभृत्येषु च यस्य भूपतेः ।
चिरं स भुङ्क्ते चलचामरांशुकां, सितातपत्राभरणां नृपश्रियम् ॥ २४९ ॥

व्याख्या—अवसिताकार्यारम्भस्य = सफलमनोरथस्य, विश्राम्यतीव = विश्रामं चिकीर्षतीव, निहतकण्टकं = हतशत्रुं, रक्षादिभिः = ईतिभीत्यादिभिः, अजागलस्तनस्येव = अजागलस्थमांसग्रन्थिरिव ॥ २४८ ॥ रागः = अनुरागः, चलचामरांशुकां = चलचामरांशुकयुतां, सितातपत्राभरणां = श्वेतातपत्रभषगभूषितां, राज्यश्रियं = राज्यलक्ष्मीम् ॥ २४९ ॥

हिन्दी—महाराज ! आरम्भ किये हुये कार्यों के पूर्ण हो जाने से मेरा भी हृदय अब पूर्णशान्ति का अनुभव कर रहा है । अतः अब आप प्रजा के हित का ध्यान रखते हुये निष्कण्टक, वंशानुगत और अचल छत्र, चामर, सिंहासन एवं लक्ष्मी से युक्त राज्य का उपभोग कीजिये । कहा गया है कि—

जो राजा सद्गुणों से युक्त समुचित सुरक्षा आदि की व्यवस्था करके प्रजा का अनुरञ्जन नहीं करता है, उसका राज्यारोहण बकरी के गले में व्यर्थ लटकने वाले स्तनों की तरह निरर्थक होता है ॥ २४८ ॥

जिस राजा के हृदय में गुणों के प्रति अनुराग, व्यसनों के प्रति अनादर एवं सद्भृत्यों के प्रति स्नेह आदि विद्यमान होता है वही चञ्चलचामर रूपी वस्त्रों और श्वेत छत्र रूपी आभरणों से विभूषित राज्यश्री का उपभोग चिरकाल तक कर पाता है ॥ २४९ ॥

न च त्वया प्राप्तराज्योऽहमिति मत्वा श्रीमदेनात्मा व्यंसयितव्यः । यत्कारणं—चला हि राज्ञो विभूतयः । वंशारोहणवद्राज्यलक्ष्मीर्दुरारोहा क्षणनिपाता च । पारदरसवत् प्रयत्नशतैरपि धार्यमाणा दुर्धरा । प्रशस्ताराधिताप्यन्ते विप्रलम्भिनी । वानरजातिरिव विद्रुतानेकचित्ता । पद्मपत्रादकमिवाघटितसंश्लेषा । पवनगतिरिवातिचपला । अनार्यसङ्गतिमिवास्थिरा । आशीविष इव दुरुपचारा । सन्ध्याभ्रलेखेव मुहूर्तरागा । जलबुद्बुदावलीव स्वभावभङ्गुरा । शरीरप्रकृतिरिव कृतघ्ना । स्वप्नलब्धद्रव्यराशिरिव क्षणदृष्टनष्टा ।

व्याख्या—श्रीमदेन = स्वराजलक्ष्म्या दर्पेण, व्यंसयितव्यः = वञ्चयितव्यः । कष्टेन क्षणविनिपाता = क्षणेन पातयितुं योग्या, दुर्धरा = धारयितुं योग्या, आराधिता = पूजिता सत्कृतापि,

विप्रलम्भिनी = वियोगप्रिया ( अन्यत्र गमनशीला ), विद्रुता = चञ्चला, अघटितसंश्लेषा = विच्छिन्ना ( सम्पर्करहिता ) अनार्यः = दुष्टः, आशीविष इव = सर्प इव, दुरुपचारा = कठिनोपचारा, सन्ध्याभ्रलेखेव = सन्ध्याकालिकमेघमालेव, मुहूर्तरागा = अल्परागवती, स्वभावभङ्गुरा = मुहूर्तस्थिरा ( क्षणभङ्गुरा ) ।

हिन्दी—'मैं राजा हूँ' यह सोचकर राजलक्ष्मी के मद से अपने को कभी धोखे में न डालियेगा । क्योंकि—राजा की विभूतियाँ चञ्चल होती हैं । बांस की तरह लक्ष्मी भी दुरारोह होती हैं और क्षणमात्र में ही गिर जानेवाली होती हैं । वह पारद की तरह अनेक प्रयत्नों के द्वारा रोकने योग्य एवं दुर्धरा होती है, अत्यधिक आराधना करने पर भी अन्यत्र गमनशील एवं वियोगदायिका होती है, वानरजाति की तरह चपल एवं अस्थिरबुद्धि होती है, पद्मपत्र पर पड़े हुये जल की तरह सम्पर्कहीन होती है, वायु की गति की तरह चञ्चल होती है, दुष्टों की सङ्गति की तरह अस्थिर होती है, सर्प के विष की तरह अत्यन्त कठिन उपचार के योग्य होती है, जल के बुद्‌बुदों की तरह क्षणभङ्गुर होती है, शरीर की प्रकृति की तरह कृतघ्न होती है और स्वप्न में प्राप्त हुए धन की तरह देखने के बाद तत्काल विनष्ट हो जाने वाली होती है ।

अपि च—

यदैव राज्ये क्रियतेऽभिषेकस्तदैव बुद्धिर्व्यसनेषु योज्या ।
घटा हि राज्ञामभिषेककाले सहाम्भसैवापदमुद्गिरन्ति ॥ २५० ॥

न च कश्चिदनधिगमनीयो नामास्त्यापदाम् । उक्तञ्च—

रामस्य व्रजनं बलेर्नियमनं पाण्डोः सुतानां वनं,
वृष्णीनां निधनं नलस्य नृपते राज्यात्परिभ्रंशनम् ।
नाट्याचार्यकमर्जुनस्य पतनं सञ्चिन्त्य लङ्केश्वरे,
सर्वं कालवशाज्जनोऽत्र सहते कः कं परित्रायते ॥ २५१ ॥

व्याख्या—सहाम्भसा = अभिषेकछलेन सह, उद्‌गिरन्ति = वमन्ति । अनधिगमनीयः = अगम्यो विषयः । नियमनं = बन्धनम् । लङ्केश्वरे = रावणे, ( रावणस्य पतनं वा ) परित्रायते = रक्षति ॥ २५१ ॥

हिन्दी—और भी कहा गया है कि—

राज्याभिषेक होते ही अनेक प्रकार की विपत्तियों को दूर करने में एवं नाना विलास-सामग्रियों के उपभोग में बुद्धि व्यस्त हो जाती है । अभिषेक के लिये सज्जित घट जल-वृष्टि के साथ ही राजा पर आपत्तियाँ भी बरसाते हैं ।

आपत्ति के लिये कोई भी स्थान अगम्य नहीं होता और कोई भी विषय अनधिगमनीय नहीं होता । कहा भी गया है कि—

राम के वनवास, बलि के बन्धन, पाण्डवों के वन गमन, वृष्णियों के निधन, नल के

राज्य-निर्वासन, अर्जुन का ( वृहन्नला के रूपमें ) नृत्य की शिक्षा देने एवं रावण के पतन को देखने से यही प्रतीत होता है कि भाग्यवश प्रत्येक व्यक्ति को आपत्ति सहनी पड़ती है। कोई भी किसी को बचानेवाला नहीं होता है ॥ २५१ ॥

क्व स दशरथः स्वर्गं भूत्वा महेन्द्रसुहृद् गतः,
क्व स जलनिधेर्वेलां बद्ध्वा नृपः सगरस्तथा।
क्व स करतलाज्जातो वैन्यः सूर्यतनुर्मनु-
र्ननु बलवता कालेनैते प्रबोध्य निमीलिताः ॥ २५२ ॥

मान्धाता क्व गतस्त्रिलोकविजयी राजा क्व सत्यव्रतो,
देवानां नृपतिर्गतः क्व नहुषः सच्छास्त्रवित्केशवः।
मन्ये ते सरथाः सकुञ्जरवराः शक्रासनाध्यासिनः,
कालेनैव महात्मना ननु कृताः कालेन निर्वासिताः ॥ २५३ ॥

व्याख्या—महेन्द्रसुहृद्=इन्द्रस्य मित्रम्, सूर्यतनुः=सूर्यसुतः, प्रबोध्य=उद्बोध्य, निमीलिताः=शय्यातलमारोपिताः ॥ २५२ ॥ सत्यव्रतः=भीष्मः, सच्छास्त्रवित्=विविध-शास्त्रज्ञः, केशवः=कृष्णः, शक्रासनाध्यासिनः=देवेन्द्रसिंहासनाध्यासिनः ( इन्द्र के सिंहासन पर बैठने वाले ), निर्वासिताः=विनाशिताः ॥ २५३ ॥

हिन्दी—इन्द्र का मित्र बनकर उनके सिंहासन पर एक साथ बैठने वाले राजा दशरथ आज कहाँ चले गये ? समुद्र की सीमा स्थिर करने वाले राजा सगर कहाँ चले गये ? करतल के मन्थन से उत्पन्न होने वाले राजा वैन्य अब कहाँ रहे ? सूर्य के पुत्र महाराज मनु आज कहाँ हैं ? उन महापुरुषों के विनाश को देखकर यही निष्कर्ष निकलता है कि काल ही समय पर सबको जगाता है और पुनः सुला भी देता है। काल ही सबकी कीर्ति को बढ़ाता है और समय आने पर उसे मिटा भी देता है ॥ २५२ ॥

त्रिलोकविजयी महाराज मान्धाता आज कहाँ चले गये ? सत्यप्रतिज्ञ भीष्म आज कहाँ हैं ? देवताओं के राजा बननेवाले महाराज नहुष आज कहाँ हैं ? महायोगिराज भगवान् कृष्ण कहाँ गये ? इनके विनाश को देखकर यही मानना पड़ता है कि ये महारथी असङ्ख्य कुञ्जरों के अधिपति एवं इन्द्र के सिंहासन पर बैठने वाले महापुरुष काल के ही द्वारा बनाये गये थे और उसी के द्वारा नष्ट भी कर दिये गये ॥ २५३ ॥

अपि च—

स च नृपतिस्ते सचिवास्ताः प्रमदास्तानि काननवनानि।
स च ते च ताश्च तानि च कृतान्तदृष्टानि नष्टानि ॥ २५४ ॥

एवं मत्तकरिकर्णचञ्चलां राज्यलक्ष्मीमवाप्य न्यायैकनिष्ठो भूत्वोपभुङ्क्ष्व”।

इति महामहोपाध्याय श्रीविष्णुशर्मविरचितं
काकोलूकीयं नाम तृतीयं तन्त्रं समाप्तम् ॥

व्याख्या—नृपतिः = राजा, प्रमदाः = स्त्रियः, कृतान्तदष्टानि = कालभक्षितानि, नष्टानि = विनष्टानि ॥ २५४ ॥

हिन्दी—और भी—

वह राजा, वे सचिव, सुन्दर स्त्रियाँ, सुरम्य कानन एवं उपवन, अब कहाँ रहे ? काल के द्वारा केवल उनकी स्मृतिमात्र रह गयी है । कालवश एकदिन वह भी समाप्त हो जायगी ॥ २५४ ॥

अतः प्रमत्त हाथी के कानों की तरह सतत इधर-उधर घूमने वाली चञ्चल राजलक्ष्मी को पाकर आप गर्वहीन और न्यायनिष्ट होकर राज्य का उपभोग करें और प्रजा का हित करते रहें"।

इति श्री पं० वासुदेवात्मजेन श्रीश्यामाचरणपाण्डेयेन हिन्दी-संस्कृत-
टीकाभ्यां विभूषितं काकोलूकीयं नाम पञ्चतन्त्रस्य
तृतीयं तन्त्रं समाप्तम् ॥
॥ ॐ शान्तिः ॥

---

॥ श्रीः ॥

# पञ्चतन्त्रे

## : लब्धप्रणाशम् :

### ( चतुर्थं तन्त्रम् )

अथेदमारभ्यते लब्धप्रणाशं नाम चतुर्थं तन्त्रं, यस्यायमादिमः श्लोकः—

समुत्पन्नेषु कार्येषु बुद्धिर्यस्य न हीयते।
स एव दुर्गं तरति जलस्थो वानरो यथा ॥ १ ॥

तद्यथानुश्रूयते—अस्ति कस्मिंश्चित्समुद्रोपकण्ठे महाञ्जम्बूपादपः सदाफलः। तत्र च रक्तमुखो नाम वानरः प्रतिवसति स्म। तत्र च तस्य तरोरधः कदाचित्करालमुखो नाम मकरः समुद्रसलिलान्निष्क्रम्य सुकोमलवालुकासनाथे तीरोपान्ते न्यविशत्।

व्याख्या—अथ शब्दो मङ्गलार्थकोऽनन्तरवाचकश्च। लब्धप्रणाशः=लब्धस्य=प्राप्तस्य, प्रणाशः=विनाशः, लब्धप्रणाशो यस्मिन् तल्लब्धप्रणाशं, तन्त्रं=प्रकरणम्, अध्यायो वा। कार्येषु समुत्पन्नेषु=उपस्थितेषु, यस्य बुद्धिः=मतिः, न हीयते=न क्षीयते ( कुण्ठिता न भवति ), स एव दुर्गं=दुर्गमं मार्गं, व्यसनं वा ॥१॥ समुद्रोपकण्ठे=समुद्रस्य तीरे, पादपः=वृक्षः, सदाफलः=सर्वर्तुफलदः, मकरः=ग्राहः, सलिलात्=जलात्, निष्क्रम्य=निर्गत्य, तीरोपान्ते=तटस्य समीपे, न्यविशत्=अतिष्ठत्।

हिन्दी—विष्णुशर्मा ने राजपुत्रों से कहा—"मैं अब लब्धप्रणाश नाम के चतुर्थ तन्त्र को आरम्भ करता हूँ जिसका प्रथम श्लोक यह है—

कार्य ( या आपत्ति ) के आ जाने पर जिस व्यक्ति की बुद्धि क्षीण ( कुण्ठित ) नहीं होती है, वह दुर्गम मार्गों ( दुर्लङ्घ्य आपत्तियों ) को पार कर सकता है। जैसे—जल में निवास करने वाले रक्तमुख नाम के वानर ने अपनी बुद्धि के द्वारा एक बहुत बड़ी विपत्ति को पार कर लिया था ॥ १ ॥

जैसा कि सुना जाता है—किसी समुद्र के तटपर सभी ऋतुओं में फलने वाला एक विशाल जामुन का वृक्ष है। उस वृक्ष पर कभी रक्तमुख नाम का एक वानर निवास करता था। किसी दिन संयोग से करालमुख नाम का एक मगर समुद्र से निकल कर उस वृक्ष के नीचे कोमल-वालुका से युक्त भूमि पर बैठ गया।

ततश्च रक्तमुखेन स प्रोक्तः—"भोः! भवान् समभ्यागतोऽतिथिः, तद्भक्षयतु मया दत्तान्यमृततुल्यानि जम्बूफलानि। उक्तञ्च—

प्रियो वा यदि वा द्वेष्यो मूर्खो वा यदि पण्डितः।
वैश्वदेवान्तमापन्नः सोऽतिथिः स्वर्गसंक्रमः॥ २॥
न पृच्छेच्चरणं गोत्रं न च विद्यां कुलं न च।
अतिथिं वैश्वदेवान्ते श्राद्धे च मनुरब्रवीत्॥ ३॥

व्याख्या—प्रोक्तः=कथितः, समभ्यागतः=समागतः, अतिथिः=अभ्यागतः। अमृत-तुल्यानि=अमृतसदृशानि। वैश्वदेवान्ते=बलिवैश्वदेवकर्मान्ते, आपन्नः=प्राप्तः, स्वर्गसंक्रमः=स्वर्गस्य मार्गः (स्वर्गलोकप्रापकः, स्वर्गाप्तौ साधनभूतः), चरणं=शाखाम्॥ २–३॥

हिन्दी—उसको देखकर रक्तमुख ने कहा—"महाशय! आप मेरे यहाँ आये हुये अतिथि हैं। अतः मेरे द्वारा प्रदत्त अमृत के समान मधुर इन जम्बू फलों को खाइये। कहा भी गया है कि—

अपना प्रिय हो अथवा शत्रु हो, मूर्ख हो या विद्वान् हो, जो व्यक्ति बलि-वैश्वदेव के पश्चात् द्वार पर आ जाता है, उसको अतिथि के रूप में आया हुआ स्वर्ग का मार्ग समझना चाहिये॥ २॥

मनु का कथन है कि श्राद्ध एवं बलिवैश्वदेव के अनन्तर भोजन का समय हो जाने पर समागत अतिथि से उसके वेद की शाखा, गोत्र, विद्या एवं कुल आदि के विषय में प्रश्न नहीं करना चाहिये॥ ३॥

दूरमार्गश्रमश्रान्तं वैश्वदेवान्तमागतम्।
अतिथिं पूजयेद्यस्तु स याति परमां गतिम्॥ ४॥
अपूजितोऽतिथिर्यस्य गृहाद्याति विनिःश्वसन्।
गच्छन्ति विमुखास्तस्य पितृभिः सह देवताः"॥ ५॥

एवमुक्त्वा तस्मै जम्बूफलानि ददौ। सोऽपि तानि भक्षयित्वा तेन सह चिरं गोष्ठीसुखमनुभूय, भूयोऽपि स्वभवनमगात्।

व्याख्या—दूरमार्गश्रमश्रान्तं=दूरदेशागतं श्रमश्रान्तं च, परमां=श्रेष्ठां, गतिं=गमनं, स्थानमितिभावः॥ ४॥ विनिःश्वसन्=कष्टान्निःश्वासं परित्यजन्, पितृभिः=पितृपितामहादिभिः, सह देवता अपि विमुखाः=अकृतादरा इव क्रुद्धाः सन्तः, गच्छन्तीति भावः॥ ५॥ चिरं=बहु-कालं यावत्, स्वभवनं=स्वस्थानम्, अगात्=अगच्छत्।

हिन्दी—दूर से आये हुये श्रान्त और बलिवैश्वदेव के पश्चात् भोजन काल में उपस्थित अतिथि की सेवा करने वाला व्यक्ति परमपद का भागी होता है॥ ४॥

जिस व्यक्ति के द्वार से अतिथि दुःखी होकर दीर्घनिःश्वास छोड़ता हुआ चला जाता है उसके घर से पितृगण एवं देवता भी विमुख होकर चले जाते हैं"॥ ५॥

उक्त बातों को कहने के बाद उस वानर ने मगर को सुन्दर-सुन्दर जम्बूफल खाने लिये दिये। उन फलों को खाने के पश्चात् वह मगर उस वानर के साथ बहुत देर तक कथा-वार्ता का आनन्द लेता रहा। जब वह पूर्ण आनन्द ले चुका तो उठकर अपने स्थान को चला गया।

एवं नित्यमेव तौ वानरमकरौ जम्बूच्छायास्थितौ विविधशास्त्रगोष्ठ्या कालं नयन्तौ सुखेन तिष्ठतः। सोऽपि मकरो भक्षितशेषाणि जम्बूफलानि गृहं गत्वा स्वपत्न्याः प्रयच्छति।

अथान्यस्मिन् दिवसे तया स पृष्टः—"नाथ! क्वैवंविधान्यमृतफलानि प्राप्नोषि?"

स आह—"भद्रे! ममास्ति परमसुहृद्रक्तमुखो नाम वानरः, स प्रीतिपूर्वमिमानि फलानि प्रयच्छति।"

व्याख्या—विविधशास्त्रगोष्ठ्या = अनेकविधशास्त्रचर्चया, कालं नयन्तौ = समयमतिवाहयन्तौ, भक्षितशेषाणि = भोजनावशिष्टानि, प्रयच्छति = ददाति, अन्यस्मिन् दिवसे = अपरदिवसे, तया = मकरभार्यया, क्व = कुत्र, एवंविधानि = एतादृशानि मधुराणीति भावः।

हिन्दी—इस प्रकार प्रतिदिन वे दोनों वानर और मगर उस जामुन वृक्ष की छाया में बैठकर अनेक प्रकार की शास्त्र-चर्चायें किया करते थे और आनन्द से अपने दिन व्यतीत कर दिया करते थे। वह मगर अपने भोजन से बचे हुये जामुन के फलों को घर ले जाकर अपनी स्त्री को दे दिया करता था।

एक दिन उसकी स्त्री ने पूछा—"नाथ! तुम इन अमृत तुल्य फलों को कहाँ से रोज पा जाया करते हो?" उसने कहा—"भद्रे! रक्तमुख नाम का एक वानर मेरा अत्यन्त घनिष्ट मित्र है। वही प्रेमपूर्वक प्रतिदिन इन फलों को दिया करता है।"

अथ तयाभिहितं—"यः सदैवामृतप्रायाणीदृशानि फलानि भक्षयति, तस्य हृदयममृतमयं भविष्यति। तद्यदि मया भार्यया ते प्रयोजनं, ततस्तस्य हृदयं मह्यं प्रयच्छ, येन तद्भक्षयित्वा जरामरणरहिता त्वया सह भोगान्भुनज्मि।" स आह—"भद्रे! मा मैवं वद। यतः स प्रतिपन्नोऽस्माकं भ्राता। अपरं फलदाता। ततो व्यापादयितुं न शक्यते। तत्त्यजैनं मिथ्याग्रहम्। उक्तञ्च—

> एकं प्रसूयते माता द्वितीयं वाक् प्रसूयते।
> वाग्जातमधिकं प्रोचुः सोदर्यादपि बान्धवात्" ॥ ६ ॥

व्याख्या—अमृतप्रायाणि = अमृततुल्यानि, ईदृशानि मधुराणि, अमृतमयम् = अमृततुल्यमेव, प्रयोजनं = कार्यं, जरामरणरहिता = जरामृत्युवर्जिता, भोगान् = सुखानि, भुनज्मि = भुञ्जामि। प्रतिपन्नः = वाग्दानेन स्वीकृतः, व्यापादयितुं = मारयितुं, त्यज = परित्यज, मिथ्या = निरर्थकं व्यर्थम्, आग्रहं = हठम्। प्रसूयते = जनयति, वाक् = वाणी, सोदर्यः = भ्राता ॥ ६ ॥

हिन्दी—उसकी स्त्री ने कहा—"जो व्यक्ति सर्वदा इन अमृततुल्य स्वादिष्ट फलों को खाता रहता है, उसका हृदय भी अमृत के ही समान होगा। अतः यदि तुमको मुझसे कोई प्रयोजन है, तो उसके हृदय को ले आकर मुझे दे दो। जिससे कि मैं उसको खाकर जरामरण से रहित हो जाऊँ और तुम्हारे साथ विषयानन्द भोगती रहूँ। स्त्री की बात को सुनकर उसने कहा—"भद्रे! ऐसी बात न कहो। वह मेरा भाई है इस बात को मैं स्वीकार कर चुका हूँ। इसके अलावा वह फल देकर मेरा उपकार भी करता रहता है। अतः मैं उसको मार नहीं सकता। अपने इस निरर्थक आग्रह को तुम छोड़ दो। कहा भी गया है कि—

भाई दो प्रकार के होते हैं। एक भाई अपनी माता के गर्भ से जन्म लेता है और दूसरा अपनी वाणी के द्वारा बनाया जाता है। इन दोनों में से वाक्-दान द्वारा बनाया हुआ भाई अपने सहोदर भाई से श्रेष्ठ कहा गया है॥ ६॥

अथ मकर्याह—"त्वया कदाचिदपि मम वचनं नान्यथाकृतम्, तन्नूनं सा वानरी भविष्यति। यतस्तस्या अनुरागतः सकलमपि दिनं तत्र गमयसि। तत्त्वं ज्ञातो मया सम्यक्। यतः—

साह्लादं वचनं प्रयच्छसि न मे नो वाञ्छितं किञ्चन,
प्रायः प्रोच्छ्वसिषि द्रुतं हुतवहज्वालासमं रात्रिषु।
कण्ठाश्लेषपरिग्रहे शिथिलता यन्नादराच्चुम्बसे,
तत्ते धूर्त हृदि स्थिता प्रियतमा काचिन्ममेवाऽपरा"॥ ७॥

व्याख्या—नान्यथा कृतं = मद्वचनोल्लङ्घनं न कृतम्। नूनं = निश्चयेन, अनुरागतः = प्रेमतः, सकलं = सम्पूर्णं, गमयसि = अतिवाहयसि। साह्लादं = सोत्साहं, (सहर्षमित्यर्थः), वचनम् = उत्तरं, वाञ्छितम् = इच्छितं, द्रुतं = तीव्रतरं, प्रोच्छ्वसिषि = उच्छ्वासं त्यजसि, हुतवहज्वालासमं = अग्निज्वालातुल्यम्। कण्ठाश्लेषपरिग्रहे = कण्ठालिङ्गने सति, शिथिलता = शैथिल्यमावहसि। हेधूर्त = हे शठ! ते तव, हृदि = मनसि, ममेव = मत्सदृशी, अपरा = अन्या, प्रियतमा = प्रेयसी, स्थिता॥ ७॥

हिन्दी—मगर की स्त्री ने कहा—"इससे पूर्व कभी तुमने मेरे वचन का उल्लङ्घन नहीं किया है। जान पड़ता है, वह कोई वानरी है। क्योंकि उसके अनुराग में तुम अपना सम्पूर्ण दिन वहीं बिता दिया करते हो। आज मैं तुमको भली भाँति समझ गयी हूँ। क्योंकि—

तुम मेरे प्रश्नों का उत्तर प्रसन्न मन से नहीं दे रहे हो और मेरे मन की कोई इच्छा भी पूरी नहीं करते हो। रात्रि के समय अग्नि की ज्वाला के समान गर्म गर्म उच्छ्वास छोड़ा करते हो और आकण्ठ आलिङ्गनपूर्वक मेरा चुम्बन भी नहीं लेते हो। हे धूर्त! तुम्हारे हृदय में मेरी ही तरह कोई दूसरी भी प्रियतमा स्थित है" (यह बात आज मुझे ज्ञात हो चुकी है। अब तुम मुझसे बहाना नहीं बना सकते हो)॥ ७॥

सोऽपि पत्न्याः पादोपसंग्रहं कृत्वाऽङ्कोपरि निधाय तस्याः कोपकोटिमापन्नायाः सुदीनमुवाच—

"मयि ते पादपतिते किङ्करत्वमुपागते।
त्वं प्राणवल्लभे ! कस्मात्कोपने ! कोपमेष्यसि" ॥ ८ ॥

सापि तद्वचनमाकर्ण्याश्रुप्लुतमुखी तमुवाच—

सार्द्धं मनोरथशतैस्तव धूर्त ! कान्ता, सैव स्थिता मनसि कृत्रिमभावरम्या।
अस्माकमस्ति न कथञ्चिदिहावकाशस्तस्मात् कृतं चरणपातविडम्बनाभिः ॥ ९ ॥

व्याख्या—पादोपसङ्ग्रहं = चरणवन्दनं, अङ्कोपरि निधाय = क्रोडे कृत्वा, कोपकोटिमापन्नायाः = क्रोधाविष्टायाः ( चरमकोपयुक्तायाः ), सुदीनं = दीनभावमुपेत्य। कोपेन = कोपयुक्तेन मयि, पादपतिते = चरणपातकृते सति, किङ्करत्वं = दास्यं, उपागते = प्राप्ते ॥ ८ ॥ अश्रुप्लुतमुखी = अश्रुव्याप्तानना ( अश्रुभिः प्लुतं = व्याप्तं मुखं यस्याः सा ), धूर्त = वञ्चक ! मनोरथशतैः = अनेककामनाभिः, सार्धं = समं, कृत्रिमभावरम्या = कृत्रिमभावरमणीया ( कृत्रिमभावेन रमते या सा ), इह = तव मनसि ( हृदये ), अवकाशः = अवसरः, स्थानम्। चरणपातविडम्बनाभिः = चरणपातरूपाडम्बरैः, कृतम् = अलमिति भावः ॥ ९ ॥

हिन्दी—मगर ने क्रोध की चरमसीमा पर पहुँची हुई अपनी स्त्री के पैरों पर गिरकर उसको अपनी गोद में उठाते हुये अत्यन्त दीन भाव से कहा—"प्राणप्रिये ! अब तो मैं तुम्हारे पैरों पर गिर चुका हूँ और दासता के लिये भी प्रस्तुत हो चुका हूँ। हे कोपने ! तुम मुझपर इतना अप्रसन्न क्यों हो रही हो ?" ॥ ८ ॥

पति की बात को सुनकर अपने नेत्रों से अश्रुकणों को बहाती हुई वह बोली—"हे धूर्त ! तुम्हारे मन में तो वही प्रियतमा निवास कर रही है जो अपने कृत्रिम हाव-भाव से तुम्हारा अनुरञ्जन करती है (जिसने तुमको अपने कृत्रिम प्रेम में फंसा रखा है)। तुम भी अब उसी के विषय में दिन-रात सोचते रहते हो और उसकी इच्छाओं की पूर्ति के लिये अपने मन में विभिन्न कामनायें किया करते हो। तुम्हारे इस हृदय में अब मेरे लिये स्थान ही कहाँ रह गया है, जो मुझे बैठाने का प्रयास कर रहे हो। इस प्रकार से मेरे चरणों पर गिरकर झूठे प्रेम का ढोंग बनाना व्यर्थ है ॥ ९ ॥

अपरं, सा यदि तव वल्लभा न भवति, तत्किं मया भणितोऽपि तां न व्यापादयसि ? अथ यदि स वानरस्तत्कस्तेन सह तव स्नेहः ? तत्किं बहुना, यदि तस्य हृदयं न भक्षयामि तर्हि मया प्रायोपवेशनं कृतं विद्धि।"

एवं तस्यास्त निश्चयं ज्ञात्वा, चिन्ताव्याकुलितहृदयः सः प्रोवाच—"अहो, साध्विदमुच्यते—

वज्रलेपस्य मूर्खस्य नारीणां कर्कटस्य च।
एको ग्रहस्तु मीनानां नीलीमद्यपयोस्तथा ॥ १० ॥

व्याख्या—वल्लभा=प्रिया, भणितोऽपि=कथितोऽपि, न व्यापादयसि=न मारयसि, स्नेहः=अनुरागः। प्रायोपवेशनं=प्रायेणानशनव्रतमेव, विद्धि=जानीहि। वज्रलेपस्य=लेप-विशेषस्य (एक प्रकार का कड़ा सीमेंट), कर्कटस्य मीनानां=मत्स्यानां, नीली=नीलवर्णः, मद्यपः=सुरापः, ग्रह=आग्रहः, ग्रहणं वा (दुराग्रह या पकड़) ॥ १० ॥

हिन्दी—यदि वह तुम्हारी प्राणप्रिया नहीं है, तो तुम मेरे कहने पर भी उसको मारने के लिये प्रस्तुत क्यों नहीं हो रहे हो! यदि वह सचमुच में वानर ही है, तो उसके साथ मैत्री करने की तुम्हें आवश्यकता ही क्या है? उसके प्रति तुम्हारे हृदय में इतना अधिक स्नेह क्यों है? मैं अधिक नहीं कहना चाहती हूँ, किन्तु तुमने यदि मुझे उसका हृदय खाने को नहीं दिया तो यही समझ लेना कि आज से मेरा अनशन ही चल रहा है।"

अपनी स्त्री का निश्चय जान कर चिन्ता से व्यथित हो उसने अपने मन में कहा—"किसी ने यह ठीक ही कहा है कि—

वज्रलेप, मूर्ख, कर्कट, मत्स्य, नीलेरंग तथा शराबी व्यक्ति की दशा प्रायः समान होती है। उनका आग्रह भी एक ही होता है। ये लोग जिसको एकबार पकड़ लेते हैं, उसको पुनः छोड़ना प्रायः नहीं जानते ॥ १० ॥

**तत्किं करोमि? कथं स मे वध्यो भवति"? इति विचिन्त्य वानरपार्श्वमगमत्। वानरोऽपि चिरादायान्तं तं सोद्वेगमवलोक्य प्रोवाच—"भो मित्र! किमद्य चिरवेलया समायातोऽसि? कस्मात्साह्लादं नालपसि? न सुभाषितानि पठसि?"**

व्याख्या—सोद्वेगं=व्याकुलं, चिरवेलया=बहुकालानन्तरेण, साह्लादं=सोत्साहं सानन्दं, नालपसि=न वदसि।

हिन्दी—मैं क्या करूँ? मैं उसे कैसे मार सकता हूँ?" इत्यादि बातों को अपने मन में सोचकर वह उस वानर के पास गया। बहुत दिनों के बाद, व्याकुल और उद्विग्न मन से आते हुये उसको देखकर वानर ने पूछा—"मित्र! आज तुम इतने दिनों के बाद क्यों आये हो? सदा की भाँति प्रसन्न मन से बात-चीत भी नहीं कर रहे हो और सुभाषित श्लोकों को भी नहीं सुना रहे हो। तुम्हारी इस उदासी का क्या कारण है?"

**स आह—"मित्र! अहं तव भ्रातृजायया निष्ठुरतरैर्वाक्यैरभिहितः—'भोः कृतघ्न! मा मे त्वं स्वमुखं दर्शय। यतस्त्वं प्रतिदिनं मित्रमुपजीवसि, न च तस्य पुनः प्रत्युपकारं गृहदर्शनमात्रेणापि करोषि, तत्ते प्रायश्चित्तमपि नास्ति। उक्तञ्च—**

**ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते शठे।**
**निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥ ११ ॥**

व्याख्या—भ्रातृजायया=भ्रातृभार्यया (भौजाई के द्वारा), निष्ठुरतरैः=कठोरतरैः, मित्रमुपजीवसि=सुहृद्वृत्त्या जीवनं करोषि, गृहदर्शनमात्रेण=गृहानयनमात्रेण, सुरापे=मद्यपे, भग्नव्रते=व्रतच्युते, शठे=दुष्टे, खले, निष्कृतिः=प्रायश्चित्तेन पापशान्तिः ॥ ११ ॥



हिन्दी—मगर ने कहा—"मित्र! आज तुम्हारी भौजाई ने मुझे बहुत डाँट-फटकारा है।

उसने कहा है कि—"हे कृतघ्न ! तुम मुझे अपना यह मुख न दिखाओ तभी अच्छा है। क्यों कि तुम प्रतिदिन मित्र के यहाँ जाकर उसका दिया हुआ खाते हो और उसी से अपनी जीविका भी चलाते हो, किन्तु कभी भी तुम उसका कोई उपकार नहीं कर सके हो। तुम उसको अपने घर भी कभी नहीं ले आ सके हो। अतः तुम्हारी इस कृतघ्नता का कोई भी प्रायश्चित नहीं है। कहा भी गया है कि—

ब्रह्मघाती, शराबी, चोर, व्रतच्युत तथा खल व्यक्तियों के लिये विद्वानों ने प्रायश्चित्त का विधान लिखा भी है, किन्तु कृतघ्न के लिये किसी भी प्रकार का प्रायश्चित्त नहीं लिखा है ॥ ११ ॥

तत्त्वं मम देवरं गृहीत्वाद्य प्रत्युपकारार्थं गृहमानय, नो चेत्त्वया सह मे परलोके दर्शनम् इति। तदहं तयैवं प्रोक्तस्तव सकाशमागतः। तदद्य तया सह त्वदर्थे कलहायतो ममेयती वेला विलग्ना। तदागच्छ मे गृहम्। तव भ्रातृपत्नी रचितचतुष्का प्रगुणितवस्त्रमणिमाणिक्याद्युचिताभरणा द्वारदेशबद्धवन्दनमाला सोत्कण्ठा तिष्ठति।"

व्याख्या—कलहायतः = कलहायमानस्य, विलग्ना = व्यपगता। रचितचतुष्का = निर्मितचतुष्का ( चौक पूर कर ), प्रगुणितवस्त्रमणिमाणिक्याद्युचिताभरणा = समुचितवस्त्रालङ्करणादिभिः, मणिमाणिक्यादिनिर्मितमालाभिश्च सज्जितदेहा (प्रगुणितानि = सुसज्जीकृतानि वस्त्राणि, मणिमाणिक्यादीनि समुचितान्याभरणानि यया सा ), द्वारदेशबद्धवन्दनमाला—द्वारदेशे बद्धा वन्दनमाला यया सा, सोत्कण्ठा = उत्कण्ठायुक्ता।

हिन्दी—अतः आज तुम मेरे देवर को अपने साथ में लेकर ही घर में आना, अन्यथा मैं परलोक में ही तुमसे मिलूँगी।'

उसकी उपर्युक्त बातों को सुनने के बाद से तुमसे आग्रह करने के लिये तुम्हारे पास आया हूँ। तुम्हारे लिये उसके साथ झगड़ा करने में ही मेरा सम्पूर्ण समय व्यतीत हो गया। इसीलिये तुम्हारे पास आने में इतना अधिक विलम्ब हुआ है। तुम मेरे घर चलने के लिये शीघ्र प्रस्तुत हो जाओ। तुम्हारी भाभी तुम्हारी प्रतीक्षा में चौका पूर कर सुन्दर बहुमूल्य वस्त्रों गहनों एवं मालाओं आदि से अपना शृङ्गार करके और द्वार पर वन्दनवार आदि लगाकर उत्कण्ठापूर्वक बैठी है।"

मर्कट आह—"भो मित्र ! युक्तमभिहितं मद्भ्रातृपत्न्या। उक्तञ्च—

वर्जयेत् कौलिकाकारं मित्रं प्राज्ञतरो नरः !
आत्मनः संमुखं नित्यं य आकर्षति लोलुपः ॥ १२ ॥

तथा च—

ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति।
भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम् ॥ १३ ॥

व्याख्या—कौलिकाकारं = कौलिकाचारयुक्तं ( जुलाहे के स्वभाव वाले मित्र को ), यः लोलुपः = मित्रधनलुब्धः सन्, संमुखम् = आत्माभिमुखं ( अपनी ही ओर ), आकर्षति = कर्षय-

तीति भावः ( खींचता रहता है ) ॥ १२ ॥ गुह्यं=गुप्तं, प्रीतिलक्षणं=प्रीतेः=स्नेहस्य लक्षणं कथितम् ॥ १३ ॥

हिन्दी—मकर की बात को सुनकर मर्कट ने कहा—मित्र ! मेरी भाभी ने ठीक कहा है। कहा भी गया है कि—

बुद्धिमान् व्यक्ति को चाहिये कि वह कौलिक के समान आचरण करने वाले मित्र का साथ छोड़ दे। क्योंकि ऐसे मित्र अपने लोभ के कारण उसका धन चूसने के लिये निरन्तर अपनी ओर खींचते रहते हैं। स्वयं उनकी ओर आकृष्ट नहीं होते। ( कौलिक वस्त्र को बुनते समय कपड़े को ही अपनी ओर खींचता है, स्वयं आगे नहीं बढ़ता। ) ॥ १२ ॥

मित्रों को अपना धन देना, आवश्यकता पड़ने पर उनसे धन ग्रहण करना, अपनी गोपनीय बातों को मित्रों से बताना; मित्रों की गोपनीय बातों को उनसे पूछना, मित्रों को खिलाना और स्वयं भी उनका खाना प्रेम के ये ही छः लक्षण होते हैं ॥ १३ ॥

**परं वयं वनचराः, युष्मदीयं च जलान्ते गृहम्। तत्कथं शक्यते तत्र गन्तुम्; तस्मात्तामपि मे भ्रातृपत्नीमत्रानय, येन प्रणम्य तस्या आशीर्वादं गृह्णामि।" स आह—"भो मित्र ! अस्ति समुद्रान्तरे सुरम्ये पुलिनप्रदेशेऽस्मदीयं गृहम्। तन्मम पृष्ठमारूढः सुखेनाकुतोभयो गच्छ।" सोऽपि तच्छ्रुत्वा सानन्दमाह—"भद्र ! यद्येवं तत्किं विलम्ब्यते; त्वर्यताम्। एषोऽहं तव पृष्ठमारूढः।**

व्याख्या—वनचराः=अरण्यचराः, जलान्ते=जलमध्ये, पुलिनप्रदेशे=जलरहिते भूभागे, अकुतोभयः=निर्भयः, त्वर्यतां=शीघ्रतांकुरु।

हिन्दी—हमलोग अरण्यचारी हैं और आपका घर जल के भीतर है। वहाँ हम लोग कैसे जा सकते हैं ? अतः आप मेरी भाभी को भी यहाँ ले आयें जिससे मैं प्रणाम करके उनका भी आशीर्वाद प्राप्त कर लूँ।" मकर ने कहा—"मित्र ! समुद्र के भीतर एक अत्यन्त रमणीय टापू में मेरा घर है ? तुम मेरी पीठ पर चढ़कर अत्यन्त सुख से निर्भय होकर वहाँ पहुँच सकते हो।" मगर की बात को सुनकर प्रसन्न मन से उसने कहा—"भद्र ! यदि ऐसी बात है, तो आप विलम्ब क्यों कर रहे हैं ? शीघ्रता कीजिये। लीजिये मैं आप की पीठ पर चढ़ ही जाता हूँ।"

**तथानुष्ठितेऽगाधे जलधौ गच्छन्तं मकरमालोक्य भयत्रस्तमना वानरः प्रोवाच—"भ्रातः ! शनैः शनैर्गम्यतां, जलकल्लोलैः प्लाव्यते मे शरीरम्।"**

**तदाकर्ण्य मकरश्चिन्तयामास—"असावगाधं जलं प्राप्तो मे वशः सञ्जातः ! मत्पृष्ठंगतोऽस्मि तिलमात्रमपि चलितुं न शक्नोति; तस्मात्कथयाम्यस्य निजाभिप्रायं, येनाभीष्टदेवतास्मरणं करोति। आह च—"मित्र ! त्वं मया वधाय समानीतो भार्यावाक्येन विश्वास्य। तत्स्मर्यतामभीष्टदेवता"।**

व्याख्या—अगाधे=तरितुमशक्ये समुद्रमध्ये, भयत्रस्तमनाः=भययाकुलमनाः, जल-

कल्लोलैः = जलतरङ्गैः, प्लाव्यते = निमज्यते, तिलमात्रमपि = लेशमात्रमपि, निजाभिप्रायं = स्वाभिप्रायं, अभीष्टदेवता = इष्टदेवता ।

हिन्दी—मकर की पीठ पर चढ़कर चलने के पश्चात् जब उस मर्कट ने देखा कि मकर उसको लेकर समुद्र के मध्य भाग की ओर अगाध जल में ले जा रहा है, तो उसने भयभीत होकर कहा—"भाई ! थोड़ा धीरे-धीरे चलिये, जल की इन तरङ्गों से मेरा शरीर भीगता जा रहा है। जान पड़ता है कि मैं अभी डूब जाऊँगा।" वानर की बात को सुनकर मकर ने अपने मन में सोचा कि अब तो इसको लेकर मैं अगाध जल में आ चुका हूँ। अतः यह मेरे वश में तो आ ही गया है। मेरी पीठ से उतर कर यह तिल भर भी इधर-उधर नहीं जा सकता। अतः इसके समक्ष अब अपने अभिप्राय को कह ही देना चाहिये जिससे कि यह अपने इष्टदेवता का स्मरण कर ले। उपर्युक्त बात को सोचकर उसने मर्कट से कहा—मित्र ! स्त्री की बातों का विश्वास दिलाकर मैं तुम्हें यहाँ मारने के लिये ले आया हूँ। अतः तुम चाहो तो अपने इष्टदेवता का स्मरण कर सकते हो।"

स आह—"भ्रातः ! किं मया तस्यास्तवापि चापकृतं, येन मे वधोपायश्चिन्तितः ?" मकर आह—"भोः ! तस्यास्तावत्तव हृदयस्यामृतमयफलरसास्वादनमिष्टस्य भक्षणे दोहदः सञ्जातः, तेनैतदनुष्ठितम्।" प्रत्युत्पन्नमतिर्वानर आह—"भद्र ! यद्येवं, तत्किं त्वया मम तत्रैव न व्याहृतं, येन स्वहृदयं जम्बूकोटरे सदैव मया यत्सुगुप्तं कृतं तद्भ्रातृपत्न्या अर्पयामि। त्वयाहं शून्यहृदयोऽत्र कस्मादानीतः ?"

व्याख्या—तस्याः = तव भार्यायाः, अपकृतम् = अपकारः कृतः । मिष्टस्य = मधुरस्य, दोहदः = अभिलाषः, प्रत्युत्पन्नमतिः = समयोचितबुद्धियुक्तः, न व्याहृतं = न कथितं, सुगुप्तं = निगूढम्, अर्पयामि = ददामि। शून्यहृदयः = हृदयरहितः।

हिन्दी—वानर ने पूछा—"भाई ! मैंने उसका या आपका क्या बिगाड़ा है। (अपकार किया है) कि जिससे आपने मेरे वध का ही निश्चय कर लिया है ?"

मकर ने उत्तर में कहा—"मेरी स्त्री अमृत के समान मधुर फलों को खाने से अत्यन्त मधुर एवं स्वादिष्ठ हुए तुम्हारे हृदय-मांस को खाना चाहती है। इसलिये मैंने यह सब किया है।" प्रत्युत्पन्नमति वाले उस मर्कट ने तत्काल कहा—"भद्र ! यदि ऐसी ही बात थी तो आपने मुझसे वहां क्यों नहीं कहा, जिससे मैं जामुन के कोटर में सर्वदा सुरक्षित रखे हुए अपने हृदय को साथ लेता आता और अपनी भाभी को समर्पित कर देता। आप मुझे हृदयहीन बना कर क्यों यहाँ ले आये ?"

तदाकर्ण्य मकरः सानन्दमाह—"भद्र ! यद्येवं, तदर्पय मे हृदयं, येन सा दुष्टपत्नी तद् भक्षयित्वानशनादुत्तिष्ठति। अहं त्वां तमेव जम्बूपादपं प्रापयामि" एवमुक्त्वा निवृत्य जम्बूतलमगात्।

वानरोऽपि कथमपि जल्पितविविधदेवतोपचारपूजस्तीरमासादितवान्। ततश्च दीर्घतरचङ्क्रमणेन तमेव जम्बूपादपमारूढश्चिन्तयामास—"अहो, लब्धास्तावत्प्राणाः।

**व्याख्या**—जल्पितविविधदेवतोपचारपूजः=भाषितानेकदेवोपचारपूजः, (अनेक देवों की पूजा आदि की मनौती करके) आसादितवान्=प्राप्तवान्। दीर्घतरचङ्क्रमणेन=दीर्घतरचलनेन (पैर बढ़ाकर), लब्धाः=प्राप्ताः।

**हिन्दी**—उसकी बात को सुनकर मकर ने आनन्दयुक्त हृदय से कहा—"भद्र! यदि ऐसी बात है तो तुम अपना हृदय मुझे दे दो, जिससे मैं अपनी दुष्ट स्त्री को प्रदान कर दूँ और वह उसको खाकर अपने अनशनव्रत को तोड़ दे। मैं पुनः तुम्हें उसी जामुन के वृक्ष पर पहुँचा देता हूँ। उपर्युक्त बात कहकर वह वानर के साथ समुद्र तट पर स्थित जामुन वृक्ष की छाया में पहुँच गया।

किसी प्रकार से विवध देवताओं एवं देवियों की पूजा आदि मनाकर वह वानर भाग्य से समुद्र के तीर पर पहुँच गया। वहाँ पहुँचते ही वह दौड़कर उस जामुन के वृक्षपर चढ़ गया और अपने मन में सोचने लगा कि "आज बड़े भाग्य से मेरे प्राण बच गये हैं और मैं सकुशल वापस लौट आया हूँ।

अथवा सोऽध्विदमुच्यते—

न विश्वसेदविश्वस्ते विश्वस्तेऽपि न विश्वसेत्।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति॥ १४॥

तन्ममैतदद्य पुनर्जन्मदिनमिव सञ्जातम्," इति चिन्तयमानं मकर आह—"भो मित्र! अर्पय तद्धृदयं, यथा ते भ्रातृपत्नी भक्षयित्वानशनादुत्तिष्ठति।" अथ विहस्य, निर्भर्त्सयन् वानरस्तमाह—"धिग्धिङ्मूर्ख! विश्वासघातक! किं कस्यचिद्धृदयद्वयं भवति, तदाशु गम्यतां जम्बूवृक्षस्याधस्तलात्, न भूयोऽपि त्वयात्रागन्तव्यम्। उक्तञ्च यतः—

सकृद्दुष्टं च यो मित्रं पुनः सन्धातुमिच्छति।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा॥ १५॥

**व्याख्या**—अविश्वस्ते=विश्वासहीने (शत्रौ), न विश्वसेत्=विश्वासो न कर्तव्यः। विश्वासादुत्पन्नं=विश्वासाज्जातं, भयं, मूलानि निकृन्तति=विनाशयति॥ १४॥ निर्भर्त्सयन्=तर्जयन् (निन्दयन्), आशु=शीघ्रम्, सकृद् दुष्टं=वारैकमपि शत्रुभावं गतं, सन्धातुं=साधयितुन् (अनुकूलयितुमिति भावः)॥ १५॥

**हिन्दी**—अथवा ठीक ही कहा गया है कि—

अविश्वस्त (शत्रु) पर तो विश्वास नहीं करना चाहिये, विश्वस्त व्यक्ति का भी बहुत अधिक विश्वास नहीं करना चाहिये। क्योंकि—विश्वास के कारण उत्पन्न होने वाला भय मनुष्य के मूल को भी विनष्ट कर डालता है"॥ १४॥

अभी वह वानर उपर्युक्त बातों को सोच ही रहा था कि मगर ने उसे सम्बोधित करते हुये कहा—"मित्र! अपना वह हृदय तो दे दो, जिसको खाकर तुम्हारी भाभी अपने अनशन-व्रत को छोड़ दे।" वानर ने उसकी भर्त्सना करते हुये हँसकर उत्तर दिया—"मूर्ख! विश्वास-

घातक ! क्या किसी व्यक्ति को दो हृदय हुआ करता है ? इस जामुन के नीचे से तुम शीघ्र चले जाओ और फिर कभी इधर आने का प्रयत्न न करना । कहा भी गया है कि—

एकबार मित्र के शत्रु के रूप में परिणत हो जाने वाले मित्र को जो व्यक्ति पुनः अनुकूल बनाकर मित्र की कोटि में ले आने का प्रयत्न करता है, वह गर्भ को धारण करने वाली अश्वतरी ( खच्चरी ) के समान उसी के द्वारा मृत्यु को भी प्राप्त होता है। ( ऐसा सुना जाता है कि खच्चरी को जब प्रजनन सम्बन्धी पीड़ा होती है तो उसका उदर फट जाता है और गर्भस्थ-शिशु के बाहर आते ही वह मर जाती है ) ॥ १५ ॥

तच्छ्रुत्वा मकरः सविलक्षं चिन्तितवान्—"अहो, मयातिमूढेन किमस्य स्वचित्ताभिप्रायो निवेदितः ?, तद्यद्यसौ पुनरपि कथञ्चिद्विश्वासं गच्छति, तद्भूयोऽपि विश्वासयामि" । आह च—"मित्र ! हास्येन मया तेऽभिप्रायो लब्धः, तस्या न किञ्चित्तव हृदयेन प्रयोजनम् । तदागच्छ प्राघुणिकन्यायेनास्मद् गृहम् । तव भ्रातृपत्नी सोत्कण्ठा वर्तते ।"

वानर आह—"भो दुष्ट ! गम्यताम् । अधुना नाहमागमिष्यामि । उक्तञ्च—

बुभुक्षितः किं न करोति पापं, क्षीणा नरा निष्करुणा भवन्ति ।
आख्याहि भद्रे ! प्रियदर्शनस्य, न गङ्गदत्तः पुनरेति कूपम्" ॥ १६ ॥

व्याख्या—सविलक्षं = सलज्जम् , मूढेन = मूर्खेण, हास्येन = उपहासमिषेण, अभिप्रायः = हृदयस्थो भावः, लब्धः = प्राप्तः ( परीक्षित इति यावत् ), प्राघुणिकन्यायेन = अतिथिभावेन, बुभुक्षितः = क्षुधितः, क्षीणाः = क्षयमागताः, निष्करुणाः = दयारहिताः, प्रियदर्शनस्य = प्रियदर्शनाख्यसर्पस्य, आख्याहि = कथय, गङ्गदत्तः = गङ्गदत्ताख्यो मण्डूकः ॥ १६ ॥

हिन्दी—वानर की भर्त्सना को सुनकर लज्जित भाव से उस मकर ने अपने में कहा—"मैं कितना बड़ा मूर्ख हूँ । मैंने अपनी मूर्खता के कारण अपने मनोगत भाव को इस मर्कट से कह ही क्यों दिया ? अस्तु, मैं पुनः प्रयत्न करता हूँ। संभव है कि यह मेरे कहने सुनने में आकर किसी प्रकार से पुनः मेरा विश्वास कर ले। अतः पुनः इसको विश्वास दिलाने का प्रयास करता हूँ।" उपर्युक्त बात सोचने के पश्चात् उसने मर्कट से कहा—"मित्र ! मैंने तो हँसी के ब्याज से तुम्हारी मित्रता की परीक्षा ली थी। अब तुम्हारे हृदयगत भावों को मैंने समझ लिया है। तुम्हारी भाभी को तुम्हारे हृदय की कोई आवश्यकता नहीं है। अतः अब तुम अतिथि के रूप में मेरे घर चलो, तुम्हारी भाभी उत्कण्ठापूर्वक तुम्हारी प्रतीक्षा कर रही होगी। उसकी बात को सुनकर वानर ने कहा—"दुष्ट ! यहाँ से तत्काल चले जाओ। अब मैं कथमपि तुम्हारे पास आने वाला नहीं हूँ । कहा भी गया है कि—

क्षुधित व्यक्ति कौन सा पाप नहीं कर सकता । क्षीण व्यक्ति निष्करुण होते ही हैं। हे प्रिये ! उस प्रियदर्शन नाम के सर्प से जाकर कह दो कि अब गङ्गदत्त पुनः कूप में जाने वाला नहीं है ॥ १६ ॥

मकर ने पूछा—"कैसे ?" मर्कट ने कहना आरम्भ किया—

## [ १ ]
## ( गङ्गदत्तप्रियदर्शनयोः कथा )

कस्मिंश्चित्कूपे गङ्गदत्तो नाम मण्डूकराजः प्रतिवसति स्म। स कदाचिद्दायादैरुद्वेजितोऽरघट्टघटीमारुह्य निष्क्रान्तः। अथ तेन चिन्तितम्—यत्—"कथं तेषां दायादानां मया प्रत्यपकारः कर्तव्यः? उक्तञ्च—

आपदि येनापकृतं येन च हसितं दशासु विषमासु।
अपकृत्य तयोरुभयोः पुनरपि जातं नरं मन्ये॥ १७॥

व्याख्या—मण्डूकः = दर्दुरः (मेंढक), दायादैः = स्वबान्धवैः (पट्टीदारों से) उद्वेजितः = व्याकुलीकृतः, अरघट्टं = बहुघट्युतं जलोद्धरणयन्त्रम् (रहट), घटी = घटपङ्क्तिः, निष्क्रान्तः = कूपान्निर्गतः, आपदि = विपत्तौ, विषमासु = प्रतिकूलासु (दुर्दिनों में), जातं = समुत्पन्नम्॥ १७॥

हिन्दी—किसी कूप में गङ्गदत्त नाम का एक मण्डूकों का राजा निवास करता था। किसी दिन अपने पट्टीदारों के द्वारा व्याकुल किये जाने पर वह रहट के घड़ों पर चढ़कर कूप से बाहर निकल गया। तब उसने अपने मन में सोचा कि—कैसे मैं इन पट्टीदारों का अपकार करके अपने अपमान का बदला लें सकता हूँ?। कहा भी गया है कि—

आपत्ति के समय में जिस व्यक्ति ने अपकार किया हो और जिसने दुर्दिनों में उपहास किया हो, उन दोनों व्यक्तियों से अपने अपमान का बदला जो चुका ले, उस व्यक्ति का मैं द्वितीय जन्म लेना ही मानता हूँ॥ १७॥

एवं चिन्तयन् बिले प्रविशन्तं प्रियदर्शनाभिधं कृष्णसर्पमपश्यत्। तं दृष्ट्वा भूयोऽप्यचिन्तयत्—यद्—"एनं तत्र कूपे नीत्वा, सकलदायादानामुच्छेदं करोमि। उक्तञ्च—

शत्रुणा योजयेच्छत्रुं बलिना बलवत्तरम्।
स्वकार्याय यतो न स्यात्काचित् पीडाऽत्र तत्क्षये॥ १८॥

तथा च—

शत्रुमुन्मूलयेत्प्राज्ञस्तीक्ष्णं तीक्ष्णेन शत्रुणा।
व्यथाकरं सुखार्थाय कण्टकेनैव कण्टकम्"॥ १९॥

व्याख्या—एनं = सर्पं, नीत्वा = प्राप्य, उच्छेदं = विनाशं संहारं वा। तत्क्षये = शत्रुक्षये, पीडा = दुःखम्॥ १८॥ तीक्ष्णेन = उग्रेण, तीक्ष्णं = सबलम् (अत्युग्रं वा) व्यथाकरं = कष्टदायकं, सुखार्थाय = स्वसुखाय, उन्मूलयेत् = विनाशयेत्॥ १९॥

हिन्दी—उक्त प्रकार से अपने मन में चिन्ता करते हुये उसने बिल में घुसते हुए प्रियदर्शन नाम के एक कृष्णसर्प को देखा। उसको देखकर उसने अपने मन में पुनः सोचा—क्यों न मैं इस सर्प को कूप में ले चलकर अपने सम्पूर्ण पट्टीदारों का ही विनाश करा दूँ। कहा भी गया है कि—

बलवान् शत्रु के साथ किसी सबल शत्रु को भिड़ाकर उसका विनाश करना चाहिये। ऐसा करने से अपना कार्य भी हो जाता है और शत्रु के विनाश में विशेष कष्ट भी नहीं उठाना पड़ता है॥ १८॥

तथा च—पैर में गड़े हुये कष्टकारक काँटे को जैसे किसी दूसरे काँटे से ही निकाला जाता है, उसी प्रकार अत्यन्त कष्टकारक तथा उग्र शत्रु को अपने सुख के लिये किसी उग्र तथा सबल के साथ भिड़ाकर बुद्धिमान् व्यक्ति को उसका उन्मूलन कर देना चाहिये"॥ १९॥

एवं स विभाव्य बिलद्वारं गत्वा तमाहूतवान्—"एह्येहि प्रियदर्शन! एहि।"

तच्छ्रुत्वा सर्पश्चिन्तयामास—"य एष मामाह्वयति, स स्वजातीयो न भवति। यतो नैषा सर्पवाणी। अन्येन केनापि सह मम मर्त्यलोके सन्धानं नास्ति। तदत्रैव दुर्गे स्थितस्तावद्वेद्मि—कोऽयं भविष्यति? उक्तञ्च—

यस्य न ज्ञायते शीलं न कुलं न च संश्रयः।
न तेन सङ्गतिं कुर्यादित्युवाच बृहस्पतिः॥ २०॥

व्याख्या—विभाव्य=विचार्य, एहि=आगच्छ। आह्वयति=आकारयति, स्वजातीयः=आत्मजातीयः, सन्धानं=मैत्री, वेद्मि=जानामि=शीलं=स्वभावं, कुलं=गोत्रं वंशं वा, संश्रयः=निवासस्थानम्॥ २०॥

हिन्दी—उक्त प्रकार से सोचने के पश्चात् उसने सर्प के बिल-द्वार पर जाकर उसको बुलाते हुये कहा—"प्रियदर्शन! यहाँ आओ, यहाँ आओ!" उसकी बात को सुनकर सर्प ने अपने मन में सोचा कियह व्यक्ति जो मुझे बुला रहा है मेरी जाति का नहीं हो सकता है। क्योंकि यह वाणी सर्प की नहीं है। किसी दूसरे व्यक्ति के साथ इस मृत्युलोक में मेरा परिचय ही नहीं है, अतः इस दुर्ग में रहकर मुझे यह जान लेना चाहिये कि "यह कौन सा व्यक्ति हो सकता है?" कहा भी गया है कि—

जिस व्यक्ति के स्वभाव, कुल तथा निवासस्थान से मनुष्य परिचित न हो, उसके साथ सम्पर्क स्थापित करने का प्रयास नहीं करना चाहिए—यह बृहस्पति का मत है॥ २०॥

कदाचित्कोऽपि मन्त्रवाद्योषधिचतुरो वा मामाहूय बन्धने क्षिपति, अथवा कश्चित् पुरुषो वैरमाश्रित्य कस्यचिद्भक्षणार्थं मामाह्वयति। आह च—"भोः, को भवान्?" स आह—"अहं गङ्गदत्तो नाम मण्डूकाधिपतिस्त्वत्सकाशे मैत्र्यर्थमभ्यागतः।" तच्छ्रुत्वा सर्प आह-भो, अश्रद्धेयमेतद्यत्-तृणानां वह्निना सह सङ्गमः। उक्तञ्च—

यो यस्य जायते वध्यः स स्वप्नेऽपि कथञ्चन।
न तत्समीपमभ्येति तत्किमेवं प्रजल्पसि?"॥ २१॥

व्याख्या—मन्त्रवाद्योषधिचतुरः=मन्त्री, वीणादिवादनपटुः, रसायनविज्ञो वा, वैरमाश्रित्य=शत्रुभावमुपेत्य, अधिपतिः=राजा, मैत्र्यर्थे=मित्रतां विधातुम्। अश्रद्धेयम्=विश्वासानर्हम्। वध्यः=भक्ष्यः, अभ्येति=आगच्छति, प्रजल्पसि=प्रलपसि॥ २१॥

हिन्दी—यह संभव है कि कथञ्चित् कोई तान्त्रिक अथवा रसायनादि का ज्ञाता चतुर

व्यक्ति मुझे बुलाकर बन्धन में डाल दे; अथवा कोई व्यक्ति अपनी शत्रुता के कारण किसी को काटने आदि के लिये मुझे बुला रहा हो। उपर्युक्त बातों का विचार करके उसने पूछा—"महाशय! आप कौन हैं?" मण्डूक ने कहा—"मैं मण्डूकों का राजा गङ्गदत्त हूँ। आपके पास मैत्री करने के लिये आया हूँ।" उसकी बात सुनकर सर्प ने कहा—"महाशय! यह बात विश्वास के योग्य नहीं हो सकती है कि अग्नि की तृणों के साथ मैत्री हो।" कहा भी गया है कि जो जीव जिस जीव का वध्य (भक्ष्य) होता है, वह स्वप्न में भी कभी उसके पास नहीं जाता। अतः आप इस प्रकार की व्यर्थ बातें क्यों कर रहे हैं?"

**गङ्गदत्त आह—भोः! सत्यमेतद्। स्वभाववैरी त्वमस्माकम्, परं परपरिभवात् प्राप्तोऽहं ते सकाशम्। उक्तञ्च—**

**सर्वनाशे च सञ्जाते प्राणानामपि संक्षये।**
**अपि शत्रुं प्रणम्यापि रक्षेत्प्राणान् धनानि च॥ २२॥**

**सर्प आह—"कथय कस्मात्ते परिभवः?"**

व्याख्या—स्वभाववैरी=स्वाभाविकः शत्रुः, परपरिभवात्=शत्रुतिरस्कारात्, सकाशम्=अन्तिकम्। संक्षये=नाशे, शत्रुं प्रणम्यापि=अरये प्रणामं निवेद्यापि (आत्मसमर्पणं विधायेत्यर्थः)॥ २२॥

हिन्दी—गङ्गदत्त ने उत्तर में कहा—"महोदय! आपका कथन यथार्थ है। आप हमारे स्वाभाविक शत्रु हैं, किन्तु शत्रु के तिरस्कार से क्षुब्ध होकर मैं आपके पास आया हूँ। कहा भी गया है कि—

सर्वनाश की स्थिति में अथवा अपने प्राणों के विनाश-काल में मनुष्य को चाहिये कि वह आवश्यकतानुसार शत्रु की अधीनता स्वीकार करके भी अपने प्राणों और धनों की रक्षा कर ले॥ २२॥

उसकी बात को सुनकर सर्प ने पूछा—"कहिये, किससे आपका अपमान हुआ है?"

**स आह—"दायादेभ्यः।" सोऽप्याह—"क्व ते आश्रयः—वाप्यां, कूपे, तडागे, ह्रदे वा? तत्कथय स्वाश्रयम्।" तेनोक्तम्—"पाषाणचयनिबद्धे कूपे।" सर्प आह—"अहो अपदा वयम्। तन्नास्ति तत्र मे प्रवेशः। प्रविष्टस्य च स्थानं नास्ति, यत्र स्थितस्तव दायादान् व्यापादयामि। तद् गम्यताम्। उक्तञ्च—**

**यच्छक्यं ग्रसितुं शस्तं ग्रस्तं परिणमेच्च यत्।**
**हितं च परिणामे यत्तदाद्यं भूतिमिच्छता"॥ २३॥**

व्याख्या—आश्रयः=निवासः, स्वाश्रयं=स्वनिवासस्थानम्। पाषाणचयनिबद्धे=पाषाणराशिनिबद्धे, अपदाः=पादहीनाः, ग्रसितुं=खादितुं, ग्रस्तं=खादितं, परिणमेत्=पाकमाप्नुयात्। आद्यं=भक्षितव्यम्। भूतिम्=ऐश्वर्यम्॥ २३॥

हिन्दी—मण्डूक ने कहा—"मेरे दायादों ने मेरा अपमान किया है। सर्प ने कहा—"आपका निवास कहाँ है—किसी बावली में, किसी कूप में, किसी तालाब में अथवा किसी

झील में ? पहले अपना निवासस्थान तो बताइये।" उसने कहा--"पत्थरों द्वारा बाँधे हुये एक कूप में।" सर्प ने कहा--मित्र ! हम लोगों को पैर नहीं होते ! अतः मेरा वहाँ प्रवेश नहीं हो सकता है। यदि किसी प्रकार से उसमें पैठ गया तो उसमें मेरे रहने के लिये कोई स्थान नहीं होगा कि जहाँ बैठकर मैं आपके पट्टीदारों को मार सकूँ। अतः आप कृपा करके चले जायँ। कहा भी गया है कि—

ऐश्वर्य को चाहने वाले मनुष्य को चाहिये कि वह उसी वस्तु को खाये जिसको खाना उसके लिये शक्य हो और उसके उदर में पहुँच कर जो वस्तु पच जाय तथा परिणाम में हितकारक भी हो" ॥ २३ ॥

**गङ्गदत्त आह—"भोः ! समागच्छ त्वम्। अहं सुखोपायेन तत्र तव प्रवेशं कारयिष्यामि। तथा तस्य मध्ये जलोपान्ते रम्यतरं कोटरमस्ति, तत्र स्थितस्त्वं लीलया दायादान् व्यापादयिष्यसि।"**

**तच्छ्रुत्वा सर्पो व्यचिन्तयत्—"अहं तावत्परिणतवयाः कदाचित्कथञ्चिन्मूषकमेकं प्राप्नोमि। तत्सुखावहो जीवनोपायोऽयमनेन कुलाङ्गारेण मे दर्शितः। तद्गत्वा तान् मण्डूकान् भक्षयामि" इति। अथवा साध्विदमुच्यते—**

**यो हि प्राणपरिक्षीणः सहायपरिवर्जितः।**
**स हि सर्वसुखोपायां वृत्तिमारचयेद् बुधः ॥ २४ ॥**

व्याख्या—सुखोपायेन = सुखकरोपायेन, जलोपान्ते = जलान्तिके, रम्यतरं = रमणीयं, कोटरं = निष्कुहः, लीलया = अनायासेन, परिणतवयाः = वृद्धः ( परिणतं वयो यस्यासौ ), सुखावहः जीवनोपायं = जीविकोपायं, कुलाङ्गारेण = कुलनाशकेन ( कुलस्य अङ्गारः कुलाङ्गारः ), प्राणपरिक्षीणः = क्षीणबलः, वृत्तिं = जीविकाम्, आरचयेत् = आरभेत् ( कुर्यादिति ) ॥ २४ ॥

हिन्दी—गङ्गदत्त ने कहा--"महाशय ! आप चले तो आइये। मैं अत्यन्त सरलता से वहाँ आपका प्रवेश करा दूँगा। उस कूप में जल के छोर पर एक बहुत ही रमणीय कोटर है। उसमें रहकर आप अनायास ही मेरे दायादों को मार सकेंगे।" मण्डूक की बात को सुनकर सर्प ने अपने मन में सोचा कि—मैं वृद्ध हो चुका हूँ। कभी संयोग से ही किसी एक चूहे को पा जाता हूँ। अतः इस कुलाङ्गार ने मेरी जीविका का बड़ा ही सुखकर उपाय बता दिया है। वहाँ चलकर मुझे उन मेढकों को अवश्य खाना चाहिये। किसी ने ठीक ही कहा है कि—

जिस व्यक्ति की शक्ति क्षीण हो चुकी हो और उसका कोई सहायक भी न हो, तो उस व्यक्ति को चाहिए कि वह अपनी जीविका के लिये अत्यन्त सुखप्रद एवं सरलतम उपाय का ही चयन करे। बुद्धिमत्ता यही है ॥ २४ ॥

**एवं विचिन्त्य तमाह—"भो गङ्गदत्त ! यद्येवं तदग्रे भव, येन तत्र गच्छावः।" गङ्गदत्त आह—"भोः प्रियदर्शन ! अहं त्वां सुखोपायेन तत्र नेष्यामि, स्थानं च दर्शयिष्यामि। परं त्वयाऽस्मत्परिजनो रक्षणीयः। केवलं यानहं तव दर्शयिष्यामि, त एव भक्षणीयाः" इति। सर्प आह—"साम्प्रतं त्वं मे मित्रं जातम्। तन्न भेतव्यम्। तव**

वचनेन भक्षणीयास्ते दायादाः।" एवमुक्त्वा बिलान्निष्क्रम्य तमालिङ्गय च, तेनैव सह प्रस्थितः।

व्याख्या—अग्रे भव=अग्रेसरो भव, सुखोपायेन=सुखकरोपायेन, अस्मत्परिजनः=मम परिवारः, साम्प्रतम्=इदानीम्, तव वचनेन=त्वदाज्ञया।

हिन्दी—उपर्युक्त बातों का विचार करने के बाद उस सर्प ने कहा—"गङ्गदत्त! यदि ऐसी ही बात है तो तुम आगे-आगे चलो, जिससे हम लोग शीघ्र वहाँ पहुँच जाय।" गङ्गदत्त ने कहा—"प्रियदर्शन! मैं अत्यन्त सुखकर उपाय से आप को वहाँ ले चलूँगा और रहने के लिये स्थान भी दिखा दूँगा। किन्तु तुम्हें मेरे परिवार के लोगों की रक्षा करनी होगी। केवल मैं जिन-जिनको दिखाऊँगा, उन्हीं को तुम्हें खाना होगा।" सर्प ने कहा—"तुम इस समय मेरे मित्र हो चुके हो। अतः तुमको मुझसे भयभीत नहीं होना चाहिये। मैं तुम्हारी आज्ञा से ही तुम्हारे दायादों को मारूँगा।" उपर्युक्त आश्वासन देने के बाद सर्प उस बिल से निकल कर सर्वप्रथम गङ्गदत्त का आलिङ्गन किया और उसके पीछे-पीछे चल दिया।

अथ कूपमासाद्यारघट्टघटिकामार्गेण सर्पस्तेन सह तस्यालयं गतः। ततश्च गङ्गदत्तेन कृष्णसर्पं कोटरे धृत्वा दर्शितास्ते दायादाः। ते च तेन शनैः शनैर्भक्षिताः। अथ मण्डूकाभावे सर्पेणाभिहितं—"भद्र! निःशेषितास्ते रिपवः। तत्प्रयच्छान्यन्मे किञ्चिद्भोजनं यतोऽहं त्वयात्रानीतः। गङ्गदत्त आह—"भद्र! कृतं त्वया मित्रकृत्य, तत्साम्प्रतमनेनैव घटिका यन्त्रमार्गेण गम्यताम्" इति।

व्याख्या—कूपमासाद्य=कूपं प्राप्य, आलयं=गृहन्। धृत्वा=स्थापयित्वा, निःशेषिताः=भक्षिताः (समाप्तिं नीताः), रिपवः=शत्रवः। मित्रकृत्यं=सुहृत्कार्यम्।

हिन्दी—उस कूप के पास पहुँचकर वह सर्प भी मण्डूक के साथ रहट के मार्ग से उसके घर पहुँच गया। गङ्गदत्त ने उस कृष्णसर्प को उस कोटर में बैठाकर अपने दायादों को दिखा दिया। तदनन्तर वह एक-एक करके धीरे धीरे सबको खा गया। कुछ दिनों में जब मण्डूकों का अभाव हो गया तो सर्प ने गङ्गदत्त से कहा—"भद्र! मैंने आपके शत्रुओं को समाप्त कर दिया। अब मुझे कुछ दूसरा भोजन दीजिये, क्योंकि आप मुझे बुलाकर यहाँ ले आये हैं।" गङ्गदत्त ने कहा—"मित्र! आपने मित्र का कार्य पूर्ण कर दिया है। अब आप इस रहट में बैठकर बाहर निकल जाइये तो अच्छा हो।"

सर्प आह—"भो गङ्गदत्त! न सम्यगभिहितं त्वया। कथमहं तत्र गच्छामि? मदीयबिलदुर्गमन्येन रुद्धं भविष्यति। तस्मादत्रस्थस्य मे मण्डूकमेकैकं स्ववर्गीयं प्रयच्छ, नो चेत् सर्वानपि भक्षयिष्यामि" इति।

तच्छ्रुत्वा गङ्गदत्तो व्याकुलमना व्यचिन्तयत्—"अहो, किमेतन्मया कृतं सर्पमानयता? तद्यदि निषेधयिष्यामि तत्सर्वानपि भक्षयिष्यति। अथवा युक्तमुच्यते—

योऽमित्रं कुरुते मित्रं वीर्याभ्यधिकमात्मनः।
स करोति न सन्देहः स्वयं हि विषभक्षणम्॥ २५॥

तत्प्रयच्छाम्यस्यैकैकं प्रतिदिनं सुहृदम्।

व्याख्या—सम्यक्=उचितम्। स्ववर्गीयं=स्वकुटुम्बीयं ( स्वपरिजनं ), निषेधयिष्यामि =वर्जयिष्यामि। अमित्रं=शत्रुं, मित्रं=सुहृद्, वीर्याभ्यधिकम्=स्वपराक्रमातिशायिनं स्व-बलाधिकम् ॥ २५ ॥ सुहृदं=स्वपरिजनम्।

हिन्दी—गङ्गदत्त की बात को सुनकर उस सर्प ने कहा—"गङ्गदत्त! तुमने सोच-विचार कर नहीं कहा है। मैं वहाँ कैसे जा सकता हूँ? मेरे बिल-दुर्ग को तो किसी दूसरे ने हथिया लिया होगा, अतः मैं अब यहीं रहूँगा। तुमको अपने कुटुम्ब के ही लोगों में से एक-एक करके मुझे खाने के लिये देना होगा। यदि ऐसा नहीं करते हो, तो मैं सबको मारकर खा जाऊँगा।"

उसकी बात को सुनकर गङ्गदत्त बहुत चिन्तित हुआ। उसने अपने मन में सोचा कि—इस सर्प को अपने साथ ले आकर मैंने यह कुकृत्य कर डाला? अब यदि इसको मना करता हूँ तो यह सबको खा जायेगा। अथवा यह ठीक ही कहा गया है कि—"जो व्यक्ति अपने से अधिक बलिष्ठ शत्रु को अपना मित्र बनाता है, वह अपने ही हाथ से विषपान करता है, इसमें सन्देह नहीं है" ॥ २५ ॥

अतः अपने परिजनों में से एक-एक को मुझे इसे खाने के लिये देना ही होगा।

उक्तञ्च—

सर्वस्वहरणे शक्तं शत्रुं बुद्धियुता नराः।
तोषयन्त्यल्पदानेन वाडवं सागरो यथा ॥ २६ ॥

तथा च—

यो दुर्बलोऽणूनपि याच्यमानो, बलीयसा यच्छति नैव साम्ना।
प्रयच्छते नैव च कर्षमात्रं, खारीं च चूर्णस्य पुनर्ददाति ॥ २७ ॥

व्याख्या—सर्वस्वहरणे=सर्वधनापहरणे, शक्तं=समर्थं, बुद्धियुता नराः—बुद्धिमन्तः पुरुषाः, अल्पदानेन=स्वल्पदानेन, तोषयन्ति=प्रसादयन्ति ( सन्तोषयन्ति ), यथा—सागरः= समुद्रः, वाडवं=वड़वानलं, स्वल्पदानेन तोषयतीति भावः ॥ २६ ॥ बलीयसा=बलिष्ठेन, याच्यमानः=प्रार्थ्यमानः, साम्ना=सामोपायेन ( सान्त्वनापूर्वकं वा ), अणून्=अल्पान् ( स्तोकमपीति भावः ), यः कर्षमात्रं=स्वल्पमपि ( तोला भर भी ), न ददाति, स खारीं= षोडशद्रोणपर्यन्तं, ददाति ॥ २७ ॥

हिन्दी—कहा भी गया है कि—सर्वस्व अपहरण करने में समर्थ शत्रु को बुद्धिमान् जन थोड़ा देकर सन्तुष्ट कर देते हैं। जैसे समुद्र बड़वानल को थोड़ा जल देकर सतत सन्तुष्ट रखा करता है ॥ २६ ॥

और भी—जो व्यक्ति निर्बल होते हुये भी बलिष्ठ व्यक्ति के कुछ माँगने पर पहले सन्तोषपूर्वक अल्पमात्र भी नहीं देता है, वह बाद में सब कुछ दे देता है। जैसे—जो व्यक्ति एक तोला आटा देने में कृपणता करता है, वही बाद में सोलह दोंन ( द्रोण ) दे देता है ॥ २७ ॥

तथा च—

सर्वनाशे समुत्पन्ने अर्धं त्यजति पण्डितः।
अर्धेन कुरुते कार्यं सर्वनाशो हि दुःसहः ॥ २८ ॥
न स्वल्पस्य कृते भूरि नाशयेन्मतिमान्नरः।
एतदेव हि पाण्डित्यं यत्स्वल्पाद् भूरिरक्षणम् ॥ २९ ॥

एवं निश्चित्य नित्यमेकैकं तमादिशति। सोऽपि तं भक्षयित्वा तस्य परोक्षेऽन्यानपि भक्षयति।

व्याख्या—अर्धं=फलार्धं, दुःसहः=सोढुमशक्यो भवतीति भावः ॥ २८ ॥ मतिमान्=बुद्धिमान्, भूरि=भृशं, स्वल्पात्=अल्पादिति भावः ॥ २९ ॥ आदिशति=भक्षयितुमाज्ञां ददाति।

हिन्दी—और भी—सर्वनाश की स्थिति उत्पन्न हो जाने पर विद्वान् जन फलार्धं परित्याग कर देते हैं और आधे को बचाकर अपना कार्य चलाते हैं। सर्वस्व विनष्ट हो जाने से जो दुःख होता है, वह दुःसह होता है ॥ २८ ॥

बुद्धिमान् व्यक्ति को थोड़े के लिये बहुत का विनाश नहीं होने देना चाहिये। बुद्धिमत्ता तो इसी में है कि थोड़ा सा देकर भी अधिक को बचा लिया जाय ॥ २९ ॥

उपर्युक्त बातों का विचार करके वह प्रतिदिन अपने कुटुम्ब के एक व्यक्ति को खाने की आज्ञा सर्प को दिया करता था। वह सर्प उस मण्डूक के द्वारा आज्ञप्त मेंढक को खा लेने के बाद भी गङ्गदत्त के परोक्ष में दूसरों को भी पकड़ कर खा जाया करता था।

अथवा साध्विदमुच्यते—

यथा हि मलिनैर्वस्त्रैर्यत्र तत्रोपविश्यते।
एवं चलितवित्तस्तु वित्तशेषं न रक्षति ॥ ३० ॥

अथान्यदिने तेनापरान्मण्डूकान्भक्षयित्वा गङ्गदत्तसुतो यमुनादत्तो भक्षितः। तं भक्षितं ज्ञात्वा गङ्गदत्तस्तारस्वरेण धिग्धिगिति प्रलापपरः कथञ्चिदपि न विरराम! ततः स्वपत्न्याभिहितः—

किं क्रन्दसि दुराक्रन्द ! स्वपक्षक्षयकारक ! ।
स्वपक्षस्य क्षये जाते को नस्त्राता भविष्यति ॥ ३१ ॥

तदद्यापि विचिन्त्यतामात्मनो निष्क्रमणम्, अस्य वधोपायं च।"

व्याख्या—मलिनैः=अस्वच्छैः, यत्र तत्र=यत्र कुत्राऽपि, चलितवित्तः=नष्टधनः, वित्तशेषं=शेषं धनं, न रक्षतीति भावः ॥ ३० ॥ तारस्वरेण=दीर्घस्वरेण (उच्चस्वरेणेत्यर्थः) प्रलापपरः=विलापपरः, न विरराम=रोदनाद्विरतो न बभूव, तदा, दुराक्रन्द !=हे प्रलापिन् !, क्रन्दसि=रोदिषि, स्वपक्षक्षयकारक !=स्वकुलविनाशक ! त्राता=रक्षकः ॥ ३१ ॥ निष्क्रमणं=निर्गमनोपायम्।

हिन्दी—अथवा, यह ठीक ही कहा गया है कि—

जैसे मलिन वस्त्र पहनने के बाद मनुष्य जहाँ तहाँ बैठ जाया करता है, अपने मन में कोई विचार नहीं करता, उसी प्रकार अधिक धन के विनष्ट हो जाने पर भी वह बचे हुये धन को व्यय होते देखकर उसे बचाने का प्रयत्न नहीं करता। (प्रायः लोग सोचा करते हैं कि जब सब चला गया तो इतना बचकर ही क्या उपकार करेगा? चलो इसको भी खर्च कर डालो) ॥ ३० ॥

दूसरे दिन वह सर्प अन्य मण्डूकों को खाने के बाद गङ्गदत्त के पुत्र यमुनादत्त को भी खा गया। उसको खाया हुआ जानकर गङ्गदत्त जोर-जोर से चिल्ला कर रोने लगा। अपने कृत्य पर अपने आपको वह बार बार धिक्कारता था और विलखता चला जाता था। जब वह किसी भी तरह से शान्त न हुआ तो उसकी पत्नी ने उसे फटकारते हुये कहा—"हे दुराक्रन्द! हे कुलक्षयकारक! अब रो क्या रहे हो? अब रोने से हो ही क्या सकता है। तुम अपने कृत्य से अपने वंश का विनाश तो कर ही चुके हो। अब आत्मीय जनों के अभाव में हम लोगों का रक्षक कौन हो सकता है? अतः आज भी चाहो तो अपने यहाँ से भागने और इसको मारने का उपाय सोच सकते हो।

अथ गच्छता कालेन सकलमपि कवलितं मण्डूककुलम्। केवलमेको गङ्गदत्त-स्तिष्ठति। ततः प्रियदर्शनेन भणितम्—"भो गङ्गदत्त! बुभुक्षितोऽहम्। निःशेषिताः सर्वे मण्डूकाः। तर्हीयतां मे किञ्चिद् भोजनम्। यतोऽहं त्वयात्रानीतः। स आह—"भो मित्र! न त्वयात्र विषये मय्यवस्थिते कापि चिन्ता कार्या। तद्यदि मां प्रेषयसि, ततोऽन्यकूपस्थानादपि मण्डूकान् विश्वास्यात्रानयामि।"

व्याख्या—गच्छता कालेन=कियत्काले गते सति, सकलं=सम्पूर्णं, कवलितं=ग्रसितम् (भक्षितम्), बुभुक्षितः=क्षुधितः, निःशेषिताः=हताः, अत्र विषये=भोजनविषये, मयि=गङ्गदत्ते, अवस्थिते=स्थिते सति।

हिन्दी—कुछ दिनों में उस सर्प ने सम्पूर्ण मेंढकों को समाप्त कर दिया। केवल अकेला गङ्गदत्त बच गया था। प्रियदर्शन ने एक दिन उससे कहा—"गङ्गदत्त! मैं बहुत भूखा हूँ। मेंढक समाप्त हो चुके हैं। अतः मुझे कुछ खाने के लिये दो। क्योंकि तुम मुझे बुलाकर यहाँ ले आये हो।"

उसने कहा—मित्र! मेरे रहते हुये तुमको इस विषय में कोई चिन्ता नहीं करनी चाहिये। यदि तुम मुझे बाहर जाने की अनुमति दे दो, तो मैं अन्य कूपों से मेंढकों को विश्वास दिलाकर यहाँ ले आ सकता हूँ।"

स आह—"मम तावत्त्वमभक्ष्यो भ्रातृस्थाने, तद्यद्येवं करोषि, तत्साम्प्रतं पितृ-स्थाने भवसि। तदेवं क्रियताम्" इति। सोऽपि तदाकर्ण्यारघट्टघटिकामाश्रित्य विविध-देवतोपकल्पितपूजोपयाचितस्तस्मात्कूपाद्विनिष्क्रान्तः। प्रियदर्शनोऽपि तदागमनाका-ङ्क्षया तत्रस्थः प्रतीक्षमाणस्तिष्ठति।

व्याख्या—अभक्ष्यः=अखाद्यः, भ्रातृस्थाने=भ्रातृस्थानिकः (भ्रातृतुल्यः), आश्रित्य=

अवलम्ब्य, उपकल्पितपूजोपयाचितः=भाषितपूजोपहारः ( मनौती मानकर ) विनिष्क्रान्तः= निर्गतः। आगमनकाङ्क्षया=तस्यागमनाभिलाषया।

हिन्दी—सर्प ने कहा—"तुम तो मेरे लिये अभक्ष्य ही हो, क्योंकि मैं तुम्हें अपना भाई मान चुका हूँ। यदि मेरे लिये उपर्युक्त भोजन का उपाय कर देते हो, तो पिता की कोटि में आ जाओगे। अतः अपने कथनानुसार कोई उपाय करो।"

उसकी बात को सुनकर वह मेंढकराज रहट पर चढ़कर विविध देवियों और देवताओं की मनौती मानता हुआ उस कूँए से बाहर निकल आया। प्रियदर्शन उसके लौटने की इच्छा से कूप में बैठा हुआ उसकी प्रतीक्षा करने लगा।

अथ चिरादनागते गङ्गदत्ते प्रियदर्शनोऽन्यकोटरनिवासिनीं गोधामुवाच—"भद्रे ? क्रियतां स्तोकं साहाय्यम्। यतश्चिरपरिचितस्ते गङ्गदत्तः। तद् गत्वा तत्सकाशं कुत्रचिज्जलाशयेऽन्विष्य, मम सन्देशं कथय, येनागम्यतामेकाकिनापि भवता द्रुततरं, यद्यन्ये मण्डूका नागच्छन्ति। अहं त्वया विना नात्र वस्तुं शक्नोमि। तथा यद्यहं तव विरुद्धमाचरामि तत्सुकृतमन्तरे मया विधृतम्।"

व्याख्या—गोधा=सर्पविशेषः ( गोह ), स्तोकम्=किञ्चित्, वस्तुं=निवसितुं विरुद्धं=प्रतिकूलम्, आचरामि=करोमि, सुकृतं=धर्मः, अन्तरे=मध्ये, विधृतं=स्थापितम् ( धर्मं साक्षिरूतेण मध्ये स्थाप्य प्रतिज्ञा कृताऽस्ति )।

हिन्दी—बहुत देर तक प्रतीक्षा करने के बाद भी जब गङ्गदत्त नहीं आया तो प्रियदर्शन ने पड़ोस के एक दूसरे कोटर में निवास करने वाली गोधा के पास जाकर कहा—"भद्रे! कुछ भी तो मेरी सहायता करो। क्योंकि गङ्गदत्त तुम्हारा चिरपरिचित है। अतः किसी जलाशय आदि में जाकर उसको खोजो यदि वह तुम्हें मिल जाय तो उससे मेरा यह सन्देश कह देना कि उसे यदि अन्य मण्डूक नहीं मिलते हैं, तो वह अकेला ही शीघ्र लौट आवे। मैं उसके विना, यहाँ एकाकी निवास करने में असमर्थ हूँ। यदि उसके मन में यह आशङ्का हो कि मैं उसके विपरीत आचरण करूँगा, तो कह देना कि मैं उसके और अपने मध्य में धर्म को साक्षी मानकर प्रतिज्ञा करता हूँ कि कभी उसका अनिष्ट नहीं करूँगा।

गोधापि तद्वचनाद् गङ्गदत्तं द्रुततरमन्विष्याह—"भद्र गङ्गदत्त! स तव सुहृत्प्रियदर्शनस्तव मार्गं समीक्षमाणस्तिष्ठति। तच्छीघ्रमागम्यताम् इति। अपरञ्च, तेन तव विरुद्धकरणे सुकृतमन्तरे धृतम्। तन्निःशङ्केन मनसा समागम्यताम्।"

तदाकर्ण्य गङ्गदत्त आह—

"बुभुक्षितः किं न करोति पापं क्षीणा नरा निष्करुणा भवन्ति।
आख्याहि भद्रे! प्रियदर्शनस्य, न गङ्गदत्तः पुनरेति कूपम्" ॥ ३२ ॥

एवमुक्त्वा स तां विसर्जयामास।

व्याख्या—समीक्षमाणः=अवलोकयन्, विरुद्धकरणे—विपरीताचरणे, निःशङ्केन= गतशङ्केन। विसर्जयामास=प्रेषयामास।

हिन्दी—गोधा सर्प के कथनानुसार शीघ्र ही गङ्गदत्त को खोजकर उससे सर्प के सन्देश को सुनाती हुई बोली—"भद्र गङ्गदत्त! तुम्हारा प्रिय मित्र प्रियदर्शन तुम्हारा मार्ग देखता हुआ तुम्हारी प्रतीक्षा में बैठा हुआ है। अतः शीघ्र चलो। उसने तुम्हारे विपरीत आचरण करने के विषय में धर्म को साक्षी रखकर प्रतिज्ञा भी की है। अतः निशङ्क होकर चलो। कोई भय नहीं है।"

गोधा की बात को सुनकर गङ्गदत्त ने कहा—"भूखा व्यक्ति कौन सा पाप नहीं कर सकता। क्षीण व्यक्ति स्वभावतः निष्करुण हो जाते हैं। हे भद्रे! तुम जाकर उस प्रियदर्शन से कह देना कि गङ्गदत्त एक बार कूँए से बाहर निकल जाने के पश्चात् अब पुनः उसमें नहीं जा सकता" ॥ ३२ ॥

उपर्युक्त सन्देश के साथ उसने उसे लौटा दिया।

"तद्भो दुष्ट जलचर! अहमपि गङ्गदत्त इव त्वद्गृहे न कथञ्चिदपि यास्यामि।" तच्छ्रुत्वा मकर आह—"भो मित्र! नैतद्युज्यते। सर्वथैव मे कृतघ्नतादोषमपनय मद्गृहागमनेन। अथवात्राहमनशनात्प्राणत्यागं तवोपरि करिष्यामि।"

वानर आह—"मूढ! किमहं लम्बकर्णो मूर्खः, यद् दृष्टापायोऽपि स्वयमेव तत्र गत्वात्मानं व्यापादयामि?

आगतश्च गतश्चैव दृष्ट्वा सिंहपराक्रमम्।
अकर्णहृदयो मूर्खो यो गत्वा पुनरागतः" ॥ ३३ ॥

मकर आह—"भद्र! स को लम्बकर्णः? कथं दृष्टापायोऽपि मृतः?, तन्मे निवेद्यताम्"। वानर आह—

व्याख्या—कृतघ्नतादोषं=कृतघ्नताजन्यं ममापराधम् (उपकारिण्यपकारबुद्धिः कृतघ्नता), अपनय=दूरीकुरु, अनशनात्=अन्नजलत्यागात्, अपायः=विनाशः, (विनाशकारणमिति यावत्)। सिंहपराक्रमं=सिंहस्य वीर्यम्। अकर्णहृदयः=कर्णहृदयशून्यः ॥ ३३ ॥

हिन्दी—उक्त कथा को कहने के बाद वानर ने मकर से कहा—अरे दुष्टजलचर! गङ्गदत्त की तरह मैं भी तुम्हारे घर कभी भी नहीं जाऊँगा।"

उसकी बात को सुनकर मकर ने कहा—"मित्र! आपका उक्त कथन ठीक नहीं है (आपको ऐसी प्रतिज्ञा नहीं करनी चाहिये)। मैंने जो तुम्हारे साथ कृतघ्नता की है, उसको सर्वथा भूल जाने के लिये मेरे घर अवश्य चलो। यदि तुम नहीं चलते हो, तो मैं अनशन करके तुम्हारे ऊपर यहीं अपने प्राणों का परित्याग दूँगा।"

वानर ने कहा—"मूर्ख! क्या मैं लम्बकर्ण नाम का वह मूर्ख हूँ जिसने अपने विनाश का कारण जानते हुए भी स्वयं वहाँ जाकर अपना विनाश कर लिया था?

एक बार आया और सिंह के पराक्रम को देखकर लौट भी गया। किन्तु कान तथा हृदय से शून्य वह मूर्ख पुनः उसी स्थान पर चला गया और सिंह के द्वारा मार डाला गया ॥ ३३ ॥

मगर ने पूछा—"मित्र! यह लम्बकर्ण कौन है? अपने विनाश का कारण जानते हुए भी वह कैसे मारा गया? मैं सभी बातों को सविस्तार सुनना चाहता हूँ। अतः कृपा करके कहो।"

वानर ने अग्रिम कथा को प्रारम्भ करते हुए कहा—

[ २ ]

## ( सिंह-लम्बकर्णयोः कथा )

कस्मिंश्चिद्वनोद्देशे करालकेसरो नाम सिंहः प्रतिवसति स्म। तस्य च धूसरको नाम शृगालः सदैवानुयायी परिचारकोऽस्ति। अथ कदाचित्तस्य हस्तिना सह युद्धयमानस्य शरीरे गुरुतराः प्रहाराः सञ्जाताः, यैः पदैकमपि चलितुं न शक्नोति। तस्याचलनाच्च धूसरकः क्षुत्क्षामकण्ठो दौर्बल्यं गतोऽन्यस्मिन्नहनि तमवोचत्—"स्वामिन्! बुभुक्षया पीडितोऽहं पदात्पदमपि चलितुं न शक्नोमि, तत्कथं ते शुश्रूषां करोमि?"

व्याख्या—वनोद्देशे = वनप्रदेश, परिचारकः = सेवकः, गुरुतराः = दीर्घतराः, प्रहाराः = आघाताः ( चोट ), क्षुत्क्षामकण्ठः।

हिन्दी—किसी वन में करालकेसर नाम का एक सिंह रहता था। उसका धूसरक नाम का एक शृगाल परिचारक था जो सदा उसका अनुगमन किया करता था। किसी दिन एक जङ्गली हाथी के साथ हुये युद्ध में उस सिंह के शरीर में बहुत अधिक घाव हो गये जिससे वह अत्यन्त अशक्त हो गया था और एक भी कदम चल नहीं सकता था। उसकी असमर्थता के कारण धूसरक को शिकार नहीं मिल पाता था, जिससे वह भूख से पीड़ित होकर अत्यन्त दुर्बल हो गया। अत्यधिक निर्बल हो जाने पर उसने एक दिन उस सिंह से कहा—"स्वामिन्! भूख से पीड़ित होने के कारण मैं एक भी पद चल नहीं पाता हूँ, अतः आपकी सेवा कैसे करूँ?"

सिंह आह—"भो! गच्छ, अन्वेषय किञ्चित्सत्त्वम्, येनेमामवस्थां गतोऽपि व्यापादयामि।" तदाकर्ण्य शृगालोऽन्वेषयन् कञ्चित्समीपवर्तिनं ग्राममासादितवान्। तत्र लम्बकर्णो नाम गर्दभस्तडागोपान्ते प्रविरलदूर्वाङ्कुरान् कृच्छ्रादास्वादयन् दृष्टः। ततश्च समीपवर्तिना भूत्वा तेनाभिहितः—"माम! नमस्कारोऽयं मदीयः सम्भाव्यताम्। चिराद् दृष्टोऽसि तत्कथय किमेवं दुर्बलतां गतः?"

व्याख्या—सत्त्वं = जीवम्। इमामवस्थां = चलनाशक्ततां, तडागोपान्ते = तडागस्य समीपे, प्रविरलदूर्वाङ्कुरान् = विच्छिन्नदूर्वाङ्कुरान् ( यत्र तत्रोत्पन्नदूर्वाङ्कुरानिति यावत् ), कृच्छ्रात् = आस्वादयन् = भक्षयन् ( चरता हुआ ), समीपवर्तिना भूत्वा = तस्यान्तिकं गत्वा, सम्भाव्यतां = स्वीक्रियताम्।

हिन्दी—सिंह ने उत्तर में कहा—"अरे भाई! जाओ, किसी जीव को खोज कर ले आओ, जिससे कि मैं इस अवस्था में भी मार सकूँ।"

सिंह की बात को सुनकर वह शृगाल किसी जीव की खोज में समीप के एक ग्राम में पहुँच गया, वहाँ पहुँचने पर उसने लम्बकर्ण नाम का एक गर्दभ देखा जो नदी के किनारे पर यत्र तत्र उगी हुई दूर्वा के कोमल अङ्कुरों को चर रहा था। उस गर्दभ के समीप जाकर उसने कहा—"मामा! मेरा नमस्कार तो स्वीकार कर लो। आज बहुत दिनों के बाद दिखायी पड़े हो? कहो, आजकल इतने दुर्बल क्यों हो गये हो?"

स आह—"भो भगिनीपुत्र! किं कथयामि, रजकोऽतिनिर्दयोऽतिभारेण मां पीडयति। घासमुष्टिमपि न प्रयच्छति। केवलं दूर्वाङ्कुरान् धूलिमिश्रितान् भक्षयामि। तत्कुतो मे शरीरे पुष्टिः"? शृगाल आह—"माम! यद्येवं, तदस्ति मरकतसदृशशष्पप्रायो नदीसनाथो रमणीयतरः प्रदेशः। तत्रागत्य मया सह सुभाषितगोष्ठीसुखमनुभवंस्तिष्ठ।" लम्बकर्ण आह—"भो भगिनीसुत! युक्तमुक्तं भवता। परं वयं ग्राम्याः पशवोऽरण्यचारिणां वध्याः। तत्किं तेन भव्यप्रदेशेन?"

व्याख्या—भगिनीसुत=भागिनेय, रजकः=निर्णेजकः, अतिभारेण=भाराधिक्येन, घासमुष्टिं=शष्पस्य मुष्टिमात्रमपि, पुष्टिः=बलम्। मरकतसदृशशष्पप्रायः=मरकतमणितुल्यहरिद्घासबहुलः, नदीसनाथः=नदीयुक्तः, (नद्या सनाथितः), रमणीयतरः=सुन्दरतरः, प्रदेशः=भूभागः। ग्राम्याः=ग्रामवासिनः, अरण्यचारिणां=वनचारिणां, वध्याः=भक्ष्याः, भव्यप्रदेशेन=रमणीयप्रदेशेन।

हिन्दी—गर्दभ ने उत्तर में कहा—"भागिनेय! क्या कहूँ, मेरा स्वामी रजक अत्यन्त निर्दय है। अधिक भार लादकर मुझको बराबर तंग किया करता है और कभी एक मुट्ठी घास भी नहीं देता। विवश होकर मुझे इन धूलमिश्रित घासों को चरना पड़ता है। केवल इन घासों को चरने से मेरे शरीर में बल कैसे हो सकता है?" शृगाल ने कहा—"मामा! यदि ऐसी बात है, तो मेरा देखा हुआ मरकत मणि के समान हरी-हरी घासों से युक्त, नदी द्वारा सनाथित और अत्यन्त रमणीय एक स्थान है। वहाँ चलकर तुम मेरे साथ सुभाषित गोष्ठियों का आनन्द लेते हुये अत्यन्त सुख से रह सकते हो।" लम्बकर्ण ने कहा—भागिनेय! तुम्हारा कथन तो यथार्थ है। किन्तु हम लोग ग्राम्यपशु होने के कारण अरण्यचारी पशुओं के भक्ष्य हैं। अतः तुम्हारे उस सुन्दर प्रदेश से मुझे लाभ ही क्या है?"

शृगाल आह—माम! मैवं वद। मद्भुजपञ्जररक्षितः स देशः। तन्नास्ति कस्यचिदपरस्य तत्र प्रवेशः। परमनेनैव विधिना रजककदर्थितास्तत्र तिस्रो रासभ्योऽनाथाः सन्ति। ताश्च पुष्टिमापन्ना यौवनोत्कटा इदं मामूचुः—"यदि त्वमस्माकं सत्यो मातुलस्तदा किञ्चिद् ग्रामान्तरं गत्वास्मद्योग्यं कञ्चित्पतिमानय। तदर्थे त्वामहं तत्र नयामि।"

अथ शृगालवचनानि श्रुत्वा कामपीडिताङ्गो लम्बकर्णस्तमवोचत्—"भद्र! तद्येवं यदग्रे भव, येन त्वरितं तत्र गच्छावः"।

व्याख्या—मद्भुजपञ्जररक्षितः=मद्बाहुपञ्जरपालितः, अनेनैव विधिना=त्वदीयविधिना, रजककदर्थिता=रजकपीडिताः, रासभ्यः=गर्दभ्यः, अनाथाः=स्वामिरहिताः, पुष्टिमापन्नाः=पूर्णाङ्गतामापन्नाः, यौवनोत्कटाः=यौवनमदोन्मत्ताः, सत्यः=यथार्थः, तदर्थे=तासां कृते, कामपीडितदेहः, अग्रे भव=अग्रे गच्छ।

हिन्दी—गर्दभ की बात सुनकर श्रृगाल ने कहा—"माम! ऐसी बात न कहो। वह प्रदेश मेरे बाहुपञ्जर द्वारा संरक्षित है। वहाँ किसी दूसरे का प्रवेश होना संभव नहीं। तुम्हारी ही तरह से तीन और भी गर्दभियाँ धोबियों के दुर्व्यवहार से पीड़ित होकर वहाँ आयी हैं जो विना पति के वहाँ निवास करती हैं। वे तीनों पूर्ण पुष्ट एवं युवती हो चुकी हैं। उन तीनों ने मुझसे कहा है कि—"यदि आप हमारे सच्चे मामा हैं तो किसी ग्राम में जाकर हमारे योग्य किसी पति को ढूँढकर ले आइये। उन्हीं तीनों के लिये मैं तुम्हें वहाँ ले चल रहा हूँ।"

श्रृगाल के उपर्युक्त वचनों को सुनते ही वह लम्बकर्ण काम से पीड़ित होकर उस श्रृगाल से बोला—"भद्र! यदि ऐसी बात है तो आगे-आगे चलो, जिससे हम दोनों शीघ्र वहाँ पहुँच जायँ।"

अथवा साध्विदमुच्यते—

नामृतं न विषं किञ्चिदेकां मुक्त्वा नितम्बिनीम्।
यस्याः सङ्गेन जीव्येत, म्रियेत च वियोगतः॥ ३४॥

तथा च—

यासां नाम्नापि कामः स्यात्सङ्गमं दर्शनं विना।
तासां दृक्सङ्गमं प्राप्य, यन्न द्रवति कौतुकम्॥ ३५॥

व्याख्या—नितम्बिनी=कामिनीं. मुक्त्वा=विहाय, अन्यदमृतं, विषं वा किञ्चिन्न भवति। (अमृतविषोभयघटितमद्भुतं किञ्चिद्वस्तु स्त्रीवल्लोके न भवतीति भावः)। यतः अस्याः सङ्गेन जीव्यते, वियोगेन म्रियते। (कामिन्यामुभयोरपेक्षया वैशिष्ट्यमपि भवति—यतः अमृतं सङ्गेन जीवयति, न च वियोगेन मारयति। तथैव विषं सङ्गेन मारयति न वियोगेन जीवयति, किन्तु स्त्री सङ्गेन जीवयति, वियोगेन मारयति च; अतएव हि शक्तिद्वयघटितत्वं नितम्बिन्याः चरितार्थं भवति)॥ ३४॥ यासां, सङ्गमं, दर्शनं च विनैव केवलं नाम्ना=नामश्रवणमात्रेणेव, कामः=कामोत्पत्तिः, स्यात्=भवति, तासां दृक्सङ्गमं=नेत्रसङ्गमं प्राप्य, यन्न द्रवति=यन्नरो न द्रवति। कौतुकम्=आश्चर्यम्॥ ३५॥

हिन्दी—अथवा, ठीक ही कहा गया है—

इस विश्व में, कामिनियों को छोड़कर दूसरी कोई भी वस्तु ऐसी नहीं होती है कि जिसमें अमृत भी हो और विष भी। केवल स्त्रियाँ ही एक ऐसी वस्तु होती हैं, जिसमें अमृत और विष इन दोनों के गुण विद्यमान रहते हैं। क्योंकि—उनमें सङ्ग से मनुष्य जीवित हो उठता है और वियोग से मर भी जाता है। स्त्रियों में जीवन-विधायिका एवं मारणात्मिका दोनों ही शक्तियाँ

रखती है, किन्तु अमृत या विष में केवल एक ही शक्ति होती है। अतः स्त्रियाँ दोनों से विशिष्ट भी होती हैं ॥ ३४ ॥

तथा च—

जिनके दर्शन एवं सङ्गम के अभाव में भी केवल नामश्रवण मात्र से ही कामोत्पत्ति हो जाती है, उस स्त्रियों के कटाक्षादि का संगम पाकर भी यदि किसी पुरुष का हृदय द्रवीभूत नहीं होता हो तो आश्चर्य की बात ही है ॥ ३५ ॥

तथानुष्ठिते रासभः श्रृगालेनसह सिंहान्तिकमागतः। सिंहोऽपि व्यथाकुलितस्तं दृष्ट्वा यावत्समुत्तिष्ठति, तावद्रासभः पलायितुमारब्धवान्। अथ तस्य पलायमनस्य सिंहेन तलप्रहारो दत्तः। स च मन्दभाग्यस्य व्यवसाय इव व्यर्थतां गतः। अत्रान्तरे श्रृगालः कोपाविष्टस्तमुवाच—"भोः! किमेवंविधः प्रहारस्ते यद् गर्दभोऽपि तव पुरतो बलाद् गच्छति, तत्कथं गजेन सह युद्धं करिष्यसि? तद्दृष्टं ते बलम्।"

व्याख्या—सिंहान्तिकं=सिंहस्य समीपम्। व्याकुलितः=दुःखेन व्याकुलितः सन्, रासभः=गर्दभः, तलप्रहारः=चपेटाघातः (थप्पड़), मन्दभाग्यस्य=दुर्भाग्यग्रस्तस्य, व्यवसायः=उद्यमः।

हिन्दी—श्रृगाल के पीछे पीछे चलता हुआ वह गर्दभ कुछ देर के बाद सिंह के समीप पहुँच गया। व्यथा से व्याकुल वह सिंह गदहे को देखकर जबतक उठा तबतक उसने वहाँ से भागना आरम्भ कर दिया। भागते हुये उस गर्दभ की पीठ पर उस सिंह ने एक जोर का थप्पड़ लगाया किन्तु दुर्भाग्यग्रस्त व्यक्ति के उद्योग की तरह उसका वह थप्पड़ व्यर्थ चला गया। गदहे के भाग जाने पर उस श्रृगाल ने क्रोधाविष्ट होकर उस सिंह से कहा—"क्या इस प्रकार का व्यर्थ प्रहार करते हो कि गदहा भी तुम्हारे आगे से भाग जाता है। ऐसी ही स्थिति रही तो तुम किसी हाथी से कैसे लड़ सकोगे? मैंने तुम्हारे बल और पराक्रम को देख लिया!"

अथ विलक्षस्मितं सिंह आह—"भोः! किमहं करोमि? मया न क्रमः सज्जीकृत आसीत्। अन्यथा गजोऽपि मत्क्रमाक्रान्तो न गच्छति।"

श्रृगाल आह—"अद्याप्येकवारं तवान्तिके तमानेष्यामि। परं त्वया सज्जीकृतक्रमेण स्थाप्यम्।" सिंह आह—"भद्र! यो मां प्रत्यक्षं दृष्ट्वा गतः, स पुनः कथमत्रागमिष्यति? तदन्यत्किमपि सत्त्वमन्विष्यताम्।" श्रृगाल आह—"किं तवानेन व्यापारेण? त्वं केवलं सज्जितक्रमस्तिष्ठ"।

व्याख्या—विलक्षस्मितं=सलज्जं, स्मितम्=ईषद्धासं विधाय (लज्जापूर्वक थोड़ा हंसकर), क्रमः=आक्रमणोपक्रमः (आक्रमण की तैयारी), आक्रान्तः=समाक्रान्तः सन्, सज्जीकृतक्रमेण=आक्रमणाय समुद्यतेन, अनेन व्यापारेण=अनया चिन्तया, किं प्रयोजनमस्ति।

हिन्दी—श्रृगाल के कोसने पर सिंह ने लज्जायुक्त सूखी हँसी हँसते हुये कहा—"अरे

भाई ! मैं करता ही क्या ? मैं उस पर आक्रमण करने की कोई तैयारी नहीं कर सका था। अन्यथा, हाथी भी मेरे आक्रमण से बचकर निकल नहीं सकता।"

शृगाल ने कहा—"अच्छी बात है। एकबार फिर मैं उसे आपके पास ले आऊँगा। किन्तु अब की बार आपको पूर्ण तैयार रहना होगा।" सिंह ने कहा—"भद्र ! जो जीव मुझे अपनी आंखों से देखकर गया है, वह पुनः यहाँ कैसे आ सकेगा ? अतः किसी अन्य जीव की खोज करो।"

शृगाल ने कहा—"आपको इससे क्या प्रयोजन है ? आप केवल अपना तैयारी करके शान्त बैठे रहें।"

तथानुष्ठिते शृगालोऽपि यावद्रासभमार्गेण गच्छति, तावत्तत्रैव स्थाने चरन् दृष्टः। अथ शृगालं दृष्ट्वा रासभः प्राह—"भो भगिनीसुत ! शोभनस्थाने त्वयाहं नीतः ! द्राङ् मृत्युवशं गतः। तत्कथय किं तत्सत्त्वं यस्यातिरौद्रवज्रसदृशकरप्रहारादहं मुक्तः ?"

तच्छ्रुत्वा प्रहसन् शृगाल आह—"भद्र ! रासभी त्वामायान्तं दृष्ट्वा सानुरागमालिङ्गितुं समुत्थिता। त्वं च कातरत्वान्नष्टः। सा पुनर्न शक्ता त्वां विना स्थातुम्। तया तु नश्यतस्तेऽवलम्बनार्थं हस्तः क्षिप्तो नान्यकारणेन। तदागच्छ, सा त्वत्कृते प्रायोपवेशनोपविष्टा तिष्ठति। एतद्वदति यत्—"लम्बकर्णो यदि मे भर्ता न भवति, तदहमग्नौ जले वा प्रविशामि। न पुनस्तस्य वियोगं सोढुं शक्नोमि" इति। तत्प्रसादं कृत्वा तत्रागम्यतां, नो चेत्तव स्त्रीहत्या भविष्यति।

व्याख्या—रासभमार्गेण=रासभमनुसरन्, तेन गतेन मार्गेण, शोभनस्थाने=शुभस्थाने, रौद्रः=भीषणः, वज्रसदृशः=वज्रतुल्यः, कातरत्वात्=भीरुत्वात्, नष्टः=पलायितः। शक्ता= समर्था, नश्यतः=पलायमानस्य, अवलम्बनार्थं=ग्रहणार्थं (पकड़ने के लिये), त्वत्कृते=त्वदर्थे, प्रायोपवेशनोपविष्टा=अनशनं कृत्वोपविष्टा, प्रसादं=कृपां विधाय।

हिन्दी—सिंह के प्रस्तुत हो जाने पर वह शृगाल उस गर्दभ को खोजता हुआ उसी मार्ग पर चलने लगा। नदी के तट पर पहुँचकर उसने गदहे को पुनः उसी स्थान पर चरते हुये देखा। शृगाल को देखते ही उस गर्दभ ने कहा—"कहो, भागिनेय ! तुम मुझे बहुत शुभ सुन्दर स्थान पर ले गये थे ! यदि मैं वहाँ से भागा न होता तो मृत्यु के ही मुख में चला गया था। अच्छा, यह बताओ कि वह कौन सा जीव था, जिसके भीषण एवं वज्र के समान कठोर करों के प्रहार से बचकर मैं निकल आया हूँ ?" गदहे की बात को सुनकर उस शृगाल ने हँसते हुये कहा—"महाशय ! वह तो वही गर्दभी थी, जो तुमको अपनी ओर आते हुये देखकर प्रेमपूर्वक तुम्हारा आलिङ्गन करने के लिये खड़ी हुई थी। तुम इतने कायर निकले कि उसको देखते ही भाग खड़े हुये। तुम्हारे बिना वह जीवित नहीं रह सकती। तुमको भागते हुये देखकर उसने तुम्हें पकड़ने के लिये अपने हाथों को तुम्हारे ऊपर फेंक दिया था। दूसरा कोई कारण नहीं था। अतः शीघ्र चलो। तुम्हारी प्रतीक्षा में वह अन्न तथा जल का परित्याग करके बैठी हुई है। वह कह रही है कि—"यदि लम्बकर्ण मेरा पति नहीं हुआ

तो मैं अग्नि या जल में कूद कर आत्महत्या कर लूँगी। उसके वियोग को मैं सह नहीं सकती हूँ।" अतः उस पर अनुग्रह करके शीघ्र चलो, अन्यथा तुम्हें स्त्री-हत्या का पाप लग जायगा।

अपरं, भगवान् कामः कोपं तवोपरि करिष्यति। उक्तञ्च—

स्त्रीमुद्रां मकरध्वजस्य जयिनीं सर्वार्थसम्पत्करीं,
ये मूढाः प्रविहाय यान्ति कुधियो मिथ्याफलान्वेषिणः।
ते तेनैव निहत्य निर्दयतरं नग्नीकृता मुण्डिताः,
केचिद्रक्तपटीकृताश्च जटिलाः कापालिकाश्चापरे" ॥ ३६ ॥

व्याख्या—कामः=कामदेवः। मकरध्वजस्य=कामदेवस्य, जयिनीं=विजयिनीं, सर्वार्थसम्पत्करीं=सर्वसम्पत्कारिणीं, स्त्रीमुद्रां=स्त्रीरूपाज्ञां, प्रविहाय=परित्यज्य (समुल्लङ्घ्य), मिथ्याफलान्वेषिणः=व्यर्थस्वर्गादिसुखान्वेषिणः, मूढाः=मूर्खाः, कुधियः=कुबुद्धयः, ते नराः, तेनैव=कामेनैव, निर्दयतरं=निष्करुणं, निहत्य, नग्नीकृताः=विवस्त्रीकृताः, मुण्डिताः=मुण्डितकेशाः, रक्तपटीकृताः=रुधिरार्द्रवसनाः (काषायवस्त्रधारिणः), जटिलाः=जटाधारिणः कृताः, कापालिकाः=कपालादियुक्ताः (श्मशानवासिनो विहिताः) दण्डिताः सन्त इतश्चेतश्च विचरन्ति ॥ ३६ ॥

हिन्दी—दूसरी एक बात यह भी है कि यदि तुम वहाँ नहीं चलते हो, तो भगवान् कामदेव तुम से रुष्ट हो जायँगे। कहा भी गया है कि—

सम्पूर्ण विश्वको जीतनेवाली तथा सभी प्रकार के धन-सम्पत् को देनेवाली महाराज कामदेव की स्त्री-रूपी मुद्रा (आज्ञा) का उल्लंघन करके जो व्यक्ति अपनी मूर्खता एवं कुबुद्धि के कारण व्यर्थ के स्वर्गादिसुखों की खोज में निकलते हैं, वे महाराज कामदेव के ही द्वारा निर्दयतापूर्वक दण्डित हो कर नग्न, मुण्डित, काषायवस्त्रधारी, जटाजूटयुक्त तपस्वी तथा कापालिक आदि के वेश में इधर-उधर भटकते-फिरते रहते हैं।" (उनके भोजन तक का भी ठिकाना नहीं रह जाता) ॥ ३६ ॥

अथासौ तद्वचनं श्रद्धेयतया श्रुत्वा, भूयोऽपि तेन सह प्रस्थितः। अथवा साध्विदमुच्यते—

जानन्नपि नरो दैवात्प्रकरोति विगर्हितम्।
कर्म किं कस्यचिल्लोके गर्हितं रोचते कृतम्? ॥ ३७ ॥

अत्रान्तरे सज्जितक्रमेण सिंहेन स लम्बकर्णो व्यापादितः। ततस्तं हत्वा श्रृगालं रक्षकं निरूप्य स्वयं स स्नानार्थं नद्यां गतः। श्रृगालेनापि लौल्यौत्सुक्यात्तस्य कर्णहृदयं भक्षितम्।

व्याख्या—श्रद्धेयतया=सञ्जातप्रत्ययेन विगर्हितं=निन्दितं कर्म, कृतं=कार्यम् (विहितं कृत्यं वेति भावः) ॥ ३७ ॥ सज्जितक्रमेण=हन्तुं समुद्यतेन, निरूप्य=संस्थाप्य, सः=सिंहः, लौल्यौत्सुक्यात्=जिह्वाचापल्याद् औत्सुक्याच्च, कर्णहृदयं=कर्णं हृदयं चापि, भक्षितं=भुक्तम्।

हिन्दी—गर्दभ ने शृगाल की बात को विश्वासपूर्वक सुना और पुनः उसके साथ वह चल दिया। किसी ने यह ठीक ही कहा है कि—

मनुष्य जानता हुआ भी कभी-कभी संयोग से निन्दितकर्म कर बैठता है। क्या किसी को बुरा कर्म करना अच्छा लगता है? (अच्छा न लगने पर भी मनुष्य भाग्य द्वारा प्रेरित होने पर बुरे कार्यों को कर ही बैठता है) ॥ ३७ ॥

सिंह के पास पहुँचते ही वह गदहा मारने के लिये उद्यत सिंह के द्वारा मार डाला गया। उसको मारने के बाद वह सिंह शृगाल को उसकी रक्षा में नियुक्त करके स्वयं स्नान करने के उद्देश्य से नदी की ओर चला गया। सिंह के चले जाने पर वह शृगाल अपनी लोलुपता तथा समुत्सुकता के कारण उस गदहे के कान एवं हृदय को खा गया।

अत्रान्तरे सिंहो यावत्स्नात्वा, कृतदेवार्चनः, प्रतर्पितपितृगणः समायाति तावत् कर्णहृदयरहितो रासभस्तिष्ठति। तं दृष्ट्वा कोपपरीतात्मा सिंहः शृगालमाह—"पाप! किमिदमनुचितं कर्म समाचरितं, यत्कर्णहृदयभक्षणेनायमुच्छिष्टतां नीतः"। शृगालः सविनयमाह—"स्वामिन्! मा मैवं वद, कर्णहृदयरहित एवायं रासभ आसीत्, येनेहागत्य त्वामवलोक्य भूयोऽप्यागतः।"

अथ तद्वचनं श्रद्धेयं मत्वा सिंहस्तेनैव सह संविभज्य, निःशङ्कितमनास्तं भक्षितवान्। अतोऽहं ब्रवीमि—"आगतश्च गतश्चैव" इति।

व्याख्या—कृतदेवार्चनः = कृतदेवार्चनादिविधिः, प्रतर्पितपितृगणः = पूर्वपुरुषेभ्यो दत्तजलाञ्जलिः, कोपपरीतात्मा = क्रोधाविष्टहृदयः, श्रद्धेयं मत्वा = विश्वासार्हं मत्वा, संविभज्य = समविभागं विधाय।

हिन्दी—स्नान के पश्चात् देवों की पूजा तथा पितृगणों के लिये जलाञ्जलि दानादि कृत्यों को करके जब वह सिंह नदी से लौटा तो देखा कि वह गदहा बिना कान और हृदय के पड़ा हुआ है। उसको देखते ही क्रोधाविष्ट होकर उसने शृगाल से पूछा—"पापी! कमीने! तुमने यह क्या कर डाला? इसके कान और हृदय को खाकर तुमने इसे उच्छिष्ट बना दिया है।" उसकी बात सुनकर शृगाल ने विनीत होकर कहा—"स्वामिन्! ऐसी बात न कहें, जब मैं इसको आपके पास ले आया था और यह आपको देखकर पुनः वापस लौट गया था, तब भी यह कान एवं हृदय से रहित था।"

शृगाल की बात को विश्वास के योग्य मानकर वह सिंह शृगाल के साथ उसके मांस का बटवारा करके उसे खा गया। इसीलिये मैं कहता हूँ, कि "वह गदहा आया और चला भी गया। फिर भी अपनी मूर्खता के कारण लौट आने पर सिंह के द्वारा मार डाला गया।"

तन्मूर्ख! कपटं कृतं त्वया। परं युधिष्ठिरेणेव सत्यवचनेन विनाशितम्। अथवा साध्विदमुच्यते—

स्वार्थमुत्सृज्य यो दम्भी सत्यं ब्रूते सुमन्दधीः।
स स्वार्थाद् भ्रश्यते नूनं युधिष्ठिर इवापरः ॥ ३८ ॥

मकर आह—"कथमेतद् ?" स आह—

व्याख्या—युधिष्ठिरेणेव=युधिष्ठिरनामकः कश्चित्कुम्भकारः, तस्येव, सत्यवचनेन=स्वसत्यवाक्येन, विनाशितं=स्वमनोरथो विनाशितः। दम्भी=दम्भयुक्तो नरः, सुमन्दधीः=मूर्खः ॥ ३८ ॥

हिन्दी—अरे मूर्ख! तुमने मेरे साथ बहुत बड़ा कपट किया था किन्तु युधिष्ठिर नाम के उस मूर्ख कुम्हार की तरह तुमने अपने सत्य वचन के द्वारा स्वार्थ को ही विनष्ट कर दिया। अथवा, यह ठीक ही कहा गया है कि—

स्वार्थ का परित्याग करके जो व्यक्ति अपने दम्भ एवं मूर्खता के कारण सत्य बोलने का प्रयास करता है, वह द्वितीय युधिष्ठिर की भाँति (युधिष्ठिर नाम के उस कुम्हार की तरह) अपने मनोरथ को विनष्ट कर देता है ॥ ३८ ॥

मकर ने पूछा—"यह कैसे ?" वानर ने कहा—

[ ३ ]

## ( युधिष्ठिर-कुम्भकारकथा )

कस्मिंश्चिदधिष्ठाने कुम्भकारः प्रतिवसति स्म कदाचित्प्रमादादर्धभग्नघटकर्पर-तीक्ष्णाग्रस्योपरि महता वेगेन धावन् पतितः। ततः कर्परकोट्या पाटितललाटो रुधिर-प्लावितततनुः कृच्छ्रादुत्थाय स्वाश्रयं गतः। ततश्चापथ्यसेवनात्स प्रहारस्तस्य करालतां गतः। कृच्छ्रेण च नीरोगतां नीतः।

व्याख्या—अधिष्ठाने=पुरे; कुम्भकारः=कुलालः, प्रमादात्=गर्वात्, (अनवधानाद्वा), कर्परकोट्या=कर्पराग्रभागेन, पाटितललाटः=भिन्नललाटः, (पाटितः=भिन्नः, ललाटो यस्य सः), रुधिरप्लाविततनुः=रुधिरार्द्रशरीरः, स्वाश्रयं=स्वभवनं, करालतां=विषमतां (भीषणतां), गतः=प्राप्तः।

हिन्दी—किसी नगर में एक कुम्हार रहता था। किसी तीखे नोंक युक्त ठीकरे पर जोर से दौड़ता हुआ असावधानी के कारण वह जमीन पर गिर पड़ा और खपड़े की नोंक उसके ललाट में धंस गयी। खून से लथपथ होकर बड़ी कठिनाई से वह उठा और अपने घर चला आया। असंयम के कारण उसका वह घाव अत्यन्त भीषण रूप से सड़ लिया और अनेक दवाइयाँ करने के पश्चात् किसी तरह से अच्छा हो सका।

अथ कदाचिद् दुर्भिक्षपीडिते देशे स कुम्भकारः क्षुत्क्षामकण्ठः कैश्चिद्राजसेवकैः सह देशान्तरं गत्वा, कस्यापि राज्ञः सेवको बभूव। स च राजा तस्य ललाटे विकरालं प्रहार-क्षतं दृष्ट्वा चिन्तयामास यत्—"वीरः पुरुषः कश्चिदयम्। नूनं तेन ललाटपट्टे संमुख-प्रहारः।" अतस्तं संमानादिभिः सर्वेषां राजपुत्राणां मध्ये विशेषप्रसादेन पश्यति स्म। तेऽपि राजपुत्रास्तस्य तं प्रसादातिरेकं पश्यन्तः परमीर्ष्याधर्मं वहन्तो राजभयान्न किञ्चिदूचुः।

व्याख्या—दुर्भिक्षपीडिते=दुष्कालग्रस्ते (अकालपीडिते), क्षुत्क्षामकण्ठः=बुभुक्षया शुष्ककण्ठः, देशान्तरं=विदेशं, विकरालं=भीषणं, प्रहारक्षतं=व्रणचिह्नं, संमुखप्रहारः=संमुख-युद्धक्षतं, प्रसादातिरेकं=कृपाधिक्यम्, ईर्ष्याधर्मं=ईर्ष्याभावं, राजभयात्=राज्ञो भयादिति।

हिन्दी—कभी देश में अत्यन्त भीषण अकाल पड़ जाने के कारण वह कुम्भकार भूख से पीड़ित होकर कुछ राज-भृत्यों के साथ विदेश चला गया और वहाँ जाकर किसी राजा के यहाँ नौकरी कर ली। राजा ने उसके ललाट के घाव को देखकर सोचा कि "यह कोई बड़ा पराक्रमी व्यक्ति है, इसीलिये किसी युद्ध आदि में इसके ललाट में यह घाव लगा है।"

उक्त विचार के कारण राजा उस दिन से उसका बड़ा संमान करने लगा और अन्य राजपूतों से भी अधिक कृपाभाव रखने लगा। राजपूत उसके उक्त संमान एवं राजा की कृपा आदि को देखकर अपने मन में उसके प्रति ईर्ष्याभाव रखा करते थे, किन्तु राजा के डर से कुछ कहते नहीं थे।

**अथान्यस्मिन्नहनि तस्य भूपतेर्विग्रहे समुपस्थिते वीरसम्भावनायां क्रियमाणायां प्रकल्प्यमानेषु गजेषु, संनह्यमानेषु वाजिषु, योधेषु प्रगुणीक्रियमाणेषु तेन भूभुजा स कुम्भकारः प्रस्तावानुगतं पृष्टो निर्जने—"भो राजपुत्र! किं ते नाम? का च जातिः? कस्मिन्सङ्ग्रामे प्रहारोऽयं ते ललाटे लग्नः?" स आह—"देव! नायं शस्त्रप्रहारः। युधिष्ठिराभिधः कुलालोऽहं जात्या। मद्गेहेऽनेककर्पराण्यासन्। अथ कदाचिन्मद्य-पानं कृत्वा निर्गतः प्रधावन् कर्परोपरि पतितः। ततश्च प्रहारविकारोऽयं मे ललाट एवं विकरालतां गतः।**

व्याख्या—विग्रहे=युद्धे, वीरसम्भावनायां=शूरपरीक्षायां, (तेषां सत्क्रियायां च) प्रकल्प्यमानेषु=युद्धाय सज्जीक्रियमाणेषु, संनह्यमानेषु=प्रगुणीक्रियमाणेषु, वाजिषु=अश्वेषु, योधेषु=वीरेषु, प्रगुणीक्रियमाणेषु, भूभुजा=राज्ञा, प्रस्तावानुगतं प्रसङ्गानुसारेण, निर्जने=एकान्ते, प्रहारविकारः=क्षतचिह्नं।

हिन्दी—किसी दिन राजा के समक्ष युद्धकाल उपस्थित हो जाने पर जब कि वीरों का समुचित संमान किया जा रहा था और उनकी परीक्षा ली जा रही थी, हाथियों पर हौदा आदि लगाकर उन्हें युद्ध के लिये सजाया जा रहा था, घोड़ों की पीठ पर जीन आदि कसकर उन्हें सुसज्जित किया जा रहा था और वीर पुरुषों को एकत्र किया जा रहा था तो प्रसङ्गवशात् राजा ने उस कुम्भकार भी एकान्त में बुलाकर उससे पूछा—"वीर राजपूत! तुम्हारा क्या नाम है? तुम किस जाति के क्षत्रिय हो? तुम्हारे ललाट में यह घाव किस युद्ध में लगा था?"

उसने कहा—"देव! यह शस्त्र का घाव नहीं है। मैं जाति का कुम्हार हूँ और मेरा नाम युधिष्ठिर है। मेरे घर में टूटे हुये मिट्टी के बर्तनों के अनेक खपड़े पड़े हुये थे। एक बार

मैं शराब पीकर घर से निकल कर दौड़ रहा था। सहसा मैं उन खपड़ों पर गिर पड़ा। उसी घाव ने विकरालता को पकड़ लिया था जिसका चिह्न मेरे ललाट में आज तक पड़ा हुआ है।"

तदाकर्ण्य राजा सव्रीडमाह—"अहो, वञ्चितोऽहं राजपुत्रानुकारिणानेन कुलालेन तद्दीयतां द्रागेतस्य चन्द्रार्धः।" तथानुष्ठिते कुम्भकार आह—"देव! मा मैवं कुरु। पश्य मे रणे हस्तलाघवम्।" राजा प्राह—"भोः! सर्वगुणसम्पन्नो भवान्, तथापि गम्यताम्। उक्तञ्च—

> शूरश्च कृतविद्यश्च दर्शनीयोऽसि पुत्रक।
> यस्मिन् कुले त्वमुत्पन्नो गजस्तत्र न हन्यते" ॥ ३९ ॥

कुलाल आह—"कथमेतत्?" राजा कथयति—

व्याख्या—सव्रीडं = सलज्जं, वञ्चितः = प्रतारितः, राजपुत्रानुकारेण, द्राक् = शीघ्रं, चन्द्रार्धः = अर्धचन्द्रः। हस्तलाघवं = हस्तकौशलम्। शूरः = वीरः, कृतविद्यः = गृहीतविद्यः, दर्शनीयः = सुरूपः, गजः = करिः ॥ ३९ ॥

हिन्दी—कुम्हार की बात को सुनते ही राजा ने लज्जित होकर अपने सिपाहियों से कहा—"राजपूतों का अनुकरण करने वाला यह कुम्हार मुझे बहुत दिनों से ठगता (धोखा देता) रहा है। इसके गले में हाथ लगाकर शीघ्र यहाँ से निकाल दो।" जब वह अर्धचन्द्र देकर सिपाहियों द्वारा वहाँ से निकाला जाने लगा तो राजा से उसने कहा—"देव! मेरे साथ ऐसा व्यवहार न किया जाय। युद्ध में मेरे हाथ की सफाई तो देखी जाय।" राजा ने कहा—"मैं मानता हूँ कि तुम सर्वगुणसम्पन्न हो, फिर भी यहाँ से चले जाओ। कहा गया है कि—

पुत्र! तुम शूर, विद्वान् तथा दर्शनीय सब कुछ हो। किन्तु जिस कुल में उत्पन्न हुये हो, उस कुल में गज का शिकार नहीं किया जाता है" ॥ ३९ ॥

राजा की बात को सुनकर कुम्हार ने पूछा—"कैसे?" राजा ने कहा—

[ ४ ]

## (सिंह-शृगालपुत्रयोः कथा)

कस्मिंश्चिदुद्देशे सिंहदम्पती प्रतिवसतः स्म। अथ सिंही पुत्रद्वयमजीजनत्। सिंहोऽपि नित्यमेव मृगान् व्यापाद्य सिंह्यै ददाति। अथान्यस्मिन्नहनि तेन किमपि नासादितम्। वने भ्रमतोऽपि तस्य रविरस्तं गतः। अथ तेन स्वगृहमागच्छता शृगाल-शिशुः प्राप्तः। स च बालकोऽयमित्यवधार्य, यत्नेन दंष्ट्रामध्यगतं कृत्वा सिंह्यै जीवन्तमेव समर्पितवान्।

व्याख्या—उद्देशे = वनभागे, अजीजनत् = जनयामास। मृगान् = पशून्, नासादितं = न प्राप्तम्।

हिन्दी—किसी वन में सिंह-दम्पति निवास करता था। एक बार सिंही ने दो पुत्रों को जन्म दिया। सिंह प्रतिदिन जङ्गली पशुओं को मार कर उस सिंही को दिया करता था। एक दिन सिंह को कुछ नहीं मिला और वन में घूमते-घूमते दिन भी डूब गया। घर को वापस लौटते समय मार्ग में उसे एक शृगाल का बच्चा मिल गया। शिशु समझकर वह सिंह प्रयत्न पूर्वक अपने दांतों के मध्य में पकड़ कर उसको अपने घर उठा ले आया और जीवित अवस्था में ही उसे उसने सिंही के हाथों में समर्पित कर दिया।

ततः सिंह्याभिहितं—"भो कान्त! त्वयानीतं किञ्चिदस्माकं भोजनम्?" सिंह आह—"प्रिये! मयाद्यैनं शृगालशिशुं परित्यज्य न किञ्चित्सत्त्वमासादितम्। स च मया बालोऽयमिति मत्वा न व्यापादितो विशेषात्स्वजातीयश्च। उक्तञ्च—

स्त्रीविप्रलिङ्गिबालेषु प्रहर्त्तव्यं न कर्हिचित्।
प्राणात्ययेऽपि सञ्जाते विश्वस्तेषु विशेषतः॥ ४०॥

व्याख्या—कान्त=प्रिय!, सत्त्वं=जीवः, स्वजातीयः=स्ववर्गीयः (नखायुधजीवी) लिङ्गी=ब्रह्मचारी, प्राणात्यये=प्राणसङ्कटे (प्राणविनाशकालेऽपि)॥ ४०॥

हिन्दी—सिंही ने पूछा—"कान्त! तुमने मेरे भोजन के लिये कोई प्रवन्ध किया, कोई जीव ले आये हो?" सिंह ने उत्तर में कहा—"प्रिये! इस शृगाल शिशु को छोड़कर आज मुझे कोई भी जीव नहीं मिला। इसको भी बालक तथा विशेषतः स्वजातीय शिशु समझ कर मैंने मारा नहीं है। कहा भी गया है कि—

स्त्री, ब्राह्मण, ब्रह्मचारी तथा बालकों को कभी मारना नहीं चाहिये। यदि ये विश्वस्त होकर अपने पास आये हों तब तो प्राण-सङ्कट की स्थिति आने पर भी कभी इनपर प्रहार नहीं करना चाहिये॥ ४०॥

इदानीं त्वमेनं भक्षयित्वा पथ्यं कुरु। प्रभातेऽन्यत्किञ्चिदुपार्जयिष्यामि।" सा प्राह—"भोः कान्त! त्वया बालकोऽयमिति विचिन्त्य न हतः, तत्कथमेनमहं स्वोदरार्थे विनाशयामि? उक्तञ्च—

अकृत्यं नैव कर्तव्यं प्राणत्यागेऽप्युपस्थिते।
न च कृत्यं परित्याज्यमेष धर्मः सनातनः॥ ४१॥

तस्मान्ममायं तृतीयः पुत्रो भविष्यति।" इत्येवमुक्त्वा सा तमपि स्वस्तनक्षीरेण परां पुष्टिमनयत्। एवं ते त्रयोऽपि शिशवः परस्परज्ञातजातिविशेषा एकाहारविहारा बाल्यसमयं निर्वाहयन्ति स्म।

व्याख्या—एनं=शृगालशिशुं, पथ्यं=भोजनं, स्वोदरार्थे=स्वोदरपूरणाय, अकृत्यम्=निन्दितं कर्म, सनातनः=शाश्वतः॥ ४१॥ क्षीरेण=दुग्धेन, बाल्यसमयं=बाल्यकालम्।

हिन्दी—इस समय तुम इसी (शृगालशिशु) को खाकर अपना कलेवा कर लो। कल प्रातःकाल होते ही कोई दूसरी वस्तु खोजकर ले आऊँगा।" सिंहिनी ने कहा—"कान्त! जब

कि बालक समझकर तुमने इसको नहीं मारा है, तो मैं ही अपनी उदरपूर्ति के लिये इसकी हत्या क्यों करूँ ? कहा भी गया है कि—

प्राण जाने की स्थिति आने पर भी मनुष्य को अकृत्य नहीं करना चाहिये और कृत्य का परित्याग भी नहीं कर देना चाहिये। यही मनुष्य का शाश्वतिक धर्म कहा गया है॥ ४१॥

अतः आज से यह मेरा तृतीय पुत्र होगा।" उपर्युक्त वाक्य को कहने के पश्चात् वह सिंहिनी उस शृगाल शिशु को भी अपना दूध आदि पिला कर जिलाने लगी। उस सिंहिनी के तीनों ही पुत्र आपस में एक दूसरे की ज़ाति को जाने बिना ही एक ही साथ घूमते फिरते थे और आहार-विहार से अपना बाल्यकाल व्यतीत करते रहे।

**अथ कदाचित्तत्र वन भ्रमन्नरण्यगजः समायातः। तं दृष्ट्वा तौ सिंहसुतौ द्वावपि कुपिताननौ तं प्रति प्रचलितौ यावद्, तावत्तेन शृगालसुतेनाभिहितम्—"अहो, गजोऽयं युष्मत्कुलशत्रुः। तन्न गन्तव्यमेतस्याभिमुखम्" एवमुक्त्वा गृहं प्रति प्रधावितः। तावपि ज्येष्ठबान्धवभङ्गान्निरुत्साहतां गतौ।**

व्याख्या—अरण्यगजः = वनगजः, कुपिताननौ = क्रोधयुक्ताननौ, प्रधावितः = पलायितः। ज्येष्ठबान्धवभङ्गात् = ज्येष्ठभ्रातुः पलायनात्।

हिन्दी—किसी दिन उस वन में एक जङ्गली हाथी कहीं से घूमता हुआ आया। उसको देखते ही सिंह के दोनों शिशु क्रुद्ध होकर उसकी ओर दौड़ पड़े। उन्हें हाथी की ओर बढ़ते हुये देखकर शृगाल के उस शिशु ने उन्हें रोककर कहा—"अरे भाई! यह तो हाथी है जो तुम लोगों के कुल का स्वाभाविक शत्रु है। अतः तुम लोगों को उसके सम्मुख नहीं जाना चाहिये।" उक्त बात कह कर वह घर की ओर भागने लगा। उसको भागते हुये देख कर सिंह के दोनों शिशु भी निरुत्साहित हो गये।

**अथवा, साध्विदमुच्यते—**

**एकेनापि सुधीरेण सोत्साहेन रणं प्रति।**
**सोत्साहं जायते सैन्यं भग्ने भङ्गमवाप्नुयात्॥ ४२॥**

**तथा च—**

**अतएव हि वाञ्छन्ति भूपा योधान् महाबलान्।**
**शूरान् वीरान् कृतोत्साहान् वर्जयन्ति च कातरान्॥ ४३॥**

व्याख्या—सोत्साहेन = उत्साहवता, सुधीरेण = स्थिरेण (धैर्ययुक्तेन), सैन्यं = बलम्, सोत्साहं जायते = उत्साहवान् भवति। भग्ने = पलायने, भङ्गम् = पलायनम् ॥ ४२॥ कृतोत्साहान् = सोत्साहान्, कातरान् = कापुरुषान् (कायरों को), वर्जयन्ति॥ ४३॥

हिन्दी—अथवा यह ठीक ही कहा गया है कि—युद्धस्थल में एक ही उत्साही और स्थिर (धैर्यवान्) व्यक्ति के रहने से सम्पूर्ण सेना उत्साहित एवं स्थिर रहती है और एक ही कायर व्यक्ति के भागने से वह उत्साहहीन होकर भागने भी लगती है॥ ४२॥

और भी—इसी लिये राजा लोग, अपनी सेना में बलवान्, धैर्यवान्, उत्साही शूर तथा वीर पुरुषों का संग्रह करते हैं और कायरों को उससे पृथक् कर देते हैं ॥ ४३ ॥

**अथ तौ द्वावपि भ्रातरौ गृहं प्राप्य पित्रोरग्रतो विहसन्तौ ज्येष्ठभ्रातृचेष्टितमूचतुः! यथायं गजं दृष्ट्वा दूरतोऽपि प्रनष्टः। सोऽपि तदाकर्ण्य कोपाविष्टमनाः प्रस्फुरिताधरपल्लवस्ताम्रलोचनस्त्रिशिखां भ्रूकुटिं कृत्वा तौ निर्भर्त्सयन् परुषतरवचनान्युवाच। ततः सिंह्या एकान्ते नीत्वा प्रबोधितोऽसौ—"वत्स! मैवं कदाचिज्जल्प। भवदीयलघुभ्रातरावेतौ" इति।**

व्याख्या—विहसन्तौ=उपहसन्तौ, विचेष्टितं=कृत्यं, प्रनष्टः=पलायितः। कोपाविष्टमनाः=क्रोधाविष्टः सन्, प्रस्फुरिताधरपल्लवः=प्रकम्पिताधरः (प्रस्फुरितः अधरपल्लवो यस्यासौ), ताम्रलोचनः=अरुणनेत्रः, त्रिशिखां=शिखात्रययुतां, निर्भर्त्सयन्=निन्दयन्, परुषतरवचनानि=कठोरतरवचनानि, प्रबोधितः=विज्ञापितः ॥

हिन्दी—घर पहुँच कर उन दोनों भाइयों ने पिता के समक्ष अपने बड़े भाई (शृगाल-शिशु) का उपहास करते हुये उसके भागने वाली बात को प्रकाशित कर दिया—"यह एक गज को देखकर भाग गया था।"

उन सिंह-शिशुओं की बात को सुनकर, वह शृगाल पुत्र बहुत क्रुद्ध हुआ। उसके अधर क्रोध से फड़फड़ा उठे और नेत्र अरुण हो उठे। अपनी भृकुटी को चढ़ाकर वह उनको भला बुरा कहने लगा। उसको क्रोधित होते हुये देखकर सिंहनी ने एकान्त में ले जाकर समझाते हुए कहा—"वत्स! तुमको ऐसी बातें नहीं कहनी चाहिये। ये दोनों तुम्हारे छोटे भाई हैं।"

**अथासौ सान्त्ववचनेन प्रभूततरकोपाविष्टस्तामप्युवाच—"किमहमेताभ्यां शौर्येण, रूपेण, विद्याभ्यासेन, कौशलेन वा हीनो, येन मामुपहसतः? तन्मयावश्यमेतौ व्यापादनीयौ।" तदाकर्ण्य सिंही तस्य जीवितमिच्छन्त्यन्तर्विहस्य प्राह—**

**"शूरोऽसि कृतविद्योऽसि दर्शनीयोऽसि पुत्रक।**
**यस्मिन् कुले त्वमुत्पन्नो गजस्तत्र न हन्यते ॥ ४४ ॥**

व्याख्या—सान्त्ववचनेन=सान्त्वनावाक्येन, शौर्येण=विक्रमेण, कौशलेन=मृगयादिकार्यकौशलेन।

हिन्दी—सिंहिनी के सान्त्वनावचन को सुनकर और अधिक क्रोधित होते हुए उसने कहा—"क्या मैं शौर्य में, रूप में, विद्या में या कौशल में इनसे हीन हूँ जो ये मेरा उपहास कर रहे हैं? अतः मैं इनका वध किये बिना नहीं छोड़ूँगा।"

शृगालशिशु के उक्त वचन को सुनकर उसके जीवन की सुरक्षा चाहने वाली सिंहिनी ने मुस्करा कर कहा—"पुत्र! तुम्हारा कथन ठीक है। तुम वीर, विद्वान् और दर्शनीय, सब हो किन्तु जिस कुल में तुम उत्पन्न हुये हो, उस कुल में गज का शिकार नहीं किया जाता है ॥ ४४ ॥

तत्सम्यक् शृणु—"वत्स ! त्वं शृगालीसुतः। मया कृपया स्वस्तनक्षीरेण पुष्टिं नीतः। तद्यावदेतौ मत्पुत्रौ शिशुत्वात्त्वां शृगालं न जानीतः, तावद् द्रुततरं गत्वा स्वजातीयानां मध्ये मिलितो भव। नो चेदाभ्यां हतो मृत्युपथं समेष्यसि।" सोऽपि तद्वचनं श्रुत्वा भयव्याकुलमनाः शनैः शनैरपसृत्य, स्वजात्या मिलितः।

व्याख्या—शिशुत्वात्, अपसृत्य=ततः पलायनं विधाय, स्वजात्या=स्वजातीयैरन्यैः शृगालैः सह।

हिन्दी—मैं सच-सच बता देती हूँ, सुन लो—"हे वत्स ! तुम एक शृगाली के पुत्र हो मैंने दया करके तुमको अपना दूध पिलाया और तुम्हारा पालन-पोषण किया है। मेरे ये पुत्र अपनी शिशुता के कारण जबतक यह नहीं जान जाते कि तुम शृगाल हो, तबतक शीघ्र यहाँ से भाग जाओ और अपनी जाति के शृगालों में मिल जाओ। अन्यथा, कभी इनके द्वारा मारे जाकर तुम मृत्यु को प्राप्त हो जाओगे।" सिंहिनी के वचन को सुनकर वह भय से काँप उठा और व्याकुल होकर धीरे-धीरे वहाँ से भागकर अपनी जाति वालों के साथ मिल गया।

तस्मात्त्वमपि यावदेते राजपुत्रास्त्वां कुलालं न जानन्ति, तावद् द्रुततरमपसर। नो चेदेतेषां सकाशाद्विडम्बनां प्राप्य मरिष्यसि।" कुलालोऽपि तदाकर्ण्य सत्वरं प्रणष्टः।" अतोऽहं ब्रवीमि—"स्वार्थमुत्सृज्य यो दम्भी इति। धिङ्मूर्ख ! यत्त्वया स्त्रियोऽर्थे एतत्कार्यमनुष्ठातुमारब्धम्। न हि स्त्रीणां कथञ्चिद्विश्वासमुपगच्छेत्। उक्तञ्च—

> यदर्थं स्वकुलं त्यक्तं जीवितार्धं च हारितम्।
> सा मां त्यजति निःस्नेहा, कः स्त्रीणां विश्वसेन्नरः ॥ ४५ ॥

मकर आह—"कथमेतद् ?" वानर आह—

व्याख्या—अपसर=पलायनं कुरु। अनुष्ठातुं=कर्तुं, निःस्नेहा=गतस्नेहा ॥ ४५ ॥

हिन्दी—उक्त कथा सुनाने के बाद राजा ने कुलाल से कहा—"अतः जबतक ये राजपूत यह नहीं जान लेते हैं कि तुम कुम्हार हो, उससे पूर्व ही तुम भी यहाँ से शीघ्र भाग जाओ। अन्यथा, इन राजपूतों के द्वारा अपमानित होकर तुम भी मारे जाओगे।" राजा की बात को सुनकर वह कुलाल तत्काल वहाँ से भाग गया। इसीलिये मैं कहता हूँ कि—जो व्यक्ति अपने स्वार्थ की अपेक्षा करके दम्भ के कारण सत्य बोलने का प्रयत्न करता है, वह कुम्हार की तरह अपना कार्य स्वयं बिगाड़ लेता है।"

उक्त कथानक को समाप्त कर पुनः उस वानर ने मकर को धिक्कारते हुये कहा—"अरे मूर्ख ! तुम स्त्री के कहने से मित्र के साथ विश्वासघात जैसा कार्य करना चाहते थे, तुम्हें धिक्कार है। मनुष्य को कभी स्त्री का विश्वास नहीं करना चाहिये। कहा भी गया है कि—

जिसके लिये मैंने अपने कुल का परित्याग किया और अपना आधा जीवन भी दे दिया, वही यदि आज मुझे निःस्नेह होकर छोड़ दे रही है, तो इस विश्व में स्त्रियों का विश्वास आज से कौन करेगा ?" ॥ ४५ ॥

मकर ने पूछा—"यह कैसे ?" मर्कट ने उत्तर दिया—

## [ ५ ]

## ( ब्राह्मणदम्पत्योः कथा )

अस्ति कस्मिंश्चिदधिष्ठाने कोऽपि ब्राह्मणः। तस्य च भार्या प्राणेभ्योऽप्यतिप्रियाऽऽसीत्। सापि प्रतिदिनं कुटुम्बेन सह कलहं कुर्वाणा न विश्राम्यति। सोऽपि ब्राह्मणः कलहमसहमानो भार्यावात्सल्यात् स्वकुटुम्बं परित्यज्य ब्राह्मण्या सह विप्रकृष्टं देशान्तरं गतः।

व्याख्या—अधिष्ठाने = पुरे, कुटुम्बेन = परिवारेण सह, वात्सल्यात् = स्नेहात्, विप्रकृष्टं = दूरस्थम्।

हिन्दी—किसी नगर में एक ब्राह्मण रहा करता था। वह अपनी स्त्री को अपने प्राणों से भी अधिक प्रिय समझता था। किन्तु उसकी स्त्री परिवार के सदस्यों के साथ कलह करके कभी भी थकती नहीं थी। वह ब्राह्मण स्त्री के प्रति अधिक स्नेह होने के कारण अपने कुटुम्ब के व्यक्तियों को छोड़कर अपनी स्त्री के साथ किसी दूरस्थ देश की ओर चल पड़ा।

अथ महाटवीमध्ये ब्राह्मण्याभिहितः—"आर्यपुत्र! तृष्णा मां बाधते, तदुदकं क्वाप्यन्वेषय।" अथासौ तद्वचनानन्तरं यावदुदकं गृहीत्वा समागच्छति तावत्तां मृतामपश्यत्। अतिवल्लभतया विषादं कुर्वन् यावद्विलपति, तावदाकाशे वाचं शृणोति। तथा हि—"यदि ब्राह्मण! त्वं स्वकीयजीवितस्यार्धं ददासि, ततस्ते जीवति ब्राह्मणी।" तच्छ्रुत्वा ब्राह्मणेन शुचीभूय तिसृभिर्वाचाभिः स्वजीवितार्धं दत्तम्। वाक्समसेव च सा ब्राह्मणी जीविता।

व्याख्या—अटवीमध्ये = वनमध्ये, तृष्णा = पिपासा, उदकं = जलं, अतिवल्लभतया = अतिप्रियतया, विषादं = शोकं, शुचीभूय = आचमनादिना पवित्रो भूत्वा, वाक्सममेव = तस्य सङ्कल्पवाक्येन सह।

हिन्दी—मार्ग के किसी अरण्य में पहुँचने पर ब्राह्मणी ने कहा—"आर्यपुत्र! मुझे बहुत तेज प्यास लगी है। अतः कहीं से ढूँढ़कर जल ले आइये।" उसके कथनानुसार जबतक वह जल लेकर आया तबतक देखता है कि वह ब्राह्मणी मर चुकी है। उसके प्रति अत्यधिक अनुराग होने के कारण वह ब्राह्मण उसके शोक में विलाप करने लगा। इसी बीच में उसने सुना, आकाश से कोई कह रहा था—"हे ब्राह्मण! यदि तुम अपनी आयु का आधा भाग इस ब्राह्मणी को दे दो, तो यह जीवित हो उठेगी।"

उपर्युक्त नभोवाणी को सुनकर वह ब्राह्मण आचमन आदि करके अपने को पवित्र कर लिया और सङ्कल्प को तीन बार उच्चारण करके उसने अपनी आयु का आधा भाग उस ब्राह्मणी को दे दिया। ब्राह्मण के वाक्दान के साथ ही वह ब्राह्मणी जीवित हो उठी।

अथ तौ जलं पीत्वा वनफलानि भक्षयित्वा गन्तुमारब्धौ। ततः क्रमेण कस्यचिन्नगरस्य प्रदेशे पुष्पवाटिकां प्रविश्य ब्राह्मणो भार्यामभिहितवान्—"भद्रे! यावदहं

भोजनं गृहीत्वा समागच्छामि, तावदत्र त्वया स्थातव्यम् ।" इत्यभिधाय ब्राह्मणो नगर-मध्ये जगाम ।

व्याख्या—तौ=दम्पती, नगरस्य प्रदेशे=नगरापान्तभागे ।

हिन्दी—दोनों ने जल पीने के बाद कुछ वनफलों को खाया और पुनः चलना आरम्भ कर दिया। कुछ दूर जाने के बाद उन्हें एक नगर मिला जिसके उपान्त भाग में एक अत्यन्त सुन्दर पुष्पवाटिका लगी हुई थी। उस पुष्पवाटिका में प्रवेश करके ब्राह्मण ने अपनी स्त्री को एक स्थान पर बैठाकर कहा—"भद्रे ! मैं नगर से भोजन लेकर अभी आ रहा हूँ, तबतक तुम यहीं बैठी रहो।" उक्त वाक्य कहने के बाद वह ब्राह्मण नगर में भोजन लेने के लिये चला गया।

अथ तस्यां पुष्पवाटिकायां पङ्गुररघट्टं खेलयन् दिव्यगिरा सङ्गीतमुद्गिरति। तच्च श्रुत्वा कुसुमेषुणार्दितया ब्राह्मण्या तत्सकाशं गत्वाऽभिहितं—"भद्र ! यदि मां न कामयसे, तन्मत्सक्ता स्त्रीहत्या तव भविष्यति।"

पङ्गुरब्रवीत्—"किं व्याधिग्रस्तेन मया करिष्यसि ?"

साब्रवीत्—"किमनेनोक्तेन ! अवश्यं त्वया सह मया सङ्गमः कर्तव्यः।" तच्छ्रुत्वा स तथा कृतवान्।

व्याख्या—पंगुः=पादहीनः कश्चित्, अरघट्टं=जलोद्धरणयन्त्रं ( रहट ), खेलयन्=चालयन्, दिव्यगिरा=मधुरस्वरेण, कुसुमेषुणा=कामदेवेन, अर्दिता=पीडिता, सङ्गमः=सुरतव्यापारः।

हिन्दी—पुष्पवाटिका में कोई पङ्गु रहट से जल खींचता हुआ मधुर वाणी में गीत गा रहा था। उसके गीत को सुनकर वह ब्राह्मणी कामदेव के बाणों से पीड़ित हो उठी और उस पङ्गु के पास जाकर बोली—"भद्र ! यदि तुम मेरे साथ रमण नहीं करोगे तो मैं यहीं अपना प्राण दे दूँगी और तुम्हें स्त्रीहत्या का पाप लगेगा।" उस पङ्गु ने कहा—"तुम्हें इन सब बातों से क्या लेना देना है ? मुझे तो तुम्हारे साथ समागम करना ही है।" ब्राह्मणी की उक्त बात को सुनकर वह पङ्गु उसके साथ सुरत व्यापार करने लगा।

सुरतानन्तरं साब्रवीत—"इतः प्रभृति यावज्जीवं मयात्मा भवते दत्तः" इति ज्ञात्वा भवानप्यस्माभिः सहागच्छतु।" सोऽब्रवीत्—"एवमस्तु।" अथ ब्राह्मणो भोजनं गृहीत्वा, समागत्य तया सह भोक्तुमारब्धः। साऽब्रवीत्—"एष पङ्गुर्बुभुक्षितः। तदेतस्यापि कियन्तमपि ग्रासं देहि" इति। तथानुष्ठिते ब्राह्मण्याभिहितं—"ब्राह्मण ! सहायहीनस्त्वम्। यदा ग्रामान्तरं गच्छसि, तदा मम वचनसहायोऽपि नास्ति। तदेनं पङ्गुं गृहीत्वा गच्छावः।

व्याख्या—इतः प्रभृति=अद्यारभ्य, यावज्जीवं=यावज्जीवनं, ग्रासं=कवलम्।

हिन्दी—संभोगादि के समाप्त हो जाने पर ब्राह्मणी ने उस पंगु से कहा—"आज से

न यत्र शक्यते कर्तुं साम दानमथापि वा।
भेदस्तत्र प्रयोक्तव्यो यतः स वशकारकः॥ ७३॥

व्याख्या—व्याघ्रः=द्वीपी, असौ=शृगालः, प्रणिपातेन=विनम्रतयात्मसमर्पणेन, अपवाहितः=दूरीकृतः, शूरः=वीरः ( साहसिकः ), साध्यः=सानुकूलः ( अपवाह्यः )

हिन्दी—सिंह के चले जाने पर वहाँ एक व्याघ्र आ पहुंचा। उसको देखकर शृगाल ने अपने मन में सोचा कि—"एक दुष्ट को तो मैंने किसी तरह से विनय तथा आत्मसमर्पण आदि प्रदर्शित करके यहाँ से हटाया। अब इस द्वितीय दुष्ट को कैसे हटाऊँ? क्योंकि यह अत्यन्त शूर है। भेदनीति का अवलम्बन किये बिना यह साध्य नहीं होगा। कहा भी गया है कि—

जहाँ पर साम तथा दान का प्रयोग करने से कार्य न चलता हो, वहाँ भेद का ही प्रयोग करना चाहिये। क्योंकि ऐसे स्थानों पर भेद ही शत्रु को वश में कर पाता है॥ ७३॥

किञ्च—सर्वगुणसम्पन्नोऽपि बध्यते। उक्तञ्च यतः—

अन्तःस्थेनाविरुद्धेन सुवृत्तेनातिचारुणा।
अन्तर्भिन्नेन सम्प्राप्तं मौक्तिकेनापि बन्धनम्॥ ७४॥

एवं सम्प्रधार्य, तस्याभिमुखो भूत्वा गर्वादुन्नतकन्धरः ससंभ्रममुवाच—"माम! कथमत्र भवान् मृत्युमुखे प्रविष्टः? येन, एष गजः सिंहेन व्यापादितः, स च मामेतद्रक्षणे नियुज्य नद्यां स्नानार्थं गतः। तेन गच्छता मम समादिष्टं—"यदि कश्चिदिह व्याघ्रः समायाति तर्हि त्वया सुगुप्तं ममावेदनीयं, येन वनमिदं मया निर्व्याघ्रं कर्तव्यम्। यतः पूर्वं व्याघ्रेणैकेन मया व्यापादितो गजः शून्ये भक्षयित्वोच्छिष्टतां नीतः, तद्दिनादारभ्य व्याघ्रान् प्रति प्रकुपितोऽस्मि।"

व्याख्या—अन्तःस्थेन=अभ्यन्तरस्थेन ( अभेदस्थेन ), अविरुद्धेन=सदानुकूलेन ( वैररहितेन ), सुवृत्तेन=सुचरितेन ( सदाचारयुक्तेन ), अतिचारुणा=मनोहरेण, किन्तु—अन्तर्भिन्नेन=सच्छिद्रेण ( दोषयुक्तेन ), मौक्तिकेन बन्धनम्, अवाप्तं=प्राप्तम्। भेदादेव बन्धनं प्राप्नोति॥ ७४॥ सम्प्रधार्य=विचार्य, उन्नतकन्धरः=ईषदुन्नतकन्धरः ("शिरोधिः कन्धरा ग्रीवे"त्यमरः=गर्दन ), ससंभ्रमं=भयभीतः सन्, समादिष्टम्=आज्ञापितं, शून्ये=एकान्ते।

हिन्दी—किञ्च—सर्वगुणसम्पन्न होने पर भी मनुष्य भेदनीति द्वारा बन्धन में पड़ ही जाता है। कहा भी गया है कि—

जैसे—अत्यन्त अभेद्य, सुवृत्त एवं मनोहर होने पर भी मध्य में छिद्र रहने के कारण ही मोती को गूंथ दिया जाता है, उसी प्रकार सर्वगुणसम्पन्न, अन्तरङ्ग, वैररहित, सदाचारी तथा सुन्दर होने पर भी मनुष्य भेद के कारण बन्धन में पड़ जाता है"॥ ७४॥

उपर्युक्त बातों का विचार करके वह शृगाल उस व्याघ्र के सामने जाकर खड़ा हो गया और अपनी गर्दन को कुछ उठा कर भय प्रदर्शित करते हुये बोला—"मामा! आप यहाँ मृत्यु के मुख में कैसे चले आये? जिस सिंह ने इस गज को मारा है वह इसकी रक्षा में मुझे नियुक्त

करके नदी में स्नान करने के लिये गया हुआ है। जाते समय उसने मुझे यह आदेश दिया है कि यदि कोई व्याघ्र आ जाता है तो तुम गुप्त रूप से मुझे सूचित कर देना। मैं आकर इस वन को ही व्याघ्ररहित बना डालूँगा। क्योंकि इससे पूर्व भी एक बार मेरे द्वारा मारे हुये गज को एक व्याघ्रने एकान्त पा कर उच्छिष्ट बना दिया था। उसी दिन से मैं व्याघ्रों पर कुपित रहा करता हूँ।"

तच्छ्रुत्वा व्याघ्रः सन्त्रस्तस्तमाह—"भो भागिनेय! देहि मे प्राणदक्षिणाम्। त्वया तस्यात्र चिरायापि कापि वार्ता नाख्येया।" एवमभिधायसत्वरं पलायाञ्चक्रे।

अथ गते व्याघ्रे तत्र कश्चिद् द्वीपी समायातः। तमपि दृष्ट्वासौ व्यचिन्तयत्—"दृढदंष्ट्रोऽयं चित्रकः। तदस्य पार्श्वादस्य गजस्य यथा चर्मच्छेदो भवति, तथा करोमि।" एवं निश्चित्य तमप्युवाच—"भो भगिनीसुत! किमिति चिराद् दृष्टोऽसि! बुभुक्षित इव लक्ष्यसे? तदतिथिरसि मे। तदेष गजः सिंहेन हतस्तिष्ठति। अहञ्चास्य तदादिष्टो रक्षपालः। परं तथापि यावत्सिंहो न समायाति, तावदस्य गजस्य मांसं भक्षयित्वा तृप्तिं कृत्वा द्रुततरं व्रज।"

व्याख्या—सन्त्रस्तः=भयभीतः, सत्वरं=शीघ्रं, पलायाञ्चक्रे=पलायनमकरोत्। द्वीपी=चित्रकः (चीता), दृढदंष्ट्रः=सुदृढतीक्ष्णदन्तः, तदादिष्टः=सिंहेन नियुक्तः।

हिन्दी—शृगाल की पूर्वोक्त बात सुनकर व्याघ्र ने भय से कांपते हुये कहा—"अरे भागिनेय! मुझे मेरे प्राणों की भिक्षा दे दो। उस सिंह के विलम्ब से आने पर भी उसके समक्ष मेरी कोई चर्चा न करना।" यह कह कर वह वहाँ से तत्काल भाग गया।

व्याघ्र के चले जाने पर एक चीता वहाँ आया। उसको भी देखकर शृगाल ने अपने मन में सोचा कि "इस चीते का दाँत खूब मजबूत है। अतः ऐसा उपाय करता हूँ कि जिससे यह इस गज के कठोर चमड़े को काट डाले।" उक्त प्रकार से निश्चय करने के बाद वह उस चीते से पूछने लगा—"अरे भागिनेय! आज बहुत दिनों के बाद दिखाई पड़े हो, क्या कारण है? कुछ भूखे हुये की तरह से दिखाई पड़ रहे हो। (समय पर उपस्थित होने के कारण) तुम मेरे अतिथि हो। सिंह के द्वारा मारा हुआ यह गज तुम्हारे समक्ष पड़ा है और सिंह के द्वारा नियुक्त मैं ही इसका रक्षक हूँ। अतः उस सिंह के यहाँ आने से पूर्व ही तुम इस गज का मांस खाकर अपनी तृप्ति कर लो और शीघ्र यहाँ से भाग जाओ।"

स आह—"माम! यद्येवं तन्न कार्यं मे मांसाशनेन। यतः जीवन्नरो भद्रशतानि पश्यति। उक्तञ्च—

यच्छक्यं ग्रसितुं शस्तं ग्रस्तं परिणमेच्च यत्।
हितं च परिणामे यत्तदाद्यं भूतिमिच्छता॥ ७५॥

तत् सर्वथा तदेव भुज्यते यदेव परिणमति। तदहमितोऽपयास्यामि।" शृगाल आह—"भो अधीर! विश्रब्धो भूत्वा भक्षय त्वम्। तस्यागमनं दूरतोऽपि तवाहं

निवेदयिष्यामि।" तथानुष्ठिते द्वीपिना भिन्नां त्वचं विज्ञाय जम्बूकेनाभिहितम्—भो भगिनीसुत! गम्यताम्। एष सिंहः समायाति।"

तच्छ्रुत्वा चित्रको दूरं प्रनष्टः।

व्याख्या—मांसाशनेन = मांसभक्षणेन, यद् ग्रसितुं = भक्षयितुं, शक्यं = योग्यं भवति। यच्च परिणमेत् = रसरूपेण विपरिणमेत्। परिणामे च हितं = हितकारकं भवति, तदाद्यं = भक्षणीयम्॥ ७५॥ अपयास्यामि = पलायनं करिष्यामि। विश्रब्धः = विश्वस्तः, तस्य = सिंहस्य, जम्बूकेन = शृगालेन, चित्रकः = द्वीपी।

हिन्दी—चीते ने कहा—माम! यदि ऐसी बात है, तो मुझे इसका मांस नहीं खाना है; क्योंकि मनुष्य जीवित रहने पर सैकड़ों शुभ अवसरों को देखता है। कहा भी गया है कि—

अपनी भलाई चाहने वाले व्यक्ति को चाहिए कि वह उसी वस्तु को खावे जो खाने योग्य हो, खा लेने के पश्चात् ठीक से पच सके और परिणाम में भी हितकारक हो॥ ७५॥

अतः मैं उसी वस्तु को खाना चाहता हूँ जो वस्तु खाने के बाद पच जाय। यह मांस मुझसे पचने योग्य नहीं है। अतः मैं यहाँ से भाग जाना चाहता हूँ।"

शृगाल ने कहा—"अरे डरपोक! विश्वस्त होकर तुम मांस खाओ। उसके आगमन की सूचना मैं तुम्हें जब वह दूर रहेगा तभी दे दूँगा।"

शृगाल के कथनानुसार वह चीता हाथी के शरीर को काटने लगा शृगाल ने जब यह समझ लिया कि यह हाथी के चमड़े को काट चुका है, तो उसको सम्बोधित करके कहा—"अरे भगिनीसुत! भाग जाओ। वह सिंह आ रहा है।"

शृगाल की बात को सुनकर वह चीता दूर भाग गया।

अथ यावदसौ तद्भेदकृतद्वारेण किञ्चिन्मांसं भक्षयति, तावदतिशयक्रुद्धोऽपरः शृगालः समाययौ। अथ तमात्मतुल्यपराक्रमं दृष्ट्वैनं श्लोकमपठत्—

"उत्तमं प्रणिपातेन शूरं भेदेन योजयेत्।
नीचमल्पप्रदानेन समशक्तिं पराक्रमैः"॥ ७६॥

ततश्च तदभिमुखं कृतप्रयाणः स्वदंष्ट्राभिस्तं विदार्य दिगन्तभाजं कृत्वा स्वयं सुखेन चिरकालं हस्तिमांसं बुभुजे।

व्याख्या—तद्भेदकृतद्वारेण = द्वीपिना विहितेन छिद्रेण, सङ्क्रुद्धः = क्रुद्धः, आत्मतुल्यपराक्रमं = स्वशक्तितुल्यबलं, कृतप्रयाणः = युद्धाय कृतप्रयाणः, विदार्य = भेदयित्वा, दिगन्तभाजं कृत्वा = सर्वासु दिक्षु तन्मांसमस्थीनि च प्रक्षिप्य, चिरकालं यावत्, बुभुजे = चखाद।

हिन्दी—चीते द्वारा बनाये हुए छिद्र के मार्ग से हाथी के पेट में घुसकर अभी वह उसके मांस को खाना प्रारम्भ ही किया था कि कहीं से अत्यन्त क्रुद्ध एक दूसरा शृगाल आ पहुँचा। उसको आत्मतुल्य बलवान् समझकर उसने निम्नलिखित श्लोक को पढ़ा—

"अपने से बलवान् शत्रु को अनुनय तथा आत्मसमर्पण के द्वारा वश में करना चाहिए। अपने से अधिक साहसी तथा वीर को भेदनीति के द्वारा वश में करना चाहिए। नीच तथा क्षुद्र

शत्रु को कुछ देकर वश में करना चाहिए और समान पराक्रम युक्त शत्रु को युद्ध में पछाड़कर वश में कर लेना चाहिए" ॥ ७६ ॥

उपर्युक्त श्लोक पढ़ने के बाद वह उस आगन्तुक शृगाल पर टूट पड़ा और अपने दाँतों से उसको क्षत-विक्षत करके दिशाओं को बलि चढ़ा दिया। पुनः सुखपूर्वक बहुत दिनों तक एकाकी उस गज के मांस को खाता रहा।

एवं त्वमपि तं रिपुं स्वजातीयं युद्धेन परिभूय दिगन्तभाजं कुरु। नो चेत्पश्चाद् बद्धमूलादस्मात्त्वमपि विनाशमवाप्स्यसि। उक्तञ्च यतः—

सम्भाव्यं गोषु सम्पन्नं सम्भाव्यं ब्राह्मणे तपः।
सम्भाव्यं स्त्रीषु चापल्यं सम्भाव्यं जातितो भयम् ॥ ७७ ॥

अन्यच्च—

सुभिक्षाणि विचित्राणि शिथिलाः पौरयोषितः।
एको दोषो विदेशस्य स्वजातिर्यद्विरुध्यते" ॥ ७८ ॥

मकर आह—"कथमेतत्"? वानरोऽब्रवीत्—

व्याख्या—रिपुं=शत्रुं, बद्धमूलात्=स्थैर्यमापन्नत्वात्। सम्पन्नं=धनं, चापल्यं—चाञ्चल्यं चपलत्वमिति यावत्, सम्भाव्यं=वितर्कणीयम् ॥ ७७ ॥ विचित्राणि=विविधानि, पौरयोषितः=नगरस्त्रियः, शिथिलाः=सालस्याः (लापरवाह), भवन्ति, किन्तु स्वजातिः=स्वजातीयो जनः, विरुध्यते, इत्येव दोषो भवति ॥ ७८ ॥

हिन्दी—शृगाल की ही तरह तुम भी अपने जाति के शत्रु को युद्ध में पराजित करके दिशाओं को बलि चढ़ा दो। अन्यथा जब उसकी जड़ जम जायगी तो उसके द्वारा तुम्हीं मार डाले जाओगे। यतः कहा गया है कि—

जैसे गौओं से सम्पत्ति का होना संभाव्य होता है, ब्राह्मणों में तप का होना सम्भाव्य होता है और स्त्रियों में चपलता का होना संभाव्य होता है, उसी प्रकार व्यक्ति के लिये अपने जातिवालों से भय का भी होना संभाव्य होता है ॥ ७७ ॥

अन्य भी—विदेश में पर्याप्त सम्पन्नता है एवं सुभिक्ष है। अत वहाँ जाने से विविध प्रकार की सुविधायें मिल ही जाती हैं। नगर की स्त्रियाँ भी शिथिल हैं। विशेष रोक टोक नहीं करतीं। घरों में घुसने का अवसर भी मिल ही जाया करता है। किन्तु वहाँ एक ही बात की कमी है कि अपनी ही जाति के लोग विरोधी हैं" ॥ ७८ ॥

मगर ने पूछा—"यह कैसे?" वानर ने अग्रिम कथा को कहना आरंभ किया—

[ ११ ]

## ( सारमेयस्य कथा )

अस्ति कस्मिंश्चिदधिष्ठाने चित्राङ्गो नाम सारमेयः। तत्र च चिरकालं दुर्भिक्षं पतितम्। अन्नाभावात्सारमेयादयो निष्कुलतां गन्तुमारब्धाः। अथ चित्राङ्गः क्षुत्क्षाम-

कण्ठस्तद्भयाद् देशान्तरं गतः। तत्र च कस्मिंश्चित्पुरे कस्यचिद् गृहमेधिनो गृहिण्याः प्रमादेन प्रतिदिनं गृहं प्रविश्य विविधान्यन्नानि भक्षयन् परां तृप्तिं गच्छति परं तद्-गृहाद्बहिर्निरगमत्, अन्यैर्मदोद्धतसारमेयैः सर्वदिक्षु परिवृत्य सर्वाङ्गं दंष्ट्राभिर्विदार्यते।

व्याख्या—अधिष्ठानं = नगरं, सारमेयः = कुक्कुरः, निष्कुलतां = वंशहीनतां, क्षुत्क्षाम-कण्ठः = क्षुधया शुष्ककण्ठः, तद्भयात् = नाशभयात्, गृहमेधिनः = गृहस्थस्य, गृहिण्याः = भार्यायाः, प्रमादेन = असावधानतया, मदोद्धतसारमेयैः = मदोत्कटैः कुक्कुरैः, विदार्यते = छिद्यते।

हिन्दी—किसी नगर में चित्राङ्ग नाम का एक कुत्ता रहता था। संयोग से उस नगर में कभी बहुत बड़ा अकाल पड़ गया। अन्न के अभाव में कुत्ते बिल्ली आदि जीव भूख से मरने लगे और धीरे-धीरे उनका वंशक्षय भी होने लगा। भूख से पीड़ित चित्राङ्ग विनाश के भय से किसी अन्यदेश में चला गया। वहाँ जाकर किसी नगर में एक गृहस्थ की स्त्री की अनवधानता के कारण प्रति-दिन गृहस्थ के घर में घुस जाया करता था और विविधप्रकार के भोजन खाकर सन्तुष्ट हो जाया करता था। किन्तु जब वह भोजन खाकर उस गृहस्थ के घर से बाहर निकलने लगता था तो अन्य बलवान् कुत्ते उसको चारों ओर से घेर लिया करते थे और काटकर उसके शरीर को क्षत-विक्षत बना दिया करते थे।

ततस्तेन विचिन्तितम्—"अहो, वरं स्वदेशो यत्र दुर्भिक्षेऽपि सुखेनास्थीयते, न च कोऽपि युद्धं करोति। तदेवं स्वनगरं व्रजामि" इत्यवधार्य स्वस्थानं प्रति जगाम। अथासौ देशान्तरात्समायातः सर्वैरपि स्वजनैः पृष्टः—"भोश्चित्राङ्ग! कथयास्माकं देशान्तर-वार्ताम्। कीदृग्देशः? किं चेष्टितं लोकस्य? क आहारः? कश्च व्यवहारस्तत्र इति।

स आह—"किं कथ्यते विदेशस्य स्वरूपविषये?

सुभिक्षाणि विचित्राणि शिथिलाः पौरयोषितः।
एको दोषो विदेशस्य स्वजातिर्यद्विरुध्यते" ॥ ७९ ॥

व्याख्या—आस्थीयते = आश्रयः क्रियते।

हिन्दी—वहाँ कुत्तों के व्यवहार से दुःखित होकर उसने अपने मन में सोचा कि इससे तो अपना ही देश अच्छा है कि जहाँ दुर्भिक्ष के समय में भी सुख से रहा जा सकता है। कोई भी व्यक्ति व्यर्थ युद्ध नहीं करता। अतः अपने ही नगर लौट चलता हूँ।" उपर्युक्त बातें सोचकर वह अपने नगर में वापस लौट आया। विदेश से लौट आने के बाद उसके सभी सम्बन्धी उससे पूछने लगे—"अरे चित्राङ्ग! हमलोगों को विदेश का समाचार तो सुनाओ। वह कैसा देश है? वहाँ के निवासी कैसे हैं? उनका आहार-व्यवहार कैसा है?"

उत्तर में उसने कहा—"अरे भाई! विदेश के विषय में तो कहना ही क्या है। जो कुछ कहा जाय, थोड़ा ही है। वहाँ सभी प्रकार का सुभिक्ष है। वहाँ के निवासी पर्याप्त सम्पन्न एवं सुखी हैं। नगर की स्त्रियाँ भी पूर्ण अनवधान हैं। वहाँ केवल एक ही बात की कमी है कि अपनी ही जाति के लोग विरोधी हैं और सतत लड़ा करते हैं" ॥ ७९ ॥

सोऽपि मकरस्तदुपदेशं श्रुत्वा कृतमरणनिश्चयो वानरमनुज्ञाप्य स्वाश्रयं गतः।

तत्र च तेन स्वगृहप्रविष्टेनाततायिना सह विग्रहं कृत्वा दृढसत्त्वावष्टम्भाच्च तं व्यापाद्य स्वाश्रयं च लब्ध्वा सुखेन चिरकालमतिष्ठत्। साध्विदमुच्यते—

अकृत्वा पौरुषं या श्रीः किं तयापि सुभोग्यया।
जरद्गवः समश्नाति दैवादुपनतं तृणम्॥ ८०॥

इति महामहोपाध्यायश्रीविष्णुशर्मविरचिते पञ्चतन्त्रे लब्धप्रणाशं
नाम चतुर्थं तन्त्रं समाप्तम्॥

व्याख्या—तदुपदेशं=वानरस्य वचनं, कृतमरणनिश्चयः=कृतनिश्चयः, अनुज्ञाप्य=आपृच्छ्य (तस्याज्ञामादायेति यावत्), स्वाश्रयं=स्वभवनं, आततायिना=दस्युना (आक्रामकेन), विग्रहं=युद्धं, दृढसत्त्वावष्टम्भात्=सुदृढभावेनावस्थितत्वात् (दृढभावावलम्बनात्), तं=शत्रुं, व्यापाद्य=हत्वा, अतिष्ठत्। पौरुषं=पुरुषार्थम् (आत्मोद्योगमिति यावत्), श्रीः=लक्ष्मीः (सम्पत्ति) भवति, तया किमिति भावः। न च तया तादृशं सुखं जनैरनुभूयते यथा पौरुषेणाधिगतयानुभूयते। यतः, जरद्गवः=वृद्धवृषभः, दैवादुपनतं=भाग्याल्लब्धम् (अक्लेशादवाप्तमिति भावः), तृणं समश्नाति=खादति॥ ८०॥

हिन्दी—मकर ने वानर के उपर्युक्त उपदेश (विचार) को सुनने के पश्चात् मरने का निश्चय करके वानर की अनुमति से अपने घर को प्रस्थान किया। वहाँ पहुँचकर वह अपने घर में घुसे हुए आततायी के साथ युद्ध करने में प्रवृत्त हो गया और अपनी दृढ़ता एवं साहसिकता के कारण उसको मारकर उसने अपना घर पुनः प्राप्त कर लिया और सुखपूर्वक वहाँ रहने लगा। यह ठीक ही कहा गया है कि—

विना पुरुषार्थ के अनायास ही प्राप्त होने वाली लक्ष्मी से यदि सुख मिल भी जाता है तो उससे उतनी प्रसन्नता एवं तुष्टि नहीं हो पाती जितनी कि पुरुषार्थ द्वारा प्राप्त की हुई लक्ष्मी से होती है। भाग्य पर भरोसा करने वाला बूढ़ा बैल भी अपने आगे आये हुए तृण को खा कर सन्तोष कर लिया करता है॥ ८०॥

इति श्रीपण्डितवासुदेवात्मजेन श्रीश्यामाचरणपाण्डेयेन हिन्दी-संस्कृत-
टीकाभ्यां विभूषितं लब्धप्रणाशं नाम पञ्चतन्त्रस्य
चतुर्थं तन्त्रं समाप्तम्॥

---

॥ श्रीः ॥

# पञ्चतन्त्रस्य

## अपरीक्षितकारकं नाम

## पञ्चमं तन्त्रम् ।

### ( आमुख- )

### क्षपणक-कथा

अथेदमारभ्यतेऽपरीक्षितकारकं नाम पञ्चमं तन्त्रं, यस्याऽयमादिमः श्लोकः—

कुदृष्टं कुपरिज्ञातं कुश्रुतं कुपरीक्षितम् ।
तन्नरेण न कर्तव्यं नापितेनाऽत्र यत्कृतम् ॥ १ ॥

तद्यथाऽनुश्रूयते—"अस्ति दाक्षिणात्ये जनपदे पाटलिपुत्रं नाम नगरम् । तत्र मणिभद्रो नाम श्रेष्ठी प्रतिवसति स्म । तस्य च धर्मार्थकाममोक्षकर्माणि कुर्वतो विधिवशाद्धनक्षयः सञ्जातः । ततो विभवक्षयादपमानपरम्परया परं विषादं गतः । अथाऽन्यदा रात्रौ सुप्तश्चिन्तितवान्—"अहो, धिगियं दरिद्रता ।"

गङ्गा सुरनदी पातु शिवसांनिध्यकारिणी ।
जिह्मगा शशिलेखेव विश्वं विश्वार्तिहारिणी ॥ १ ॥

अथेति = अथ शब्दः प्रकरणादौ प्रयुक्तोऽत्र मङ्गलार्थकः । अनन्तरवाचकत्वेन हि प्रकरणस्यारम्भं सूचयति । आरभ्यते = प्रारभ्यते ( प्रारम्भ किया जाता है ), अपरीक्षितकारकं नाम = अपरीक्षितकारकं ( न परीक्षितम् = सदसद्बुद्ध्याऽविचारितम्, अपरीक्षितम्, अपरीक्षितस्य कारकः = कर्ता, तमधिकृत्य कृतमित्यर्थः ) (अपरीक्षितकारक नामक), तन्त्रं = प्रकरणं ( प्रकरण को ), यस्य = अपरीक्षितकारकस्य, आदिमः = प्रथमः ।

**अन्वयः**—अत्र नापितेन कुदृष्टं, कुपरिज्ञातं, कुश्रुतं, कुपरीक्षितं यत् कृतं तन्नरेण न कर्तव्यम् ।

**व्याख्या**—अत्र = अस्मिन् प्रकरणे ( इस प्रकरण में ), नापितेन = क्षुरिणा ( 'क्षुरी, मुण्डी, दिवाकीर्तिनापितान्तावसायिनः' इत्यमरः ) ( नाई ने ), कुदृष्टं = विचारबुद्ध्यनालोचितं

( विना सोचे समझे ) कुपरिज्ञातं = न यथावज्ज्ञातं ( विना जाने हुये ), कुश्रुतं = सम्यगनाकर्णितं ( विना ध्यानपूर्वक सुने ), कुपरीक्षितं = न यथावद्विचारितं ( विना ठीक से विचार किये ही ), यत् = यादृश कर्म ( जैसा कार्य ), कृतं = विहितं ( किया ), तत् = तादृशं कर्म ( उस प्रकार का कार्य ), नरेण = जनेनान्येन ( दूसरे व्यक्तियों को ), न कर्तव्यं = नाऽनुष्ठातव्यमिति ( नहीं करना चाहिये )।

तत् = नापितस्य वृत्तम् ( नापित की कथा को ) अनुश्रूयते = आकर्ण्यते ( सुना जाता है ), दाक्षिणात्ये = दक्षिणदिशि स्थिते ( दक्षिण के ), जनपदे = देशे विषये वा ( 'जनपदो देशविषयौ तूपवर्तनम्' इत्यमरः ) ( देश में ), तत्र = पाटलिपुत्रे ( पाटलिपुत्र में ), श्रेष्ठी = श्रीमान् ( श्रेष्ठं = धनादिकमस्त्यस्येति विग्रहः ), प्रतिवसति = निवसति ( निवास करता था )। तस्य = मणिभद्रस्य, धर्मार्थकाममोक्षकर्माणि = धर्मादिचतुर्वर्गकार्याणि ( धर्मश्च, अर्थश्च, कामश्च, मोक्षश्च ते धर्मार्थकाममोक्षाः, तेषां कर्माणि = धर्मार्थकाममोक्षसाधकानि कार्याणि ) ( धर्म, अर्थ, काम तथा मोक्ष को प्रदान करने वाले कार्यों को करते रहने पर भी ) विधिवशात् = भाग्य-विपर्ययात् ( "दैवं, दिष्टं भागधेयं, भाग्यं, स्त्री नियतिर्विधिः'-इत्यमरः ) ( भाग्य दोष से ), धनक्षयः = धननाशः ( धन का विनाश ), विभवक्षयात् = धननाशात् ( धन के नष्ट हो जाने के कारण ), अपमानपरम्परया = बहुविधतिरस्कारेण ( बन्धुबान्धवज्ञातिभिश्च कृतानादरेणेत्यर्थः ) ( निरन्तर के अपमान से ), परं = परमं ( अत्यधिक ), विषादं = दुःखं ( दुःख को ), गतः = प्राप्तः ( प्राप्त हुआ )। अन्यदा = अन्यस्मिन् काले ( किसी दिन ), सुप्तः = प्रसुप्तः सन् ( सोते समय ), चिन्तितवान् = विचारितवान् ( सोचने लगा ), धिगियं दरिद्रता = ईदृशी मे विपन्नावस्था जाता, अतो धिगिति भावः ( इस दरिद्रता को धिक्कार है )।

हिन्दी—( विष्णुशर्मा ने राजकुमारों से कहा )—मैं, पञ्चतन्त्र के अपरीक्षितकारक संज्ञक पञ्चम तन्त्र को प्रारम्भ करता हूँ, जिसका प्रथम श्लोक यह है—

कार्य के परिणाम को विना सोचे, विना उसकी जानकारी प्राप्त किये, उसके विषय में विना आद्योपान्त सुने और विना वास्तविकता की परीक्षा किये किसी कार्य को प्रारम्भ नहीं करना चाहिये, जैसा कि किसी मूर्ख नापित ने किया था ॥ १ ॥

जैसा कि सुना जाता है, दक्षिण के किसी राज्य में पाटलिपुत्र नाम का एक नगर था। उसमें मणिभद्र नाम का एक सेठ रहता था। धर्म, अर्थ, काम तथा मोक्ष के लिए विहित आवश्यक कर्मो को करते हुए भाग्य की प्रतिकूलता से उसका सम्पूर्ण धन नष्ट हो गया था। निर्धनता के कारण होने वाले प्रतिदिन के अपमान से वह बहुत दुःखी रहा करता था। एक दिन रात्रि में सोते समय चिन्ता से खिन्न होकर उसने सोचा—"निर्धनता बहुत बुरी चीज होती है। मेरी इस निर्धनता को धिक्कार है।"

उक्तं च—

शीलं शौचं क्षान्तिर्दाक्षिण्यं मधुरता कुले जन्म।
न विराजन्ति हि सर्वे, वित्तविहीनस्य पुरुषस्य ॥ २ ॥

मानो वा दर्पो वा विज्ञानं विभ्रमः सुबुद्धिर्वा ।
सर्वं प्रणश्यति समं, वित्तविहीनो यदा पुरुषः ॥ ३ ॥
प्रतिदिवसं याति लयं वसन्तवाताहतेव शिशिरश्रीः ।
बुद्धिर्बुद्धिमतामपि कुटुम्बभरचिन्तया सततम् ॥ ४ ॥

अन्वयः—शीलं, शौचं, क्षान्तिः, दाक्षिण्यं, मधुरता, कुले जन्म, सर्वं हि वित्तविहीनस्य पुरुषस्य न विराजन्ति ॥ २ ॥

मानः वा दर्पः, वा विज्ञानं, विभ्रमः सुबुद्धिः वा, यदा पुरुषः वित्तविहीनः ( भवति ) समं सर्वं प्रणश्यति ॥ ३ ॥

बुद्धिमताम् अपि बुद्धिः सततं कुटुम्बभरचिन्तया वसन्तवाताहता शिशिरश्रीः इव प्रतिदिवसं लयं याति ॥ ४ ॥

व्याख्या—शीलं = स्वभावः ( आचारो वा ) ( शील ), शौचं = पवित्रता, क्षान्तिः = क्षमा, दाक्षिण्यं = शिष्टता ( शिष्टव्यवहार ), मधुरता = प्रियभाषित्वं ( प्रिय भाषण ), कुले जन्म = सत्कुलोद्भवः ( उत्तम कुल में जन्म लेना ), सर्वे = ते गुणाः ( सभी गुण ) वित्तविहीनस्य = धनरहितस्य ( निर्धन ), पुरुषस्य = मनुष्यस्य ( व्यक्ति के ), न विराजन्ति = न शोभन्ते ( शोभा नहीं देते हैं ) ॥ २ ॥

मानः = सन्मानः ( सम्मान ), दर्पः = अभिमानः ( घमण्ड ), विज्ञानं = शिल्पज्ञानं ( कलाओं का ज्ञान ), विभ्रमः = विलासः ( रंगरेलियाँ ), सुबुद्धिः = सद्बुद्धिः ( प्रज्ञा ), वित्तविहीनः = धनरहितः ( भवति, तदा ) ( पुरुष के निर्धन होते ही ), समं = धनेन सह ( धन के साथ ही ), प्रणश्यति = नश्यति ( नष्ट हो जाते हैं ) ॥ ३ ॥

बुद्धिमतां = विदुषां ( विद्वानों की भी ), बुद्धिः = मतिः, सततं = निरन्तरम् (निरन्तर ही), कुटुम्बभरचिन्तया = परिवारस्य भरणपोषणचिन्तनेन ( परिवार के भरण पोषण की चिन्ता से ), वसन्तवाताहता = वसन्तकालीनवातेनाहता ( वसन्त ऋतु के वायु से प्रताड़ित ), शिशिरश्रीः = शिशिरर्तुशोभा इव ( शिशिर ऋतु की शोभा की तरह ) प्रतिदिवसं = प्रत्यहं ( प्रतिदिन ), लयं = विनाशं, याति = गच्छति ( क्षीण होती जाती है ) ॥ ४ ॥

हिन्दी—शील, शुचिता, क्षमा, शिष्टता, प्रियभाषिता तथा उत्तम कुल में जन्म लेना, ये सभी गुण निर्धन पुरुषों को शोभा नहीं देते हैं। मनुष्य के निर्धन हो जाने पर इन गुणों के रहने पर भी उसके प्रति कोई आकृष्ट नहीं होता है ॥ २ ॥

सम्मान, दर्प, कलाओं का ज्ञान, आनन्द, रंगरेलियाँ, तथा सुबुद्धि, ये सभी वस्तुएँ पुरुष के निर्धन होते ही उसके धन के साथ चली जाती हैं। निर्धन व्यक्ति इनकी अपेक्षा करते हो उपहास का विषय बना दिया जाता है ॥ ३ ॥

विद्वानों की भी बुद्धि निरन्तर की कौटुम्बिक भरण-पोषण सम्बन्धी चिन्ताओं से उसी प्रकार क्षीणाभ हो जाती है; जैसे निरन्तर वसन्तकालीन वायु के प्रताड़न से शिशिर ऋतु की

शोभा प्रतिदिन क्षीण होती जाती है। कौटुम्बिक चिन्ताओं में उलझा हुआ व्यक्ति अपने ज्ञान का उपयोग नहीं कर पाता है और उसकी बुद्धि दैनिक समस्याओं से क्षीण हो जाती है ॥४॥

नश्यति विपुलमतेरपि बुद्धिः पुरुषस्य मन्दविभवस्य।
घृतलवणतैलतण्डुलवस्त्रेन्धनचिन्तया सततम् ॥ ५ ॥

गगनमिव नष्टतारं, शुष्कमिव सरः, श्मशानमिव रौद्रम्।
प्रियदर्शनमपि रूक्षं, भवति गृहं धनविहीनस्य ॥ ६ ॥

न विभाव्यन्ते लघवो वित्तविहीनाः पुरोऽपि निवसन्तः।
सततं जातविनष्टाः पयसामिव बुद्बुदाः पयसि ॥ ७ ॥

अन्वयः—विपुलमतेरपि मन्दविभवस्य पुरुषस्य बुद्धिः सततं घृत-लवण-तैल-तण्डुल-वस्त्र-इन्धनचिन्तया नश्यति ॥ ५ ॥

धनविहीनस्य गृहं नष्टतारं गगनम् इव, शुष्कं सरः इव, रौद्रं श्मशानम् इव, प्रियदर्शनम् अपि रूक्षं भवति ॥ ६ ॥

वित्तविहीनाः लघवः पुरः निवसन्तोऽपि पयसि सततं जातविनष्टाः पयसां बुद्बुदा इव न विभाव्यन्ते ॥ ७ ॥

व्याख्या—विपुलमतेरपि=विशालबुद्धेरपि (प्रचुर बुद्धिवाले), मन्दविभवस्य=अल्पवित्तस्य (अल्प वित्त के), पुरुषस्य=व्यक्तेः (व्यक्ति की), घृतलवणतैलतण्डुलवस्त्रेन्धनचिन्तया=कुटुम्बभरणोपकरणचिन्तया (घी, तेल, नमक, चावल, वस्त्र, आदि परिवार के भरण योग्य आवश्यक वस्तुओं की चिन्ता से), नश्यति=विनश्यति (नष्ट हो जाती है) ॥५॥

धनविहीनस्य=मन्दविभवस्य (धन रहित व्यक्ति का), गृहं=भवनं (मकान), नष्टतारं=गतनक्षत्रं (नक्षत्र रहित), गगनमिव=गगनमण्डलमिव (आकाश की तरह शून्य), शुष्कं=जलशून्यं (जल रहित), सरः=जलाशयः (तालाब), रौद्रं=भीषणं (भीतिप्रदम्) (भयावह), श्मशानम्=प्रेतभूमिः (श्मशान), प्रियदर्शनं=चारुदर्शनं (देखने में सुन्दर होने पर भी), रूक्षं=श्रीविहीनं (अशोभनीय, उदास) भवति ॥ ६ ॥

वित्तविहीनाः=धनहीनाः (निर्धन व्यक्ति), लघवः=हेयाः, नगण्या इत्यर्थः (निर्धनत्वाल्लघवो जाताः) (नगण्य), पुरः=अग्रे (सामने) निवसन्तोऽपि=तिष्ठन्तोऽपि (रहते हुए भी), पयसि=जले (जल में), जातविनष्टाः=जातमात्रेण नष्टाः (उत्पन्न और विनष्ट होने वाले), पयसां=जलानां, बुद्बुदा इव, न विभाव्यन्ते=न लक्ष्यन्ते (दिखाई नहीं पड़ते हैं) ॥ ७ ॥

हिन्दी—धन के अभाव में प्रचुर बुद्धिवाले व्यक्तियों की भी बुद्धि निरन्तर के घी, नमक, तेल, चावल, वस्त्र तथा इन्धन आदि परिवार के भरण योग्य आवश्यक उपकरणों की चिन्ता से, विनष्ट हो जाती है ॥ ५ ॥

सम्पत्तिहीन व्यक्ति का गृह अत्यन्त सुन्दर होने पर भी (धन के अभाव में) नक्षत्र

रहित आकाश की तरह शून्य, सूखे हुए तालाब की तरह उदास और श्मशान की तरह भयानक लगता है ॥ ६ ॥

धन के अभाव में व्यक्ति इतना तुच्छ हो जाता है कि सामने रहने पर भी जल में निरन्तर उत्पन्न और विनष्ट होने वाले बुद्बुदों की तरह दृष्टि में नहीं आता है। निर्धन व्यक्ति को देखते हुए भी लोग उसकी उपेक्षा कर देते हैं ॥ ७ ॥

सुकुलं कुशलं, सुजनं विहाय, कुलकुशलशीलविकलेऽपि ।
आढ्ये, कल्पतराविव नित्यं रज्यन्ति जननिवहाः ॥ ८ ॥

विफलमिह पूर्वसुकृत, विद्यावन्तोऽपि कुलसमुद्भूताः ।
यस्य यदा विभवः स्यात्तस्य तदा दासतां यान्ति ॥ ९ ॥

लघुरयमाह न लोकः कामं गर्जन्तमपि पतिं पयसाम् ।
सर्वमलज्जाकरमिह, यद्यत्कुर्वन्ति परिपूर्णाः ॥ १० ॥

अन्वयः—जननिवहाः सुकुलं, कुशलं, सुजनं विहाय, कुलकुशलशीलविकलेऽपि आढ्ये कल्पतरौ इव नित्यं रज्यन्ति ॥ ८ ॥

इह, पूर्वसुकृतं विफलं, विद्यावन्तः कुलसमुद्भूता अपि यदा यस्य विभवः स्यात् तदा तस्य दासतां यान्ति ॥ ९ ॥

लोकः कामं गर्जन्तमपि पयसां पतिम् "अयं लघुः" न आह, (यतो हि) इह परिपूर्णाः यद्यत् कुर्वन्ति सर्वम् अलज्जाकरं (भवतीति) ॥ १० ॥

व्याख्या—जननिवहाः = जनसंघाः (जनसमुदाय), सुकुलं = श्रेष्ठ-वंशजं (अच्छे कुल में उत्पन्न), कुशलं = प्रवीणं (चतुर), सुजनं = सज्जनं (सज्जन) को विहाय = परित्यज्य (छोड़कर), कुलकुशलशीलविकलेऽपि = सर्वगुणरहितेऽपि (सभी गुणों से रहित), आढ्ये = धनसंपन्ने (धनी व्यक्ति पर), कल्पतरौ = कल्पवृक्षे (यथा तथा), रज्यन्ति = प्रसीदन्ति (प्रसन्न हो जाते हैं) ॥ ८ ॥

इह = विश्वेऽस्मिन् (इस संसार में), पूर्वसुकृतं = पूर्वोपार्जितं पुण्यं (पूर्वोपार्जित पुण्य), विफलं = निष्फलम् (व्यर्थ हो जाता है) यतो हि—विद्यावन्तः = विद्वांसः (विद्वान्), कुलसमुद्भूताः = सुकुलोद्भवाः (पुरुषा अपि) (उच्चवंश में उत्पन्न होने वाले जन भी), यदा = यस्मिन्काले (जब) यस्य = यस्य पुरुषस्य (जिस व्यक्ति के पास), विभवः = धनगुरु (सम्पत्ति रहती है), तस्य = धनिकस्य पुरुषस्य (धनिक व्यक्ति की), दासताम् = आज्ञाकारितां (दासता) यान्ति = गच्छन्ति (स्वीकुर्वन्ति) (स्वीकार कर लेते हैं) ॥ ९ ॥

लोकः = जनसमुदायः (जनसमूह), कामं = यथेच्छं (निर्भयमित्यर्थः) (मनमाने ढंग से), गर्जन्तं = प्रलपन्तम्, अपि (प्रलाप करने वाले. गर्जते हुए), पयसांपतिं = समुद्रं मेघं वा (सागर या बादल को), अयं लघुः = क्षुद्रोऽयम् इति (यह नीच है), न आह = न कथयति (नहीं कहता है), यतो हि, इह = संसारे (विश्व में) परिपूर्णाः = श्रीमन्त

( सम्पन्न जन ), यद्यत्कुर्वन्ति = यद्यदाचरन्ति ( जो भी कुछ करते हैं ), सर्वं = सम्पूर्णम् ( वह सम्पूर्ण ), अलज्जाकरं = अलज्जावहं ( अलज्जाकर ), भवतीति शेषः ॥ १० ॥

हिन्दी—कुलीनता, प्रवीणता तथा सज्जनता आदि गुणों की अपेक्षा न करके लोग सम्पन्न व्यक्ति को कल्पतरु की भाँति सन्तुष्ट करने का प्रयास करते हैं। ( निर्धन व्यक्ति चाहे जितना भी कुलीन एवं कुशल हो, कोई उसकी परछाई तक लांघना नहीं चाहता है, जब कि अकुलीन होने पर भी धनी व्यक्ति की छाया में रहना सबको पसन्द होता है) ॥ ८ ॥

पूर्वोपार्जित पुण्य भी व्यर्थ हो जाता है और विद्वान् तथा अभिजात कुल में उत्पन्न हुए व्यक्तियों को भी अकुलीन तथा मूर्ख-धनी व्यक्ति की दासता स्वीकार करनी पड़ती है ॥ ९ ॥

स्वच्छन्द प्रलाप करने वाले ( गर्जते हुए ) समुद्र या मेघ को "यह नीच है" ऐसा कोई नहीं कहता है, क्योंकि बड़े लोग जो कार्य करते हैं वह लज्जास्पद नहीं कहा जाता है। सम्पन्न व्यक्ति अनुचित कार्य करने पर भी निन्दनीय नहीं समझा जाता है, न तो अनुचित कार्य करते हुए वह लज्जित ही होता है। किन्तु निर्धन व्यक्ति अच्छा कार्य करने पर भी प्रशंसा का पात्र नहीं समझा जाता है ॥ १० ॥

**एवं संप्रधार्य भूयोऽप्यचिन्तयत्—"तदहमनशनं कृत्वा प्राणानुत्सृजामि। किमनेन नो व्यर्थजीवितव्यसनेन ?" एवं निश्चयं कृत्वा सुप्तः। अथ तस्य स्वप्ने पद्मनिधिः क्षपणकरूपो दर्शनं दत्त्वा प्रोवाच—"भोः श्रेष्ठिन् ! मा त्वं वैराग्यं गच्छ। अहं पद्मनिधिस्तव पूर्वपुरुषोपार्जितः। तदनेनैव रूपेण प्रातस्त्वद्गृहमागमिष्यामि। तत्त्वयाऽहं लगुडप्रहारेण शिरसि ताडनीयः, येन कनकमयो भूत्वाऽक्षयो भवामि।"**

व्याख्या—एवं = पूर्वोक्तक्रमेण ( इस प्रकार से ), संप्रधार्य = विचार्य ( सोच करके ), भूयोऽपि = पुनरपि ( फिर भी ), अचिन्तयत् = चिन्तयामास ( विचार किया ) अनशनं कृत्वा = भोजनं विहाय ( अनशनव्रतमित्यर्थः, न अशनम् अनशनम्, अश् धातोः ल्युट्प्रत्ययः ) (अनशन करके) प्राणान् = जीवनम् (प्राणों का), उत्सृजामि = परित्यजामि (परित्याग कर दूँगा), किमनेन = धनरहितेन ( मानत्यागपुरस्सरेण ) ( निर्धन होकर ) व्यर्थजीवितव्यसनेन = अनर्थकजीवितोद्यमेन ( व्यर्थ जीने की चेष्टा करने से क्या लाभ है ), एवम् = इत्थं ( ऐसा ) निश्चयं कृत्वा = प्राणत्यागं विनिश्चित्य ( प्राण-त्याग का निश्चय करके ) सुप्तः = प्रसुप्तः ( सो गया )। स्वप्ने स्वप्नावस्थायां ( स्वप्न में ), पद्मनिधिः = पद्माख्यो निधिः ( "महापद्मश्च पद्मश्च शङ्खो मकरकच्छपौ। मुकुन्दकुन्दनीलाश्च खर्वश्च निधयो नव") (पद्म नामक निधि ने ), क्षपणकरूपी = जैनभिक्षुरूपी, बौद्धभिक्षुरूपी वा ( जैनभिक्षु के रूप में ), दर्शनं दत्वा = प्रत्यक्षो भूत्वा ( प्रत्यक्ष होकर ), वैराग्यं = जीवनौदासीन्यं ( वैराग्य, जीवन से निराश ), पूर्वपुरुषोपार्जितः = पूर्ववंशजैः सञ्चितः ( पूर्व पुरुषों द्वारा सञ्चित )। अनेनैव रूपेण = क्षपणकरूपेण ( क्षपणक के वेश में ), लगुडप्रहारेण = दण्डप्रहारेण ( लाठी से ), ताडनीयः = हन्तव्यः ( मारना ), येन = प्रहारेण

हिन्दी—यद्यपि मैं कृतघ्न मित्र हूँ, तथापि समयोचित परामर्श देने की कृपा तो मुझपर कर ही दो। कहा भी गया है कि—

जो व्यक्ति केवल उपकारियों के ही प्रति सज्जनता का व्यवहार करते हैं, उनकी सज्जनता से क्या लाभ है ? सज्जन व्यक्ति तो वह है, जो अपने शत्रुओं के प्रति भी सज्जनता का ही व्यवहार करता हो" ॥ ६८ ॥

मकर की बात को सुनकर वानर ने कहा—"भद्र! यदि ऐसी ही बात है, तो वहाँ जाकर उसके साथ युद्ध करो। विद्वानों ने कहा भी है कि—

युद्ध में यदि तुम मारे भी जाओगे तो स्वर्ग की ही प्राप्ति होगी और यदि भाग्य से जीवित बच गये, तो वर तो मिलेगा ही साथ में यश भी मिलेगा। अतः युद्ध करने में दोनों ही स्थिति में उत्तम फलों की प्राप्ति होगी ॥ ६९ ॥

नीतिशास्त्र का भी कथन है कि सबल एवं उत्तम प्रकृति के शत्रुओं के समक्ष मनुष्य को विनम्रतापूर्वक आत्मसमर्पण कर देना चाहिए। शत्रु शूर एवं लड़ाकू हो तो उसके साथ भेदनीति का अवलम्बन करना चाहिए। यदि शत्रु अपने से निर्बल होते हुए भी नीच प्रकृति का हो, तो कुछ दे-लेकर उसके साथ सन्धि कर लेनी चाहिए और समान शक्ति-सम्पन्न शत्रु के साथ युद्ध करके ही उसको शान्त करना चाहिए ॥ ७० ॥

मकर ने पूछा—"यह कैसे ?" वानर ने उत्तर में कहा—

[ १० ]

## ( चतुरकशृगाल-कथा )

आसीत्कस्मिंश्चिद्वनोद्देशे महाचतुरको नाम शृगालः। तेन कदाचिदरण्ये स्वयं मृतो गजः समासादितः। स तस्य समन्तात्परिभ्रमति, परं कठिनां त्वचं भेत्तुं न शक्नोति। अथात्रावसरे इतश्चेतश्च विचरन् कश्चित्सिंहस्तत्रैव प्रदेशे समाययौ। अथ सिंहं समागतं दृष्ट्वा स क्षितितलविन्यस्तमौलिमण्डलः, संयोजितकरयुगलः सविनयमुवाच—"स्वामिन्! त्वदीयोऽहं लागुडिकः स्थितस्त्वदर्थं गजमिमं रक्षामि। तदेनं भक्षयतु स्वामी।"

व्याख्या—अरण्ये=वने, समन्तात्=सर्वासु दिक्षु (चारों ओर), कठिनां=दुर्भेद्यां, क्षितितलविन्यस्तमौलिमण्डलः=विहितप्रणामः (क्षितितले विन्यस्तं मौलिमण्डलं येन सः), संयोजितकरयुगलः=कृताञ्जलिः, लागुडिकः=याष्टीकः।

हिन्दी—किसी वन में महाचतुरक नामक एक शृगाल रहता था। एक दिन वन में घूमते हुए उसने एक गज देखा, जो मर कर जमीन पर पड़ा हुआ था। वह शृगाल उस गज के चारों ओर घूम रहा था किन्तु उसके कठोर चमड़े को काट नहीं पा रहा था। इसी बीच में इधर-उधर घूमता हुआ एक सिंह कहीं से वहाँ आया। सिंह को देखते ही वह दौड़कर उसके

पैरों पर गिर पड़ा और अपने दोनों हाथ जोड़कर विनयपूर्वक बोला—"स्वामिन् ! मैं आपका सिपाही ( लठैत ) हूँ। यहाँ बैठकर मैं आपके लिए इस गज की रक्षा कर रहा हूँ। अतः महाराज इसका भक्षण करें।"

तं प्रणतं दृष्ट्वा सिंहः प्राह—"भो ! नाहमन्येन हतं सत्त्वं कदाचिदपि भक्षयामि। उक्तञ्च—

वनेऽपि सिंहाः मृगमांसभक्ष्याः बुभुक्षिता नैव तृणं चरन्ति।
एवं कुलीना व्यसनाभिभूताः, न नीतिमार्गं परिलङ्घयन्ति ॥ ७१ ॥

तत्तवैव गजोऽयं मया प्रसादीकृतः।"

तच्छ्रुत्वा शृगालः सानन्दमाह—"युक्तमिदं स्वामिनो निजभृत्येषु। उक्तञ्च यतः—

अन्त्यावस्थोऽपि महान् स्वामिगुणान्नो जहाति शुद्धतया।
न श्वेतभावमुज्झति शङ्खः शिखिभुक्तमुक्तोऽपि" ॥ ७२ ॥

व्याख्या—प्रणतं=नतं, सत्त्वं=जीवं, मृगमांसभक्ष्याः=मृगमांसाशिनः, ( मृगमांसमेव भक्ष्यं येषां ते ), बुभुक्षिताः=क्षुधया पीडिताः सन्तोऽपि, तृणं=घासं, न चरन्ति न भक्षयन्ति, व्यसनाभिभूताः=दुःखिताः ( विपद्ग्रस्ताः ), कुलीनाः=आभिजात्याः, नीतिमार्गं=नयमार्गं, नोल्लङ्घयन्ति ॥ ७१ ॥ प्रसादीकृतः सुप्रसन्नेन दत्तः, महान्=श्रेष्ठो जनः, अन्त्यावस्थोऽपि=मृत्युना संगृहीतोऽपि, स्वामिगुणान्=प्रभुगुणान्, न जहाति=न त्यजति। यथा—शिखिभुक्तमुक्तः=अग्निना प्रदग्धोऽपि, शङ्खः=कम्बुः, श्वेतभावं न त्यजतीति भावः ॥ ७२ ॥

हिन्दी—उसको अत्यन्त विनम्र देखकर सिंह ने कहा—"अरे भाई ! मैं तो दूसरे का मारा हुआ जीव कभी खाता ही नहीं हूँ। कहा भी गया है कि—

जैसे वन में निवास करने वाले और मृगों का मांस खाने वाले सिंह बुभुक्षित होने पर भी कभी घास नहीं चरते, उसी प्रकार कुलीन व्यक्ति आपत्तियों में पड़ जाने पर भी कभी नीति मार्ग का उल्लङ्घन नहीं करते ॥ ७१ ॥

अतः इस गज को मैंने पुरस्कार के रूप में तुम्हें दे दिया है। तुम्हीं इसको खा जाओ।" सिंह की बात को सुनकर शृगाल ने प्रसन्न होते हुये कहा—"अपने भृत्यों के प्रति किया गया स्वामी का यह व्यवहार अत्यन्त उचित है। कहा भी गया है कि—

जैसे—शङ्ख अग्नि में जलकर भस्म हो जाने पर भी अपने स्वाभाविक स्वच्छ गुण ( रङ्ग ) का परित्याग नहीं करता है, उसी प्रकार महान् एवं सद्गुणों से युक्त स्वामी विपद्ग्रस्त हो जाने पर भी अपनी स्वाभाविक शुद्धता तथा कुलीनता का परित्याग नहीं करता ॥ ७२ ॥

अथ सिंहे गते कश्चिद् व्याघ्रः समाययौ। तमपि दृष्ट्वासौ व्यचिन्तयत्—"अहो, एकस्तावद् दुरात्मा प्रणिपातेनापवाहितः तत्कथमिदानीमेनमपवाहयिष्यामि ! नूनं शूरोऽयम्। न खलु भेदं विना साध्यो भविष्यति। उक्तञ्च यतः—

न यत्र शक्यते कर्तुं साम दानमथापि वा।
भेदस्तत्र प्रयोक्तव्यो यतः स वशकारकः॥ ७३॥

व्याख्या—व्याघ्रः=द्वीपी, असौ=शृगालः, प्रणिपातेन=विनम्रतयात्मसमर्पणेन, अपवाहितः=दूरीकृतः, शूरः=वीरः (साहसिकः), साध्यः=सानुकूलः (अपवाह्यः)

हिन्दी—सिंह के चले जाने पर वहाँ एक व्याघ्र आ पहुँचा। उसको देखकर शृगाल ने अपने मन में सोचा कि—"एक दुष्ट को तो मैंने किसी तरह से विनय तथा आत्मसमर्पण आदि प्रदर्शित करके यहाँ से हटाया। अब इस द्वितीय दुष्ट को कैसे हटाऊँ? क्योंकि यह अत्यन्त शूर है। भेदनीति का अवलम्बन किये बिना यह साध्य नहीं होगा। कहा भी गया है कि—

जहाँ पर साम तथा दान का प्रयोग करने से कार्य न चलता हो, वहाँ भेद का ही प्रयोग करना चाहिये। क्योंकि ऐसे स्थानों पर भेद ही शत्रु को वश में कर पाता है॥ ७३॥

किञ्च—सर्वगुणसम्पन्नोऽपि बध्यते। उक्तञ्च यतः—

अन्तःस्थेनाविरुद्धेन सुवृत्तेनातिचारुणा।
अन्तर्भिन्नेन सम्प्राप्तं मौक्तिकेनापि बन्धनम्॥ ७४॥

एवं सम्प्रधार्य, तस्याभिमुखो भूत्वा गर्वादुन्नतकन्धरः ससंभ्रममुवाच—"माम! कथमत्र भवान् मृत्युमुखे प्रविष्टः? येन, एष गजः सिंहेन व्यापादितः, स च मामेतद्रक्षणे नियुज्य नद्यां स्नानार्थं गतः। तेन गच्छता मम समादिष्टं—"यदि कश्चिदिह व्याघ्रः समायाति तर्हि त्वया सुगुप्तं ममावेदनीयं, येन वनमिदं मया निर्व्याघ्रं कर्तव्यम्। यतः पूर्वं व्याघ्रेणैकेन मया व्यापादितो गजः शून्ये भक्षयित्वोच्छिष्टतां नीतः, तद्दिनादारभ्य व्याघ्रान् प्रति प्रकुपितोऽस्मि।"

व्याख्या—अन्तःस्थेन=अभ्यन्तरस्थेन (अभेदस्थेन), अविरुद्धेन=सदानुकूलेन (वैररहितेन), सुवृत्तेन=सुचरितेन (सदाचारयुक्तेन), अतिचारुणा=मनोहरेण, किन्तु—अन्तर्भिन्नेन=सच्छिद्रेण (दोषयुक्तेन), मौक्तिकेन बन्धनम्, अवाप्तं=प्राप्तम्। भेदादेव बन्धनं प्राप्नोति॥ ७४॥ सम्प्रधार्य=विचार्य, उन्नतकन्धरः=ईषदुन्नतकन्धरः ("शिरोधिः कन्धरा ग्रीवे"त्यमरः=गर्दन), ससंभ्रमं=भयभीतः सन्, समादिष्टम्=आज्ञापितं, शून्ये=एकान्ते।

हिन्दी—किञ्च—सर्वगुणसम्पन्न होने पर भी मनुष्य भेदनीति द्वारा बन्धन में पड़ ही जाता है। कहा भी गया है कि—

जैसे—अत्यन्त अभेद्य, सुवृत्त एवं मनोहर होने पर भी मध्य में छिद्र रहने के कारण ही मोती को गूँथ दिया जाता है, उसी प्रकार सर्वगुणसम्पन्न, अन्तरङ्ग, वैररहित, सदाचारी तथा सुन्दर होने पर भी मनुष्य भेद के कारण बन्धन में पड़ जाता है"॥ ७४॥

उपर्युक्त बातों का विचार करके वह शृगाल उस व्याघ्र के सामने जाकर खड़ा हो गया और अपनी गर्दन को कुछ उठा कर भय प्रदर्शित करते हुये बोला—"मामा! आप यहाँ मृत्यु के मुख में कैसे चले आये? जिस सिंह ने इस गज को मारा है वह इसकी रक्षा में मुझे नियुक्त

करके नदी में स्नान करने के लिये गया हुआ है। जाते समय उसने मुझे यह आदेश दिया है कि यदि कोई व्याघ्र आ जाता है तो तुम गुप्त रूप से मुझे सूचित कर देना। मैं आकर इस वन को ही व्याघ्ररहित बना डालूँगा। क्योंकि इससे पूर्व भी एक बार मेरे द्वारा मारे हुये गज को एक व्याघ्रने एकान्त पा कर उच्छिष्ट बना दिया था। उसी दिन से मैं व्याघ्रों पर कुपित रहा करता हूँ।"

तच्छ्रुत्वा व्याघ्रः सन्त्रस्तस्तमाह—"भो भागिनेय! देहि मे प्राणदक्षिणाम्। त्वया तस्यात्र चिरायापि कापि वार्ता नाख्येया।" एवमभिधायसत्वरं पलायाञ्चक्रे।

अथ गते व्याघ्रे तत्र कश्चिद् द्वीपी समायातः। तमपि दृष्ट्वासौ व्यचिन्तयत्—"दृढदंष्ट्रोऽयं चित्रकः। तदस्य पार्श्वादस्य गजस्य यथा चर्मच्छेदो भवति, तथा करोमि।" एवं निश्चित्य तमप्युवाच—"भो भगिनीसुत! किमिति चिराद् दृष्टोऽसि! बुभुक्षित इव लक्ष्यसे? तदतिथिरसि मे। तदेष गजः सिंहेन हतस्तिष्ठति। अहञ्चास्य तदादिष्टो रक्षपालः। परं तथापि यावत्सिंहो न समायाति, तावदस्य गजस्य मांसं भक्षयित्वा तृप्तिं कृत्वा द्रुततरं व्रज।"

व्याख्या—सन्त्रस्तः = भयभीतः, सत्वरं = शीघ्रं, पलायाञ्चक्रे = पलायनमकरोत्। द्वीपी = चित्रकः (चीता), दृढदंष्ट्रः = सुदृढतीक्ष्णदन्तः, तदादिष्टः = सिंहेन नियुक्तः।

हिन्दी—शृगाल की पूर्वोक्त बात सुनकर व्याघ्र ने भय से कांपते हुये कहा—"अरे भागिनेय! मुझे मेरे प्राणों की भिक्षा दे दो। उस सिंह के विलम्ब से आने पर भी उसके समक्ष मेरी कोई चर्चा न करना।" यह कह कर वह वहाँ से तत्काल भाग गया।

व्याघ्र के चले जाने पर एक चीता वहाँ आया। उसको भी देखकर शृगाल ने अपने मन में सोचा कि इस चीते का दाँत खूब मजबूत है। अतः ऐसा उपाय करता हूँ कि जिससे यह इस गज के कठोर चमड़े को काट डाले।" उक्त प्रकार से निश्चय करने के बाद वह उस चीते से पूछने लगा—"अरे भागिनेय! आज बहुत दिनों के बाद दिखाई पड़े हो, क्या कारण है? कुछ भूखे हुये की तरह से दिखाई पड़ रहे हो। (समय पर उपस्थित होने के कारण) तुम मेरे अतिथि हो। सिंह के द्वारा मारा हुआ यह गज तुम्हारे समक्ष पड़ा है और सिंह के द्वारा नियुक्त मैं ही इसका रक्षक हूँ। अतः उस सिंह के यहाँ आने से पूर्व ही तुम इस गज का मांस खाकर अपनी तृप्ति कर लो और शीघ्र यहाँ से भाग जाओ।"

स आह—"माम! यद्येवं तत्र कार्यं मे मांसाशनेन। यतः जीवन्नरो भद्रशतानि पश्यति। उक्तञ्च—

> यच्छक्यं ग्रसितुं शस्तं ग्रस्तं परिणमेच्च यत्।
> हितं च परिणामे यत्तदाद्यं भूतिमिच्छता॥ ७५॥

तत्सर्वथा तदेव भुज्यते यदेव परिणमति। तदहमितोऽपयास्यामि।" शृगाल आह—"भो अधीर! विश्रब्धो भूत्वा भक्षय त्वम्। तस्यागमनं दूरतोऽपि तवाहं

निवेदयिष्यामि।" तथानुष्ठिते द्वीपिना भिन्नां त्वचं विज्ञाय जम्बूकेनाभिहितम्—भो भगिनीसुत! गम्यताम्। एष सिंहः समायाति।"

तच्छ्रुत्वा चित्रको दूरं प्रनष्टः।

व्याख्या—मांसाशनेन=मांसभक्षणेन, यद् ग्रसितुं=भक्षयितुं, शक्यं=योग्यं भवति। यच्च परिणमेत्=रसरूपेण विपरिणमेत्। परिणामे च हितं=हितकारकं भवति, तदाद्यं=भक्षणीयम्॥ ७५॥ अपयास्यामि=पलायनं करिष्यामि। विश्रब्धः=विश्वस्तः, तस्य=सिंहस्य, जम्बूकेन=शृगालेन, चित्रकः=द्वीपी।

हिन्दी—चीते ने कहा—माम! यदि ऐसी बात है, तो मुझे इसका मांस नहीं खाना है; क्योंकि मनुष्य जीवित रहने पर सैकड़ों शुभ अवसरों को देखता है। कहा भी गया है कि—

अपनी भलाई चाहने वाले व्यक्ति को चाहिए कि वह उसी वस्तु को खावे जो खाने योग्य हो, खा लेने के पश्चात् ठीक से पच सके और परिणाम में भी हितकारक हो॥ ७५॥

अतः मैं उसी वस्तु को खाना चाहता हूँ जो वस्तु खाने के बाद पच जाय। यह मांस मुझसे पचने योग्य नहीं है। अतः मैं यहाँ से भाग जाना चाहता हूँ।"

शृगाल ने कहा—"अरे डरपोक! विश्वस्त होकर तुम मांस खाओ। उसके आगमन की सूचना मैं तुम्हें जब वह दूर रहेगा तभी दे दूँगा।"

शृगाल के कथनानुसार वह चीता हाथी के शरीर को काटने लगा शृगाल ने जब यह समझ लिया कि यह हाथी के चमड़े को काट चुका है, तो उसको सम्बोधित करके कहा—"अरे भगिनीसुत! भाग जाओ। वह सिंह आ रहा है।"

शृगाल की बात को सुनकर वह चीता दूर भाग गया।

**अथ यावदसौ तद्भेदकृतद्वारेण किञ्चिन्मांसं भक्षयति, तावदतिशयक्रुद्धोऽपरः शृगालः समाययौ। अथ तमात्मतुल्यपराक्रमं दृष्ट्वैनं श्लोकमपठत्—**

**"उत्तमं प्रणिपातेन शूरं भेदेन योजयेत्।**
**नीचमल्पप्रदानेन समशक्तिं पराक्रमैः"॥ ७६॥**

**ततश्च तदभिमुखं कृतप्रयाणः स्वदंष्ट्राभिस्तं विदार्य दिगन्तभाजं कृत्वा स्वयं सुखेन चिरकालं हस्तिमांसं बुभुजे।**

व्याख्या—तद्भेदकृतद्वारेण=द्वीपिना विहितेन छिद्रेण, सङ्क्रुद्धः=क्रुद्धः, आत्मतुल्यपराक्रमं=स्वशक्तितुल्यबलं, कृतप्रयाणः=युद्धाय कृतप्रयाणः, विदार्य=भेदयित्वा, दिगन्तभाजं कृत्वा=सर्वासु दिक्षु तन्मांसमस्थीनि च प्रक्षिप्य, चिरकालं यावत्, बुभुजे=चखाद।

हिन्दी—चीते द्वारा बनाये हुए छिद्र के मार्ग से हाथी के पेट में घुसकर अभी वह उसके मांस को खाना प्रारम्भ ही किया था कि कहीं से अत्यन्त क्रुद्ध एक दूसरा शृगाल आ पहुँचा। उसको आत्मतुल्य बलवान् समझकर उसने निम्नलिखित श्लोक को पढ़ा—

"अपने से बलवान् शत्रु को अनुनय तथा आत्मसमर्पण के द्वारा वश में करना चाहिए। अपने से अधिक साहसी तथा वीर को भेदनीति के द्वारा वश में करना चाहिए। नीच तथा क्षुद्र

शत्रु को कुछ देकर वश में करना चाहिए और समान पराक्रम युक्त शत्रु को युद्ध में पछाड़कर वश में कर लेना चाहिए" ॥ ७६ ॥

उपर्युक्त श्लोक पढ़ने के बाद वह उस आगन्तुक श्रृगाल पर टूट पड़ा और अपने दाँतों से उसको क्षत-विक्षत करके दिशाओं को बलि चढ़ा दिया। पुनः सुखपूर्वक बहुत दिनों तक एकाकी उस गज के मांस को खाता रहा।

**एवं त्वमपि तं रिपुं स्वजातीयं युद्धेन परिभूय दिगन्तभाजं कुरु। नो चेत्पश्चाद् बद्धमूलादस्मात्त्वमपि विनाशमवाप्स्यसि। उक्तञ्च यतः—**

**सम्भाव्यं गोषु सम्पन्नं सम्भाव्यं ब्राह्मणे तपः।**
**सम्भाव्यं स्त्रीषु चापल्यं सम्भाव्यं जातितो भयम् ॥ ७७ ॥**

**अन्यच्च—**

**सुभिक्षाणि विचित्राणि शिथिलाः पौरयोषितः।**
**एको दोषो विदेशस्य स्वजातिर्यद्विरुध्यते" ॥ ७८ ॥**

**मकर आह—"कथमेतत्" ? वानरोऽब्रवीत्—**

**व्याख्या**—रिपुं = शत्रुं, बद्धमूलात् = स्थैर्यमापन्नत्वात्। सम्पन्नं = धनं, चापल्यं—चाञ्चल्यं चपलत्वमिति यावत्, सम्भाव्यं = वितर्कणीयम् ॥ ७७ ॥ विचित्राणि = विविधानि, पौरयोषितः = नगरस्त्रियः, शिथिलाः = सालस्याः (लापरवाह), भवन्ति, किन्तु स्वजातिः = स्वजातीयो जनः, विरुध्यते, इत्येव दोषो भवति ॥ ७८ ॥

**हिन्दी**—श्रृगाल की ही तरह तुम भी अपने जाति के शत्रु को युद्ध में पराजित करके दिशाओं को बलि चढ़ा दो। अन्यथा जब उसकी जड़ जम जायगी तो उसके द्वारा तुम्हीं मार डाले जाओगे। यतः कहा गया है कि—

जैसे गौओं से सम्पत्ति का होना संभाव्य होता है, ब्राह्मणों में तप का होना सम्भाव्य होता है और स्त्रियों में चपलता का होना संभाव्य होता है, उसी प्रकार व्यक्ति के लिये अपने जातिवालों से भय का भी होना संभाव्य होता है ॥ ७७ ॥

अन्य भी—विदेश में पर्याप्त सम्पन्नता है एवं सुभिक्ष है। अत वहाँ जाने से विविध प्रकार की सुविधायें मिल ही जाती हैं। नगर की स्त्रियाँ भी शिथिल हैं। विशेष रोक टोक नहीं करतीं। घरों में घुसने का अवसर भी मिल ही जाया करता है। किन्तु वहाँ एक ही बात की कमी है कि अपनी ही जाति के लोग विरोधी हैं" ॥ ७८ ॥

मगर ने पूछा—"यह कैसे ?" वानर ने अग्रिम कथा को कहना आरंभ किया—

[ ११ ]

## ( सारमेयस्य कथा )

**अस्ति कस्मिंश्चिदधिष्ठाने चित्राङ्गो नाम सारमेयः। तत्र च चिरकालं दुर्भिक्षं पतितम्। अन्नाभावात्सारमेयादयो निष्कुलतां गन्तुमारब्धाः। अथ चित्राङ्गः क्षुत्क्षाम-**

कथठस्तद्भयाद् देशान्तरं गतः। तत्र च कस्मिंश्चित्पुरे कस्यचिद् गृहमेधिनो गृहिण्याः प्रमादेन प्रतिदिनं गृहं प्रविश्य विविधान्यन्नानि भक्षयन् परां तृप्तिं गच्छति परं तद्-गृहाद्बहिर्निरगमत्, अन्यैर्मदोद्धतसारमेयैः सर्वदिक्षु परिवृत्य सर्वाङ्गं दंष्ट्राभिर्विदार्यते।

व्याख्या—अधिष्ठाने = नगरे, सारमेयः = कुक्कुरः, निष्कुलतां = वंशहानितां, क्षुत्क्षामकण्ठः = क्षुधया शुष्ककण्ठः, तद्भयात् = नाशभयात्, गृहमेधिनः = गृहस्थस्य, गृहिण्याः = भार्यायाः, प्रमादेन = असावधानतया, मदोद्धतसारमेयैः = मदोत्कटैः कुक्कुरैः, विदार्यते = छिद्यते।

हिन्दी—किसी नगर में चित्राङ्ग नाम का एक कुत्ता रहता था। संयोग से उस नगर में कभी बहुत बड़ा अकाल पड़ गया। अन्न के अभाव में कुत्ते बिल्ली आदि जीव भूख से मरने लगे और धीरे-धीरे उनका वंशक्षय भी होने लगा। भूख से पीड़ित चित्राङ्ग विनाश के भय से किसी अन्यदेश में चला गया। वहाँ जाकर किसी नगर में एक गृहस्थ की स्त्री की अनवधानता के कारण प्रति-दिन गृहस्थ के घर में घुस जाया करता था और विविधप्रकार के भोजन खाकर सन्तुष्ट हो जाया करता था। किन्तु जब वह भोजन खाकर उस गृहस्थ के घर से बाहर निकलने लगता था तो अन्य बलवान् कुत्ते उसको चारों ओर से घेर लिया करते थे और काटकर उसके शरीर को क्षत-विक्षत बना दिया करते थे।

ततस्तेन विचिन्तितम्—"अहो, वरं स्वदेशो यत्र दुर्भिक्षेऽपि सुखेनास्थीयते, न च कोऽपि युद्धं करोति। तदेवं स्वनगरं व्रजामि" इत्यवधार्य स्वस्थानं प्रति जगाम। अथासौ देशान्तरात्समायातः सर्वैरपि स्वजनैः पृष्टः—"भोश्चित्राङ्ग! कथयास्माकं देशान्तर-वार्ताम्। कीदृग्देशः? किं चेष्टितं लोकस्य? क आहारः? कश्च व्यवहारस्तत्र इति।

स आह—"किं कथ्यते विदेशस्य स्वरूपविषये?

सुभिक्षाणि विचित्राणि शिथिलाः पौरयोषितः।
एको दोषो विदेशस्य स्वजातिर्यद्विरुध्यते" ॥ ७९ ॥

व्याख्या—आस्थीयते = आश्रयः क्रियते।

हिन्दी—वहाँ कुत्तों के व्यवहार से दुःखित होकर उसने अपने मन में सोचा कि इससे तो अपना ही देश अच्छा है कि जहाँ दुर्भिक्ष के समय में भी सुख से रहा जा सकता है। कोई भी व्यक्ति व्यर्थ युद्ध नहीं करता। अतः अपने ही नगर लौट चलता हूँ।" उपर्युक्त बातें सोचकर वह अपने नगर में वापस लौट आया। विदेश से लौट आने के बाद उसके सभी सम्बन्धी उससे पूछने लगे—"अरे चित्राङ्ग! हमलोगों को विदेश का समाचार तो सुनाओ। वह कैसा देश है? वहाँ के निवासी कैसे हैं? उनका आहार-व्यवहार कैसा है?"

उत्तर में उसने कहा—"अरे भाई! विदेश के विषय में तो कहना ही क्या है। जो कुछ कहा जाय, थोड़ा ही है। वहाँ सभी प्रकार का सुभिक्ष है। वहाँ के निवासी पर्याप्त सम्पन्न एवं सुखी हैं। नगर की स्त्रियाँ भी पूर्ण अनवधान हैं। वहाँ केवल एक ही बात की कमी है कि अपनी ही जाति के लोग विरोधी हैं और सतत लड़ा करते हैं" ॥ ७९ ॥

सोऽपि मकरस्तदुपदेशं श्रुत्वा कृतमरणनिश्चयो वानरमनुज्ञाप्य स्वाश्रयं गतः।

तत्र च तेन स्वगृहप्रविष्टेनाततायिना सह विग्रहं कृत्वा दृढसत्त्वावष्टम्भाच्च तं व्यापाद्य स्वाश्रयं च लब्ध्वा सुखेन चिरकालमतिष्ठत्। साध्विदमुच्यते—

अकृत्वा पौरुषं या श्रीः किं तयापि सुभोग्यया।
जरद्गवः समश्नाति दैवादुपनतं तृणम्॥ ८०॥

इति महामहोपाध्यायश्रीविष्णुशर्मविरचिते पञ्चतन्त्रे लब्धप्रणाशं नाम चतुर्थं तन्त्रं समाप्तम्॥

व्याख्या—तदुपदेशं = वानरस्य वचनं, कृतमरणनिश्चयः = कृतनिश्चयः, अनुज्ञाप्य = आपृच्छ्य ( तस्याज्ञामादायेति यावत् ), स्वाश्रयं = स्वभवनं, आततायिना = दस्युना ( आक्रामकेन ), विग्रहं = युद्धं, दृढसत्त्वावष्टम्भात् = सुदृढभावेनावस्थितत्वात् ( दृढभावावलम्बनात् ), तं = शत्रुं, व्यापाद्य = हत्वा, अतिष्ठत्। पौरुषं = पुरुषार्थम् ( आत्मोद्योगमिति यावत् ), श्रीः = लक्ष्मीः ( सम्पत्ति ) भवति, तया किमिति भावः। न च तया तादृशं सुखं जनैरनुभूयते यथा पौरुषेणाधिगतयानुभूयते। यतः, जरद्गवः = वृद्धवृषभः, दैवादुपनतं = भाग्याल्लब्धम् ( अक्लेशादवाप्तमिति भावः ), तृणं समश्नाति = खादति॥ ८०॥

हिन्दी—मकर ने वानर के उपर्युक्त उपदेश ( विचार ) को सुनने के पश्चात् मरने का निश्चय करके वानर की अनुमति से अपने घर को प्रस्थान किया। वहाँ पहुँचकर वह अपने घर में घुसे हुए आततायी के साथ युद्ध करने में प्रवृत्त हो गया और अपनी दृढ़ता एवं साहसिकता के कारण उसको मारकर उसने अपना घर पुनः प्राप्त कर लिया और सुखपूर्वक वहाँ रहने लगा। यह ठीक ही कहा गया है कि—

विना पुरुषार्थ के अनायास ही प्राप्त होने वाली लक्ष्मी से यदि सुख मिल भी जाता है तो उससे उतनी प्रसन्नता एवं तुष्टि नहीं हो पाती जितनी कि पुरुषार्थ द्वारा प्राप्त की हुई लक्ष्मी से होती है। भाग्य पर भरोसा करने वाला बूढ़ा बैल भी अपने आगे आये हुए तृण को खा कर सन्तोष कर लिया करता है॥ ८०॥

इति श्रीपण्डितवासुदेवात्मजेन श्रीश्यामाचरणपाण्डेयेन हिन्दी-संस्कृत-टीकाभ्यां विभूषितं लब्धप्रणाशं नाम पञ्चतन्त्रस्य चतुर्थं तन्त्रं समाप्तम्॥

---

॥ श्रीः ॥

# पञ्चतन्त्रस्य

## अपरीक्षितकारकं नाम

## पञ्चमं तन्त्रम् ।

### ( आमुख- )

### क्षपणक-कथा

अथेदमारभ्यतेऽपरीक्षितकारकं नाम पञ्चमं तन्त्रं, यस्याऽयमादिमः श्लोकः—

कुदृष्टं कुपरिज्ञातं कुश्रुतं कुपरीक्षितम् ।
तन्नरेण न कर्तव्यं नापितेनाऽत्र यत्कृतम् ॥ १ ॥

तद्यथाऽनुश्रूयते—"अस्ति दाक्षिणात्ये जनपदे पाटलिपुत्रं नाम नगरम् । तत्र मणिभद्रो नाम श्रेष्ठी प्रतिवसति स्म । तस्य च धर्मार्थकाममोक्षकर्माणि कुर्वतो विधिवशाद्धनक्षयः सञ्जातः । ततो विभवक्षयादपमानपरम्परया परं विषादं गतः । अथाऽन्यदा रात्रौ सुप्तश्चिन्तितवान्—"अहो, धिगियं दरिद्रता ।"

गङ्गा सुरनदी पातु शिवसांनिध्यकारिणी ।
जिह्मगा शशिलेखेव विश्वं विश्वार्तिहारिणी ॥ १ ॥

अथेति = अथ शब्दः प्रकरणादौ प्रयुक्तोऽत्र मङ्गलार्थकः । अनन्तरवाचकत्वेन हि प्रकरणस्यारम्भं सूचयति । आरभ्यते = प्रारभ्यते ( प्रारम्भ किया जाता है ), अपरीक्षितकारकं नाम = अपरीक्षितकारकं ( न परीक्षितम् = सदसद्बुद्धयाऽविचारितम्, अपरीक्षितम्, अपरीक्षितस्य कारकः = कर्ता, तमधिकृत्य कृतमित्यर्थः ) (अपरीक्षितकारक नामक), तन्त्रं = प्रकरणं ( प्रकरण को ), यस्य = अपरीक्षितकारकस्य, आदिमः = प्रथमः ।

**अन्वयः**—अत्र नापितेन कुदृष्टं, कुपरिज्ञातं, कुश्रुतं, कुपरीक्षितं यत् कृतं तन्नरेण न कर्तव्यम् ।

**व्याख्या**—अत्र = अस्मिन् प्रकरणे ( इस प्रकरण में ), नापितेन = क्षुरिणा ( 'क्षुरी, मुण्डी, दिवाकीर्तिनापितान्तावसायिनः' इत्यमरः ) ( नाई ने ), कुदृष्टं = विचारबुद्ध्यनालोचितं

( बिना सोचे समझे ) कुपरिज्ञातं = न यथावज्ज्ञातं ( बिना जाने हुये ), कुश्रुतं = सम्यगनाकर्णितं ( बिना ध्यानपूर्वक सुने ), कुपरीक्षितं = न यथावद्विचारितं ( बिना ठीक से विचार किये ही ), यत् = यादृश कर्म ( जैसा कार्य ), कृतं = विहितं ( किया ), तत् = तादृशं कर्म ( उस प्रकार का कार्य ), नरेण = जनेनान्येन ( दूसरे व्यक्तियों को ), न कर्तव्यं = नाऽनुष्ठातव्यमिति ( नहीं करना चाहिये )।

तत् = नापितस्य वृत्तम् ( नापित की कथा को ) अनुश्रूयते = आकर्ण्यते ( सुना जाता है ), दाक्षिणात्ये = दक्षिणदिशि स्थिते ( दक्षिण के ), जनपदे = देशे विषये वा ( 'जनपदो देशविषयौ तूपवर्तनम्' इत्यमरः ) ( देश में ), तत्र = पाटलिपुत्रे ( पाटलिपुत्र में ), श्रेष्ठी = श्रीमान् ( श्रेष्ठं = धनादिकमस्त्यस्येति विग्रहः ), प्रतिवसति = निवसति ( निवास करता था )। तस्य = मणिभद्रस्य, धर्मार्थकाममोक्षकर्माणि = धर्मादिचतुर्वर्गकार्याणि ( धर्मश्च, अर्थश्च, कामश्च, मोक्षश्च ते धर्मार्थकाममोक्षाः, तेषां कर्माणि = धर्मार्थकाममोक्षसाधकानि कार्याणि ) ( धर्म, अर्थ, काम तथा मोक्ष को प्रदान करने वाले कार्यों को करते रहने पर भी ) विधिवशात् = भाग्य-विपर्ययात् ( "दैवं, दिष्टं भागधेयं, भाग्यं, स्त्री नियतिर्विधिः'-इत्यमरः ) ( भाग्य दोष से ), धनक्षयः = धननाशः ( धन का विनाश ), विभवक्षयात् = धननाशात् ( धन के नष्ट हो जाने के कारण ), अपमानपरम्परया = बहुविधतिरस्कारेण ( बन्धुबान्धवज्ञातिभिश्च कृतानादरेणेत्यर्थः ) ( निरन्तर के अपमान से ), परं = परमं ( अत्यधिक ), विषादं = दुःखं ( दुःख को ), गतः = प्राप्तः ( प्राप्त हुआ )। अन्यदा = अन्यस्मिन् काले ( किसी दिन ), सुप्तः = प्रसुप्तः सन् ( सोते समय ), चिन्तितवान् = विचारितवान् ( सोचने लगा ), धिगियं दरिद्रता = ईदृशी मे विपन्ना-वस्था जाता, अतो धिगिति भावः ( इस दरिद्रता को धिक्कार है )।

हिन्दी—( विष्णुशर्मा ने राजकुमारों से कहा )—मैं, पञ्चतन्त्र के अपरीक्षितकारक सञ्ज्ञक पञ्चम तन्त्र को प्रारम्भ करता हूँ, जिसका प्रथम श्लोक यह है—

कार्य के परिणाम को बिना सोचे, बिना उसकी जानकारी प्राप्त किये, उसके विषय में बिना आद्योपान्त सुने और बिना वास्तविकता की परीक्षा किये किसी कार्य को प्रारम्भ नहीं करना चाहिये, जैसा कि किसी मूर्ख नापित ने किया था ॥ १ ॥

जैसा कि सुना जाता है, दक्षिण के किसी राज्य में पाटलिपुत्र नाम का एक नगर था। उसमें मणिभद्र नाम का एक सेठ रहता था। धर्म, अर्थ, काम तथा मोक्ष के लिए विहित आवश्यक कर्मों को करते हुए भाग्य की प्रतिकूलता से उसका सम्पूर्ण धन नष्ट हो गया था। निर्धनता के कारण होने वाले प्रतिदिन के अपमान से वह बहुत दुःखी रहा करता था। एक दिन रात्रि में सोते समय चिन्ता से खिन्न होकर उसने सोचा—"निर्धनता बहुत बुरी चीज होती है। मेरी इस निर्धनता को धिक्कार है।"

उक्तं च—

शीलं शौचं क्षान्तिर्दाक्षिण्यं मधुरता कुले जन्म।
न विराजन्ति हि सर्वे, वित्तविहीनस्य पुरुषस्य ॥ २ ॥

मानो वा दर्पो वा विज्ञानं विभ्रमः सुबुद्धिर्वा ।
सर्वं प्रणश्यति समं, वित्तविहीनो यदा पुरुषः ॥ ३ ॥
प्रतिदिवसं याति लयं वसन्तवाताहतेव शिशिरश्रीः ।
बुद्धिर्बुद्धिमतामपि कुटुम्बभरचिन्तया सततम् ॥ ४ ॥

**अन्वयः**—शीलं, शौचं, क्षान्तिः, दाक्षिण्यं, मधुरता, कुले जन्म, सर्वे हि वित्तविहीनस्य पुरुषस्य न विराजन्ति ॥ २ ॥

मानः वा दर्पः, वा विज्ञानं, विभ्रमः सुबुद्धिः वा, यदा पुरुषः वित्तविहीनः ( भवति ) समं सर्वं प्रणश्यति ॥ ३ ॥

बुद्धिमताम् अपि बुद्धिः सततं कुटुम्बभरचिन्तया वसन्तवाताहता शिशिरश्रीः इव प्रतिदिवसं लयं याति ॥ ४ ॥

**व्याख्या**—शीलं = स्वभावः ( आचारो वा ) ( शील ), शौचं = पवित्रता, क्षान्तिः = क्षमा, दाक्षिण्यं = शिष्टता ( शिष्टव्यवहार ), मधुरता = प्रियभाषित्वं ( प्रिय भाषण ), कुले जन्म = सत्कुलोद्भवः ( उत्तम कुल में जन्म लेना ), सर्वे = ते गुणाः ( सभी गुण ) वित्तविहीनस्य = धनरहितस्य ( निर्धन ), पुरुषस्य = मनुष्यस्य ( व्यक्ति के ), न विराजन्ति = न शोभन्ते ( शोभा नहीं देते हैं ) ॥ २ ॥

मानः = सन्मानः ( सम्मान ), दर्पः = अभिमानः ( घमण्ड ), विज्ञानं = शिल्पज्ञानं ( कलाओं का ज्ञान ), विभ्रमः = विलासः ( रंगरेलियाँ ), सुबुद्धिः = सद्बुद्धिः ( प्रज्ञा ), वित्तविहीनः = धनरहितः ( भवति, तदा ) ( पुरुष के निर्धन होते ही ), समं = धनेन सह ( धन के साथ ही ), प्रणश्यति = नश्यति ( नष्ट हो जाते हैं ) ॥ ३ ॥

बुद्धिमतां = विदुषां ( विद्वानों की भी ), बुद्धिः = मतिः, सततं = निरन्तरम् (निरन्तर ही), कुटुम्बभरचिन्तया = परिवारस्य भरणपोषणचिन्तनेन ( परिवार के भरण पोषण की चिन्ता से ), वसन्तवाताहता = वसन्तकालीनवातेनाहता ( वसन्त ऋतु के वायु से प्रताडित ), शिशिरश्रीः = शिशिरर्तुशोभा इव ( शिशिर ऋतु की शोभा की तरह ) प्रतिदिवसं = प्रत्यहं ( प्रतिदिन ), लयं = विनाशं, याति = गच्छति ( क्षीण होती जाती है ) ॥ ४ ॥

**हिन्दी**—शील, शुचिता, क्षमा, शिष्टता, प्रियभाषिता तथा उत्तम कुल में जन्म लेना, ये सभी गुण निर्धन पुरुषों को शोभा नहीं देते हैं। मनुष्य के निर्धन हो जाने पर इन गुणों के रहने पर भी उसके प्रति कोई आकृष्ट नहीं होता है ॥ २ ॥

सम्मान, दर्प, कलाओं का ज्ञान, आनन्द, रंगरेलियाँ, तथा सुबुद्धि, ये सभी वस्तुएँ पुरुष के निर्धन होते ही उसके धन के साथ चली जाती हैं। निर्धन व्यक्ति इनकी अपेक्षा करते ही उपहास का विषय बना दिया जाता है ॥ ३ ॥

विद्वानों की भी बुद्धि निरन्तर की कौटुम्बिक भरण-पोषण सम्बन्धी चिन्ताओं से उसी प्रकार क्षीणाभ हो जाती है; जैसे निरन्तर वसन्तकालीन वायु के प्रताड़न से शिशिर ऋतु की

शोभा प्रतिदिन क्षीण होती जाती है। कौटुम्बिक चिन्ताओं में उलझा हुआ व्यक्ति अपने ज्ञान का उपयोग नहीं कर पाता है और उसकी बुद्धि दैनिक समस्याओं से क्षीण हो जाती है ॥४॥

नश्यति विपुलमतेरपि बुद्धिः पुरुषस्य मन्दविभवस्य।
घृतलवणतैलतण्डुलवस्त्रेन्धनचिन्तया सततम् ॥ ५ ॥

गगनमिव नष्टतारं, शुष्कमिव सरः, श्मशानमिव रौद्रम्।
प्रियदर्शनमपि रूक्षं, भवति गृहं धनविहीनस्य ॥ ६ ॥

न विभाव्यन्ते लघवो वित्तविहीनाः पुरोऽपि निवसन्तः।
सततं जातविनष्टाः पयसामिव बुद्बुदाः पयसि ॥ ७ ॥

अन्वयः—विपुलमतेरपि मन्दविभवस्य पुरुषस्य बुद्धिः सततं घृत-लवण-तैल-तण्डुल-वस्त्र-इन्धनचिन्तया नश्यति ॥ ५ ॥

धनविहीनस्य गृहं नष्टतारं गगनम् इव, शुष्कं सरः इव, रौद्रं श्मशानम् इव, प्रियदर्शनम् अपि रूक्षं भवति ॥ ६ ॥

वित्तविहीनाः लघवः पुरः निवसन्तोऽपि पयसि सततं जातविनष्टाः पयसां बुद्बुदा इव न विभाव्यन्ते ॥ ७ ॥

व्याख्या—विपुलमतेरपि=विशालबुद्धेरपि ( प्रचुर बुद्धिवाले ), मन्दविभवस्य=अल्पवित्तस्य ( अल्प वित्त के ), पुरुषस्य=व्यक्तेः ( व्यक्ति की ), घृतलवणतैलतण्डुलवस्त्रेन्धनचिन्तया=कुटुम्बभरणोपकरणचिन्तया ( घी, तेल, नमक, चावल, वस्त्र, आदि परिवार के भरण योग्य आवश्यक वस्तुओं की चिन्ता से ), नश्यति=विनश्यति (नष्ट हो जाती है) ॥५॥

धनविहीनस्य=मन्दविभवस्य ( धन रहित व्यक्ति का ), गृहं=भवनं ( मकान ), नष्टतारं=गतनक्षत्रं ( नक्षत्र रहित ), गगनमिव=गगनमण्डलमिव ( आकाश की तरह शून्य ), शुष्कं=जलशून्यं ( जल रहित ), सरः=जलाशयः ( तालाब ), रौद्रं=भीषणं ( भीतिप्रदम् ) ( भयावह ), श्मशानम्=प्रेतभूमिः ( श्मशान ), प्रियदर्शनं=चारुदर्शनं ( देखने में सुन्दर होने पर भी ), रूक्षं=श्रीविहीनं ( अशोभनीय, उदास ) भवति ॥ ६ ॥

वित्तविहीनाः=धनहीनाः ( निर्धन व्यक्ति ), लघवः=हेयाः, नगण्या इत्यर्थः ( निर्धनत्वाल्लघवो जाताः ) ( नगण्य ), पुरः=अग्रे ( सामने ) निवसन्तोऽपि=तिष्ठन्तोऽपि ( रहते हुए भी ), पयसि=जले ( जल में ), जातविनष्टाः=जातमात्रेण नष्टाः ( उत्पन्न और विनष्ट होने वाले ), पयसां=जलानां, बुद्बुदा इव, न विभाव्यन्ते=न लक्ष्यन्ते ( दिखाई नहीं पड़ते हैं ) ॥ ७ ॥

हिन्दी—धन के अभाव में प्रचुर बुद्धिवाले व्यक्तियों की भी बुद्धि निरन्तर के घी, नमक, तेल, चावल, वस्त्र तथा इन्धन आदि परिवार के भरण योग्य आवश्यक उपकरणों की चिन्ता से, विनष्ट हो जाती है ॥ ५ ॥

सम्पत्तिहीन व्यक्ति का गृह अत्यन्त सुन्दर होने पर भी ( धन के अभाव में ) नक्षत्र-

रहित आकाश की तरह शून्य, सूखे हुए तालाव की तरह उदास और श्मशान की तरह भयानक लगता है ॥ ६ ॥

धन के अभाव में व्यक्ति इतना तुच्छ हो जाता है कि सामने रहने पर भी जल में निरन्तर उत्पन्न और विनष्ट होने वाले बुद्बुदों की तरह दृष्टि में नहीं आता है। निर्धन व्यक्ति को देखते हुए भी लोग उसकी उपेक्षा कर देते हैं ॥ ७ ॥

सुकुलं कुशलं, सुजनं विहाय, कुलकुशलशीलविकलेऽपि।
आढ्ये, कल्पतराविव नित्यं रज्यन्ति जननिवहाः ॥ ८ ॥

विफलमिह पूर्वसुकृत, विद्यावन्तोऽपि कुलसमुद्भूताः।
यस्य यदा विभवः स्यात्तस्य तदा दासतां यान्ति ॥ ९ ॥

लघुरयमाह न लोकः कामं गर्जन्तमपि पतिं पयसाम्।
सर्वमलज्जाकरमिह, यद्यत्कुर्वन्ति परिपूर्णाः ॥ १० ॥

अन्वयः—जननिवहाः सुकुलं, कुशलं, सुजनं विहाय, कुलकुशलशीलविकलेऽपि आढ्ये कल्पतरौ इव नित्यं रज्यन्ति ॥ ८ ॥

इह, पूर्वसुकृतं विफलं, विद्यावन्तः कुलसमुद्भूता अपि यदा यस्य विभवः स्यात् तदा तस्य दासतां यान्ति ॥ ९ ॥

लोकः कामं गर्जन्तमपि पयसां पतिम् "अयं लघुः" न आह, (यतो हि) इह परिपूर्णाः यद्यत् कुर्वन्ति सर्वम् अलज्जाकरं (भवतीति) ॥ १० ॥

व्याख्या—जननिवहाः = जनसंघाः (जनसमुदाय), सुकुलं = श्रेष्ठ-वंशजं (अच्छे कुल में उत्पन्न), कुशलं = प्रवीणं (चतुर), सुजनं = सज्जनं (सज्जन) को विहाय = परित्यज्य (छोड़कर), कुलकुशलशीलविकलेऽपि = सर्वगुणरहितेऽपि (सभी गुणों से रहित), आढ्ये = धनसंपन्ने (धनी व्यक्ति पर), कल्पतरौ = कल्पवृक्षे (यथा तथा), रज्यन्ति = प्रसीदन्ति (प्रसन्न हो जाते हैं) ॥ ८ ॥

इह = विश्वेऽस्मिन् (इस संसार में), पूर्वसुकृतं = पूर्वोपार्जितं पुण्यं (पूर्वोपार्जित पुण्य), विफलं = निष्फलम् (व्यर्थ हो जाता है) यतो हि—विद्यावन्तः = विद्वांसः (विद्वान्), कुलसमुद्भूताः = सुकुलोद्भवाः (पुरुषा अपि) (उच्चवंश में उत्पन्न होने वाले जन भी), यदा = यस्मिन्काले (जब) यस्य = यस्य पुरुषस्य (जिस व्यक्ति के पास), विभवः = धनगुं (सम्पत्ति रहती है), तस्य = धनिकस्य पुरुषस्य (धनिक व्यक्ति की), दासताम् = आज्ञाकारितां (दासता) यान्ति = गच्छन्ति (स्वीकुर्वन्ति) (स्वीकार कर लेते हैं) ॥ ९ ॥

लोकः = जनसमुदायः (जनसमूह), कामं = यथेच्छं (निर्भयमित्यर्थः) (मनमाने ढंग से), गर्जन्तं = प्रलपन्तम्, अपि (प्रलाप करने वाले. गर्जते हुए), पयसांपतिं = समुद्रं मेघं वा (सागर या बादल को), अयं लघुः = क्षुद्रोऽयम् इति (यह नीच है), न आह = न कथयति (नहीं कहता है), यतो हि, इह = संसारे (विश्व में), परिपूर्णाः = श्रीमन्त

( सम्पन्न जन ), यद्यत्कुर्वन्ति = यद्यदाचरन्ति ( जो भी कुछ करते हैं ), सर्वं = सम्पूर्णम् ( वह सम्पूर्ण ), अलज्जाकरं = अलज्जावहं ( अलज्जाकर ), भवतीति शेषः ॥ १० ॥

हिन्दी—कुलीनता, प्रवीणता तथा सज्जनता आदि गुणों की अपेक्षा न करके लोग सम्पन्न व्यक्ति को कल्पतरु की भाँति सन्तुष्ट करने का प्रयास करते हैं। ( निर्धन व्यक्ति चाहे जितना भी कुलीन एवं कुशल हो, कोई उसकी परछाईं तक लांघना नहीं चाहता है, जब कि अकुलीन होने पर भी धनी व्यक्ति की छाया में रहना सबको पसन्द होता है) ॥ ८ ॥

पूर्वोपार्जित पुण्य भी व्यर्थ हो जाता है और विद्वान् तथा अभिजात कुल में उत्पन्न हुए व्यक्तियों को भी अकुलीन तथा मूर्ख-धनी व्यक्ति की दासता स्वीकार करनी पड़ती है ॥ ९ ॥

स्वच्छन्द प्रलाप करने वाले ( गर्जते हुए ) समुद्र या मेघ को "यह नीच है" ऐसा कोई नहीं कहता है, क्योंकि बड़े लोग जो कार्य करते हैं वह लज्जास्पद नहीं कहा जाता है। सम्पन्न व्यक्ति अनुचित कार्य करने पर भी निन्दनीय नहीं समझा जाता है, न तो अनुचित कार्य करते हुए वह लज्जित ही होता है। किन्तु निर्धन व्यक्ति अच्छा कार्य करने पर भी प्रशंसा का पात्र नहीं समझा जाता है ॥ १० ॥

**एवं संप्रधार्य भूयोऽप्यचिन्तयत्—"तदहमनशनं कृत्वा प्राणानुत्सृजामि। किमनेन नो व्यर्थजीवितव्यसनेन ?" एवं निश्चयं कृत्वा सुप्तः। अथ तस्य स्वप्ने पद्मनिधिः क्षपणकरूपो दर्शनं दत्त्वा प्रोवाच—"भोः श्रेष्ठिन् ! मा त्वं वैराग्यं गच्छ। अहं पद्मनिधिस्तव पूर्वपुरुषोपार्जितः। तदनेनैव रूपेण प्रातस्त्वद्गृहमागमिष्यामि। तत्त्वयाऽहं लगुडप्रहारेण शिरसि ताडनीयः, येन कनकमयो भूत्वाऽक्षयो भवामि।"**

व्याख्या—एवं = पूर्वोक्तक्रमेण ( इस प्रकार से ), संप्रधार्य = विचार्य ( सोच करके ), भूयोऽपि = पुनरपि ( फिर भी ), अचिन्तयत् = चिन्तयामास ( विचार किया ) अनशनं कृत्वा = भोजनं विहाय ( अनशनव्रतमित्यर्थः, न अशनम् अनशनम्, अश् धातोः ल्युट्प्रत्ययः ) (अनशन करके) प्राणान् = जीवनम् (प्राणों का), उत्सृजामि = परित्यजामि (परित्याग कर दूँगा), किमनेन = धनरहितेन ( मानत्यागपुरस्सरेण ) ( निर्धन होकर ) व्यर्थजीवितव्यसनेन = अनर्थकजीवितोद्यमेन ( व्यर्थ जीने की चेष्टा करने से क्या लाभ है ), एवम् = इत्थं ( ऐसा ) निश्चयं कृत्वा = प्राणत्यागं विनिश्चित्य ( प्राण-त्याग का निश्चय करके ) सुप्तः = प्रसुप्तः ( सो गया )। स्वप्ने स्वप्नावस्थायां ( स्वप्न में ), पद्मनिधिः = पद्माख्यो निधिः ( "महापद्मश्च पद्मश्च शङ्खो मकरकच्छपौ। मुकुन्दकुन्दनीलाश्च खर्वश्च निधयो नव") (पद्म नामक निधि ने ), क्षपणकरूपी = जैनभिक्षुरूपी, बौद्धभिक्षुरूपी वा ( जैनभिक्षु के रूप में ), दर्शनं दत्वा = प्रत्यक्षो भूत्वा ( प्रत्यक्ष होकर ), वैराग्यं = जीवनौदासीन्यं ( वैराग्य, जीवन से निराश ), पूर्वपुरुषोपार्जितः = पूर्ववंशजैः सञ्चितः ( पूर्व पुरुषों द्वारा सञ्चित )। अनेनैव रूपेण = क्षपणकरूपेण ( क्षपणक के वेश में ), लगुडप्रहारेण = दण्डप्रहारेण ( लाठी से ), ताडनीयः = हन्तव्यः ( मारना ), येन = प्रहारेण

( जिससे ), कनकमयः = सुवर्णमयः ( सोने का होकर ), अक्षयः = अनश्वरः ( चिरस्थायी ), भवामि = भविष्यामि ( हो जाऊँगा )।

हिन्दी—पूर्वोक्त बातों का विचार करके उसने पुनः सोचा—"मैं अनशन करके प्राण त्याग दूँगा। इस निर्धनता में जीने की व्यर्थ दुराशा करने से क्या लाभ है?" यह निश्चय करके वह सो गया।

स्वप्न में क्षपणक वेशधारी पद्मनिधि ने प्रत्यक्ष होकर कहा—"श्रेष्ठिन्! तुम निराश क्यों होते हो, वैराग्य ग्रहण करना ठीक नहीं है। तुम वैराग्य ग्रहण न करो। मैं तुम्हारे पूर्वजों द्वारा उपार्जित पद्म नामक निधि हूँ। कल प्रातःकाल इसी रूप में मैं तुम्हारे घर आऊँगा। तुम मेरे शिर पर लाठी से प्रहार करना। तुम्हारे प्रहार से मैं स्वर्णमय होकर तुम्हारे लिए अक्षय निधि बन जाऊँगा।"

**अथ प्रातः प्रबुद्धः सन् स्वप्नं स्मरंश्चिन्ताचक्रमारूढस्तिष्ठति—"अहो, सत्योऽयं स्वप्नः किं वा असत्यो भविष्यति, न ज्ञायते। अथवा नूनं मिथ्याऽनेन भाव्यम्। यतोऽहमहर्निशं केवलं वित्तमेव चिन्तयामि। उक्तं च—**

**व्याधितेन सशोकेन चिन्ताग्रस्तेन जन्तुना।**
**कामार्तेनाऽथ मत्तेन दृष्टः स्वप्नो निरर्थकः॥ ११॥**

व्याख्या—अथ = स्वप्नदर्शनानन्तरं ( स्वप्न को देखने के पश्चात् ), प्रातः प्रबुद्धः सन् = प्रातःकाले जागृतः सन् (प्रातः समुत्थाय) (प्रातः काल उठकर) स्वप्नं स्मरन् = स्वप्नं ध्यायन् ( स्वप्न को स्मरण करते हुए ), चिन्ताचक्रमारूढः ( विचारों में खोया हुआ ), मिथ्याऽनेन भाव्यम् = असत्येनानेन भवितव्यम् ( यह स्वप्न असत्य ही होगा )। यतः = यस्मात्कारणात्, अहर्निशम् = अहोरात्रम् ( रातदिन ), वित्तमेव = धनमेव ( धन की ही ), चिन्तयामि = अनुशोचामि ( चिन्ता किया करता हूँ )।

अन्वयः—व्याधितेन, सशोकेन, चिन्ताग्रस्तेन, कामार्तेन, अथ मत्तेन जन्तुना दृष्टः स्वप्नः निरर्थकः ( भवति )।

व्याख्या—व्याधितेन = रोगिणा ( रोगी ), सशोकेन = शोकग्रस्तेन ( शोकाकुल ), चिन्ताग्रस्तेन = विचारमग्नेन (सतत चिन्तित) अथ = अपिच, कामार्तेन = विषयासक्तेन (कामी), मत्तेन = प्रमत्तेन ( उन्मादग्रस्त ) जन्तुना = पुरुषेण ( व्यक्ति द्वारा ), दृष्टः = अवलोकितः ( देखा हुआ स्वप्न ), निरर्थकः = निष्फलः ( निष्फल होता है )॥ ११॥

हिन्दी—प्रातःकाल नींद खुलने पर रात में देखे हुए स्वप्न के विषय में वह तर्क-वितर्क करने लगा। विचारों में खोया हुआ वह सोचने लगा—"क्या यह स्वप्न सत्य होगा? नहीं, असत्य भी हो सकता है। कुछ भी कहना कठिन है। अथवा असत्य ही होगा, यह निश्चय पूर्वक कहा जा सकता है। क्योंकि रात-दिन मैं धन की ही चिन्ता किया करता हूँ। कहा भी गया है कि—

रोगी, शोकाकुल, चिन्ताग्रस्त कामातुर तथा प्रमत्त ( उन्मादग्रस्त ) व्यक्ति का देखा हुआ स्वप्न प्रायः मिथ्या ही हुआ करता है" ॥ ११ ॥

एतस्मिन्नन्तरे तस्य भार्यया कश्चिन्नापितः पादप्रक्षालनायाहूतः । अत्रान्तरे च यथानिर्दिष्टः क्षपणकः सहसा प्रादुर्बभूव । अथ स तमालोक्य प्रहृष्टमना यथासन्नकाष्ठदण्डेन तं शिरस्यताडयत् । सोऽपि सुवर्णमयो भूत्वा तत्क्षणाद् भूमौ निपतितः । अथ तं स श्रेष्ठी निभृतं स्वगृहमध्ये कृत्वा नापितं सन्तोष्य प्रोवाच—"तदेतद्धनं, वस्त्राणि च मया दत्तानि गृहाण । भद्र ! पुनः कस्यचिन्नाख्येयोऽयं वृत्तान्तः ।"

व्याख्या—एतस्मिन्नन्तरे = अस्मिन्नेव काले ( इसी बीच में ), तस्य = श्रेष्ठिनः (सेठ की) भार्यया = स्त्रिया ( स्त्री द्वारा ), कश्चिन्नापितः = एको नापितः ( एक नाई ), पादप्रक्षालनाय नखकर्तनरञ्जनादिकार्याय ( नाखून आदि काटने के लिये ), आहूतः = समाहूतः ( बुलाया गया था ) । अत्रान्तरे = एतस्मिन्नेवावसरे ( ठीक इसी अवसर पर ), यथानिर्दिष्टः = स्वप्ने यथाज्ञप्तः ( स्वप्न में जैसा कि क्षपणक ने कहा था ), प्रादुर्बभूव = समागतः ( अन्तरिक्षात्समुत्पन्नः ) ( उपस्थित हुआ ), तमालोक्य = क्षपणकं दृष्ट्वा ( क्षपणक को देखकर ) प्रहृष्टमनाः = प्रसन्नचित्तः ( प्रसन्न चित्त से ), यथासन्नकाष्ठदण्डेन = सन्निकटस्थेन लगुडेन ( पास में रखे हुये दण्डे से ), तं = क्षपणकं ( संन्यासी को ), शिरस्यताडयत् = शिरोभागमुद्दिश्य प्रहारमकरोत् ( शिर पर मारा ), सोऽपि = क्षपणकोऽपि ( वह क्षपणक भी ), तत्क्षणात् = सद्यः (प्रहारकाले) एव ( तत्काल ), भूमौ निपतितः = पृथिव्यां पतितः ( पृथ्वी पर गिर पड़ा ) । तं = क्षपणकं ( उस मृत क्षपणक को ), निभृतं निगूढं ( अत्यन्त गुप्त रूप से ), धनं = वित्तं ( धन को ), गृहाण = गृह्यताम् ( स्वीकार करो ), नाख्येयः = न वक्तव्यः ( न कहना ), वृत्तान्तः = चरितं ( समाचार को ) ।

हिन्दी—वह श्रेष्ठी अभी सोच ही रहा था कि उसकी स्त्री द्वारा नख आदि काटने के लिए समाहूत एक नापित आ पहुँचा । इसी समय स्वप्न में दिये गये निर्देश के अनुसार वह क्षपणक भी प्रकट हुआ । क्षपणक को देखकर सेठ बहुत प्रसन्न हुआ और पास में पड़ी हुई लाठी से उसने क्षपणक के शिर पर मारा । क्षपणक स्वर्णमूर्ति बनकर तत्काल भूमि पर गिर पड़ा । श्रेष्ठी ने गोपनीय ढंग से उस संन्यासी की लाश को अपने मकान के भीतर रखवा दिया । पुनः उस नापित को सन्तुष्ट करते हुए उसने कहा—"मित्र ! इन आभूषणों और वस्त्रों को रख लो । इस वृतान्त को किसी भी व्यक्ति के समक्ष प्रकट न करना ।"

नापितोऽपि स्वगृहं गत्वा व्यचिन्तयत्—"नूनमेते सर्वेऽपि नग्नकाः शिरसि ताडिताः काञ्चनमया भवन्ति । तदहमपि प्रातः प्रभूतानाहूय लगुडैः शिरसि हन्मि, येन प्रभूतं हाटकं मे भवति ।" एवं चिन्तयतो महता कष्टेन निशा व्यतिचक्राम ।

अथ प्रभातेऽभ्युत्थाय बृहल्लगुडमेकं प्रगुणीकृत्य, क्षपणकविहारं गत्वा जिनेन्द्रस्य प्रदक्षिणत्रयं विधाय, जानुभ्यामवनिं गत्वा वक्त्रद्वारन्यस्तोत्तरीयाञ्चलस्तारस्वरेणेमं श्लोकमपठत्—

"जयन्ति ते जिना येषां केवलज्ञानशालिनाम् ।
आजन्मनः स्मरोत्पत्तौ मानसेनोषरायितम् ॥ १२ ॥

अन्यच्च—

सा जिह्वा या जिनं स्तौति तच्चित्तं यज्जिने रतम् ।
तावेव च करौ श्लाघ्यौ यौ तत्पूजाकरौ करौ ॥ १३ ॥

व्याख्या—व्यचिन्तयत् = अचिन्तयत् ( सोचा ), नूनं = निश्चयेन ( निश्चित रूप से ), नग्नकाः = क्षपणकाः ( भिक्षु ), शिरसि दण्डहताः = दण्डेन शिरसि ताडिताः ( शिर पर दण्डे से प्रहार करने पर ), काञ्चनमयाः = स्वर्णमयाः ( सोने के )। प्रभूतान् = प्रचुरान् ( बहुतों को ) प्रभूतं हाटकं = विपुलं सुवर्णं ( अधिक सुवर्ण ), भवति = भविष्यति ( हो जायगा )। महता कष्टेन = अतिकष्टेन ( चिन्तायुक्तेनेत्यर्थः ) ( अत्यन्त कष्ट के साथ किसी प्रकार ) निशा = रात्रिः ( रात ), व्यतिचक्राम = व्यपगता ( व्यतीत हुई ) । प्रभाते = प्रातःकाले ( प्रातः काल ), अभ्युत्थाय = शयनादुत्थाय ( चारपाई से उठकर ), बृहल्लगुडमेकम् = अतिदीर्घमेकम् दण्डं ( खूब बड़ी एक लाठी ), प्रगुणीकृत्य = सज्जीकृत्य ( तैयार करके) क्षपणकविहारं = जैनभिक्षुकाणामुपाश्रयं ( क्षपणकों के मठ में ), गत्वा, जिनेन्द्रस्य = भगवतो जिनस्य ( जिन भगवान् की ), प्रदक्षिणत्रयं विधाय = वारत्रयं प्रदक्षिणां कृत्वा ( तीन बार प्रदक्षिणा करके ), जानुभ्यामवनिं गत्वा = जानुभ्यां भूमिं प्रणम्य ( जानु को मोड़कर प्रणाम किया ), वक्त्रद्वारन्यस्तोत्तरीयाञ्चलः उत्तरीयेण पिहितमुखः ( वक्त्रद्वारे न्यस्तमुत्तरीयस्याञ्चलं येन सः) (उत्तरीय को मुखपर लगाकर) तारस्वरेण = तीव्रस्वरेण ( जोर से ), श्लोकमपठत् ।

अन्वयः—केवलज्ञानशालिनां येषाम् आजन्मनः स्मरोत्पत्तौ मानसेन ऊषरायितं ते जिनाः जयन्ति ॥ १२ ॥

सा जिह्वा या जिनं स्तौति, तच्चित्तं यत् जिने रतं, तौ एव च करौ श्लाघ्यौ यौ करौ तत्पूजाकरौ ( स्तः ) ॥ १३ ॥

व्याख्या—केवलज्ञानशालिनां = ज्ञानपरायणानां ( ज्ञानेन शालन्ते = शोभन्ते ये ते ज्ञानशालिनस्तेषामित्यर्थः ) ( केवल ज्ञान परायण ), येषाम् = जैनक्षपणकानाम् ( जिन जैनक्षपणकों के ) आजन्मनः = जन्मत आरभ्य ( जन्म से ही ), स्मरोत्पत्तौ = कामोत्पत्तौ ( काम की उत्पत्ति के सम्बन्ध में ), मानसेन = चित्तेन ( मानस ने ) ऊषरायितं = ऊष इवाचरितं ( स्यादूषः क्षारमृत्तिका ) ( ऊषर के समान कठोरता का परिचय दिया है ), ते = कामरहिताः ( कामरहित ), जिनाः = जैनसाधवः ( जैन भिक्षुकों की ) जयन्ति ( जय हो ) ॥ १२ ॥

सा जिह्वा = प्रशंसार्हा जिह्वा ( वही जिह्वा प्रशंसनीय है ), जिनं स्तौति = जिनं प्रार्थयंति

( जिन भगवान की प्रार्थना करती है ) तच्चित्तं = तदेव मनः ( वही मन प्रशंसार्ह होता है ), जिने रतं = जिनेऽनुरक्तं भवति ( जिन भगवान् के प्रति अनुरक्त हो ), श्लाघ्यौ = प्रशंसार्हौ, ( प्रशंसनीय ), तत्पूजाकरौ = जिनस्य पूजकौ ( स्तः ) ( जिन के पूजक हों ) ॥ १३ ॥

हिन्दी—नापित ने अपने घर जाकर सोचा—"ये जैन क्षपणक शिर पर लाठी से प्रहार करने पर अवश्य ही स्वर्णमय हो जाते हैं। अतः प्रातःकाल होते ही मैं कई जैन भिक्षुकों को निमन्त्रित करके लाठी से उनके मस्तक पर प्रहार करूँगा, जिससे मेरे पास भी सोने का पर्याप्त सञ्चय हो जायगा।" उक्त विचार में डूबे हुए उसने किसी प्रकार अत्यन्त कष्टपूर्वक रात्रि को व्यतीत किया। दूसरे दिन प्रातःकाल उठते ही एक खूब बड़ी लाठी तैयार करके रख दी और जैन साधुओं के मठ में गया। वहाँ पहुँच कर वह भगवान् जिनकी तीन बार परिक्रमा करने के बाद अत्यन्त विनम्रतापूर्वक घुटनों के बल बैठ गया और अपने उत्तरीय को मुख पर लगा कर तीव्र स्वर से इस श्लोक को पढ़ने लगा—

जिन्होंने जन्म से कामोत्पत्ति के विषय में अपने मन को ऊषर भूमि की तरह बना रखा है, उन ज्ञानपरायण जिनों की जय हो ॥ १२ ॥

मनुष्य की वही जिह्वा स्तुत्य है जो भगवान् जिन की स्तुति करती हो, वही मन भी स्तुत्य है जो भगवान् जिन में सदा अनुरक्त रहता हो और वे ही हाथ प्रशंसनीय कहे जा सकते हैं जो सतत उनकी पूजा में व्यस्त रहते हों ॥ १३ ॥

तथाच—

ध्यानव्याजमुपेत्य चिन्तयसि कामुन्मील्य चक्षुः क्षणं,<br>
पश्यानङ्गशरातुरं जनमिमं त्राताऽपि नो रक्षसि।<br>
मिथ्याकारुणिकोऽसि निर्घृणतरस्त्वत्तः कुतोऽन्यः पुमान्,<br>
सेर्ष्यं मारवधूभिरित्यभिहितो बौद्धो जिनः पातु वः ॥ १४ ॥

एवं संस्तुत्य, ततः प्रधानक्षपणकमासाद्य क्षितिनिहितजानुचरणः "नमोस्तु वन्दे" इत्युच्चार्य, लब्धधर्मवृद्ध्याशीर्वादः सुखमालिकाऽनुग्रहलब्धव्रतादेश उत्तरीयनिबद्धग्रन्थिः सप्रश्रयमिदमाह—"भगवन्! अद्य विहरणक्रिया समस्त-मुनिसमेतेनास्मद्गृहे कर्त्तव्या।"

अन्वयः—ध्यानव्याजमुपेत्य कां चिन्तयसि, क्षणं चक्षुः उन्मील्य अनङ्गशरातुरम् इमं जनं पश्य। त्राता अपि नो रक्षसि, मिथ्या कारुणिकः असि, त्वत्तः निर्घृणतरः अन्यः पुमान् कुतः। मारवधूभिः सेर्ष्यम् इति अभिहितः बौद्धः जिनः वः पातु ॥ १४ ॥

व्याख्या—ध्यानव्याजमुपेत्य = कपटसमाधिं विधाय ( झूठी समाधि का बहाना बनाकर ), काम् = प्रेयसीं ( किस प्रियतमा का ), चिन्तयसि = ध्यायसि ( ध्यान कर रहे हो ), क्षणं = क्षणमात्रं ( एक क्षण के लिये ), चक्षुः = नेत्रम् ( नेत्र को ), उन्मील्य = उद्घाट्य ( खोल-कर ), अनङ्गशरातुरं = कामबाणपीडितम् ( कामदेव के बाणों से आहत ), इमं जनं पुरोवर्तिनं

जनं ( सामने स्थित इस जन की ओर ), पश्य = विलोकय ( देखो ) त्रातांऽपि = रक्षकोऽपि ( रक्षक होकर भी ), नो रक्षसि = रक्षां न करोषि ( रक्षा नहीं करते हो ), मिथ्या = असत्यमेव ( झूठ ही ), कारुणिकोऽसि = दयालुरसि ( दयालु बनते हो ), त्वत्तः = युष्मत् ( तुमसे ), अन्यः = अतिरिक्तः ( अधिक अन्य कोई भी ), निर्घृणतरः = निर्दयः ( निर्दयी ), कुतः = क्वास्ति ( कहाँ मिलेगा )। मारवधूभिः = अप्सरोभिः ( अप्सराओं द्वारा ), सेर्ष्यम् = ईर्ष्यया सहितम् ( ईर्ष्या के साथ ), इत्यभिहितः = इत्थं निगदितः ( इस प्रकार आक्षिप्त ), बौद्धो जिनः = बौद्धभिक्षुः; भगवान् बुद्धो वा ( भगवान् बुद्ध ), वः = युष्मान् ( आप लोगों की ), पातु = रक्षतु ( रक्षा करें ) ॥ १४ ॥

एवं = पूर्वोक्तक्रमेण ( इस प्रकार ), संस्तुत्य = स्तुतिं विधाय ( स्तुति करके ), प्रधानक्षपणकं = भिक्षुप्रमुखम् ( प्रमुख भिक्षु के पास ), आसाद्य = प्राप्य ( जाकर ), क्षितिनिहितजानुचरणः = भूमिगतजानुपादप्रदेशः ( क्षितौ = भूमौ, निहितौ जानुचरणौ येन सः ) घुटना टेक कर ), लब्धधर्मवृद्धयाशीर्वादः = धर्मवृद्धेराशीर्वादमवाप्य ( लब्धः धर्मवृद्धेराशीर्वादो येन सः ) ( धर्मवृद्धि का आशीर्वाद प्राप्त किया ), सुखमालिकाऽनुग्रहलब्धव्रतादेशः = अनुग्रहरूपपुष्पमालिकया प्राप्तव्रतादेशः ( सुखार्थधारिता मालिका सुखमालिका, सुखमालिकाया अनुग्रहः = भिक्षुणा प्रदत्तमालिकारूपानुग्रहस्तेन, लब्धः = प्राप्तः, व्रतादेशो येन सः ) ( भिक्षु द्वारा प्रदत्त अनुग्रहरूपी पुष्पमाला से व्रत का आदेश प्राप्त करके ), उत्तरीयनिबद्धग्रन्थिः = दुकूलाबद्धग्रन्थिः ( दुपट्टे को अपने गले में लपेटकर ), सप्रश्रयं = सानुनयं ( अत्यन्त विनीत भाव से ), विहरणक्रिया = भिक्षाटनम् अशनक्रिया वा ( भोजन ), समस्तमुनिसमेतेन = भिक्षुसमुदायेन सह ( सभी भिक्षुओं के साथ ), अस्मद्गृहे = मम गृहे ( मेरे घर ), कर्तव्या = विधातव्या ( किया जाना चाहिये )।

**हिन्दी**—समाधि का बहाना बनाकर आप किस सुन्दरी का ध्यान कर रहे हैं; क्षणमात्र के लिए नेत्रों को खोलकर कामदेव के बाणों से आहत इस जन की ओर तो देखिए। आश्चर्य है, रक्षक होकर भी आप रक्षा नहीं करते हैं। कैसे दयालु हैं आप ? आपसे बढ़कर निर्दयी कोई भी दूसरा नहीं होगा। इस प्रकार, ईर्ष्यायुक्त होकर देवाङ्गनाओं द्वारा आक्षिप्त भगवान् बुद्ध आपकी रक्षा करें ॥ १४ ॥

इस प्रकार, स्तुति करने के पश्चात् वह नापित प्रमुख भिक्षु के पास गया और घुटना टेककर बैठ गया। पुनः अत्यन्त विनीत भाव से उसने कहा—"आपको नमस्कार है, मैं आपकी वन्दना करता हूँ।"

प्रमुख भिक्षु ने धर्म-वृद्धि का आशीर्वाद देने के पश्चात् अपने गले में धारण की हुई पुष्पमाला को निकालकर उसको प्रदान करते हुए व्रत, उपवास आदि की शिक्षा दी।

आशीर्वाद-प्राप्ति के पश्चात् उसने अपने दुपट्टे को गले में लपेटते हुए नम्रतापूर्वक यह निवेदन किया—"भगवन्! समस्त भिक्षुओं के साथ आज की अशनक्रिया मेरे घर सम्पन्न होनी चाहिए।"

स आह—"भोः श्रावक ! धर्मज्ञोऽपि किमेवं वदसि, किन्त्वयं ब्राह्मणसमानाः यत आमन्त्रणं करोषि ? वयं सदैव तत्कालपरिचर्यया भ्रमन्तो भक्तिभाजं श्रावकमवलोक्य तस्य गृहं गच्छामः । तेन कृच्छ्रादभ्यर्थितास्तद्गृहे प्राणधारणमात्रामशनक्रियां कुर्मः । तद्गम्यताम्, नैवं भूयोऽपि वाच्यम् ।'

तच्छ्रुत्वा नापित आह—"भगवन् ! वेद्म्यहं युष्मद्धर्मम् । परं भवतो बहुश्रावका आह्वयन्ति । साम्प्रतं पुनः पुस्तकाच्छादनयोग्यानि कर्पटानि बहुमूल्यानि प्रगुणीकृतानि । तथा पुस्तकानां लेखनार्थं लेखकानां च वित्तं सञ्चितमास्ते । तत्सर्वथा कालोचितं कार्यम् ।"

व्याख्या—भोः श्रावक ! = भो जिनानुरागिन् ! ( जैन धर्म में विश्वास रखने वाले भक्त ), धर्मज्ञोऽपि = धर्मविदपि ( धर्म को जानते हुए भी ), किमेवं वदसि = कथमेतादृशं कथयसि ( क्यों ऐसी बातें करते हो ), ब्राह्मणसमानाः = विप्रसदृशाः ( ब्राह्मणों के समान भिक्षुक हैं ), यतः = यस्माद्धि ( जिससे ), आमन्त्रणं = निमन्त्रणं ( निमन्त्रण ), तत्कालपरिचर्यया = भोजनकालोचितविहारेण ( भोजन का समय हो जाने पर ), भक्तिभाजं = श्रद्धावन्तं ( श्रद्धालु ), श्रावकं = जैनगृहस्थं ( जैन गृहस्थ को ), अवलोक्य = विलोक्य ( देखकर ), कृच्छ्रादभ्यर्थिताः = बहुशः प्रार्थिताः ( उसके बहुत आग्रह करने पर ), प्राणधारणमात्रां = प्राणयात्रापरिमिताम् ( जीवन-निर्वाह के लिए अपेक्षित ) अशनक्रियां = भोजनक्रियां (भोजन), गम्यताम् = गच्छ ( यहाँ से चले जाओ ), न वाच्यं = न वक्तव्यम् ( कभी मत कहना ) । तच्छ्रुत्वा = क्षपणकप्रमुखस्य वचनं श्रुत्वा ( प्रमुख भिक्षु के वचन को सुनकर ), वेद्म्यहम् = सर्वमवगच्छामि (मैं सब जानता हूँ), युष्मद्धर्मं = भवद्धर्मं (आपके धर्म को), बहुश्रावकाः = बहवो भक्ताः (अनेक भक्त), आह्वयन्ति = समाह्वयन्ति (बुलाते रहते हैं), पुस्तकाच्छादनयोग्यानि = ग्रन्थवेष्टनोचितानि ( ग्रन्थों को बाँधने योग्य ), कर्पटानि = वस्त्राणि ( कपड़े ), प्रगुणीकृतानि = सञ्चितानि ( एकत्रित किया हूँ ), लेखकानां = ग्रन्थलेखकानां ( ग्रन्थ को लिखने वाले विद्वानों के लिए ), वित्तं = धनं ( द्रव्य ) । कालोचितं = समयोचित ( समयानुकूल ), कार्यं = कर्त्तव्यमिति ( किया जाना चाहिए ) ।

हिन्दी—उसकी प्रार्थना को सुनकर प्रमुख भिक्षुक ने कहा—'श्रावक ! धर्मज्ञ होते हुए भी आप कैसी बातें करते हैं, क्या हम लोग ब्राह्मणों के समान भिक्षुक हैं, कि आप निमन्त्रण दे रहे हैं ? भोजन का समय हो जाने पर हम लोग स्वयं घूमते हुए, किसी श्रद्धालु भक्त को देखकर उसके घर चले जाते हैं। उसके बहुत अधिक आग्रह करने पर हम केवल जीवन-निर्वाह के लिए अपेक्षित मात्र भोजन कर लेते हैं। आप तत्काल यहाँ से चले जायें और भविष्य में पुनः इस तरह की बात न कीजिएगा।"

जैनभिक्षु के वचन को सुनकर नापित ने कहा—"भगवन् ! मैं आपके धर्मनियमों को जानता हूँ। बात यह है कि आपको अनेक भक्तगण बुलाते रहते हैं। इस समय मैंने ग्रन्थों को बाँधने योग्य बहुमूल्य वस्त्रों का सञ्चय कर रखा है और ग्रन्थों को लिखवाने के हेतु ग्रन्थ-

ञक को पारिश्रमिक के रूप में देने के लिये द्रव्य भी एकत्रित कर रखा हैं। पुनः समयानुकूल आपकी जैसी इच्छा हो, करें।" (संभव है मैं पुनः इन सामानों को एकत्र न कर सकूँ।)

ततो नापितोऽपि स्वगृहं गतः। तत्र च गत्वा खदिरमयं लगुडं सज्जीकृत्य कपाटयुगलं द्वारि समाधाय सार्द्धप्रहरैकसमये भूयोऽपि विहारद्वारमाश्रित्य सर्वान्क्रमेण निष्क्रामतो गुरुप्रार्थनया स्वगृहमानयत्। तेऽपि सर्वे कर्पटवित्तलोभेन भक्तियुक्तानपि परिचितश्रावकान् परित्यज्य प्रहृष्टमनसस्तस्य पृष्ठतो ययुः। अथवा साध्विदमुच्यते—

एकाकी गृहसन्त्यक्तः पाणिपात्रो दिगम्बरः।
सोऽपि संवाह्यते लोके तृष्णया पश्य कौतुकम् ॥ १५ ॥

जीर्यन्ते जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः।
चक्षुः श्रोत्रे च जीर्येते, तृष्णैका तरुणायते ॥ १६ ॥

व्याख्या—तत्र गत्वा = स्वगृहं गत्वा (अपने घर जाकर), खदिरमयं = खदिरकाष्ठनिर्मितं (खैर की), लगुडं = दण्डं (लाठी), सज्जीकृत्य = सुसज्जीकृत्य (तैयार करके), कपाटयुगलं = कपाटद्वयं (दोनों पल्लों को), समाधाय = पिधाय, परीक्ष्य वा (बन्द करके), विहारद्वारं = जैनाश्रमद्वारं (मठ के दरवाजे पर पहुँचकर), निष्क्रामतो = निर्गच्छतः (भिक्षा के लिए बाहर निकलते हुए), गुरुप्रार्थनया = महता निर्बन्धेन (अत्यन्त आग्रहपूर्वक), आनयत् = स्वगृहं प्रापयत् (ले आया)। तेऽपि = जैनसाधवोऽपि (जैनभिक्षु भी), कर्पटवित्तलोभेन = वस्त्रद्रव्यादिलोभेन (वस्त्र और द्रव्य के लोभ से), भक्तियुक्तान् = विनयान्वितान् (भक्तियुक्त), परित्यज्य = त्यक्त्वा (छोड़कर), प्रहृष्टमनसः = सुप्रसन्नचित्ताः (प्रसन्न मन से), तस्य = नापितस्य (नाई के), पृष्ठतो ययुः = अनुययुः (पीछे-पीछे चल दिये)।

अन्वयः—कौतुकं पश्य, एकाकी गृहसन्त्यक्तः पाणिपात्रः दिगम्बरः सोऽपि लोके तृष्णया संवाह्यते ॥ १५ ॥

जीर्यतः केशा जीर्यन्ते, जीर्यतः दन्ता जीर्यन्ति, चक्षुः श्रोत्रे च जीर्येते, एका तृष्णा तरुणायते ॥ १६ ॥

व्याख्या—कौतुकं पश्य = किमाश्चर्यं पश्य (क्या आश्चर्य का विषय है कि), एकाकी = एकः सन् (अकेला), गृहसन्त्यक्तः = परित्यक्तगृहः (घर को छोड़कर), पाणिपात्रः = करपात्री (पाणिः एव पात्रं यस्य सः, किंवा पाणौ पात्रं यस्य सः) (कर को ही पात्र समझने वाला), दिगम्बरः = विवस्त्रः (नग्न) लोके = संसारे (इस विश्व में), तृष्णया = लिप्सया (लिप्सा के द्वारा), संवाह्यते = परिचाल्यते (परिचालित हो जाता है) ॥ १५ ॥

जीर्यतः = जीर्णस्य, वृद्धस्येति भावः (वृद्ध व्यक्ति के), केशाः = शिरोरुहाः (बाल), जीर्यन्ते = जीर्णा भवन्ति (पक जाते हैं), दन्ताः = रदाः (दाँत), जीर्यन्ति = जीर्णत्वमापन्नाः

पतन्ति ( जीर्ण होकर गिर जाते हैं ), चक्षुः=नेत्रम् ( नेत्र ), तृष्णा, तरुणायते=तरुणीवाचरति, तरुणत्वमाप्नोतीति ( तरुण होती जाती है ) ॥ १६ ॥

**हिन्दी**—नापित ने अपने घर जाकर खदिर की एक लाठी तैयार की और बाहर के दोनों कपाटों ( किवाड़ों ) को बन्द कर दिया। डेढ़ पहर दिन आने के बाद वह पुनः मठ के दरवाजे पर जाकर खड़ा हो गया। जब भिक्षाटन के लिए भिक्षुगण बाहर निकलने लगे तो उनको आग्रहपूर्वक अपने घर ले आया। जैन भिक्षु भी वस्त्र और द्रव्य के लोभ से परिचित एवं विश्वस्त श्रावकों को छोड़कर उस नापित के पीछे प्रसन्न होकर चल दिये। अथवा ठीक ही कहा गया है—

"कितने आश्चर्य की बात है, देखो कि—एकाकी, घर को छोड़कर भिक्षाटन करनेवाले नग्न और अपने करों को ही पात्र समझने वाले त्यागी जन भी इस संसार में तृष्णा द्वारा परिचालित हो जाया करते हैं ॥ १५ ॥

वृद्ध होने पर मनुष्य के केश पक जाते हैं, दाँत जीर्ण होकर गिर जाते हैं, आँख तथा कान शिथिल पड़ जाते हैं, किन्तु तृष्णा सदा युवती ही बनी रहती है। सभी इन्द्रियों के शिथिल हो जाने के पश्चात् भी मनुष्य की तृष्णा कम नहीं होती है" ॥ १६ ॥

ततः परं गृहमध्ये तान् प्रवेश्य, द्वारं निभृतं पिधाय, लगुडप्रहारैः शिरस्यताडयत्। तेऽपि ताड्यमाना एके मृताः, अन्ये भिन्नमस्तकाः फूत्कर्तुमुपचक्रमिरे। अत्रान्तरे तमाक्रन्दमाकर्ण्य, कोटरक्षपालेनाऽभिहितम्—"भो भोः ! किमयं कोलाहलो नगरमध्ये ? तद्गम्यताम्।"

ते च सर्वे तदादेशकारिणस्तत्सहिता वेगात्तद्गृहं गता यावत् पश्यन्ति तावद्रुधिरप्लावितदेहाः पलायमाना नग्नका दृष्टाः। पृष्टाश्च भोः, किमेतत् ? ते प्रोचुर्यथाऽवस्थितं नापितवृत्तम्।

**व्याख्या**—ततःपरं=तेषामागमनानन्तरं ( भिक्षुओं के आ जाने पर ) गृहमध्ये=गृहाभ्यन्तरे ( घर के भीतर ) निभृतं=सुप्रच्छन्नं ( गुप्त रूप से ), पिधाय=अवरुध्य ( बन्द करके ), लगुडप्रहारैः=दण्डप्रहारैः ( दण्डे से ), तेऽपि=जैनभिक्षुका अपि ( जैन साधु ), ताड्यमानाः=व्याहताः ( मार खाकर ), एके मृताः=केचन मृताः ( कुछ तो मर गये ), अन्ये=अवशिष्टाः ( शेष बचे हुए ), भिन्नमस्तकाः=छिन्नशिरसः, स्फुटितशिरस इत्यर्थः ( शिर फूटने पर ), फूत्कर्तुं=साक्रोशं रोदितुम् ( चिल्ला कर ) उपचक्रमिरे=प्रारब्धाः ( रोने लगे ), तमाक्रन्दमाकर्ण्य=तमाक्रोशं श्रुत्वा, कोलाहलं निशम्येति यावत् ( उस कोलाहल को सुनकर ), कोटरक्षपालेन=दुर्गरक्षपालेन ( कोतवाल ने ), अभिहितं=निगदितं ( कहा ), कोलाहलः=आक्रन्दरवः ( जनरव ), ते च=नगररक्षकाः ( सिपाही ), तदादेशकारिणः=तस्याज्ञापालकाः ( उसके आज्ञापालक ), तत्सहिताः=दुर्गपालेन सहिताः ( कोतवाल के साथ ), यावत्पश्यन्ति=तत्र गत्वा यावदवलोकयन्ति ( जब घटना-स्थल का निरीक्षण करते हैं,

तो ), रुधिरप्लावितदेहाः = रक्तार्द्रशरीराः ( खून से लथपथ ), पलायमानाः = इतस्ततो धावमानाः ( इधर उधर भागते हुए ), नग्नकाः = भिक्षुकाः, क्षपणकाः ( क्षपणकों को ), दृष्टाः = अवलोकिताः ( देखा ), किमेतत् = किमभूदिति ( क्या हुआ ? )।

**हिन्दी**—नापित ने उन भिक्षुओं को भीतर ले जाकर चुपके से दरवाजों को बन्द कर दिया और लाठी से उनके शिर पर मारना प्रारम्भ किया। मार खाकर कुछ तो मर गये और जो जीवित बचे वे मस्तक के फूटने से चिल्लाकर रोने लगे। इसी बीच, नगर के कोट-रक्षक ( कोतवाल ) ने उस कोलाहल को सुनकर अपने सेवकों ( सिपाहियों ) से कहा—"अरे, देखो नगर में यह कैसा कोलाहल हो रहा है ? जाओ जल्दी करो।"

दुर्गपाल के आज्ञापालक सिपाही उसके साथ तत्काल घटनास्थल पर पहुँच गये। वहाँ पहुँचकर जब उन्होंने देखा तो खून से लथपथ शरीर वाले क्षपणक इधर-उधर भाग रहे थे। उन्हें रोककर दुर्गपाल ने पूछा—"यह क्या हुआ ?" जैन साधुओं ने नापित के यहाँ यथाघटित सम्पूर्ण वृत्तान्त को कह सुनाया।

तैरपि स नापितो बद्धो हतशेषैः सह धर्माधिष्ठानं नीतः। तैर्नापितः पृष्टः—"भोः, किमेतद्भवता कुकृत्यमनुष्ठितम् ?"

स आह—"किं करोमि। मया श्रेष्ठिमणिभद्रगृहे दृष्टः एवंविधो व्यतिकरः।" सोऽपि सर्वं मणिभद्रवृत्तान्तं यथादृष्टमकथयत्।

ततः श्रेष्ठिनमाहूय, ते भणितवन्तः—"भोः श्रेष्ठिन् ! किं त्वया कश्चित्क्षपणको व्यापादितः ?" ततस्तेनाऽपि सर्वः क्षपणकवृत्तान्तस्तेषां निवेदितः। अथ तैरभिहितम्—"अहो, शूलमारोप्यतामसौ दुष्टात्मा कुपरीक्षितकारी नापितः।"

तथाऽनुष्ठिते तैरभिहितम्—

"कुदृष्टं कुपरिज्ञातं कुश्रुतं कुपरीक्षितम्।
तन्नरेण न कर्तव्यं, नापितेनाऽत्र यत्कृतम् ॥"

अथवा साध्विदमुच्यते—

"अपरीक्ष्य न कर्तव्यं कर्तव्यं सुपरीक्षितम्।
पश्चाद्भवति सन्तापो ब्राह्मण्या नकुले यथा" ॥ १७ ॥

मणिभद्र आह—"कथमेतत् ?"

ते धर्माधिकारिणः प्रोचुः—

**व्याख्या**—तैरपि = राजपुरुषैरपि ( सिपाहियों ने ), हतशेषैः = मृतावशिष्टैः ( मृत्यु से अवशिष्ट ), धर्माधिष्ठानं = न्यायालयं ( न्यायालय में ), नीतः = प्रापितः ( उपस्थित किया ), तैः = न्यायाधीशैः ( जजों ने ), कुकृत्यं = गर्हितं कर्म ( निन्दित कार्य, कुकृत्य ), अनुष्ठितम् = कृतम् ( किया ) व्यतिकरः = प्रसङ्गः ( घटना ), ते = न्यायाधीशाः ( जजों ने ), भणितवन्तः = कथितवन्तः ( कहा ) व्यापादितः = हतः, मारितः ( मारा है ), क्षपणकवृत्तान्तः = स्वप्ने दृष्ट-

क्षपणकवृत्तान्तः ( स्वप्न में दृष्ट क्षपणक के वृत्तान्त को ), निवेदितः=प्रार्थितः ( कह दिया ), कुपरीक्षितकारी=असमीक्ष्यकारी ( बिना सोचे समझे किसी कार्य को करने वाला )।

अन्वयः—अपरीक्ष्य न कर्तव्यं, सुपरीक्षितं कर्तव्यम् । पश्चात्संतापो भवति, यथा ब्राह्मण्या नकुले ( अभवदिति ) ॥ १७ ॥

व्याख्या—अपरीक्ष्य=अविचार्य, असमीक्ष्येत्यर्थः ( बिना परीक्षा के ), न कर्तव्यं=न करणीयम् ( किसी कार्य को नहीं करना चाहिये ), सुपरीक्षितं=सुविचारितं ( सोच विचार कर, परीक्षा लेने के बाद ), पश्चात्=अपरीक्ष्य कृते सति ( बिना सोचे विचारे कार्य को कर डालने पर ), सन्तापः=पश्चात्तापः ( पश्चात्ताप, दुःख ), नकुले=नकुले मृते सति ( नकुल के मर जाने पर )।

हिन्दी—सिपाहियों ने नापित को बाँधकर मृत्यु से अवशिष्ट क्षपणकों के साथ न्यायालय में उपस्थित किया। वहाँ न्यायाधीशों ने नापित से पूछा—"तुमने यह क्या कुकृत्य कर डाला ?"

नापित ने कहा—"मेरा क्या अपराध है, मैं करता ही क्या ? सेठ मणिभद्र के यहाँ मैंने इसी प्रकार की एक घटना को देखा था।" उसने सेठ मणिभद्र के घर घटित समस्त घटना को यथावत् सुना दिया। उक्त घटना को सुनकर न्यायाधीशों ने सेठ मणिभद्र को बुलाकर पूछा—"सेठ ! क्या आपने किसी क्षपणक की हत्या की है ?"

मणिभद्र ने स्वप्न में दृष्ट क्षपणक के वृत्तान्त को न्यायाधीशों से कह दिया। मणिभद्र के मुख से समस्त घटना को सुनने के बाद न्यायाधीशों ने आदेश देते हुये सिपाहियों से कहा—"इस दुष्ट तथा अविवेकी नापित को शूली चढ़ा दो।"

नापित को शूली पर चढ़ाने के पश्चात् न्यायाधीशों ने कहा—"बिना अच्छी तरह देखे, बिना अच्छी तरह से जाने और सुने तथा बिना परीक्षा लिये किसी कार्य को नहीं करना चाहिये, जैसा कि इस मूर्ख नापित ने किया है।"

अथवा ठीक ही कहा गया है कि—

बिना अच्छी तरह समझे बुझे और परीक्षा लिये किसी कार्य को नहीं करना चाहिये, जिस कार्य को करना हो उसके विषय में पूर्ण जानकारी प्राप्त कर लेनी चाहिये। अन्यथा कार्य की समाप्ति के बाद मनुष्य को पश्चात्ताप करना पड़ता है, जैसा कि नकुल की मृत्यु के पश्चात् ब्राह्मणी को करना पड़ा था ॥ १७ ॥

मणिभद्र ने पूछा—कैसे ?

उन न्यायाधीशों ने पुनः कहना प्रारम्भ किया—

# १. ब्राह्मणीनकुल-कथा

"कस्मिंश्चिदधिष्ठाने देवशर्मा नाम ब्राह्मणः प्रतिवसति स्म । तस्य भार्या प्रसूता सुतमजनयत् । तस्मिन्नेव दिने नकुली नकुलं प्रसूय मृता । अथ सा सुतवत्सला दारकवत्तमपि नकुलं स्तन्यदानाऽभ्यङ्गमर्दनादिभिः पुपोष । परं तस्य न विश्वसति । अपत्यस्नेहस्य सर्वस्नेहातिरिक्ततया सततमेवमाशङ्कते यत्—कदाचिदेव स्वजातिदोषवशादस्य दारकस्य विरुद्धमाचरिष्यति इति । उक्तं च—

> कुपुत्रोऽपि भवेत्पुंसां हृदयानन्दकारकः ।
> दुर्विनीतः, कुरूपोऽपि, मूर्खोऽपि, व्यसनी, खलः ॥ १८ ॥
>
> एवं च भाषते लोकश्चन्दनं किल शीतलम् ।
> पुत्रगात्रस्य संस्पर्शश्चन्दनादतिरिच्यते ॥ १९ ॥
>
> सौहृदस्य न वाञ्छन्ति जनकस्य हितस्य च ।
> लोकाः प्रपालकस्याऽपि, यथा पुत्रस्य बन्धनम् ॥ २० ॥

व्याख्या—अधिष्ठाने = नगरे ( नगर में ), प्रतिवसति स्म = निवसति स्म ( रहता था ), तस्य = विप्रस्य ( उस ब्राह्मण की ) भार्या = स्त्री ( स्त्री ने ), सुतमजनयत् = पुत्रमजनयत् ( पुत्र को जन्म दिया ), प्रसूय = उत्पाद्य ( जन्म देकर ), मृता = दिवं प्राप्ता ( मर गयी ), सा = ब्राह्मणी ( उस ब्राह्मणी ने ), सुतवत्सला = पुत्र-प्रेमयुक्ता (पुत्र-स्नेह के वशीभूत होकर), दारकवत् = पुत्रवत् ( पुत्र की तरह ), तमपि = मातृहीनं ( मातृहीन ), स्तन्यदानाभ्यङ्गमर्दनादिभिः = दुग्धतैलाद्युपकरणैः, स्तन्यं = दुग्धम्, अभ्यङ्गम् = उबटन, ( स्तनपान, उबटन, तेल मालिश आदि से ), पुपोष = पालयामास ( पालन किया ), तस्य = नकुलस्य ( उस नकुल का ), न विश्वसिति = विश्वासं नैव करोति स्म ( विश्वास नहीं करती थी ), अपत्यस्नेहस्य = पुत्र-स्नेहस्य, सर्वस्नेहातिरिक्ततया = अन्यापेक्षया स्नेहाधिकतया ( अन्य की अपेक्षा अधिक स्नेह के कारण ), आशङ्कते = शङ्कते ( सन्देह किया करती थी ), स्वजातिदोषवशात् = स्वजातिदोषात् ( हिंसक जाति में उत्पन्न होने के कारण ), दारकस्य = मत्पुत्रस्य ( मेरे पुत्र का ), विरुद्धम् = अनिष्टम् ( अनिष्ट ), आचरिष्यति = करिष्यति ( कर सकता है )।

अन्वयः—दुर्विनीतः, कुरूपः, मूर्खः, व्यसनी, खलः, कुपुत्रोऽपि पुंसां हृदयानन्दकारकः भवति ॥ १८ ॥

लोकः, एवं भाषते ( यत् ) चन्दनं किल शीतलं ( भवति ), पुत्रगात्रस्य संस्पर्शः चन्दनादतिरिच्यते ॥ १९ ॥

लोकाः यथा पुत्रस्य बन्धनं वाञ्छन्ति ( तथा ) सौहृदस्य, जनकस्य, हितस्य, प्रपालकस्याऽपि न ( वाञ्छन्ति ) ॥ २० ॥

**व्याख्या**—दुर्विनीतः=दुर्नयः ( दुर्विनीत ), कुरूपः=असुन्दरः ( कुरूप ), मूर्खः=अशिक्षितः ( अशिक्षित ) खलः=दुष्टः ( दुष्ट ) व्यसनी=दुर्वृत्तः ( दुर्वृत्त ) कुपुत्रोऽपि=कुत्सितः सूनुरपि ( दुष्ट पुत्र भी ) पुंसां=जनानां ( लोगों के ), हृदयानन्दकारकः=हृदयाह्लादकः ( हृदय को आह्लादित करने वाला ), भवति ॥ १८ ॥

लोकः=जननिवहः ( जनसमूह ), भाषते=वदति ( कहता है कि ), पुत्रगात्रस्य=पुत्रशरीरस्य ( पुत्र के शरीर का ), संस्पर्शः=स्पर्शः ( स्पर्श ) अतिरिच्यते=व्यतिरिच्यते=अधिकसुखकरो भवति ( अधिक सुखकारक होता है ) ॥ १९ ॥

पुत्रस्य बन्धनं=पुत्रस्नेहपाशं, पुत्रकृतक्लेशादिकं वा ( पुत्र के बन्धन को ) वाञ्छन्ति=( चाहते हैं ), सौहृदस्य=मित्रस्य ( मित्र के ), जनकस्य=पितुः ( पिता के ), हितस्य=बन्धुबान्धवादेः ( बन्धु-बान्धवों के ) प्रपालकस्य=पोषकस्य, रक्षकस्य ( पालनकर्ता के भी ), बन्धनं, न वाञ्छन्ति ॥ २० ॥

**हिन्दी**—किसी नगर में देवशर्मा नाम का एक ब्राह्मण रहता था। उसकी गर्भिणी स्त्री ने एक पुत्र को जन्म दिया। उसी दिन एक नकुली भी नकुल को जन्म देकर मर गयी। पुत्र-स्नेह के कारण उस ब्राह्मणी ने नकुल का भी अपने पुत्र की तरह दुग्धपान, उबटन तथा तेल-मालिश आदि के द्वारा पालन किया। किन्तु वह उसका विश्वास नहीं करती थी। पुत्र-स्नेह के सर्वोपरि होने के कारण सतत यह सन्देह किया करती थी कि किसी दिन अपने जातिगत दोष के कारण यह नकुल मेरे पुत्र का अनिष्ट न कर बैठे। क्योंकि कहा भी गया है—

अपना पुत्र चाहे जितना भी दुर्विनीत, कुरूप, मूर्ख, व्यसनी, दुष्ट तथा दुर्वृत्त क्यों न हो, वह माता पिता के हृदय को आह्लादित करने वाला ही होता है ॥ १८ ॥

लोग यह कहते हैं कि चन्दन बहुत शीतल होता है, किन्तु पुत्र के शरीर का स्पर्श चन्दन से भी अधिक शीतल तथा आनन्ददायक होता है ॥ १९ ॥

लोग अपने पुत्र के स्नेह एवं बन्धन को जितना स्वीकार करते हैं उतना अपने मित्र, माता-पिता, बन्धुबान्धव तथा पालक के भी बन्धन को स्वीकार नहीं करते हैं। पुत्र चाहे कितना भी अधिक कष्ट दे माता-पिता उसको उतना बुरा नहीं मानते हैं जितना कि अन्य व्यक्तियों द्वारा प्राप्त अल्प क्लेश को भी बुरा मानते हैं ॥ २० ॥

**अथ सा कदाचिच्छय्यायां पुत्रं शाययित्वा जलकुम्भमादाय, पतिमुवाच—"ब्राह्मण ! जलार्थमहं तडागे यास्यामि। त्वया पुत्रोऽयं नकुलाद्रक्षणीयः।"**

**अथ तस्यां गतायां, पृष्ठे ब्राह्मणोऽपि शून्यं गृहं मुक्त्वा भिक्षार्थं क्वचिन्निर्गतः। अत्रान्तरे दैववशात् कृष्णसर्पो बिलान्निष्क्रान्तः। नकुलोऽपि तं स्वभाववैरिणं मत्वा, भ्रातू रक्षणार्थं सर्पेण सह युद्ध्वा, सर्पं खण्डशः कृतवान्।**

ततो रुधिराप्लावितवदनः सानन्दं स्वव्यापारप्रकाशनार्थं मातुः संमुखो गतः । माताऽपि तं रुधिरक्लिन्नमुखमालोक्य शङ्कितचित्ता "नूनमनेन दुरात्मना दारको भक्षितः" इति विचिन्त्य कोपात्तस्योपरि तं जलकुम्भं चिक्षेप ।

व्याख्या—सा = ब्राह्मणी, कदाचित् = एकदा कदाऽपि ( कभी एक दिन ), शय्यायां = पर्यङ्के ( चारपाई पर ), जलार्थं = जलाहरणाय ( जल भरने के लिए ), यास्यामि = गच्छामि ( जाती हूँ ), तस्यां = विप्रभार्यायां ( उस ब्राह्मणी के ) गतायां = प्रस्थितायां ( चले जाने पर ), शून्यं = निर्जनं ( शून्य ), मुक्त्वा = विहाय ( छोड़कर ), निर्गतः = निष्क्रान्तः ( चला गया ), दैववशात् = संयोगात् ( संयोग से ), कृष्णसर्पः = अतिकृष्णकायसर्पः ( काला सर्प ), बिलात् = विवरात् ( बिल से ), निष्क्रान्तः = निर्गतः ( निकला ), स्वभाववैरिणं = सहजशत्रुम् ( स्वाभाविकशत्रुम् ), मत्वा = स्वीकृत्य ( समझकर ) रक्षणार्थं = परित्राणार्थं ( रक्षा के लिए ) युद्ध्वा = युद्धं विधाय ( युद्ध करके ), खण्डशः = विच्छिन्नकायः ( टुकड़ा टुकड़ा ), कृतवान् = विहितवान् ( कर डाला ) । रुधिराप्लावितवदनः = रुधिरयुक्तमुखः ( खून से युक्त मुख को लेकर ), स्वव्यापारप्रकाशनार्थं = स्वकृत्यप्रकटनार्थं ( अपने कृत्य को दिखाने के लिए ), मातुः = ब्राह्मण्याः ( ब्राह्मणी के ), संमुखो गतः = सन्निकटं गतवान् ( सन्निकट गया ), रुधिरक्लिन्नमुखं = रुधिरसंलिप्ताननं ( खून से आर्द्र मुखको ), शङ्कितचित्ता = आशङ्कितहृदया ( शङ्कित होकर ), दुरात्मना = दुष्टेन ( दुष्ट नकुल ने ), दारकः = पुत्रः ( पुत्र को, ) भक्षितः = खादितः ( मारकर खा गया है ), विचिन्त्य = विचार्य ( सोचकर ) कुम्भं घटं = ( घड़े को ) चिक्षेप = पातयामास ( पटक दिया ) ।

हिन्दी—एक दिन ब्राह्मणी ने पुत्र को पर्यङ्क पर सुला दिया और हाथ में घड़े को उठाकर पति से कहा—"ब्राह्मण ! मैं जल भरने के लिये तालाब को जा रही हूँ, तुम नकुल से इस बच्चे की रक्षा करना ।" ब्राह्मणी के चले जाने के बाद वह ब्राह्मण भी घर को निर्जन छोड़कर भिक्षाटन के लिये चल दिया । इसी समय संयोग से एक काला सर्प बिल से निकला। नकुल ने उस सर्प को देखते ही अपना सहजशत्रु समझकर भाई की रक्षा के लिए उसके साथ युद्ध करके उसको काट कर टुकड़े-टुकड़े कर डाला ।

पुनः ब्राह्मणी के लौटने पर, वह नकुल प्रसन्नतापूर्वक खून से आर्द्र मुख को लेकर अपने पराक्रम को अभिव्यक्त करने के लिए माता के सन्निकट गया । माता उसके रक्तार्द्र मुख को देखते ही शङ्कित हो उठी और यह सोचकर कि "इस दुष्ट नकुल ने मेरे पुत्रको मारकर खा लिया है", क्रोधातुर हो उसने जल से भरे हुए घड़े को उस नकुल के ऊपर पटक दिया ।

एवं सा नकुलं व्यापाद्य यावत्प्रलपन्ती गृहे आगच्छति तावत्सुतस्तथैव सुप्तस्तिष्ठति । समीपे कृष्णसर्पं खण्डशः कृतमवलोक्य पुत्रवधशोकेनात्मशिरो वक्षःस्थलं च ताडितुमारब्धा ।

अत्रान्तरे ब्राह्मणो गृहीतनिर्वापः समायातो यावत्पश्यति, तावत्पुत्रशोकाऽभितप्ता ब्राह्मणी प्रलपति—"भो भो लोभात्मन् ! लोभाऽभिभूतेन त्वया न कृतं मद्वचः । तदनुभव साम्प्रतं पुत्रमृत्युदुःखवृक्षफलम् ।" अथवा साध्विदमुच्यते—

"अतिलोभो न कर्तव्यो लोभं नैव परित्यजेत् ।
अतिलोभाऽभिभूतस्य चक्रं भ्रमति मस्तके" ॥२१॥

ब्राह्मण आह—"कथमेतत् ?" सा प्राह—

व्याख्या—एवम्=अनेन प्रकारेण (इस प्रकार), नकुलं व्यापाद्य=नकुलं हत्वा (नकुल को मारकर), प्रलपन्ती=विलपन्ती (विलखती हुई), तथैव=यथा स्थापितस्तथा (जैसा उसने सुला रखा था) पुत्रवधशोकेन=नकुलवधशोकेन (नकुल के मरने से उत्पन्न शोक से) ताडितुमारब्धा=हन्तुमारब्धा (पीटना प्रारम्भ कर दिया)। अत्रान्तरे=एतस्मिन्नेव काले (इसी बीच में) गृहीतनिर्वापः=गृहीतप्रतिग्रहः (भिक्षाटन करके), पुत्रशोकाऽभितप्ता=पुत्रशोकसंतप्ता (पुत्र शोक से संतप्त), प्रलपति=विलपति (विलाप करने लगी), लोभाऽभिभूतेन=लोभाकृष्टेन (लोभ से अभिभूत होकर), मद्वचः=मद्वचनं (मेरा कहना) पुत्रमृत्युदुःखवृक्षफलम्=पुत्रवधशोकवृक्षस्य फलम् (पुत्रवध से उत्पन्न शोक रूपी वृक्ष का फल) अतिलोभाऽभिभूतस्य=अतिलोभाविष्टस्य (अधिक लोभ करने वाले व्यक्ति के), मस्तके=शिरसि (मस्तक पर) चक्रं=विपद्रूपं चक्रं (विपत्ति रूपी चक्र) भ्रमति ॥ २१ ॥

हिन्दी—इस प्रकार नकुल को मारकर विलखती हुई जब वह घर के भीतर आयी तो उसने पुत्र को पूर्ववत् सोते हुए देखा। और पर्यङ्क के पास में ही टुकड़े-टुकड़े किये हुये कृष्ण-सर्प को देखकर वह नकुल की मृत्यु से शोकाकुल हो उठी तथा अपने वक्षःस्थल एवं शिर को पीटकर रोने लगी।

इसी समय, भिक्षाटन से लौट कर उसका पति भी आ गया। घर के भीतर आकर जब उसने देखा तो नकुल के वध से शोकाकुल ब्राह्मणी बिलख-बिलख कर रो रही थी। ब्राह्मणी ने पति को देखते ही रोकर कहा—अरे लोभी ब्राह्मण! लोभाभिभूत होकर तुमने मेरे वचन को नहीं माना। लो इस समय नकुल की मृत्यु से संमुत्पन्न शोक-रूपी वृक्ष का फल, चखो। अथवा ठीक ही कहा गया है कि—मनुष्य को यद्यपि लोभ का परित्याग नहीं करना चाहिये तथापि अत्यधिक लोभ नहीं करना चाहिए। अत्यधिक लोभाविष्ट होने से मस्तक पर (विपत्ति रूप) चक्र घूमने लगता है ॥ २१ ॥

ब्राह्मण ने पूछा—"कैसे ?" ब्राह्मणी ने कहना आरम्भ किया—

## २. लोभाविष्टचक्रधर-कथा

"कस्मिंश्चिदधिष्ठाने चत्वारो ब्राह्मणपुत्राः परस्परं मित्रतां गता वसन्ति स्म। ते चापि दारिद्र्योपहताः परस्परं मन्त्रं चक्रुः—"अहो, धिगियं दरिद्रता।

उक्तं च—

वरं वनं व्याघ्रगजादिसेवितं,
जनेन हीनं बहुकण्टकावृतम् ।
तृणानि शय्या परिधानवल्कलं,
न बन्धुमध्ये धनहीनजीवितम् ॥ २२ ॥

तथा च—

स्वामी द्वेष्टि सुसेवितोऽपि; सहसा प्रोज्झन्ति सद्बान्धवाः,
राजन्ते न गुणास्त्यजन्ति तनुजाः, स्फारीभवन्त्यापदः ।
भार्या साधु सुवंशजाऽपि भजते नो, यान्ति मित्राणि च,
न्यायारोपितविक्रमाण्यपि नृणां, येषां न हि स्याद्धनम् ॥२३॥

व्याख्या—परस्परं = मिथः ( आपस में ) दारिद्र्योपहताः—दारिद्र्यदुःखेन दुःखिताः ( दारिद्र्य से पीड़ित ), मन्त्रं चक्रुः = मन्त्रयामासुः ( विचार किया ) ।

अन्वयः—व्याघ्रगजादिसेवितं, जनेन हीनं बहुकण्टकावृतं वनं तृणानि शय्या परिधानवल्कलं वरं, बन्धुमध्ये धनहीनजीवितं न ॥ २२ ॥

हि येषां नृणां धनं न स्यात् , सुसेवितोऽपि स्वामी द्वेष्टि, सद्बान्धवाः सहसा प्रोज्झन्ति, गुणाः न राजन्ते, तनुजाः त्यजन्ति, आपदः स्फारीभवन्ति, साधु सुवंशजा अपि भार्या न भजते, न्यायारोपितविक्रमाणि मित्राणि अपि यान्ति ॥ २३ ॥

व्याख्या—व्याघ्रगजादिसेवितं = शार्दूलद्विपादिसमन्वितं ( व्याघ्र गजादि हिंस्र पशुओं से युक्त ), जनेन हीनं = निर्जनं ( जनहीन ), बहुकण्टकावृतं = नानाकण्टकाकुलं ( कुश कण्टकादि से समन्वित ), वनं = काननं, तत्र च, तृणानि शय्या = तृणासनं ( तृणों की शय्या पर सोना ), परिधानवल्कलं = वृक्षत्वक्परिधानं ( छाल को धारण करना ), वरं = श्रेष्ठं ( अच्छा है ), बन्धुमध्ये = बान्धवमध्ये ( रिश्तेदारों के बीच में ), धनहीनजीवितं = निर्धन-जीवनं ( निर्धन होकर जीवन व्यतीत करना ) ।

येषां नृणां = मनुष्याणां ( जिन व्यक्तियों के पास ), धनं = वित्तं ( सम्पत्ति ), सुसेवितः = सम्यगाराधितः ( भलीभाँति सेवित ), स्वामी = प्रभुः ( मालिक ), द्वेष्टि = द्वेषं करोति ( द्वेष करता है ), सद्बान्धवाः = स्वज्ञातयः ( रिश्तेदार ), प्रोज्झन्ति = त्यजन्ति ( छोड़ देते हैं ) गुणाः = लोकोपकारकाः गुणाः ( अच्छे गुण भी ), न राजन्ते = न शोभन्ते (शोभा नहीं देते हैं ) तनुजाः = पुत्राः ( पुत्र ), विपदः = आपत्तयः ( आपत्तियाँ ), स्फारीभवन्ति = विपुलीभवन्ति ( बढ़ती ही जाती हैं ), सुवंशजा = सुकुलोत्पन्ना ( अच्छे कुल में उत्पन्न हुई ) भार्या = स्त्री, न भजते = न सेवते ( सेवा नहीं करती ), न्यायारोपितविक्रमाणि = नीतिपराणि ( नीतिपरायण ) यान्ति = गच्छन्ति ( साथ छोड़कर चले जाते हैं ) ॥ २३ ॥

हिन्दी—हिन्दी नगर में चार ब्राह्मण-कुमार रहते थे । उनकी आपस में पर्याप्त मित्रता

थी। दारिद्र्य से पीड़ित होकर उन लोगों ने आपस में यह निश्चय किया कि दरिद्रता बहुत बुरी वस्तु होती है। क्योंकि कहा गया है—

व्याघ्र, गज आदि हिंस्र पशुओं से युक्त, निर्जन तथा कुश कण्टकों से आच्छादित वन में निवास करना और वहाँ रहकर वल्कल धारण करना एवं तृण की शय्या पर सोना अच्छा है, किन्तु भाइयों के बीच में निर्धन होकर जीवन व्यतीत करना ठीक नहीं है ॥ २२ ॥

और भी—भलीभाँति सेवा करते रहने पर भी निर्धन व्यक्ति के प्रति उसका स्वामी सतत द्वेष-भावना रखता है, अच्छे रिश्तेदार भी निर्धन व्यक्ति का साथ छोड़ देते हैं, लोकोपकारक उसके गुण शोभा नहीं देते, आत्मज भी परित्याग कर देते हैं, आपत्तियाँ दिन प्रतिदिन बढ़ती ही जाती हैं, अच्छे कुल में उत्पन्न हुई अपनी साध्वी स्त्री भी नहीं मानती है, और न्यायपरायण मित्र भी अवसर आने पर साथ छोड़ देते हैं ॥ २३ ॥

शूरः सुरूपः सुभगश्च वाग्मी,
शस्त्राणि शास्त्राणि विदांकरोतु।
अर्थं विना नैव यशश्च मानं,
प्राप्नोति मर्त्योऽत्र मनुष्यलोके ॥ २४ ॥

तानीन्द्रियाण्यविकलानि, तदेव नाम,
सा बुद्धिरप्रतिहता, वचनं तदेव।
अर्थोष्मणा विरहितः पुरुषः स एव
बाह्यः क्षणेन भवतीति विचित्रमेतत् ॥ २५ ॥

तद्गच्छामः कुत्रचिदर्थाय।" इति संमन्त्र्य स्वदेशं पुरं च स्वसुहृत्सहितं गृहं च परित्यज्य, प्रस्थिताः। अथवा साध्विदमुच्यते—

सत्यं परित्यजति मुञ्चति बन्धुवर्गं,
शीघ्रं विहाय जननीमपि जन्मभूमिम्।
सन्त्यज्य, गच्छति विदेशमभीष्टलोकं,
चिन्ताकुलीकृतमतिः पुरुषोऽत्र लोके ॥ २६ ॥

अन्वयः—शूरः, सुरूपः, सुभगः, शस्त्राणि शास्त्राणि (वित्) वाग्मी विदांकरोतु (यत्) मर्त्यः, अत्र मनुष्यलोके अर्थं विना यशः मानं च नैव प्राप्नोति ॥ २४ ॥

एतद् विचित्रं (यत्) तानि अविकलानि इन्द्रियाणि, तदेव नाम, सा अप्रतिहता बुद्धिः, तदेव वचनं, स एव पुरुषः, (किन्तु) अर्थोष्मणा विरहितः क्षणेन बाह्यः भवति ॥ २५ ॥

व्याख्या—शूरः=वीरः (वीर), सुरूपः=सुन्दरः (सुन्दर) सुभगः=शोभायुक्तः (सौभाग्यशाली), शस्त्राणि (अस्त्रविद्या) शास्त्राणि=वेदपुराणधर्मशास्त्राणि (वित् पुरुषः) (शास्त्रों का ज्ञाता), वाग्मी=वाक्चतुरः (वाक्पटु व्यक्ति), विदांकरोतु=जानातु (जानें) (यत्) मर्त्यः=मनुष्यः (कोई भी व्यक्ति), मनुष्यलोके=मर्त्यलोके (इस मृत्यु-

लोक में ), अर्थं विना = धनं विना ( धन के विना ), यशः = कीर्तिम् ( प्रतिष्ठा ), मानं = सम्मानं ( बड़ाई को ) नैव प्राप्नोति ॥ २४ ॥

अविकलानि = अविकृतानि ( कार्यकुशल अविकृत ) तदेव नाम = पूर्वनामा पुरुषः ( वही नाम भी है ), अप्रतिहता = अनिरुद्धा ( अप्रतिहत ), तदेव वचनं = सा एव वाणी (वही वाणी है ),स एव पुरुषः = पूर्वं एव मनुष्यः ( वही व्यक्ति भी है ) अर्थोष्मणा विरहितः = द्रव्यो-ष्मतारहितः ( धन की उष्णता के समाप्त होते ही ) वाद्यः = अन्य इव ( अपरिचित की तरह ), भवति ॥ २५ ॥

कुत्रचिदर्थाय = क्वचिदर्थोपार्जनार्थं ( धनोपार्जन के लिए, कहीं ) संमन्त्र्य = विचार्य ( निश्चय करके ), पुरं = नगरं ( नगर को ), प्रस्थिताः = निष्क्रान्ताः ( चल दिये ) ।

अन्वयः—अत्र लोके चिन्ताकुलीकृतमतिः पुरुषः सत्यं परित्यजति, बन्धुवर्गं मुञ्चति, जननीं जन्मभूमिम् अपि विहाय अभीष्टलोकं सन्त्यज्य, शीघ्रम् विदेशं गच्छति ॥ २६ ॥

व्याख्या—चिन्ताकुलीकृतमतिः = चिन्ताव्याकुलचित्तः ( चिन्ता से व्याकुल होकर ) सत्यं परित्यजति = सत्यं त्यजति ( सत्य का परित्याग कर देता है ) बन्धुवर्गं = कुटुम्बवर्गं ( कुलपरिवार को ), मुञ्चति = त्यजति ( छोड़ देता है ), अभीष्टलोकं = स्वप्रियस्थानं ( अपने प्रिय स्थान को ), विहाय = त्यक्त्वा, विदेशं ( परदेश को ), गच्छति = याति ( चला जाता है ) ॥ २६ ॥

हिन्दी—वीर, सुन्दर, सौभाग्यशाली, शस्त्रों एवं शास्त्रों के मर्मज्ञ तथा वाक्चतुर इन सभी व्यक्तियों को यह विदित होना चाहिये कि इस विश्व में मनुष्य धन के विना प्रतिष्ठा और सम्मान नहीं प्राप्त कर पाता है ॥ २४ ॥

यह कितनी विचित्र बात है कि—मनुष्य की वे ही अविकृत इन्द्रियाँ विद्यमान रहती हैं, उसका नाम भी वही रहता है, उसकी वही अप्रतिहत बुद्धि भी रहती है और वही वाणी भी रहती है, किन्तु अर्थ की उष्णता के समाप्त होते ही क्षणभर में मनुष्य बदल जाता है। उसके अन्य अङ्गों में परिवर्तन न आते हुए भी धनाभाव के कारण उस व्यक्ति में इतना परि-वर्तन आ जाता है कि दूसरे लोग उसे पहचानते तक नहीं हैं ॥ २५ ॥

"अतः हमें भी अर्थोपार्जन के निमित्त कहीं चलना चाहिये।" इस प्रकार निश्चित करने के पश्चात्, अपने देश, पुर, मित्र, बन्धु बान्धव तथा गृह का परित्याग करके वे चारों ब्राह्मण-कुमार अर्थोपार्जन के निमित्त निकल पड़े। अथवा ठीक ही कहा गया है कि—

इस संसार में विभिन्न चिन्ताओं से व्याकुल होकर मनुष्य सत्य का परित्याग कर देता है, बन्धु-बान्धवों को छोड़ देता है, जननी जन्मभूमि का भी परित्याग कर देता है और अपने प्रिय स्थान को छोड़कर विदेश चला जाता है ॥ २६ ॥

एवं क्रमेण गच्छन्तोऽवन्तीं प्राप्ताः। तत्र सिप्राजले कृतस्नानाः महाकालं प्रणम्य यावन्निर्गच्छन्ति, तावद् भैरवानन्दो नाम योगी संमुखो बभूव। ततस्तं

ब्राह्मणोचितविधिना संभाव्य, तेनैव सह तस्य मठं जग्मुः। अथ तेन पृष्टाः—"कुतो भवन्तः समायाताः? क्व यास्यथ? किं प्रयोजनम्?"

ततस्तैरभिहितम्—"वयं सिद्धियात्रिकाः, तत्र यास्यामो यत्र धनाप्तिर्मृत्युर्वा भविष्यतीत्येष निश्चयः।" उक्तञ्च—

दुष्प्राप्याणि बहूनि च लभ्यन्ते वाञ्छितानि द्रविणानि।
अवसरतुलिताभिरलं तनुभिः साहसिकपुरुषाणाम् ॥ २७ ॥

तथा च—

पतति कदाचिन्नभसः खाते, पातालतोऽपि जलमेति।
दैवमचिन्त्यं बलवद्, बलवान्ननु पुरुषकारोऽपि ॥ २८ ॥

व्याख्या—गच्छन्तः=परिभ्रमन्तः (घूमते हुए), अवन्तीम्=उज्जयिनीं (उज्जयिनी नगरी में) तत्र=अवन्त्याम् (अवन्ती में), महाकालं=महाकालाख्यं शिवलिङ्गम् (भगवान् महाकाल को), योगी=गोरक्षमार्गानुयायी साधकः (गोरखपन्थी साधु), ब्राह्मणोचित-विधिना=ब्राह्मणेभ्यो यथा नियमस्तथा विधानेन (ब्राह्मणोचित विधि से) संभाव्य=अभिवाद्य संपूज्य च (प्रणामादि करके), तेन=भैरवानन्देन, ते=विप्रपुत्राः (ब्राह्मणकुमार), सिद्धि-यात्रिकाः=धनोपार्जनार्थं चलिताः (धन की सिद्धि के लिए चले हुये), धनाप्तिः=धनप्राप्तिः (धन की प्राप्ति), मृत्युः=मरणं (मृत्यु), निश्चयः=निर्णयः (यही निश्चय किया है)।

अन्वयः—साहसिकपुरुषाणाम् अवसरतुलिताभिः तनुभिः वाञ्छितानि द्रविणानि बहूनि दुष्प्राप्याणि च लभ्यन्ते ॥ २७ ॥

अचिन्त्यं दैवं बलवद्, ननु पुरुषकारोऽपि बलवान्। कदाचिद् जलं नभसः खाते पतति, पातालतोऽपि जलम् एति ॥ २८ ॥

व्याख्या—साहसिकपुरुषाणां=साहसयुक्तानां मनुष्याणाम् (साहसी व्यक्तियों को) अवसरतुलिताभिः=समये तुलामारोपिताभिः (समय से तुला पर चढ़ा देने वाले), तनुभिः=शरीरैः (शरीरों से), द्रविणानि=धनानि (सम्पत्तियाँ), दुष्प्राप्याणि=कष्टसाध्यानि वस्तूनि (कष्ट से प्राप्त करने योग्य वस्तुयें भी) लभ्यन्ते=प्राप्यन्ते (मिल जाती हैं) ॥ २७ ॥

दैवं=भाग्यं (भाग्य), बलवत्=शक्तिमत् (बलवान् होता है), पुरुषकारोऽपि=पुरुषार्थोऽपि (पुरुषार्थ भी), बलवान्=शक्तिमान् भवति (बलवान् होता है), नभसः=आकाशात् (आकाश से), खाते=जलाशये (जलाशय में) पातालतोऽपि=पाताललोकात्, भूगर्भादपि (पृथ्वी के नीचे से भी), एति=आगच्छति (जल निकल आता है) ॥ २८ ॥

हिन्दी—क्रमशः चलते हुए वे उज्जयिनी आ पहुँचे। वहाँ सिप्रा के पवित्र जल में उन लोगों ने स्नान किया, पुनः भगवान् महाकाल को प्रणाम करके वे अभी मन्दिर से निकलते ही थे कि भैरवानन्द नाम के एक योगी सामने से आते हुए दिखाई पड़े। ब्राह्मणोचित विधि से भैरवानन्द को प्रणाम करने के बाद वे चारों उन्हीं के साथ उनके मठ तक गये। वहाँ

पहुँचकर भैरवानन्द ने उन लोगों से पूछा—"आप लोग कहाँ से आ रहे हैं ? कहाँ जायेंगे ? क्या काम है ?"

उनके प्रश्न करने पर इन लोगों ने कहा—"हम अर्थोपार्जन के लिए निकले हुए हैं। वहीं जायेंगे जहाँ पहुँचकर या तो धन की प्राप्ति हो अथवा मृत्यु हो जाय। यही हमारी प्रतिज्ञा है। कहा भी गया है कि—

समय से अपने शरीर को तुला पर आरोपित कर देने वाले ( जान की बाजी लगा देने वाले ) साहसी व्यक्तियों को अभिलषित सम्पत्ति तो मिल ही जाती है, अनेक दुष्प्राप्य वस्तुएँ भी प्राप्त हो जाती हैं ॥ २७ ॥

और भी—यद्यपि अचिन्त्य भाग्य बलवान् होता ही है, कभी पुरुषार्थ भी बलवान् हो जाता है। क्योंकि—कभी तो जल आकाश से जलाशय में गिरता है और कभी पुरुषार्थ से खोदे हुए कूप में पाताल से भी निकलता है ॥ २८ ॥

अभिमतसिद्धिरशेषा भवति हि पुरुषस्य पुरुषकारेण।
दैवमिति यदपि कथयसि पुरुषगुणः सोऽप्यदृष्टाख्यः ॥ २९ ॥

द्वयमतुलं गुरु लोकात्तृणमिव तुलयन्ति साधु साहसिकाः।
प्राणानद्भुतमेतच्चरितं चरितं ह्युदाराणाम् ॥ ३० ॥

क्लेशस्याङ्गमदत्वा सुखमेव सुखानि नेह लभ्यन्ते।
मधुभिन्मथनायस्तैराश्लिष्यति बाहुभिर्लक्ष्मीम् ॥ ३१ ॥

तस्य कथं न चला स्यात् पत्नी विष्णोर्नृसिंहकस्याऽपि।
मासांश्चतुरो निद्रां यः सेवति जलगतः सततम् ॥ ३२ ॥

दुरधिगमः परभागो यावत्पुरुषेण साहसं न कृतम्।
जयति तुलामधिरूढो भास्वानिह जलदपटलानि ॥ ३३ ॥

अन्वयः—पुरुषकारेण हि अशेषा पुरुषस्य अभिमतसिद्धिः भवति यदपि दैवमिति कथयसि सोऽपि अदृष्टाख्यः पुरुषगुणः ॥ २९ ॥

साहसिकाः प्राणान् तृणमिव साधु तुलयन्ति, एतदद्भुतं चरितम् हि उदाराणां चरितं च द्वयं लोकात् गुरु अतुलं च भवति ॥ ३० ॥

इह, क्लेशस्य अङ्गम् अदत्वा सुखमेव सुखानि न लभ्यन्ते ( यतोऽहि ) मधुभित् मथनायस्तैः बाहुभिः लक्ष्मीम् आश्लिष्यति ॥ ३१ ॥

यः जलगतः चतुरो मासान् सततं निद्रां सेवति नृसिंहकस्य अपि तस्य विष्णोः पत्नी चला कथं न स्यात् ॥ ३२ ॥

यावत्पुरुषेण साहसं न कृतं ( तावत् ) परभागो दुरधिगमः ( भवति ) इह भास्वान् तुलामधिरूढः जलदपटलानि जयति ॥ ३३ ॥

व्याख्या—पुरुषकारेण = पुरुषार्थेन ( पुरुषार्थ से ), अशेषा = निःशेषा ( सभी ), अभि-

मतसिद्धिः = वाञ्छितार्थसिद्धिः ( अभिलषित वस्तु की उपलब्धि ), दैवम् = भाग्यम् ( भाग्य ) अदृष्टाख्यः = अदृष्टनामा ( अदृष्ट संज्ञक ), पुरुषगुणः = व्यक्तेर्गुण एव भवति ( व्यक्ति का गुण ही होता है ) ॥ २९ ॥

साहसिकाः = साहससम्पन्नाः पुरुषार्थिनः ( साहसी व्यक्ति ), प्राणान् = जीवन ( प्राणों को ), तृणमिव = शष्पमिव मत्वा ( तृण के समान समझकर ) साधु = निर्भयं सम्यग्रूपेण ( अभय होकर ), तुलयन्ति = कार्यतुलामारोपयन्ति ( कार्य रूपी तुला पर चढ़ा देते हैं ), अद्भुतम् = अपूर्वम् ( अपूर्व ), चरितम् = आचरणम् ( चरित ), उदाराणाम् = उदारपुरुषाणां दानशीलानामित्यर्थः ( उदार व्यक्तियों का ), द्वयम् = एतदुभयमपि, लोकात् = विश्वतः, सर्वतोऽपीति भावः ( सभी वस्तुओं से अधिक ), गुरु = महत् ( श्रेष्ठ ) अतुलम् = अतुलनीयं च भवति । अत्र श्लोके "भयमतुलम्" इति पाठस्वीकारे, गुरुवर्गात् ( बड़े लोगों से ), अतुलं भयं = महदपि भयं ( अत्यधिक भय को भी ), तृणमिव = शष्पमिव मत्वा प्राणान् तुलयन्तीति भावो ग्राह्यः ॥ ३० ॥

इह = संसारेऽस्मिन् ( इस संसार में ), अङ्गं = शरीर ( शरीरको ), अदत्वा = असमर्प्य ( क्लेशमननुभूयेत्यर्थः ) ( बिना दिये ), सुखनेव = अनायासमेव (अनायास ही), न लभ्यन्ते = नैवासाद्यन्ते ( नहीं प्राप्त किये जाते हैं, ) मधुभित् = मधुविनाशको विष्णुः ( मधु को मारने वाले विष्णु ), मथनायस्तैः = मथनश्रान्तैः ( समुद्र को मथने से श्रान्त ), बाहुभिः = करैः ( बाँहों से ), लक्ष्मीं = श्रियम् ( लक्ष्मी का ) आश्लिष्यति = समालिङ्गति ( आलिङ्गन करते हैं ) ॥ ३१ ॥

जलगतः = सलिलगतः ( क्षीरसागरस्थः ) ( क्षीरसागर में, ) चतुरो मासान् = मासचतुष्टयं यावत् ( चार मास तक ), सेवति = भजते ( सेवन करते हैं ), नृसिंहकस्यापि = पुरुषसिंहस्य, नरश्रेष्ठस्याऽपि ( पुरुषश्रेष्ठ ) विष्णोः = नारायणस्य ( नारायण भगवान् की ), पत्नी = स्त्री, लक्ष्मीः, चला = चञ्चला ( चञ्चल ), कथं न स्यात् = कथं न भवेदिति ( क्यों न हो जाय ) ॥ ३२ ॥

परभागः = विजयः ( विजय ), दुरधिगमः = दुःसाध्यः ( कठिन होता है ), भास्वान् = सूर्यः, तुलां = तुलाराशिम्, अधिरूढः = आरूढः ( साहसमारुह्यैव ) जलदपटलानि = मेघसमूहान् ( बादलों के समूहों को ), जयति = जीतता है ॥ ३३ ॥

हिन्दी—पुरुषार्थ से ही मनुष्य की मनोनुकूल कामनायें सिद्ध होती हैं। जिसको भाग्य कहा जाता है, वह भी अदृष्ट नामक पुरुष का ही एक गुण होता है। पुरुषार्थ का ही दूसरा नाम भाग्य है ॥ २९ ॥

साहसी व्यक्ति कार्य के समय अपने प्राणों को तृण के समान समझकर तौल देते हैं ( प्राण की बाजी लगा देते हैं )। साहसी व्यक्तियों का यह अपूर्व चरित और उदार व्यक्तियों का जीवन-चरित, दोनों ही इस विश्व की अन्य वस्तुओं से श्रेष्ठ एवं अतुलनीय होते हैं ॥ ३० ॥

शरीर को बिना कष्ट दिये अनायास ही सुख की प्राप्ति नहीं होती है। मधुदैत्य को मारने वाले भगवान् विष्णु भी समुद्र-मन्थन से श्रान्त ( थके ) हाथों के द्वारा ही लक्ष्मी का आलिङ्गन करते हैं॥ ३१ ॥

जो सतत चार मास तक क्षीरसागर में शयन करते हैं उस नरश्रेष्ठ विष्णु की भी स्त्री चञ्चला क्यों न हो जाय? आलस्यवश या थककर विश्राम चाहनेवाले व्यक्ति को लक्ष्मी छोड़ देती है॥ ३२ ॥

पुरुष जब तक साहस नहीं करता है तब तक विजय संदिग्ध रहती है। भगवान् सूर्य तुला ( राशि, तराजू ) पर आरूढ़ होने के बाद ही मेघ-समूहों को विजित कर पाते हैं। साहसपूर्वक प्राण की बाजी लगाये बिना कार्य की सिद्धि नहीं होती है॥ ३३ ॥

तत्कथ्यतामस्माकं कश्चिद् धनोपायो विवरप्रवेशशाकिनीसाधनश्मशान-सेवनमहामांसविक्रयसाधकवर्तिप्रभृतीनामेकतम इति। अद्भुतशक्तिर्भवान् श्रूयते। वयमप्यतिसाहसिकाः। उक्तञ्च—

महान्त एव महतामर्थं साधयितुं क्षमाः।
ऋते समुद्रादन्यः को बिभर्ति वडवाऽनलम्?॥ ३४ ॥

भैरवानन्दोऽपि तेषां सिद्ध्यर्थं बहूपायं सिद्धवर्तिचतुष्टयं कृत्वाऽर्पयत्। आह च—"गम्यतां हिमालयदिशि। तत्र संप्राप्तानां यत्र वर्तिः पतिष्यति, तत्र निधानमसन्दिग्धं प्राप्स्यथ। तत्र स्थानं खनित्वा निधिं गृहीत्वा व्याघु-ट्यताम्।"

व्याख्या—धनोपायः=धनलाभोपायः ( धन प्राप्ति का उपाय ), विवरप्रवेशः=भूगर्भ-प्रवेशः ( पाताल की यात्रा ), शाकिनीसाधनं=यक्षिणीसाधनं ( यक्षिणी साधन ), श्मशान-सेवनं=श्मशानोपासनं ( श्मशान साधन ), महामांसविक्रयः=पुरुषमांसविक्रयः ( नरमांस विक्रय ), साधकवर्तिः=साधकगुटिका ( साधकीय गुटिका बनाना ), एकतमः=अन्यतमः ( कोई एक भी ), अद्भुतशक्तिः=अद्भुतपराक्रमः ( सिद्धपुरुषः )।

व्याख्या—महान्तः=श्रेष्ठाः ( बड़े लोग ), महताम्=श्रेष्ठजनानाम् ( बड़े लोगों के ), अर्थं=कार्यं ( कार्य को ), क्षमाः=समर्थाः ( समर्थ होते हैं ), ऋते समुद्रात्=समुद्रं विहाय ( समुद्र के अलावा ), वडवानलं=वडवाग्निम् (वडवानल को ), बिभर्ति=धारयति, आपूरयति वा ( धारण कर सकता है )॥ ३४ ॥

तेषां=विप्रपुत्राणां ( ब्राह्मण-पुत्रों की ), सिद्ध्यर्थं=कार्यसम्पादनार्थं ( कामना की सिद्धि के लिए ), बहूपायं=नानाकार्यसाधनक्षमं ( विभिन्न कार्यों को साधित करने में समर्थ ), सिद्धवर्तिचतुष्टयं=सिद्धगुटिकाचतस्रः ( चार सिद्धवर्तिकाएँ ), हिमालयदिशि=उत्तरस्यां दिशि ( उत्तर की ओर, हिमालय प्रान्त में ), संप्राप्तानां=गतानां ( पहुँचने पर ) निधानं=द्रव्यम्, धनं वा ( धन ), असंदिग्धं=निःसंशयं ( निश्चित ), प्राप्स्यथ=अवाप्स्यथ ( प्राप्त करोगे ), व्याघुट्यतां=प्रत्यागम्यताम् ( लौट करके चले आना )।

हिन्दी—अतः हम लोगों के योग्य धनोपार्जन का कोई उपाय कहिये। हमलोग, भूगर्भ प्रवेश, शाकिनी साधन, श्मशान साधन, नरमांस विक्रय और सिद्ध गुटिका बनाने आदि के कार्य करने को प्रस्तुत हैं। आप इनमें से कोई भी एक उपाय बता सकते हैं। सुना जाता है कि आप एक अद्भुत शक्ति-सम्पन्न सिद्ध पुरुष हैं। हमलोग भी हर स्थिति का सामना करने को प्रस्तुत हैं। कहा भी गया है कि—श्रेष्ठजनों के कार्य को पूर्ण करने में श्रेष्ठ जन ही समर्थ होते हैं। क्योंकि, बड़वानल को समुद्र के अतिरिक्त और कौन धारण कर सकता है (भर सकता है) ॥ ३४ ॥

भैरवानन्द ने उनकी कार्य-सिद्धि के लिए अनेक कार्यों का सम्पन्न करने वाली चार सिद्ध-वर्तिकाओं को बनाकर उन्हें देते हुए कहा—"हिमालय की ओर चले जाओ। वहाँ पहुँच कर जिस स्थान में वर्ति गिर जायगी वहाँ तुम्हें निश्चित रूप से धन मिलेगा। वर्ति गिरने वाले स्थान को खोदकर धन निकाल लेना और प्राप्त धन को लेकर लौट आना।"

तथाऽनुष्ठिते तेषां गच्छतामेकतमस्य हस्ताद्वर्तिर्निपपात। अथाऽसौ यावत्तं प्रदेशं खनति, तावत्ताम्रमयी भूमिः। ततस्तेनाऽभिहितम्—"अहो, गृह्यतां स्वेच्छया ताम्रम्"।

अन्ये प्रोचुः—"भो मूढ! किमनेन क्रियते यत् प्रभूतमपि दारिद्र्यं न नाशयति। तदुत्तिष्ठ, अग्रतो गच्छामः।"

सोऽब्रवीत्—"यान्तु भवन्तः। नाऽहमग्रे यास्यामि।" एवमभिधाय ताम्रं यथेच्छया गृहीत्वा प्रथमो निवृत्तः।

ते त्रयोऽपि अग्रे प्रस्थिताः। अथ किञ्चिन्मात्रं गतस्याऽग्रेसरस्य वर्तिर्निपपात। सोऽपि यावत्खनितुमारब्धस्तावद् रूप्यमयी क्षितिः। ततः प्रहर्षितः प्राह—यत्—"भो भो, गृह्यतां यथेच्छया रूप्यम्। नाऽग्रे गन्तव्यम्।"

तावूचतुः—"भोः, पृष्ठतस्ताम्रमयी भूमिः, अग्रतो रूप्यमयी। तन्नूनमग्रे सुवर्णमयी भविष्यति। किंचाऽनेन प्रभूतेनाऽपि दारिद्र्यनाशो न भवति। तदावामग्रे यास्यावः।" एवमुक्त्वा द्वावप्यग्रे प्रस्थितौ। सोऽपि स्वशक्त्या रूप्यमादाय निवृत्तः।

व्याख्या—तेषां = विप्रपुत्राणाम् (उनमें से), एकतमस्य = एकस्य (एक के), ताम्रमयी भूमिः = ताम्रखनिः (ताँबे की खान), अनेन = ताम्रेण (इससे) प्रभूतमपि = अधिकमपि (अधिक होने पर भी), दारिद्र्यं = निर्धनत्वं (दरिद्रता को), न नाशयति = न विनाशयति (मिटा नहीं सकता है)। अग्रेसरस्य = पुरस्सरस्य (अग्रवर्ती के), रूप्यमयी = रजतमयी (चाँदी की), क्षितिः = भूमिः (भूमि मिली)। अनेन = रजतेन (चाँदी), रूप्यम् = रजतम् (चाँदी को), निवृत्तः = परावृत्तः (लौट गया)।



हिन्दी—सिद्धवर्तिकाओं को लेकर वे हिमालय की ओर चल पड़े। वहाँ पहुँचने पर

उनमें से एक के हाथ से वर्ति गिर पड़ी। वह जब उस स्थान को खोदने लगा तो ताँबे की खान को देखकर उसने अन्य साथियों से कहा—"इसमें से इच्छानुसार ताँबा निकाल लो।"

उसकी बात को सुनकर दूसरों ने कहा—"मूर्ख! इसको लेकर हम क्या करेंगे? यह अत्यधिक होने पर भी हमारी दरिद्रता को नहीं मिटा सकता है। उठो, आगे चला जाय।"

उसने कहा—"तुम लोग जाओ। मैं आगे नहीं जाऊँगा।" यह कहकर वह इच्छानुकूल ताँबे को लेकर लौट गया।

उसके लौट जाने पर शेष तीनों व्यक्ति आगे बढ़े। अभी वे कुछ ही दूर गये थे कि उनके अग्रेसर की वर्ति गिर पड़ी। उसने जब खोदना आरम्भ किया तो चाँदी की खान दिखाई पड़ी। उस खान को देखकर प्रसन्नतापूर्वक उसने कहा—"मित्रों! इसमें से यथेच्छ चाँदी ले लो और लौट चलो, आगे मत जाओ।"

उसकी बात को सुनकर शेष दोनों ने कहा—"भाई, पीछे ताँबे की खान मिली थी, उससे आगे चाँदी को खान मिली है, इससे आगे निश्चय ही सोने की खान मिलेगी; इसको लेकर हम क्या करेंगे कि अधिक से अधिक लेकर लौटने पर भी हमारी दरिद्रता दूर नहीं हो सकेगी। अतः हम आगे जायेंगे" यह कहकर दोनों आगे बढ़ गये। द्वितीय व्यक्ति भी यथाशक्ति चाँदी लेकर लौट गया।

अथ तयोरपि गच्छतोरेकस्याऽग्रे वर्तिः पपात। सोऽपि प्रहृष्टो यावत्खनति, तावत्सुवर्णभूमिं दृष्ट्वा द्वितीयं प्राह—"भोः, गृह्यतां स्वेच्छया सुवर्णम्। सुवर्णादुन्यन्न किञ्चिदुत्तमं भविष्यति।"

स प्राह—"मूढ! न किञ्चिद् वेत्सि। प्राक्ताम्रं, ततो रूप्यं, ततः सुवर्णम्। तन्नूनमतः परं रत्नानि भविष्यन्ति, येषामेकतमेनाऽपि दारिद्र्यनाशो भवति। तदुत्तिष्ठ, अग्रे गच्छावः। किमनेन भारभूतेनाऽपि प्रभूतेन?"

स आह—"गच्छतु भवान्। अहमत्र स्थितस्त्वां प्रतिपालयिष्यामि।" तथाऽनुष्ठिते, सोऽपि गच्छन्नेकाकी, ग्रीष्माऽर्कप्रतापसन्तप्ततनुः पिपासाकुलितः सिद्धिमार्गच्युत इतश्चेतश्च बभ्राम।

अथ भ्राम्यन्, स्थलोपरि पुरुषमेकं रुधिरप्लावितगात्रं भ्रमच्चक्रमस्तकमपश्यत्। ततो द्रुततरं गत्वा तमवोचत्—"भोः, को भवान्? किमेवं चक्रेण भ्रमता शिरसि तिष्ठसि? तत्कथय मे यदि कुत्रचिज्जलमस्ति।"

व्याख्या—सोऽपि = अन्यतमोऽपि (दूसरे ने भी), उत्तमं = श्रेष्ठं, वेत्सि = न जानासि (कुछ नहीं जानते हो), प्राक् = आदौ (पहले), येषां = रत्नानां (रत्नों में से), एकतमेन = एकेन (एक से ही) भारभूतेन = भारस्वरूपेण (भारस्वरूप), ग्रीष्मार्कप्रतापसन्तप्ततनुः = ग्रीष्मतापात्तप्तकायः (ग्रीष्मार्कस्य = ग्रीष्मकालिकस्य भानोः, प्रतापेन = प्रचण्डातपेन संतप्ता, तनुः = शरीरं यस्यासौ) (भीषण गर्मी से संतप्त काय), पिपासाकुलितः = पिपासया व्याकु-

लितः ( प्यास से व्याकुल होकर ), सिद्धिमार्गच्युतः = गन्तव्यस्थानात्स्खलितः ( गन्तव्य मार्ग से स्खलित होकर ), इतश्चेतश्च = इतस्ततः ( इधर उधर ) भ्राम्यन् = परिभ्रमन् ( घूमता हुआ ) स्थलोपरि = समतलभूमौ ( समतल भूमि पर ), रुधिरप्लावितगात्रं = रुधिराभिषिक्तगात्रं ( खून से लथपथ ), भ्रमच्चक्रमस्तकं = चक्रभ्रमियुक्तशिरसं ( शिर पर घूमते हुए चक्र से युक्त व्यक्ति को ) द्रुततरं = शीघ्रातिशीघ्रं ( यथाशीघ्रं ) अवोचत् = अकथयत् ( कहा ) ।

हिन्दी—शेष दोनों व्यक्तियों के कुछ और दूर जाने के बाद उसमें से एक के हाथ की वर्ति गिर पड़ी। प्रसन्न होकर अब उसने खोदना प्रारंभ किया तो सोने की खान मिली। उसे देखकर उसने द्वितीय व्यक्ति से कहा—"इसमें से यथेच्छ सुवर्ण ले लो। सोने से बढ़कर कोई दूसरी उत्तम वस्तु नहीं मिलेगी।"

द्वितीय ने कहा—"मूर्ख ! तुम कुछ नहीं जानते हो। पहले ताँबे की खान मिली थी, उसके बाद चाँदी की खान मिली, अब सोने की खान मिली है। इसके बाद निश्चय ही रत्नों की खान मिलेगी। उसमें से यदि एक भी रत्न मिल गया तो दरिद्रता दूर हो जायेगी। इसलिए उठो, और आगे चला जाय। भारस्वरूप अधिक सुवर्ण को लेकर भी क्या होगा ?"

यह सुनकर द्वितीय ने कहा—"तुम जाओ, मैं यहाँ रहकर तुम्हारी प्रतीक्षा करूँगा।"

अन्त में विवश होकर चतुर्थ को एकाकी जाना पड़ा। कुछ दूर जाने के बाद वह ग्रीष्म ऋतु की भीषण गर्मी से संतप्त एवं प्यास से व्याकुल होकर लक्ष्य से च्युत हो गया और इधर-उधर घूमने लगा।

इधर-उधर घूमते हुये उसने खून से लथपथ एक व्यक्ति को देखा जिसके शिर पर चक्र घूम रहा था। यथाशीघ्र उसके पास जाकर उसने पूछा—"आप कौन हैं ? इस प्रकार शिर पर घूमते हुए चक्र के नीचे क्यों बैठे हैं ? यदि पास में कहीं जल हो तो कृपया बताने का कष्ट करें।"

एवं तस्य प्रवदतस्तच्चक्रं तत्क्षणात्तस्य शिरसो ब्राह्मणमस्तके चटितम् ।

स आह—"भद्र ! किमेतत् ?"

स आह—"ममाऽप्येवमेतच्छिरसि चटितम् ?"

स आह—"तत्कथय कदैतदुत्तरिष्यति ? महती मे वेदना वर्तते।"

स आह—"यदा त्वमिव कश्चिद्धृतसिद्धवर्तिरेवमागत्य, त्वामालापयिष्यति तदा तस्य मस्तकं चटिष्यति।"

स आह—"कियान्कालस्तवैवं स्थितस्य ?"

स आह—"साम्प्रतं को राजा धरणीतले ?"

स आह—"वीणावत्सराजः।"

स आह—"अहं तावत्कालसङ्ख्यां न जानामि। परं यदा रामो राजासीत्तदाऽहं दारिद्र्योपहतः सिद्धवर्तिमादायानेन पथा समायातः। ततो मयाऽन्यो नरो मस्तकधृतचक्रो दृष्टः, पृष्टश्च। ततश्चैतज्जातम्।"

स आह—"भद्र ! कथं तवैवं स्थितस्य भोजनजलप्राप्तिरासीत् ?"

स आह—"भद्र ! धनदेन निधानहरणभयात्सिद्धानामेतच्चक्रपतनरूपं भयं दर्शितम् । तेन कश्चिदपि नागच्छति । यदि कश्चिदायाति, स क्षुत्पिपासा-निद्रारहितो, जरामरणवर्जितः केवलमेवं वेदनामनुभवति इति । तदाज्ञापय मां स्वगृहाय ।" इत्युक्त्वा गतः ।

व्याख्या—प्रवदतः=वार्तां कुर्वतः ( वार्तालाप करते समय ), तत्क्षणात्=तस्मिन्नेव काले ( उसी समय ), चटितम्=आरुरोह ( चढ़ गया ) । त्वमिव=त्वत्सदृशः ( तुम्हारी तरह से ), आलापयिष्यति=वार्तां करिष्यति ( बातचीत करेगा ) कालसङ्ख्यां=कालगणनां ( समय की गणना ) दारिद्र्योपहतः=दारिद्र्यपीडितः ( दरिद्रता से दुःखी होकर ), मस्तक-धृतचक्रः=चक्रयुक्तशिराः ( मस्तके धृतं चक्रं येन सः ) (चक्र युक्त शिर वाले व्यक्ति), धनदेन कुबेरेण ( कुवेर से ), निधानहरणभयात्=धनापहरणभयात् ( धन की चोरी के डर से ) सिद्धानां=सिद्ध्यर्थमागतानां ( अर्थसिद्धि के लिए आने वाले व्यक्तियों को ), क्षुत्पिपासानि-द्रारहितः=बुभुक्षापिपासादिविरहितः ( भूख, प्यास और निद्रा से रहित होकर ), जरामरण-वर्जितः=जरामृत्युविनर्जितः ( बुढ़ापा और मृत्यु के भय से रहित होकर ), वेदनामनुभवति= =कष्टमनुभवति ( दुःख का अनुभव करता है ) । स्वगृहाय=निजगेहगमनाय ( अपने घर जाने के लिए ) ।

हिन्दी—अभी उसने बात चीत आरम्भ ही की थी कि वह चक्र उस व्यक्ति के शिर से उतर कर उस ब्राह्मण के शिर पर चढ़ गया । यह देखकर उसने आश्चर्यचकित होकर पूछा—"मित्र ! यह क्या ?"

उसने कहा—"यह मेरे शिर पर भी इसी प्रकार चढ़ गया था ।"

ब्राह्मण ने दुःखी होकर पूछा—"कृपया यह बतलाइये कि यह उतरेगा कब ? मुझे बहुत अधिक पीड़ा हो रही है ।"

उसने उत्तर दिया—"आप की ही तरह जब कोई दूसरा व्यक्ति इसी प्रकार सिद्धवर्ति को लेकर आयेगा और बातचीत करेगा, तब यह आपके मस्तक से उतर कर उसके मस्तक पर चढ़ जायगा ।"

"आपको कितने दिनों तक यहाँ बैठना पड़ा ?"

"इस समय पृथ्वी पर कौन राजा राज्य कर रहा है ?"

"वीणावत्सराज ।"

यह सुनकर उस व्यक्ति ने कहा—"मैं ठीक-ठीक समय तो नहीं बता सकता हूँ, किन्तु जब राम राजा थे तब मैं दरिद्रता से पीड़ित होकर सिद्धवर्ति के साथ इसी मार्ग से जा रहा था । यहाँ पर मैंने एक अन्य व्यक्ति को देखा था जिसके शिर पर यह चक्र घूम रहा था । उससे मैंने इसके विषय में अभी पूछा हीं था कि यह मेरे शिर पर चढ़ गया था ।"

ब्राह्मण ने पूछा—"मित्र ! इस प्रकार चक्र के नीचे बैठे रहने पर आप को भोजन और जल कैसे मिलता था ?"

उसने उत्तर में कहा—"महाशय ! कुबेर ने धन की चोरी के भय से अर्थ की चिन्ता में इधर आने वाले व्यक्तियों के लिये चक्र के गिरने का यह भय दिखाया है। अतएव इधर कोई नहीं आता है। यदि लोभवश कोई आ पड़ा तो वह इसी प्रकार भूख, प्यास, निद्रा, बुढ़ापा और मृत्यु से रहित होकर केवल वेदना का ही अनुभव करता है। अब आप कृपया मुझे घर जाने की आज्ञा प्रदान करें।" यह कह कर वह तत्काल वहाँ से चला गया।

तस्मिंश्चिरयति स सुवर्णसिद्धिस्तस्यान्वेषणपरस्तत्पदपङ्क्त्या यावत् किञ्चिद् वनान्तरमागच्छति, तावद्रुधिरप्लावितशरीरस्तीक्ष्णचक्रेण मस्तके भ्रमता सवेदनः क्वणन्नुपविष्टस्तिष्ठतीति ददर्श। ततः तत्समीपवर्तिना भूत्वा, सबाष्पं पृष्टः—"भद्र ! किमेतत् ?"

स आह—"विधिनियोगः।"

स आह—"कथं तत् ? कथय कारणमेतस्य।"

सोऽपि तेन पृष्टः, सर्वं चक्रवृत्तान्तमकथयत्।

तत् श्रुत्वाऽसौ तं विगर्हयन्निदमाह—"भो ! निषिद्धस्त्वं मयाऽनेकशो न शृणोषि मे वाक्यम्। तत्किं क्रियते ! विद्यावानपि, कुलीनोऽपि, बुद्धिरहितः। अथवा साध्विदमुच्यते—

"वरं बुद्धिर्न सा विद्या विद्याया बुद्धिरुत्तमा।
बुद्धिहीना विनश्यन्ति, यथा ते सिंहकारकाः॥" ३५॥

चक्रधर आह—"कथमेतत् ?" सुवर्णसिद्धिराह—

व्याख्या—तस्मिन्=ब्राह्मणे (उसके), चिरयति=विलम्बिते सति (देर करने पर), अन्वेषणपरः=सन्धानतत्परः (खोजते हुए), तत्पदपङ्क्त्या=तत्पदचिह्नेन (उसके पद चिह्न से), वनान्तरं=काननान्तरं (द्वितीय वन में), तीक्ष्णचक्रेण=तीव्राग्रयुक्तेन चक्रेण (तेज धार वाले चक्र से), सवेदनः=कष्टयुक्त (पीडित), क्वणन्=सशब्दं रुदन् (रोते हुए), तत्समीपवर्तिना भूत्वा=तस्य सामीप्यं प्राप्य (उसके निकट जाकर), सबाष्पं=अश्रुयुक्तनेत्रम् (आँख में आँसू भरकर), विधिनियोगः=भाग्यविडम्बितम् (भाग्य का चक्कर) विगर्हयन्=निन्दयन् (निन्दा करते हुए), निषिद्धः=प्रतिषिद्धः (मना करने पर भी), नैव शृणोषि=नैवाशृणोः (नहीं सुना था), बुद्धिः=मतिः, बुद्धिहीनाः=प्रज्ञाविहीनाः (बुद्धिहीन व्यक्ति), सिंहकारकाः=सिंहप्रणेतारः (सिंह को जिलाने वाले ब्राह्मण)॥ ३५॥

हिन्दी—मित्र के अधिक विलम्ब करने पर सुवर्णसिद्धि उसकी खोज में चल पड़ा। उसके पदचिह्नों का अनुसरण करते हुए जब वह दूसरे वन में पहुँचा तो उसने देखा कि उसका सिर खून से लथपथ है, वह दुःखी होकर बैठा है और आह भर कर रो रहा है, उसके शिर पर एक

तीक्ष्णधार का चक्र घूम रहा था। अपने मित्र की इस स्थिति को देखकर वह बहुत दुःखी हुआ। उसकी आँखों में पानी भर आया। मित्र के सन्निकट जाकर उसने पूछा—"मित्र! यह क्या हुआ?"

उसने उत्तर में कहा—"भाग्य का चक्कर है मित्र!"

सुवर्णसिद्धि ने पुनः पूछा—"कैसे हुआ यह, इसका कारण तो बताओ?"

चक्रधर ने सम्पूर्ण वृत्तान्त को यथावत् सुना दिया। उस वृत्तान्त को सुनकर सुवर्णसिद्धि ने उसकी भर्त्सना करते हुए कहा—"मैंने तुमको कितना मना किया कि मत जाओ, किन्तु तुमने मेरी एक बात नहीं सुनी। अब क्या किया जा सकता है? तुम विद्वान् और कुलीन होते हुए भी वस्तुतः बुद्धिहीन हो। अथवा ठीक ही कहा गया है—

विद्या की अपेक्षा बुद्धि बड़ी होती है। उत्तम विद्यासम्पन्न व्यक्ति भी बुद्धि के अभाव में सिंह को जिलाने वाले ब्राह्मणों की तरह नष्ट हो जाते हैं।" (अपना ही प्राण खो बैठते हैं) ॥ ३५ ॥

चक्रधर ने पूछा—कैसे? सुवर्णसिद्धि ने कहा।

## ३. सिंहकारकमूर्खब्राह्मण-कथा

"कस्मिंश्चिदधिष्ठाने चत्वारो ब्राह्मणपुत्राः परस्परं मित्रभावमुपगता वसन्ति स्म। तेषां त्रयः शास्त्रपारङ्गताः, परन्तु बुद्धिरहिताः। एकस्तु बुद्धिमान् केवलं शास्त्रपराङ्मुखः। अथ तैः कदाचिन्मित्रैर्मन्त्रितं—"को गुणो विद्यायाः, येन देशान्तरं गत्वा भूपतीन् परितोष्यार्थोपार्जना न क्रियते। तत्पूर्वदेशं गच्छामः।"

तथाऽनुष्ठिते किञ्चिन्मार्गं गत्वा, तेषां ज्येष्ठतरः प्राह—"अहो, अस्माकमेकश्चतुर्थो मूढः, केवलं बुद्धिमान्। न च राजप्रतिग्रहो बुद्ध्या लभ्यते, विद्यां विना। तन्नास्मै स्वोपार्जितं दास्यामि। तद् गच्छतु गृहम्।" ततो द्वितीयेनाऽभिहितं—"भोः, सुबुद्धे! गच्छ त्वं स्वगृहं, यतस्ते विद्या नास्ति।" ततस्तृतीयेनाऽभिहितम्—"अहो, न युज्यते एवं कर्तुम्, यतो वयं बाल्यात्प्रभृत्येकत्र क्रीडिताः। तदागच्छतु महाऽनुभावोऽस्मदुपार्जितवित्तस्य समभागी भविष्यतीति। उक्तञ्च—

किं तया क्रियते लक्ष्म्या, या वधूरिव केवला।
या न वेश्येव सामान्या पथिकैरुपभुज्यते ॥ ३६ ॥

तथा च—

अयं निजः परो वेति गणना लघुचेतसाम्।
उदारचरितानान्तु वसुधैव कुटुम्बकम् ॥ ३७ ॥

तदागच्छत्वेषोऽपि'' इति।

व्याख्या—अधिष्ठाने=नगरे, तेषां=ब्राह्मणपुत्राणां (उनमें से), शास्त्रपारङ्गताः=शास्त्रमर्मज्ञाः (शास्त्रों के मर्मज्ञ थे), शास्त्रपराङ्मुखः=शास्त्रविमुखः (पढ़ा लिखा नहीं था), तैः=ब्राह्मणपुत्रैः (उन लोगों ने)। मन्त्रितं=विमर्शः कृतः (राय किया), देशान्तरं=विदेशं (दूसरे देश में), भूपतीन्=भूपान् (राजाओं को), परितोष्य=सन्तोष्य (सन्तुष्ट करके), अर्थोपार्जना=धनोपार्जना (धनार्जन), न क्रियते=न विधीयते (नहीं किया जाता है)।

तथानुष्ठिते=तथा कृते सति (यात्रा करने के बाद), एकः=चतुर्थः (चौथा), मूढः=मूर्खः (मूर्ख है), राजप्रतिग्रहः=राजदानं (राजा का दान), अस्मै=अमुष्मै मूर्खाय (इस मूर्ख को), स्वोपार्जितं=स्वार्जितं (अपने कमाये हुए धन में से), बाल्यात्प्रभृति=बाल्यकालादारभ्य (बचपन से ही), समभागी=सदृशभागी सदृशभाग्यो वा (समानभागी), भविष्यतीति।

अन्वयः—या सामान्या वेश्या इव पथिकैः न उपभुज्यते, या केवला वधूरिव (अस्ति) तया लक्ष्म्या किं क्रियते ॥ ३६ ॥

अयं निजः परो वा इति गणना लघुचेतसां (भवति), उदारचरितानां तु वसुधा एव कुटुम्बकं (भवति) ॥ ३७ ॥

व्याख्या—सामान्या=सर्वोपभोग्या (सभी के उपभोग की वस्तु), वेश्या=वाराङ्गना (वेश्या) पथिकैः=पान्थैः (पथिकों के द्वारा), वधूरिव=कुलभार्येव (या केवलेनात्मनैवोपभुज्यते) (कुल वधू की तरह), तया=असामान्यया (असाधारण), लक्ष्म्या=श्रिया (सम्पत्ति से), किं क्रियते=किं प्रयोजनमस्ति। क्या लाभ है) ॥ ३६ ॥

अयं निजः परो वा=अयं स्वकीयः परकीयो वा (यह मेरा है या दूसरे का) गणना=विचारः (यह विचार), लघुचेतसां=क्षुद्रात्मनां (भवति) (क्षुद्र व्यक्तियों का है), उदारचरितानाम्=उदारचित्तानां तु (उदार व्यक्तियों के लिए तो), वसुधैव=विश्वमेव (सम्पूर्ण विश्व ही), कुटुम्बकम्=आत्मीयं कुटुम्बकमिव (अपने कुटुम्ब के समान होता है) ॥३७॥ एषोऽपि=अयमपि (यह भी)।

हिन्दी—किसी नगर में चार ब्राह्मण-पुत्र निवास करते थे। उनमें से तीन शास्त्रमर्मज्ञ किन्तु बुद्धिहीन थे। और एक शास्त्र-विमुख था किन्तु लोक व्यवहार में चतुर था। एक दिन चारों ने आपस में यह विचार किया कि—"ऐसी विद्या से क्या लाभ है जिससे देश-विदेश जाकर राजाओं को सन्तुष्ट करके धन नहीं कमाया गया। अतः धनोपार्जन के लिए कहीं चलना चाहिए। पूर्व दिशा में चलना अधिक लाभप्रद होगा।"

यह निश्चय करके वे चारों धनोपार्जन के लिए चल पड़े। कुछ दूर जाने के बाद उनमें से ज्येष्ठतर ने कहा—बन्धुओं, हममें से चौथा व्यक्ति मूर्ख है। वह केवल लोक व्यवहार में

पटु है। राजाओं का दान विद्या के अभाव में केवल बुद्धि से नहीं मिलता है। अतः मैं अपनी कमाई में से इसको हिस्सा नहीं दूँगा। अच्छा तो यह होगा कि यह घर लौट जाय। उसकी इस बात को सुनकर द्वितीय ने कहा--"अरे, सुबुद्धे! तुम अपने घर को लौट जाओ, क्योंकि तुम विद्वान् नहीं हो।" इसपर तृतीय ने कहा--भाई! मेरे विचार से ऐसा करना उचित नहीं होगा। क्योंकि हम लोग बाल्यकाल से ही एक साथ खेले हैं। अतएव इसको भी चलने देना चाहिए। हमारे कमाए हुए धन में से यह भी एक हिस्सा ले लिया करेगा। कहा भी गया है कि—

जो सामान्य वेश्या की तरह पथिकों के उपयोग में नहीं आ सकती है और केवल कुल-बधू की भाँति एक ही व्यक्ति के उपयोग की वस्तु होती है, उस लक्ष्मी से लाभ ही क्या है? ॥ ३६ ॥

और भी--यह अपना है और यह पराया है, इस प्रकार का विचार संकुचित भावना के व्यक्ति करते हैं। उदार व्यक्तियों के लिए समस्त विश्व अपना ही होता है ॥ ३७ ॥

अतः इसको भी चलने दो।

तथाऽनुष्ठिते तैर्मार्गाश्रितैरटव्यां कतिचिदस्थीनि दृष्टानि। ततश्चैकेनाऽभिहितम्—"अहो, अद्य विद्याप्रत्ययः क्रियते। किञ्चिदेतत्सत्त्वं मृतं तिष्ठति। तद् विद्याप्रभावेण जीवनसहितं कुर्मः। अहमस्थिसञ्चयं करोमि।" ततश्च तेनौत्सुक्यादस्थिसञ्चयः कृतः। द्वितीयेन चर्ममांसरुधिरं संयोजितम्। तृतीयोऽपि यावज्जीवनं सञ्चारयति, तावत्सुबुद्धिना निषिद्धः—"भोः तिष्ठतु भवान्। एष सिंहो निष्पाद्यते। यद्येनं सजीवं करिष्यसि ततः सर्वानपि व्यापादयिष्यति।"

व्याख्या—मार्गाश्रितैः=पथि गच्छद्भिः (रास्ते में चलने वाले), अटव्यां=वने (जङ्गल में), अस्थीनि=कुल्यानि (कीकसं कुल्यमस्थि चेत्यमरः) (हड्डियाँ), विद्याप्रत्ययः=विद्यापरीक्षा, विद्यायाः प्रत्यक्षानुभवः (विद्या की परीक्षा), सत्वं=जीवः (प्राणी); औत्सुक्यात्=औत्कण्ठ्यात् (उत्सुकतापूर्वक), संयोजितम्=समायोजितम् (जोड़कर खड़ा किया), जीवनं सञ्चारयति=प्राणसञ्चारं करोति (प्राणसञ्चार करने लगा), निष्पाद्यते=विनिर्मीयते (ज़िला रहे हो), व्यापादयिष्यति=मारयिष्यति (मार डालेगा)।

हिन्दी--मार्ग में जाते हुये उन लोगों ने कहीं जङ्गल में कुछ हड्डियों को देखा। उन हड्डियों को देखकर उनमें से एक ने कहा--आज विद्या की परीक्षा की जाय। यह कोई मरा हुआ जीव है। विद्या के प्रभाव से इसको जिलाया जाय। मैं हड्डियों को एकत्र करता हूँ। यह कहकर उसने उत्सुकतापूर्वक हड्डियों को एकत्र किया। द्वितीय ने उन हड्डियों में चाम, माँस एवं खून का सञ्चार किया। इसके बाद जब तृतीय व्यक्ति ने उसमें प्राणसञ्चार करना प्रारम्भ किया तो चतुर्थ व्यक्ति-सुबुद्धि ने उसे रोकते हुए कहा—"थोड़ी देर रुक जाओ। तुम एक सिंह को जिलाने जा रहे हो। यदि तुमने इसको जिला दिया तो यह हम सभी को मार डालेगा।"

इति तेनाऽभिहितः स आह—"धिङ्मूर्ख ! नाऽहं विद्याया विफलतां करोमि।" ततस्तेनाऽभिहितम्—"तर्हि प्रतीक्षस्व क्षणं, यावदहं वृक्षमारोहामि।"

तथाऽनुष्ठिते, यावत्सजीवः कृतस्तावत्ते त्रयोऽपि सिंहेनोत्थाय व्यापादिताः। स च पुनर्वृक्षादवतीर्य, गृहं गतः।" अतोऽहं ब्रवीमि—"वरं बुद्धिर्न सा विद्या" इति। अतः परमुक्तं च सुवर्णसिद्धिना—

"अपि शास्त्रेषु कुशला लोकाचारविवर्जिताः।
सर्वे ते हास्यतां यान्ति, यथा ते मूर्खपण्डिताः" ॥ ३८ ॥

चक्रधर आह—"कथमेतत् ?" सोऽब्रवीत्—

व्याख्या—विफलतां = निष्फलतां ( विद्या की विफलता ), प्रतीक्षस्व = परिपालय ( प्रतीक्षा कर लो ), सजीवः कृतः = प्राणसञ्चारेण नियोजितः ( जीवित कर दिया )।

व्याख्या—शास्त्रेषु = विद्यासु ( विद्याओं में ) कुशलाः = पटवः, निपुणाः ( निपुण होने पर भी ), लोकव्यवहारशून्याः ( लोक-व्यवहार से अनभिज्ञ ), हास्यतां = परिहासपात्रतां ( परिहास को ), यान्ति = गच्छन्ति ( प्राप्त होते हैं ), ते = लोकानभिज्ञाः ( लोक व्यवहार से अनभिज्ञ थे )।

मूर्खपण्डिताः = शास्त्रज्ञाः, किन्तु लोकव्यवहारशून्याः ( विद्वान् किन्तु लोकव्यवहार से अनभिज्ञ ) हास्यतां गताः ॥ ३८ ॥

हिन्दी—सुबुद्धि के उपर्युक्त कथन को सुनकर तृतीय व्यक्ति ने कहा—"अरे मूर्ख ! मैं अपनी विद्या को विफल नहीं कर सकता हूँ।"

उसके कथन को सुनकर सुबुद्धि ने कहा—"थोड़ी देर ठहर जाओ। मैं अभी वृक्ष पर चढ़ जाता हूँ तब अपनी विद्या का प्रयोग करना।"

उसके वृक्षारोहण के अनन्तर ज्योंही ब्राह्मण ने उस सिंह में प्राणसञ्चार किया त्योंही उठकर सिंह ने तीनों को मार डाला। और सुबुद्धि वृक्ष से उतरकर घर चला गया। अतएव मैं कहता हूँ कि विद्या से बुद्धि उत्तम होती है। इस कथा को कहने के बाद सुवर्णसिद्धि ने पुनः कहा—

"शास्त्रों में कुशल होने पर भी लोक-व्यवहार से अनभिज्ञ रहने पर व्यक्ति उसी प्रकार उपहास का विषय बन जाता है जैसे वे लोक-व्यवहार से अनभिज्ञ पण्डित बने थे" ॥ ३८ ॥

चक्रधर ने पूछा—"कैसे ?" सुवर्णसिद्धि ने कहा—

## ४. मूर्खपण्डित-कथा

"कस्मिंश्चिदधिष्ठाने चत्वारो ब्राह्मणाः परस्परं मित्रत्वमापन्ना वसन्ति स्म। बालभावे तेषां मतिरजायत—"भोः! देशान्तरं गत्वा, विद्याया उपार्जनं क्रियते।"

अथान्यस्मिन्दिवसे ते ब्राह्मणाः परस्परं निश्चयं कृत्वा विद्योपार्जनार्थं कान्यकुब्जे गताः। तत्र च विद्यामठे गत्वा पठन्ति। एवं द्वादशाब्दानि यावदेकचित्ततया पठित्वा, विद्याकुशलाऽस्ते सर्वे सञ्जाताः।

ततस्तैश्चतुर्भिर्मिलित्वोक्तम्—"वयं सर्वे विद्यापारङ्गताः। तदुपाध्यायमुत्कलापयित्वा स्वदेशे गच्छामः। तथैवाऽनुष्ठीयतामित्युक्त्वा ब्राह्मणा उपाध्यायमुत्कलापयित्वा, अनुज्ञां लब्ध्वा पुस्तकानि नीत्वा, प्रचलिताः। यावत्किञ्चिन्मार्गं यान्ति, तावद् द्वौ पन्थानौ समायातौ दृष्ट्वा उपविष्टाः सर्व।

शब्दार्थ—मित्रत्वमापन्नाः—मित्रभावमुपगताः (मित्रता को प्राप्त) बालभावे=बाल्यकाले (बचपन में), मतिरजायत=मतिरभूत् (यह बात मन में आयी कि), विद्योपार्जनार्थं=पठनार्थं (पढ़ने के लिये), विद्यामठे=पाठशालायाम् (विद्यालय में), द्वादशाब्दानि=द्वादशवर्षाणि यावत् (बारह वर्ष तक), एकचित्ततया=एकाग्रधिया (एकनिष्ठ, तन्मय होकर) विद्याकुशलाः=विद्वांसः (विद्वान्), विद्यापारङ्गताः=सकलविद्याविशारदाः (उद्भट विद्वान्), उपाध्यायं=गुरुम् (गुरुको), उत्कलापयित्वा=पृष्ट्वा (पूछकर), अनुज्ञाम्=आज्ञाम् (अनुमति को)। द्वौ पन्थानौ=द्वौ मार्गौ (दो रास्ते) समायातौ=समागतौ।

हिन्दी—"किसी नगर में चार ब्राह्मण रहते थे। उनकी आपस में बड़ी मित्रता थी। कभी बाल्यकाल में उनके मन में आया कि कहीं चलकर विद्याध्ययन किया जाय।

दूसरे दिन आपस में परामर्श करने के बाद वे विद्याध्ययन के लिये कान्यकुब्ज देश की ओर चल पड़े। वहां पहुंच कर वे किसी पाठशाला में अध्ययन करने लगे। एकाग्रचित्त से बारह वर्ष तक अध्ययन करने के बाद चारों उद्भट विद्वान् हो गये।

एक दिन चारों ने आपस में परामर्श किया—हम सभी विद्याओं में निपुण हो चुके हैं। गुरु की आज्ञा लेकर हमें अब अपने घर चलना चाहिये। यह निर्णय करके वे गुरु के पास गये और गुरु की आज्ञा लेकर अपनी-अपनी पुस्तकों को साथ ले उन्होंने घर के लिये प्रस्थान किया।

कुछ दूर आने के पश्चात् मार्ग को दो तरफ जाते हुए देखकर, किस मार्ग से चलना चाहिये यह निर्णय करने के लिये वे एक स्थान पर बैठ गये।

तत्रैकः प्रोवाच—"केन मार्गेण गच्छामः ?"

एतस्मिन्समये तस्मिन् पत्तने कश्चिद् वणिक्पुत्रो मृतः। तस्य दाहाय महाजनो गतोऽभूत्। ततश्चतुर्णां मध्यादेकेन पुस्तकमवलोकितं—"महाजनो येन गतः स पन्थाः" इति। तन्महाजनमार्गेण गच्छामः।

अथ ते पण्डिता यावन्महाजनमेलापकेन सह यान्ति, तावद्रासभः कश्चित्तत्र श्मशाने दृष्टः। अथ द्वितीयेन पुस्तकमुद्घाट्यावलोकितम्—

"उत्सवे व्यसने प्राप्ते दुर्भिक्षे शत्रुसङ्कटे।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः" ॥ ३९ ॥

तदहो! अयमस्मदीयो बान्धवः। ततः कश्चित्तस्य ग्रीवायां लगति, पादौ प्रक्षालयति।

व्याख्या—पत्तने=नगरे (शहर में), दाहाय=अग्निसंस्काराय (दाहसंस्कार के लिये), महाजनः=वणिक्समूहः (बनिये), महाजनः=श्रेष्ठजनः (महानुभाव), महाजनमेलापकेन=वणिक्समूहेन (बनियों के साथ), रासभः=गर्दभः (गदहा)।

व्याख्या—उत्सवे=हर्षोल्लासकाले (उत्सव के समय), व्यसने=दुःखे (दुःख में), शत्रुसङ्कटे=शत्रुसंबाधे (शत्रुओं द्वारा घिर जाने पर), राजद्वारे=राजसभायां (राजा की सभा में), बान्धवः=परिजनः (स्वजन कहा गया है)। अयम्=रासभः (यह), तस्य=गर्दभस्य (उस गदहे के), ग्रीवायां=कण्ठे (गले में), पादौ=चरणौ (पैरों को), प्रक्षालयति=प्रोञ्छति (धोने पोछने लगा)।

हिन्दी—उनमें से एक ने पूछा—"किस मार्ग से चला जाय ?"

उसी समय पास के नगर में एक बनिये का लड़का मर गया था। उसके दाह-संस्कार के लिये कुछ लोग जा रहे थे। उस शव-यात्रा को देखकर उन चारों में से एक ने ग्रन्थ को देखकर कहा—"महाजन जिस मार्ग से जाय, अन्य व्यक्तियों को भी उसी मार्ग से चलना चाहिये।" अतः हमें भी वणिक्समूह के साथ चलना चाहिये।

उसके कथन पर चारों व्यक्ति वणिक् समूह के पीछे चल दिये। श्मशान में पहुँचकर उन लोगों ने एक गदहे को देखा। द्वितीय ने पुस्तक खोलकर देखते हुए कहा—"उत्सव के समय, दुःख में, दुर्भिक्ष पड़ने पर, शत्रुओं से घिर जाने पर, राजसभा में तथा श्मशान में जो व्यक्ति मिले उसे स्वजनवत् समझना चाहिये" ॥ ३९ ॥

"अतः यह गर्दभ भी हमारा स्वजन ही होगा।" उसके इस कथन को सुनकर उनमें से कोई तो उस गदहे को गले से लगा और कोई उसका पैर धोकर पोंछने लगा।

अथ यावत्ते पण्डिताः दिशामवलोकनं कुर्वन्ति तावत्कश्चिदुष्ट्रो दृष्टः। तैश्चोक्तम्—"एतत्किम् ?"

तावत्तृतीयेन पुस्तकमुद्घाट्योक्तम्—"धर्मस्य त्वरिता गतिः। तन्नूनमेष धर्मस्तावत्।" चतुर्थेनोक्तम्—'इष्टं धर्मेण योजयेत्"।

अथ तैश्च रासभ उष्ट्रग्रीवायां बद्धः। तत्तु केनचित्तत्स्वामिनो रजकस्याग्रे कथितम्। यावद्रजकस्तेषां मूर्खपण्डितानां प्रहारकरणाय समायातस्तावत्ते प्रनष्टाः।

ततो यावदग्रे किञ्चित्स्तोकं मार्गं यान्ति तावत्काचिन्नदी समासादिता। तस्य जलमध्ये पलाशपत्रमायातं दृष्ट्वा पण्डितेनैकेनोक्तम्—

"आगमिष्यति यत्पत्रं तदस्मांस्तारयिष्यति" एतत्कथयित्वा तत्पत्रस्योपरि पतितो यावन्नद्या नीयते तावत्तं नीयमानमवलोक्याऽन्येन पण्डितेन केशान्तं गृहीत्वोक्तम्—

"सर्वनाशे समुत्पन्ने अर्धं त्यजति पण्डितः।
अर्धेन कुरुते कार्यं, सर्वनाशो हि दुःसहः॥" ४०॥

इत्युक्त्वा तस्य शिरश्छेदो विहितः।

व्याख्या—त्वरिता = सत्वरा (तीव्र), गतिः = गमनम् (चाल) इष्टं = मित्रं (मित्र को) धर्मेण योजयेत् = नियोजयेत् (धर्म में जोड़ना या लगाना चाहिये), बद्धः = निबद्धः (बाँध दिया), तत्तु = तद्वृत्तान्तं (उस समाचारको), रजकस्य = निर्णेजकस्य ('निर्णेजकः स्याद्रजकः' इत्यमरः) (धोबी के), प्रहारकरणाय = ताडनाय (मारने के लिए) ते = पण्डिताः (वे) प्रनष्टाः = गताः पलायिताः (चले गये)। स्तोकम् = अल्पं (थोड़ी दूर), समासादिता = प्राप्ता (मिली), पलाशपत्रं = पलाशवृक्षस्य पत्रं (पलाश का पत्ता), पत्रं = पर्णं, वाहनं वा ("यानं युग्यं पत्रं च धोरणम्" इत्यमरः) (पत्ता या वाहन = नौका), तारयिष्यति = पारं प्रापयिष्यति (पार ले जायगा), पतितः = पपात (कूद पड़ा), नद्या नीयते = जले निमज्जति (पानी में डूबने लगा), केशान्तं = शिरोरुहं (चोटी)।

व्याख्या—सर्वनाशे समुत्पन्ने = विनाशे प्राप्ते सति, (सब के नाश की स्थिति में), पण्डितः = विज्ञो जनः (चतुर व्यक्ति), दुःसहः = सोढुमशक्यः (असह्य)॥ ४०॥

शिरश्छेदः = मस्तकवर्तनम्, विहितः = कृतः।

हिन्दी—तदनन्तर जब उन लोगों ने अन्य दिशाओं को देखा तो उन्हें एक ऊँट दिखाई पड़ा। उसे देखकर सबों ने आपस में पूछा "यह क्या है?"

तब तृतीय पण्डित ने पुस्तक को खोलते हुए कहा—"धर्म की गति तीव्र होती है। यह धर्म होगा।" इस पर चतुर्थ पण्डित ने कहा—"मित्र को धर्म के साथ जोड़ देना चाहिये।" यह विचार करके उन पण्डितों ने गदहे को ऊँट के गले में बाँध दिया।

उनके इस कृत्य की सूचना जब किसी ने जाकर धोबी को दी तो वह उन्हें पीटने के लिये दौड़कर आया, किन्तु उसके आने से पूर्व ही वे वहाँ से भाग चुके थे।

इसके बाद जब वे कुछ दूर और आगे गये तो एक नदी मिल गयी। उसकी धार में एक पलाश का पत्ता कहीं से बहता हुआ आ रहा था। उसे देखकर उनमें से एक ने कहा—"आनेवाला पत्र हमें उस पार उतार देगा!"

यह कहकर वह मूर्ख पण्डित नदी में कूद पड़ा। जब वह नदी की धारा में बहने लगा तो दूसरे पण्डित ने उसकी चोटी को पकड़ कर कहा—

"सर्वनाश की स्थिति में चतुरजन विनष्ट होनेवाली वस्तु का आधा भाग छोड़ देते हैं और आधे से ही सन्तोष पूर्वक अपना कार्य चलाते हैं। क्योंकि सर्वनाश दुःसह होता है" ॥४०॥ यह सोचकर उस डूबते हुए पण्डित के मस्तक को काट लिया।

अथ तैश्च पश्चाद् गत्वा कश्चिद्ग्राम आसादितः। तेऽपि ग्रामीणैर्निमन्त्रिताः पृथग् गृहेषु नीताः। ततः, एकस्य सूत्रिका घृतखण्डसंयुता भोजने दत्ता। ततो विचिन्त्य पण्डितेनोक्तं यत्—"दीर्घसूत्री विनश्यति"। एवमुक्त्वा भोजनं परित्यज्य गतः। तथा द्वितीयस्य मण्डका दत्ताः, तेनाऽप्युक्तम्—"अतिविस्तारविस्तीर्णं तद्भवेन्न चिरायुषम्"। स च भोजनं त्यक्त्वा गतः। अथ तृतीयस्य वटिका भोजने दत्ता। तत्राऽपि तेन पण्डितेनोक्तम्—"छिद्रेष्वनर्था बहुलीभवन्ति।"। एवं ते त्रयोपि पण्डिताः क्षुत्क्षामकण्ठाः, लोकैर्हास्यमानास्ततः स्थानात् स्वदेशं गताः।"

व्याख्या—तैः = शेषैः (शेष तीन), ग्रामीणैः = ग्रामवासिभिः (ग्रामवासियों द्वारा), निमन्त्रिताः = भोजनार्थमामन्त्रिताः (निमन्त्रित होकर), घृतखण्डसंयुता = घृतशर्करामिश्रिता (घी, चीनी से बनाई हुई), दीर्घसूत्री = दीर्घसूत्रवान्, सालस्यो जनः (लम्बे सूत वाली वस्तु को खानेवाला या आलसी), मण्डका = रोटिका (रोटी), वटिका = बड़ा, बारा इति लोके ख्यातं वस्तु, छिद्रेषु = छिद्रयुक्तेषु (दोष युक्त या छिद्रयुक्त), अनर्थाः = आपत्तयः (आपत्तियाँ), बहुलीभवन्ति = स्फारीभवन्ति (बढ़ती ही जाती हैं)। क्षुत्क्षामकण्ठाः = क्षुधा शुष्ककण्ठाः, बुभुक्षिताः (भूखे रहकर), लोकैः = जनैः, हास्यमानाः = उपहासस्य विषयं नीयमानाः (उपहास के पात्र बनकर) गताः।

हिन्दी—शेष तीनों व्यक्ति कुछ दूर आगे जाने पर एक ग्राम में प्रवेश किये। ग्रामवासियों ने ब्राह्मण समझ कर उन्हें निमन्त्रित किया और वे अलग-अलग अपने-अपने घरों में ले गये।

किसी गृहस्थ ने उनमें से एक को घी चीनी में बनी हुई सेवई खाने को दी। उसे देखकर उस ब्राह्मण ने सोचा "दीर्घसूत्री व्यक्ति विनष्ट हो जाता है। अतः इसको खाकर मैं भी नष्ट हो जाऊँगा।" यह विचार करके वह भोजन को छोड़कर चला गया। दूसरे व्यक्ति को रोटी खाने को मिली। उसने सोचा—"अधिक विस्तृत वस्तु चिरस्थायी नहीं होती है।" अतः इसको खाकर मैं भी क्षीणायु हो जाऊँगा। यह सोचकर उसने भी भोजन करना छोड़ दिया।

पुनः तृतीय व्यक्ति को वड़ा मिला। उसने विचार किया कि सदोप होने पर आपत्तियाँ और अधिक बढ़ती जाती हैं, कहीं इसे खाकर मैं भी किसी आपत्ति में न फँस पड़ूँ। यह सोचकर वह भी भोजन छोड़कर चला आया। इस प्रकार तीनों ही भूखे रह गये और लोगों के उपहास के पात्र भी बने। अन्ततो गत्वा वे बिना खाये-पीये अपने घर को लौट गये।"

अथ सुवर्णसिद्धिराह—"यत्त्वं लोकव्यवहारमजानन्मया वार्यमाणोऽपि न स्थितः तत ईदृशीमवस्थामुपगतः। अतोहं ब्रवीमि—'अपि शास्त्रेषु कुशलाः" इति।

तत् श्रुत्वा चक्रधर आह—अहो, अकारणमेतत् यतो हि—

सुबुद्धयो विनश्यन्ति दुष्टदैवेन नाशिताः।
स्वल्पधीरपि तस्मिंस्तु कुले नन्दति सन्ततम् ॥ ४१ ॥

उक्तं च—

अरक्षितं तिष्ठति दैवरक्षितं, सुरक्षितं दैवहतं विनश्यति।
जीवत्यनाथोऽपि वने विसर्जितः, कृतप्रयत्नोऽपि गृहे न जीवति॥४२॥

तथा च—

शतबुद्धिः शिरस्थोऽयं लम्बते च सहस्रधीः।
एकबुद्धिरहं भद्रे! क्रीडामि विमले जले ॥ ४३ ॥

सुवर्णसिद्धिराह—"कथमेतत्?" स आह—

**व्याख्या**—वार्यमाणोऽपि=निवार्यमाणोऽपि (मना करने पर भी), ईदृशीं=चक्राच्छन्नमस्तकरूपां (चक्र से आच्छादित शिर जैसी), अवस्थां=स्थिति को, अकारणम्=निरर्थकम् (व्यर्थ है)।

**व्याख्या**—दुष्टदैवेन=प्रतिकूलभाग्येन (भाग्य की प्रतिकूलता से), सुबुद्धयः=सुधियः (बुद्धिमान् जन भी), तस्मिन्कुले=तत्रैव (उसी स्थान या वंश में), अल्पधीः=मन्दधीः (मूर्ख भी), नन्दति=मोदते (आनन्द मनाता है) ॥ ४१ ॥

**अन्वयः**—दैवरक्षितम् अरक्षितं तिष्ठति, दैवहतं सुरक्षितं विनश्यति। वने विसर्जितः अनाथोऽपि जीवति कृतप्रयत्नोऽपि गृहे न जीवति ॥ ४२ ॥

**व्याख्या**—दैवरक्षितं=भाग्यरक्षितं (भाग्य द्वारा रक्षित), दैवहतं=भाग्यविनाशितं वस्तु (भाग्य द्वारा नष्ट की हुई वस्तु) सुरक्षितं=सम्यग् रक्षितमपि (सुरक्षित भी), विसर्जितः=त्यक्तः (छोड़ा हुआ), अनाथः=अस्वामिकः (अनाथ); कृतप्रयत्नोऽपि=विहितयत्नोऽपि (प्रयत्न करने पर भी) न जीवति=विनश्यति ॥ ४२ ॥

**व्याख्या**—सहस्रधीः=सहस्रबुद्धिः। क्रीडामि=विलसामि (कल्लोल कर रहा हूँ)॥४३॥

**हिन्दी**—पूर्वोक्त कथा को कहकर सुवर्णसिद्धि ने कहा—"तुम लोक-व्यवहार में अपटु होने के कारण मेरे मना करने पर भी नहीं रुके। अतः तुम्हारी ऐसी दशा हुई है। इसलिए

मैं कहता हूँ—"शास्त्रज्ञ होने पर भी लोक-व्यवहार से अनभिज्ञ व्यक्ति उपहास का पात्र बनता है।"

उसकी इस बात को सुनकर चक्रधर ने कहा—"तुम्हारा कहना निरर्थक है, क्योंकि—भाग्य की प्रतिकूलता से बुद्धिमान व्यक्ति भी कष्ट उठाते हैं और अनुकूल भाग्य के कारण एक मूर्ख व्यक्ति भी आनन्द मनाता है ॥ ४१ ॥

कहा भी गया है कि—भाग्य द्वारा सुरक्षित वस्तु बिना किसी सुरक्षा के भी बची रहती है और भाग्य के प्रतिकूल होने से सुरक्षित रहकर भी वह नष्ट हो जाती है। सिंह व्याघ्रादि हिंसक पशुओं के मध्य वन में अनाथ छोड़ा हुआ व्यक्ति जीवित रह जाता है और प्रयत्न पूर्वक घर में सुरक्षित व्यक्ति भी जीवित नहीं रह पाता ॥ ४२ ॥

देखो, मण्डूक की यह उक्ति भी इसी बात की पुष्टि करती है कि—

हे प्रिये! शतबुद्धि नाम का मत्स्य धीवर के मस्तक पर रखा हुआ है और सहस्रबुद्धि उसके कन्धे से लटक रहा है। किन्तु एक बुद्धिवाला मैं इस निर्मल जल में विहार कर रहा हूँ" ॥ ४३ ॥

सुवर्णसिद्धि ने पूछा—यह कैसे?

चक्रधर ने उत्तर दिया—

## ५. मत्स्यमण्डूक-कथा

"कस्मिंश्चित्जलाशये शतबुद्धिः सहस्रबुद्धिश्च द्वौ मत्स्यौ निवसतः स्म। अथ तयोरेकबुद्धिर्नाम मण्डूको मित्रतां गतः। एवं ते त्रयोऽपि जलतीरे वेलायां कञ्चित्कालं सुभाषितगोष्ठीसुखमनुभूय, भूयोऽपि सलिलं प्रविशन्ति।

अथ कदाचित्तेषां गोष्ठीगतानां जालहस्ता धीवराः प्रभूतैर्मत्स्यैर्व्यापादितैर्मस्तके विधृतैरस्तमनवेलायां तस्मिञ्जलाशये समायाताः। ततः सलिलाशयं दृष्ट्वा मिथः प्रोचुः—"अहो! बहुमत्स्योऽयं ह्रदो दृश्यते, स्वल्पसलिलश्च। तत्प्रभातेऽत्रागमिष्यामः।" एवमुक्त्वा स्वगृहं गताः।

**व्याख्या**—जलाशये = सरसि (तालाब में), शतबुद्धिः सहस्रबुद्धिः = शतबुद्धिसहस्रबुद्धिनामानौ (शतबुद्धि सहस्रबुद्धि नाम के), तयोः = मत्स्ययोः (उनका), मित्रतां गतः = मित्रभावमुपगतः (मित्र बन गया था), अस्तमनवेलायां = सायंकाले ("वेला कालमर्यादयोरपि" इत्यमरः) (शाम को), सुभाषितगोष्ठीसुखमनुभूय = सूक्तिकाव्यालापसभासुखमवाप्य (एकत्र होकर तरह-तरह के काव्यों, सूक्तियों आदि का आनन्द लेने के बाद), गोष्ठीगतानाम् = एकत्रो-

पविष्टानां ( उनकी गोष्ठी के समय में ), जालहस्ताः = जालपाणयः ( हाथ में जाल लिये हुए ) धीवराः = कैवर्ताः ( केवट ), प्रभूतैर्मत्स्यैः = विपुलमत्स्यैः ( बहुत सी मछलियों को ), व्यापादितैः = निहतैः ( मारी हुई ), मस्तके = शिरसि ( सिर पर ), विधृतैः = न्यस्तैः ( रखे हुए ), अस्तमनवेलायां = सूर्यास्तकाले ( सूर्यास्त के समय ), सलिलाशयं = सरोवरं ( तालाव को ), प्रोचुः = मन्त्रयामासुः ( विचार किया ), ह्रदः = तडागः ( तालाव ), स्वल्पसलिलः = अत्यल्पसलिलः ( बहुत थोड़ा जल वाला है ), प्रभाते = प्रातःकाले ( प्रातःकाल )।

हिन्दी—किसी तालाव में शतबुद्धि तथा सहस्रबुद्धि नाम की दो मछलियाँ रहती थीं। उनसे किसी एकबुद्धि नाम के मण्डूक ( मेढक ) में मित्रता हो गयी थी। वे तीनों शाम को तालाव के किनारे बैठकर काव्यादि का आनन्द लेने के बाद पुनः जल में अपने-अपने स्थान को चला जाया करते थे।

एक दिन शाम को उनकी गोष्ठी के समय में ही कहीं से मछलियों को मारकर शिर पर रखे हुए कुछ केवट उस तालाव के किनारे आये। उस तालाव को देखकर उन लोगों ने आपस में यह विचार किया कि—"इस तालाव में खूब मछलियाँ हैं और जल भी बहुत थोड़ा है। कल प्रातःकाल यहीं आया जायगा।" यह निश्चय करके वे चले गये।

मत्स्याश्च विषण्णवदना मिथो मन्त्रं चक्रुः। ततो मण्डूक आह—"भोः, शतबुद्धे ! श्रुतं धीवरोक्तं भवता ? तत्किमत्र युज्यते कर्तुम्, पलायनमवष्टम्भो वा ? यत्कर्तुं युक्तं भवति तदादिश्यतामद्य।"

तत् श्रुत्वा सहस्रबुद्धिः प्रहस्य आह—"भो ! मित्र मा भैषीः, तयोः वचनश्रवणमात्रादेव भयं कार्यम् ?। न भेतव्यम्। उक्तं च—

सर्पाणां च खलानां च सर्वेषां दुष्टचेतसाम्।
अभिप्राया न सिध्यन्ति तेनेदं वर्तते जगत् ॥ ४४ ॥

तत्तावत्तेषामागमनमपि न संपत्स्यते। भविष्यति वा तर्हि त्वां बुद्धिप्रभावेणात्मसहितं रक्षयिष्यामि। यतोऽनेकां सलिलचर्यामहं जानामि।"

तदाकर्ण्य शतबुद्धिराह—"भोः युक्तमुक्तं भवता। सहस्रबुद्धिरेव भवान्। अथवा साध्विदमुच्यते—

बुद्धेर्बुद्धिमतां लोके नाऽस्त्यगम्यं हि किञ्चन।
बुद्धया यतो हता नन्दाश्चाणक्येनासिपाणयः ॥ ४५ ॥

व्याख्या—विषण्णवदनाः = म्लानमुखाः, चिन्ताग्रस्ता इत्यर्थः ( उदास होकर ), मन्त्रं = विचारं, चक्रुः = विदधुः ( विचार किया ), पलायनम् = अन्यत्र गमनम् ( भाग जाना ), अवष्टम्भः = अवस्थानं ( ठहरना ), मा भैषीः = भयं मा कुरु ( डरो मत ), वचनश्रवणमात्रादेव = तेषां वार्तालापश्रवणेनैव ( केवल उनकी बातचीत को सुनकर ), न भेतव्यम् = भयं न कार्यम् ( डरना नहीं चाहिये )।

तेषां = धीवराणां ( मल्लाहों का ), न संपत्स्यते = न भविष्यति ( नहीं होगा ), बुद्धिप्रभावेण = स्वबुद्धया ( अपनी बुद्धि से ), आत्मसहितं = स्वात्मसहितं ( अपने साथ ), सलिलगतिचर्याम् = जलसञ्चरणकौशलं ( जल में चलने की कला ), जानामि = अवगच्छामि ( जानता हूँ ) ।

व्याख्या—खलानां = नीचजनानां ( नीचों के ), दुष्टचेतसां = दुष्टजनानां ( दुष्टों के ), अभिप्रायाः = मनोरथाः ( मनोरथ ), न सिध्यन्ति = सिद्धिं नाधिगच्छन्ति ( सफल नहीं होते हैं ), तेन = उससे, जगत् = विश्वं ( यह संसार ) वर्तते = जीवति ( चल रहा है ) ॥४४॥

अन्वयः—लोके बुद्धिमतां बुद्धेः किञ्चन अगम्यं नास्ति, यतो चाणक्येन बुद्धया असिपाणयः नन्दाः हताः ॥ ४५ ॥

व्याख्या—बुद्धिमतां = धीमतां ( बुद्धिमानों को ), अगम्यम् = दुर्गमं, असाध्यम् ( दुर्गम ), बुद्धया = स्वमत्या ( अपनी बुद्धि से ही ), असिपाणयः = खड्गपाणयः ( शस्त्रयुत ), नन्दाः = नन्दकुलोद्भवा राजानः ( नन्दवंशीय राजा लोग ), हताः = निहताः ( मारे गये थे ) ॥४५॥

हिन्दी—उन केवटों के चले जाने पर मछलियों ने खिन्न होकर आपस में एक विचार गोष्ठी की। उस गोष्ठी में मण्डूक ने कहा—"महाशय, शतबुद्धे ! आपने केवटों के वार्तालाप को सुना ? कहिये इस परिस्थिति में हमें क्या करना चाहिये, यहाँ रहना ठीक होगा या कहीं अन्यत्र भाग जाना ? जैसा करना उचित हो, आदेश दें" ।

मण्डूक के उक्त वचन को सुनकर सहस्रबुद्धि ने हँसकर कहा—"मित्र ! तुम भय न करो। केवल किसी की बात को सुनकर डरना ठीक नहीं होता है। केवल उनकी बात से ही तुम्हें डरना नहीं चाहिये। देखो, कहा भी गया है कि—सर्पों, नीच व्यक्तियों तथा दुष्ट प्राणियों के मनोरथ सफल नहीं होते हैं। उनकी इस विफलता के कारण ही यह विश्व चल रहा है ॥४४॥

मैं तो समझता हूँ कि उनका आगमन ही नहीं होगा। यदि हुआ भी, तो मैं अपनी बुद्धि के प्रभाव से अपने साथ ही तुम्हारी भी रक्षा कर लूँगा। क्योंकि मैं जल में चलने की कई कलायें जानता हूँ।"

उसके इस कथन को सुनकर शतबुद्धि ने कहा—"महाशय ! आपने ठीक कहा है। आपका सहस्रबुद्धि नाम यथार्थ है। अथवा ठीक ही कहा गया है—

इस विश्व में बुद्धिमानों की बुद्धि के लिये कोई भी स्थान अगम्य नहीं है। क्योंकि चाणक्य ने अपनी बुद्धि के ही बल पर खड्गधारी नन्दवंश का विनाश किया था ॥ ४५ ॥

तथा च—

न यत्राऽस्ति गतिर्वायो रश्मीनां च विवस्वतः ।
तत्राऽपि प्रविशत्याशु बुद्धिर्बुद्धिमतां सदा ॥ ४६ ॥

ततो वचनश्रवणमात्रादपि पितृपर्यायागतं जन्मस्थानं त्यक्तुं न शक्यते ।

उक्तं च—

न तत्स्वर्गेऽपि सौख्यं स्याद्दिव्यस्पर्शेन शोभने ।
कुस्थानेऽपि भवेत्पुंसां जन्मनो यत्र संभवः ॥ ४७ ॥

तन्न कदाचिदपि गन्तव्यम् । अहं त्वां बुद्धिप्रभावेण रक्षयिष्यामि ।

मण्डूक आह—"भद्रौ ! मम तावदेकैव बुद्धिः पलायनपरा । तदहमन्यं जलाशयमद्यैव सभार्यो यास्यामि ।" एवमुक्त्वा स मण्डूको रात्रावेवाऽन्य-जलाशयं गतः ।

धीवरैरपि प्रभाते आगत्य, जघन्यमध्यमोत्तमजलचराः मत्स्यकूर्ममण्डूककर्कटादयो गृहीताः । तावपि शतबुद्धिसहस्रबुद्धी सभार्यौ पलायमानौ चिरमात्मानं गतिविशेषविज्ञानैः कुटिलचारेण रक्षन्तौ जाले निपतितौ, व्यापादितौ च ।

अन्वयः—यत्र वायोः, विवस्वतः रश्मीनां, सदा गतिः नास्ति तत्रापि बुद्धिमतां बुद्धिः आशु प्रविशति ॥ ४६ ॥

व्याख्या—यत्र = यस्मिन्स्थाने ( जहाँ पर ), वायोः = वातस्य ( वायु का ), विवस्वतः = सूर्यस्य ( सूर्य की ), रश्मीनां = किरणानां ( किरणों की ), गतिः = प्रवेशः ( प्रवेश ) नास्ति = न भवति ( नहीं होता है ), बुद्धिमतां बुद्धिः = धीमतां धीः ( बुद्धिमानों की बुद्धि ), आशु = शीघ्रं ( तुरत ), प्रविशति ( चली जाती है ) ॥ ४६ ॥

पितृपर्यायागतं = वंशक्रमादागतं ( पूर्वपरंपरा से आगत ), जन्मस्थानं = मातृभूमि, निवास-स्थानं ( निवास स्थान को ), त्यक्तुं = परित्यक्तुं, न शक्यते = न शक्नुमः ( नहीं छोड़ा जा सकता है ) ।

अन्वयः—शोभने स्वर्गेऽपि दिव्यस्पर्शेन तत्सौख्यं न ( भवति, यत् ) पुंसां यत्र जन्मनः संभवः ( तत्र ) कुस्थानेऽपि भवेत् ॥ ४७ ॥

व्याख्या—शोभने = रमणीये ( सुन्दर ), स्वर्गे = दिवि ( स्वर्ग में ), दिव्यस्पर्शेन = देवाङ्गनास्पर्शेन ( देवाङ्गनाओं के स्पर्श से ), तत्सौख्यं = तत्सुखं ( वह सुख ), न = नहि भवति ( नहीं मिलता है ), पुंसां = मनुष्याणां ( मनुष्यों का , जन्मनः संभवः = यत्र जन्मस्थानम् ( जहाँ जन्म होता है ) तत्र, कुस्थानेऽपि = कष्टप्रदे स्थानेऽपि ( वहाँ कष्टप्रद स्थान में भी ), भवेत् = जायते ( होता है ) ॥ ४७ ॥

भद्रौ = महाशयौ, पलायनपरा = अन्यत्रगमनपरा ( भागने वाली ), सभार्यः = सपत्नीकः ( स्त्री के साथ ), यास्यामि = गमिष्यामि ( चला जाऊँगा ) धीवरैः = कैवर्तैः ( केवटों ने ), जघन्यमध्यमोत्तमजलचराः = लघुमध्यमोत्तमजलजीवाः ( छोटे बड़े तथा मध्यम सभी जलचरों को ), सभार्यौ = सस्त्रीकौ ( स्त्रियों के साथ ), चिरं = बहुकालं यावत् ( बहुत देर तक ), गतिविशेषविज्ञानैः = जलतरणज्ञानविशेषैः ( जल-सञ्चरण के विभिन्न उपायों को जानने से ), कुटिलचारेण = वक्रगमनेन ( इधर उधर की वक्रगति से ), रक्षन्तौ = त्रायन्तौ ( बचाते हुये ), व्यापादितौ = निहतौ ( मारे गये ) ।

हिन्दी—जिस स्थान में वायु और सूर्य की किरणों का भी प्रवेश नहीं हो पाता है, वहाँ बुद्धिमानों की बुद्धि तत्काल पहुँच जाती है ॥ ४६ ॥

अतएव केवटों के वार्तालाप मात्र के श्रवण से पूर्वपुरुषों द्वारा परंपरागत जन्मस्थान को छोड़ना ठीक नहीं है। कहा भी गया है कि—

रमणीय स्वर्ग में देवांगनाओं के स्पर्श से भी वह सुख नहीं प्राप्त होता है, जो मनुष्य को अपनी मातृभूमि में अनायास ही मिलता है; चाहे वह स्थान असुविधाजनक ही क्यों न हो ॥ ४७ ॥

अतः तुमको अपनी मातृभूमि का परित्याग नहीं करना चाहिये। मैं भी अपनी बुद्धि के प्रभाव से तुम्हारी रक्षा करूँगा।"

शतबुद्धि के उक्त वाक्य को सुनकर मण्डूक ने कहा—"सज्जनों! मैं एकबुद्धि वाला हूँ, तो यहाँ से भाग जाना ही उचित समझता हूँ। मैंने तो यह निश्चय कर लिया है कि आज ही रात में अपनी स्त्री के साथ किसी अन्य जलाशय में चला जाऊँगा।" और वह मण्डूक उसी दिन रात्रि में अन्य जलाशय में चला गया।

दूसरे दिन प्रातःकाल उन केवटों ने आकर छोटे बड़े और मध्यम जाति के मत्स्यों, मछुओं मेढकों तथा केकड़ों आदि सभी जलचरों को पकड़ लिया। शतबुद्धि और सहस्रबुद्धि ने भी अपनी स्त्रियों के साथ इधर-उधर भागते हुए अपनी जल-सञ्चरण सम्बन्धी विभिन्न कलाओं की जानकारी के कारण कुटिल गमन द्वारा अपने को बहुत देर तक बचाने का प्रयत्न किया, किन्तु अन्ततोगत्वा वे दोनों जाल में फँस गये और मार डाले गये।

अथाऽपराह्णसमये प्रहृष्टास्ते धीवराः स्वगृहं प्रति प्रस्थिताः। गुरुत्वाच्चैकेन शतबुद्धिः स्कन्धे कृतः। सहस्रबुद्धिः प्रलम्बमानो नीयते। ततश्च वापीकण्ठोपगतेन मण्डूकेन तौ तथा नीयमानौ दृष्ट्वा अभिहिता स्वपत्नी—"प्रिये! पश्य पश्य—

शतबुद्धिः शिरस्थोऽयं, लम्बते च सहस्रधीः।
एकबुद्धिरहं भद्रे! क्रीडामि विमले जले॥"

अतश्च "वरं बुद्धिर्न सा विद्या" यद्भवतोक्तं तत्रेयं मे मतिर्यत्-न एकान्तेन बुद्धिरपि प्रमाणम्।"

सुवर्णसिद्धिः प्राह—यद्यप्येतदस्ति, तथाऽपि मित्रवचनं न लंघनीयम्। परं किं क्रियते, निवारितोऽपि मया न स्थितोऽसि, अतिलौल्यात् विद्याहङ्काराच्च। अथवा साध्विदमुच्यते—

साधु मातुल! गीतेन, मया प्रोक्तोऽपि न स्थितः।
अपूर्वोऽयं मणिर्बद्धः सम्प्राप्तं गीतलक्षणम्॥ ४८॥

चक्रधर आह—"कथमेतत्?" सोऽब्रवीत्—

**व्याख्या**—अपराह्णसमये = दिवसावसानकाले ( दोपहर को ), गुरुत्वात् = भाराधिक्यात् ( भारी होने से ), वापीकण्ठोपगतेन = वापीतीरोपविष्टेन ( वापी के तट पर बैठे हुए ), तौ = शतबुद्धिसहस्रबुद्धी, अभिहिता = कथिता ( कहा ) स्वपत्नी = स्वभार्या ( अपनी स्त्री से )।

प्रमाणम् = कार्यसिद्धौ हेतुभूतम् ( किसी कार्य की सिद्धि में कारणभूत ), न लङ्घनीयम् = नोल्लङ्घनीयम् ( उल्लंघन नहीं करना चाहिये ), निवारितोऽपि = वर्जितोऽपि ( मना करने पर भी ), अतिलौल्यात् = अतिलोभात् ( लोभ के कारण ), विद्याहंकाराच्च = विद्यागर्वाच्च ( विद्या के गर्व से भी )।

**अन्वयः**—मातुल ! गीतेन साधु, मया प्रोक्तोऽपि न स्थितः ( अतः ), अपूर्वोऽयं मणिः बद्धः ( इदानीं भवता ), गीतलक्षणं संप्राप्तम् ॥ ४८ ॥

**व्याख्या**—गीतेन = गानेन ( गाना ), साधु = अलम् , मया प्रोक्तोऽपि = मया निगदितोऽपि, वारितोऽपीति भावः ( मेरे मना करने पर भी ), न स्थितः = गानाद्विरतो नाभूः ( गाना बन्द नहीं किया ), अतएव हि—अपूर्वः = अभिनवः (अद्‌भुत), मणिः = रत्नम् , उलूखलरूपमिति भावः ( ओखलरूपी रत्न ) इदानीं भवता, गीतलक्षणं = गीतस्य पारितोषिकस्वरूपं चिह्नम् ( गीत का उचित पुरस्कार ), संप्राप्तम् = अवाप्तम् ( तुमको मिल गया ) ॥ ४८ ॥

**हिन्दी**—सूर्यास्त के समय वे केवट प्रसन्न होकर जब अपने घरों को लौटने लगे तो भारी होने के कारण उनमें से एक ने शतबुद्धि को अपने कन्धे पर रख लिया और लम्बा होने से सहस्रबुद्धि को वह कन्धे से लटका कर ( घसीटता हुआ ) ले जाने लगा। वापी ( बावली ) के तट पर बैठे हुए मण्डूक ने जब उन ले जाने वाली मछलियों की इस दुर्गति को देखा तो अपनी स्त्री से कहा—

"प्रिये ! देखो, वह देखो—शतबुद्धि शिर पर रखा हुआ है और सहस्रबुद्धि लटकता हुआ जा रहा है। और एक बुद्धि वाला मैं इस निर्मल जल में विहार कर रहा हूँ।" ॥ ४७ ॥

इस कथा को कहने के पश्चात् चक्रधर ने कहा—"अतएव जो आपने पहले यह कहा है कि विद्या से बुद्धि श्रेष्ठ होती है, इस विषय में मेरा यह मत है कि केवल बुद्धि ही सर्वश्रेष्ठ होती है यह बात सर्वथा सत्य नहीं है।"

यह सुनकर सुवर्णसिद्धि ने कहा—"यद्यपि आपकी बात भी ठीक है, तथापि मनुष्य को मित्र के वचन का उल्लंघन नहीं करना चाहिये। किन्तु क्या किया जाय, लोभ तथा विद्या के घमण्ड के कारण आप मेरे मना करने पर भी नहीं रुके और यहाँ तक चले आये। अथवा आप का भी क्या दोष है, किसी ने ठीक ही कहा है कि—

"मातुल ! गाना न गाओ, तुम्हारा गाया जरा भी अच्छा नहीं लगता है इस प्रकार मेरे बार-बार कहने पर भी तुम नहीं रुके और गाने लगे। तुम्हारे गले में यह कितना सुन्दर मणि बाँध दिया गया है। वस्तुतः अब तुम अपने गाने का वास्तविक पुरस्कार पा गये हो" ॥ ४८ ॥

चक्रधर ने पूछा—कैसे ? सुवर्णसिद्धि ने कहना प्रारंभ किया—

# ६. रासभश्रृगाल-कथा

"कस्मिंश्चिदधिष्ठाने उद्धतो नाम गर्दभः प्रतिवसति स्म : सः सदैव रजक-गृहे भारोद्वहनं कृत्वा रात्रौ स्वेच्छया पर्यटति । ततः प्रत्यूषे बन्धनभयात्स्वयमेव रजकगृहमायाति । रजकोऽपि ततस्तं बन्धनेन नियुनक्ति ।

अथ तस्य रात्रौ क्षेत्राणि पर्यटतः, कदाचिच्छृगालेन सह मैत्री संजाता । स च पीवरत्वाद् वृतिभङ्गं कृत्वा कर्कटिकाक्षेत्रे श्रृगालसहितः प्रविशति । एवं तौ यदृच्छया चिर्भटिकाभक्षणं कृत्वा, प्रत्यहं प्रत्यूषे स्वस्वस्थानं व्रजतः ।

अथ कदाचित्तेन मदोद्धतेन रासभेन क्षेत्रमध्यस्थितेन श्रृगालोऽभिहितः— "भोः, भगिनीसुत ! पश्य-पश्य, अतीव निर्मला रजनी, तदहं गीतं करिष्यामि । तत्कथय कतमेन रागेण करोमि ?

व्याख्या—रजकगृहे = निर्णेजकगृहे ( धोबी के यहाँ ), भारोद्वहनं = वस्त्रादिभारोद्वहनं ( कपड़े का गट्ठर ढोना ), रात्रौ = निशायाम् ( रात्रि में ), स्वेच्छया = यथेच्छं ( मनमाना ), पर्यटति = भ्रमति ( घूमा करता था ), प्रत्यूषे = प्रातःकाले ( प्रातःकाल होते ही ), बन्धन-भयात् = बन्धनप्रहारादिदण्डभयात् ( बाँधे जाने या मार खाने के भय से ), आयाति = आगच्छति ( चला आया करता था ),. नियुनक्ति = बध्नाति ( बाँध देता था ), तस्य = गर्द-भस्य, क्षेत्राणि पर्यटतः = क्षेत्राणि परिभ्रमतः ( खेतों में घूमते-घूमते ), श्रृगालेन सह = जम्बुकेन साकं ( श्रृगाल के साथ ), पीवरत्वात् = स्थूलत्वात् ( खूब मोटा तगड़ा होने के कारण ), वृति-भंगं = सालभंगं ( खेत के घेरों को तोड़कर ), कर्कटिका = उर्वारुः ( "उर्वारुः कर्कटी स्त्रियौ" इत्यमरः ) ( ककड़ी ), तौ = रासभश्रृगालौ ( वे दोनों ), चिर्भटिका = कर्कटिका ( ककड़ी ), व्रजतः = गच्छतः ( चले जाते थे ) । मदोद्धतेन = मन्दोन्मत्तेन ( प्रमत्त उस गदहे ने ), क्षेत्र-मध्यस्थितेन = क्षेत्रान्तर्गतेन ( खेत में खड़े होकर ), भगिनीसुत = भागिनेय, निर्मला = गत-कल्मषा, धवलेत्यर्थः ( अत्यन्त स्वच्छ ), रजनी = रात्रिः ( रात है ), गीतं = गानं ( गाना ), करोमि = गायामि ( प्रारम्भ करूँ ) ।

हिन्दी—किसी स्थान में उद्धत नाम का गदहा रहता था। वह धोबी के यहाँ दिन भर कपड़े का गट्ठर ढोने के बाद रात्रि में मनमाना इधर-उधर घूमा करता था। प्रातःकाल होते ही बाँधे जाने या मार खाने के भय से वह प्रतिदिन धोबी के यहाँ चला आता था। और धोबी भी आते ही उसको बाँध दिया करता था।

किसी दिन रात्रि के समय खेतों पर घूमते हुए गदहे की एक श्रृगाल से मित्रता हो गयी। खूब मोटा होने के कारण वह खेत के घेरों को तोड़कर उस श्रृगाल के साथ ककड़ी के खेत में घुस जाता था और दोनों भर पेट ककड़ी खाने के बाद प्रातःकाल अपने-अपने स्थानों पर चले जाया करते थे। यही उनकी दैनिक चर्या थी।

किसी दिन उस प्रमत्त गदहे ने ककड़ी के खेत में खड़े खड़े शृगाल से कहा—"भागिनेय ! देखो, यह रात्रि कितनी स्वच्छ है। मैं गाना गाना चाहता हूँ, तो बताओ, किस राग से गाना आरंभ करूँ ?"

स आह—"माम ! किमनेन वृथाऽनर्थप्रचालनेन ? यतश्चौरकर्मप्रवृत्तावावाम्, निभृतैश्च चौरजारैरत्र स्थातव्यम्। उक्तं च—

कासयुक्तस्त्यजेच्चौर्यं निद्रालुश्चेत्स पुंश्चलीम्।
जिह्वालौल्यं रुजाक्रान्तो जीवितं योऽत्र वाञ्छति ॥४९॥

अपरं त्वदीयं गीतं न मधुरस्वरम्, शङ्खशब्दानुकारं दूरादपि श्रूयते। तदत्र क्षेत्रे रक्षापुरुषाः सुप्ताः सन्ति। ते उत्थाय वधं बन्धनं वा करिष्यन्ति। तद्भक्षय तावदमृतमयीश्चिर्भटीः। मा त्वमत्र गीतव्यापारपरो भव।"

तच्छ्रुत्वा रासभ आह "भोः, वनाश्रयत्वात्त्वं गीतरसं न वेत्सि, तेनैतद् ब्रवीषि। उक्तं च—

शरज्ज्योत्स्नाहते दूरं तमसि प्रियसन्निधौ।
धन्यानां विशति श्रोत्रे गीतझङ्कारजा सुधा" ॥५०॥

व्याख्या—अनर्थप्रचालनेन=विपदामन्त्रणेन (अनावश्यक आपत्ति को निमन्त्रित करने से क्या लाभ है ?), चौरकर्मप्रवृत्तौ=स्तेयकर्मणि प्रवृत्तौ (चोरी के कर्म में लगे हैं), निभृतैः=निगूढैः (शान्त), चौरजारैः=चोरैः परस्त्रीगामिभिश्च (चोरों और परस्त्रीगामियों को) स्थातव्यम्—भवितव्यम् (रहना चाहिये)।

अन्वयः—योऽत्र जीवितुं वाञ्छति (सः) कासयुक्तः चौर्यं, निद्रालुश्च पुंश्चलीं, रुजाक्रान्तः जिह्वालौल्यं त्यजेत् ॥ ४९ ॥

व्याख्या—जीवितुं=जीवनं (जीना), वाञ्छति=इच्छति (चाहता है तो), कासयुक्तः=कासरोगयुक्तः (खाँसी की बीमारी से आक्रान्त व्यक्ति), चौर्यं=स्तेयं (चोरी करना), निद्रालुः=निद्रातुरः (अधिक सोने वाला व्यक्ति), पुंश्चलीं=व्यभिचारिणीं स्त्रीं (व्यभिचारिणी स्त्री को), रुजाक्रान्तः=रोगाक्रान्तः (रोगी व्यक्ति), जिह्वालौल्यम्=रसनाचापल्यम् (जीभचटोरी को) त्यजेत् ॥ ४९ ॥

शङ्खशब्दानुकारं=शङ्खध्वनिसदृशं (शङ्ख के समान तेज), रक्षापुरुषाः=क्षेत्रपालाः (रखवाले), अमृतमयीः=अमृततुल्यमधुराः (अमृत के समान मीठी), गीतव्यापारपरः=गानतत्परः (गाने में प्रवृत्त)। वनाश्रयत्वात्=वनेचरत्वात् (जङ्गली होने के कारण), गीतरसं=सङ्गीतमाधुर्यं (संगीत के रस को), न वेत्सि=नावगच्छसि (नहीं जानते हो)।

अन्वयः—तमसि दूरंशरज्ज्योत्स्नाहते प्रियसन्निधौ धन्यानां श्रोत्रे गीतझङ्कारजा सुधा विशति ॥ ५० ॥

व्याख्या—तमसि अन्धकारे, शरज्ज्योत्स्नाहते=शरच्चन्द्रिकया विनाशिते सति (शरदृतु की चाँदनी से अन्धकार के मिट जाने पर), प्रियसन्निधौ=प्रियतमान्तिके (प्रिय व्यक्तियों के सान्निध्य में), धन्यानां=भाग्यवतां (भाग्यशालियों के), श्रोत्रे=कर्णे (कान में), गीतझंकारजा सुधा=गीतरवोत्थिता सुधा (संगीतसुधा अमृत), विशति=प्रविशति (प्रवेश करती है) ॥५०॥

विषादमुपगतः, सन्त्यक्ताहारक्रियो वनाद्वनं पर्यटति । अचिन्तयच्च—"कथमहं तस्य नृपापसदस्यानृणतां कृत्येनाऽपकृत्यं करिष्यामि ।

उक्तञ्च—

> मर्षयेद्धर्षणां योऽत्र वंशजां परनिर्मिताम् ।
> भयाद्वा यदि वा कामात् स ज्ञेयः पुरुषाऽधमः" ॥ ७५ ॥

**व्याख्या**—अत्रान्तरे=अवसरेऽस्मिन् ( इस घटना को देखकर ), सविषादः=दुःखितः ( दुःखित होकर ), शालिहोत्रज्ञान्=अश्वचिकित्सकान् ( घोड़ों की चिकित्सा करने वाले ), प्रोच्यतां=कथ्यताम्, दाहोपशमनोपायः=अग्निदाहनाशकोपायः ( अग्निदोष को नष्ट करने के उपायों को ), तेऽपि=चिकित्सकाः ( वैद्यों ने ), शास्त्राणि=अश्वचिकित्साशास्त्राणि, प्रोचुः=कथितवन्तः ( कहा ), प्रोक्तं=कथितम् ( कहा है ), अत्रविषये=अश्वानामग्निदाहावसरे ( घोड़ों के जल जाने पर ), शालिहोत्रेण=तन्नाम्ना महर्षिणा ।

**अन्वयः**—अश्वानां वह्निदाहसमुद्भवः दोषः कपीनां मेदसा नाशम् अभ्येति, यथा सूर्योदये तमः ( नाशमभ्येति ) ॥ ७४ ॥

**व्याख्या**—वह्निदाहसमुद्भवः=अग्निदाहोत्थितः ( अग्निदाह के कारण उत्पन्न होने वाला ), कपीनां=मर्कटानां ( वानरों के ), मेदसा=वपया ( मेद से ), नाशं=विनाशम्, अभ्येति=प्राप्नोति ( नष्ट हो जाता है ) ।

एतत्=वानरवपारूपं ( वानरों की चर्बी की ), चिकित्सितम्=उपचारः ( दवा ), द्राक्=त्वरितम् ( तुरत ), सोऽपि=राजाऽपि, तदाकर्ण्य=तषां वचनं श्रुत्वा ( वैद्यों की बात को सुनकर ), वानरवधं=वानराणां विनाशाय ( वानरों को मारने का ), आदिष्टवान्=आज्ञापयामास ( आदेश दे दिया ), व्यापादिताः=हताः ( मार डाले गये ), पुत्रपौत्रभ्रातृसुतभागिनेयादिसंक्षयं=स्वकुलविनाशं ( अपने कुटुम्ब का विनाश ), ज्ञात्वा=अवगम्य ( जानकर ), परम्=अत्यन्तम् ( अत्यधिक ), विषादमुपगतः=शोकग्रस्तः ( शोकाकुल होकर ), संत्यक्ताहारक्रियः=भोजनं विहाय ( कृतानशनव्रत इति ) ( खाना पीना छोड़कर ), पर्यटति=अटति, भ्रमति ( घूमा करता था ) । नृपापसदस्य=दुष्टस्य ( दुष्ट ), अनृणताम्=वैरसाधनेनानृण्यं ( बैर का ऋण ), कृत्येन=स्वकृत्येन ( अपने द्वारा ), अपकृत्य=अपकारं कृत्वा ( अपकार करके ), करिष्यामि=विधास्यामि ।

**अन्वयः**—यः अत्र भयात् यदि वा कामात् यदि वा कामात् परनिर्मितां वंशजां धर्षणां मर्षयेत् स पुरुषाधमः ज्ञेयः ॥ ७५ ॥

**व्याख्या**—यः=पुमान् ( जो व्यक्ति ), भयात्=भयकारणात् ( भय से ) कामात्=लोभात् ( लोभ से ), परनिर्मितां=शत्रुकृतां ( शत्रुओं द्वारा पैदा की हुई ), वंशजां=कौटुम्बिकीं ( स्वजन सम्बन्धी ), धर्षणां=पराभवं ( पराजय को ), मर्षयेत्=क्षमां करोति ( क्षमा करता है ), सः, ( उसे ) पुरुषाधमः=नराधमः ( पुरुषेषु अधमः ) ( नराधम ), ज्ञेयः=ज्ञातव्यः ( समझना चाहिये ) ॥ ७५ ॥

हिन्दी—घोड़ों के जलने का समाचार पाकर राजा अत्यन्त दुःखी हुआ और अश्व-चिकित्सा में निपुण वैद्यों को बुलवाकर कहा—घोड़ों के जलने पर कोई उपचार हो सकता है तो आप लोग कृपया बतावें।

वैद्यों ने चिकित्साशास्त्र को देखकर कहा—"महाराज। इस विषय में भगवान् शालिहोत्र ने लिखा है कि—घोड़ों के जलने का दाह वानरों की चर्बी से उसी प्रकार समाप्त हो जाता है जिस प्रकार सूर्योदय होने से अन्धकार समाप्त हो जाता है" ॥ ७४ ॥

अग्निदाह के कारण उत्पन्न दोष से इन घोड़ों के मरने से पूर्व इस उपचार को करने का तत्काल आदेश दिया जाय।

राजा ने वैद्यों की राय से सम्पूर्ण वानरों को मार डालने का आदेश दे दिया। अधिक क्या कहूँ कि बिचारे वन्दर विभिन्न प्रकार के आयुधों लाठियों तथा पत्थरों द्वारा मार डाले गये।

उस यूथप ने जब इस समाचार को सुना तो अपने पुत्रों, पौत्रों, भतीजों, तथा भागिनेय आदि सगे सम्बन्धियों की मृत्यु से बहुत दुःखी हुआ। खाना-पीना छोड़कर वह इधर-उधर जंगलों में घूमने लगा और निरन्तर इस बात को सोचता रहा कि—"मैं किस प्रकार इस कृतघ्न राजा का अपकार करके अपने सम्बन्धियों की मृत्यु का बदला चुका लूँ"। कहा भी गया है—

भय के कारण या लोभ के वशीभूत होकर जो व्यक्ति शत्रुओं द्वारा उत्पन्न की हुई अपने वंश की अवमानना (पराजय) को मौन होकर सह लेता है, उसे नराधम समझना चाहिये" ॥ ७४ ॥

अथ तेन वृद्धवानरेण कुत्रचित्पिपासाकुलेन भ्रमता पद्मिनीखण्डमण्डितं सरः समासादितम्। तथावत्सूक्ष्मेक्षिकयाऽवलोकयति तावद् वनचरमनुष्याणां पदपङ्क्तिप्रवेशोऽस्ति न निष्क्रमणम्। ततश्चिन्तितम् "नूनमत्र जलान्ते दुष्टग्राहेण भाव्यम्। तत्पद्मिनीनालमादाय दूरस्थोऽपि जलं पिबामि।"

तथाऽनुष्ठिते तन्मध्याद्राक्षसो निष्क्रम्य, रत्नमालाविभूषितकण्ठस्तमुवाच—"भोः! अत्र यः सलिले प्रवेशं करोति स मे भक्ष्यः इति। तन्नाऽस्ति धूर्ततरस्त्वत्समोऽन्यो यः पानीयमनेन विधिना पिबति। ततस्तुष्टोऽहं, प्रार्थयस्व हृदयवाञ्छितम्।"

कपिराह—"भोः! कियती ते भक्षणशक्तिः?"

स आह—"शतसहस्रायुतलक्षाण्यपि जलप्रविष्टानि भक्षयामि। बाह्यतः शृगालोऽपि मां धर्षयति।"

वानर आह—"अस्ति मे केनचिद् भूपतिना सहाऽत्यन्तं वैरम्। यद्येनां रत्नमालां मे प्रयच्छसि, तत्सपरिवारमपि तं भूपतिं वाक्यप्रपञ्चेन लोभयित्वाऽत्र सरसि प्रवेशयामि।"

सोऽपि श्रद्धेयं वचस्तस्य श्रुत्वा रत्नमालां दृत्वा प्राह—"भो मित्र ! यत्समुचितं भवति तत्कर्त्तव्यम्" इति ।

व्याख्या—पिपासाकुलेन = पिपासितेन ( प्यास से व्याकुल होकर), पद्मिनीखण्डमण्डितं = कमलिनीकदम्बशोभितं ( कमलिनी से सुशोभित ), सरः = तडाग ( तालाब को ), समासादितम् = अवाप्तम् ( देखा ), सूक्ष्मेक्षिकया = सूक्ष्मदृष्ट्या ( सूक्ष्म दृष्टि से ), वनचर-मनुष्याणां = वनचरजीवानां ( वने चरन्तीति वनचराः ) ( जङ्गली जीवों की ), पदपङ्क्तिः = चरणचिह्नावलिः ( चरणचिह्नावली ), न निष्क्रमणं = न च निर्गमः ( निकलती हुई नहीं थी )। जलान्ते = जलमध्ये ( जल में ), दुष्टग्राहेण = दुष्टमकरेण ( दुष्ट मगर ), भाव्यम् = भवितव्यम् ( रहता होगा ), पद्मिनीनालं = कमलिनीदण्डम् ( कमलिनी के नाल को ) दूरस्थोऽपि = वहिः स्थितः सन् ( वाहर से ही ), निष्क्रम्य = वहिरागत्य ( वाहर निकल कर ), धूर्ततरः = प्रवञ्चकः ( चतुरतर इति भावः ), पानीयं = जलम् ( जल ), तुष्टः = प्रसन्नः, हृदयवाञ्छितं = मनोऽभिलषितम् ( मनोवाञ्छित वस्तु ) । भक्षणशक्तिः = भोजनसामर्थ्यम् ( भोजन की शक्ति ), अयुतं = दशसहस्रं ( १० हजार ), जलप्रविष्टानि = जलान्तर्गतानि ( जल के भीतर आये हुए जीवों को ), वाह्यतः = वहिः स्थितः सन् ( वाहर निकलने पर ), धर्षयति = तिरस्करोति = ( प्रवञ्चयतीति ) ( पराभूत कर सकता है )। भूपतिना = राज्ञा ( राजा से) वैरं = द्वेषः (शत्रुता), वाक्प्रपञ्चेन = वाग्जालेन ( वाग्जाल से ), लोभयित्वा = प्रवंच्य ( धोखा देकर ), प्रवेशयामि = निवेशयामि ( प्रविष्ट करा दूँगा ), श्रद्धेयं = विश्वासयोग्यं ( विश्वास के योग्य ) यत्समुचितं = यदुक्तं ( जो उचित हो ), तत्कर्त्तव्यम् = विधेयम् ( करना )।

हिन्दी—कभी उस वृद्ध वानर ने प्यास से व्याकुल होकर इधर-उधर जल की खोज में घूमते हुए कमलिनी से सुशोभित एक तालाव को देखा। उसने जब ध्यान से देखा तो वहाँ तालाव में प्रवेश करने वाले जीवों का पद-चिह्न दिखाई पड़ा किन्तु उनके निकलने का कोई चिह्न नहीं था। इसे देखकर उसने सोचा कि इस तालाव में कोई न कोई दुष्ट मगर अवश्य रहता है। अतः भीतर प्रवेश करना ठीक नहीं होगा। वाहर से ही कमल-नाल के सहारे जल पी लेता हूँ।

वह कमल-नाल के द्वारा जल पी रहा था कि तालाव के भीतर से एक राक्षस निकला। वह रत्न की अत्यन्त सुन्दर माला धारण किये हुए था। वानर को देखकर उसने कहा—"अरे, वानर ! इस जल के भीतर जो प्रवेश करता है वह मेरा भक्ष्य होता है। तुम्हारे समान धूर्त मैंने नहीं देखा। क्योंकि तुम जल में प्रवेश किये बिना ही कमल-नाल से जल पी रहे हो। मैं तुम्हारी चतुरता से तुझ पर प्रसन्न हूँ। तुम्हारी जो मनोकामना हो वह माँग लो।"

वानर ने पूछा—"तुम कितने जीवों को खा सकते हो ?"

राक्षस ने कहा—"जल में प्रविष्ट एक सौ, हजार, दसहजार, लाख व्यक्तियों को भी खा सकता हूँ, किन्तु जल से बाहर निकलने पर एक श्रृगाल भी मुझे विजित कर सकता है।"

यह सुनकर उस वानर ने कहा—"एक राजा के साथ मेरा आत्यन्तिक वैर है।

यदि इस रत्नमाला को तुम मुझे दे दो तो मैं अपनी वाक् चातुरी से प्रलोभित करके सकुटुम्ब उस राजा को तालाब के भीतर प्रविष्ट करा सकता हूँ।"

राक्षस ने उस वानर के विश्वास योग्य वाक्य को सुनकर रत्नमाला को देते हुए कहा— "मित्र! जो तुम्हें उचित प्रतीत हो वह करना।"

**वानरोऽपि रत्नमालाविभूषितकण्ठो वृक्षप्रासादेषु परिभ्रमञ्जनैर्दृष्टः, पृष्टश्च— "भो यूथप! भवानियन्तं कालं कुत्र स्थितः?**

**भवता ईदृग्रत्नमाला कुत्र लब्धा, दीप्त्या सूर्यमपि तिरस्करोति।" वानरः प्राह—"अस्ति कुत्रचिदरण्ये गुप्ततरं महत्सरो धनदनिर्मितम्। तत्र सूर्येऽर्धोदिते रविवारे यः कश्चिन्निमज्जति, स धनदप्रसादादीदृग्रत्नमालाविभूषितकण्ठो निःसरति।"**

**अथ भूभुजा तदाकर्ण्य, स वानरः समाहूतः, पृष्टश्च—"भो यूथाऽधिप! किं सत्यमेतत्; रत्नमालासनाथं सरोऽस्ति क्वाऽपि?"**

**कपिराह—"स्वामिन्! एष प्रत्यक्षतया मत्कण्ठस्थितया रत्नमालया प्रत्ययस्ते। तद्यदि रत्नमालया प्रयोजनं तन्मया सह कमपि प्रेषय, येन दर्शयामि।"**

**तच्छ्रुत्वा नृपतिराह—"यद्येवं, तदहं सपरिजनः स्वयमेष्यामि, येन प्रभूता रत्नमालाः उत्पद्यन्ते।"**

**वानर आह—"एवं क्रियताम्।"**

**व्याख्या**—रत्नमालाविभूषितकण्ठः = रत्नमालाऽलङ्कृतकण्ठः (रत्नमालया विभूषितः कण्ठो यस्य सः) (रत्नमाला से सुशोभित कण्ठ होकर), वृक्षप्रासादेषु = वृक्षेषु प्रासादेषु च (क्रमशः) (वृक्षों और प्रासादों पर)। इयन्तं कालम् = एतत्कालपर्यन्तं (इतने दिनों तक), लब्धा = प्राप्ता (मिली), दीप्त्या = कान्त्या (अपनी कान्ति से), तिरस्करोति = परिभवति (पराभूत कर रही है), गुप्ततरं = सुगोप्यं (अत्यन्तगुप्त), धनदनिर्मितं = (कुबेर द्वारा निर्मित), सूर्येऽर्धोदिते = अर्धोदिते भास्करे (अर्ध सूर्योदय के समय), निमज्जति = स्नाति (स्नान करता है), धनदप्रसादात् = कुबेरप्रसादात् (कुबेर के प्रसाद से), ईदृक् = एतादृक् (इसी प्रकार दीप्तियुक्त), निःसरति = सरोवरान्निःसरतीति भावः (तालाब से निकलता है), भूभुजा = राज्ञा (राजा ने), समाहूतः = आहूतः (बुलवाया), रत्नमालासनाथं = रत्नमालायुक्तम् (रत्न मालाओं से युक्त), क्वापि = कुत्रापि (कहीं पर है?) प्रत्यक्षतया = प्रत्यक्षरूपतया (प्रत्यक्ष रूप से) प्रत्ययः = विश्वासः (विश्वास कर सकते हैं), सपरिजनः = सपरिवारः, सानुचरश्च (सम्पूर्ण अनुचरों के साथ), एष्यामि = गमिष्यामि (चलूँगा)। प्रभूताः = विपुलाः (बहुत सी), लभ्यन्ते = मिलन्ति (मिल जायेंगी)।

**हिन्दी**—राक्षस की दी हुई माला को कण्ठ में धारण करके वह वानर वृक्षों और भवनों पर क्रमशः घूमता हुआ पुरवासियों की दृष्टि में पड़ गया। नगरवासियों ने प्रेमपूर्वक उससे

पूछा—"अरे, यूथप ! आप इतने दिनों तक कहाँ रहे ? इतनी सुन्दर रत्नमाला आपको कहाँ से मिल गई ? यह तो अपनी कान्ति से सूर्य को भी तिरस्कृत कर दे रही है।"

वानर ने उत्तर दिया—"वन में कुबेर द्वारा निर्मित एक अत्यन्त गुप्त तालाब है। उस तालाब में, अर्ध सूर्योदय-काल में जो स्नान करता है वह कुबेर के प्रसाद से (कुबेर की कृपा से), ऐसी ही रत्नमाला से सुशोभितकण्ठ होकर तालाब से बाहर निकलता है।"

राजा ने जब इस समाचार को सुना तो उस यूथप को बुलवा कर पूछा—"यूथाधिप ! क्या यह बात सत्य है ? कहीं पर रत्नमालाओं से युक्त तालाब है ?"

कपिपति ने कहा—"स्वामिन् ! इतना तो मेरे कण्ठ में प्रत्यय रूप से स्थित इस रत्नमाला को देखकर ही विश्वास किया जा सकता है। यदि श्रीमान् को रत्नमालाओं की आवश्यकता है, तो मेरे साथ किसी को भेज दीजिये। मैं उसे भी वह सरोवर दिखा दूँगा।"

यह सुनकर राजा ने कहा—"यदि यह बात सत्य है, तो मैं स्वयं अपने सम्पूर्ण परिवार के साथ वहाँ चलूँगा। चलने से मेरे पास बहुत सी रत्नमालाएँ हो जायेंगी।"

वानर ने कहा—ठीक है, आप स्वयं चल सकते हैं।

तथाऽनुष्ठिते, भूपतिना सह रत्नमालालोभेन सर्वे कलत्रभृत्याः प्रस्थिताः। वानरोऽपि राज्ञा दोलाऽधिरूढेन स्वोत्सङ्गे आरोपितः सुखेन प्रीतिपूर्वमानीयते। अथवा साध्विदमुच्यते—

"तृष्णे ! देवि ! नमस्तुभ्यं, यया वित्ताऽन्विता अपि।
अकृत्येषु नियोज्यन्ते, भ्राम्यन्ते दुर्गमेष्वपि ॥ ७६ ॥

तथा च—

इच्छति शती सहस्रं, सहस्री लक्षमीहते।
लक्षाऽधिपस्तथा राज्यं, राज्यस्थः स्वर्गमीहते ॥ ७७ ॥

जीर्यन्ते जीर्यतः केशाः, दन्ता जीर्यन्ति जीर्यतः।
जीर्यतश्चक्षुषी श्रोत्रे, तृष्णैका तरुणायते ॥" ७८ ॥

व्याख्या—कलत्र-भृत्याः=कलत्राणि=भार्याः, भृत्याः=सेवकाः (राजा की स्त्रियाँ तथा सेवक), दोलाधिरूढेन=प्रेङ्खाश्रितेन ('दोला प्रेङ्खादिका स्त्रियाम्' इत्यमरः) (डोली में बैठे हुये), स्वोत्सङ्गे=स्वक्रोडे (अपनी गोद में), आरोपितः=स्थापितः (उपवेशितः) (बैठाकर), आनीयते=नीयते (ले जाने लगा)।

अन्वयः—देवि, तृष्णे ! तुभ्यं नमः (यतो हि) यया वित्तान्विता अपि अकृत्येषु नियोज्यन्ते दुर्गमेषु अपि भ्राम्यन्ते ॥ ७६ ॥

शती सहस्रम् इच्छति, सहस्री लक्षम् ईहते, लक्षाधिपः राज्यं तथा राज्यस्थः स्वर्गम् ईहते ॥ ७७ ॥

जीर्यतः केशाः जीर्यन्ते, जीर्यतः दन्ता जीर्यन्ति, जीर्यतः चक्षुषी श्रोत्रे च (जीर्येते), (किन्तु) एका तृष्णा तरुणायते ॥ ७८ ॥

व्याख्या—तुभ्यं = तृष्णायै ( तृष्णा को = तुमको ), यया = तृष्णया ( जिस तृष्णा के वशीभूत होकर ), वित्तान्विताः = अर्थवन्तः ( संपन्न जन ), अकृत्येषु = अनुचिताचरणेषु, अकरणीयकार्येषु ( अनुचित कार्य में ), नियोज्यन्ते = योज्यन्ते ( लगा दिये जाते हैं ), दुर्गमेषु = अगम्येषु स्थानेषु ( अगम्य स्थानों में ), भ्राम्यन्ते = परिभ्राम्यन्ते, प्राप्यन्ते, ( पहुँचा दिये जाते हैं ) ॥ ७६ ॥

शती = शताधिपः ( शतमस्यास्तीति शती ) ( शताधिप ), सहस्रं = सहस्रसंख्यापरिमितं ( हजार ), सहस्री = सहस्राधिपः ( सहस्राधिप ), लक्षं = लक्षसंख्यापरिमितम् ( लाख ), ईहते = कामयते ( चाहता है ), राज्यस्थः = राजा, स्वर्गं = देवलोकम् ईहते ॥ ७७ ॥

जीर्यतः = जीर्यमाणस्य ( वृद्ध व्यक्ति के ), केशाः = लोमानि ( बाल ), दन्ताः = रदाः ( दाँत ), चक्षुषी = नेत्रे ( आँख ), श्रोत्रे = श्रोत्रेन्द्रिये ( कान ), तृष्णा = स्पृहा, इच्छा ( तृष्णा ), तरुणायते = नवीनतामाप्नोति ( तरुणीवाचरतीति तरुणायते = नवयौवनं प्राप्नोति ) ( तरुणावस्था को प्राप्त होती रहती है ) ॥ ७८ ॥

हिन्दी—राजा के प्रस्थानकाल में रत्नमाला प्राप्त करने की इच्छा से राजा की स्त्रियाँ तथा भृत्य भी चलने को प्रस्तुत हो गये। पालकी में बैठे हुए राजा ने प्रीतिपूर्वक उस वृद्ध वानर को अपनी गोद में बैठा लिया और वह सुखपूर्वक राजा के साथ चलने लगा।

अथवा, ठीक ही कहा गया है—

"हे देवि, तृष्णे ! तुमको प्रणाम है। ( क्योंकि ) तृष्णा के वशीभूत होकर श्रेष्ठ जन भी अनुचित कार्य में प्रवृत्त हो जाते हैं और दुर्गम स्थानों में भटकते फिरते हैं ॥ ७६ ॥

शताधिप सहस्राधिप बनने की इच्छा करता है, सहस्राधिप लक्षाधिप बनने का प्रयास करता है, लक्षाधिप राज्य की कामना करता है और राजा स्वर्ग को हस्तागत करने की चेष्टा करता है। तृष्णा के वशीभूत होकर हर व्यक्ति आगे बढ़ना चाहता है (किन्तु मनुष्य की कामनाएँ अपरिमित होती हैं, उनका कभी भी अन्त नहीं होता है ) ॥ ७७ ॥

वृद्धावस्था में बाल, दाँत, आँख और कान आदि सभी इन्द्रियाँ शिथिल हो जाती हैं, मनुष्य अशक्त हो जाता है किन्तु उसकी तृष्णा नित्य प्रति युवावस्था को प्राप्त होती रहती है। मनुष्य की कामनायें कभी भी पूर्ण नहीं होती हैं, वह नित्य नवयौवना युवती की भाँति नवीन होती चली जाती है" ॥ ७८ ॥

अथ तत्सरः समासाद्य वानरः प्रत्यूषसमये राजानमुवाच-"देव ! अत्राऽर्धोदिते सूर्येऽन्तःप्रविष्टानां सिद्धिर्भवति तत्सर्वोऽपि जन एकदैव प्रविशतु। त्वया पुनर्मया सह प्रवेष्टव्यं, येन पूर्वदृष्टस्थानमासाद्य, प्रभूतास्ते रत्नमाला दर्शयामि।"

अथ प्रविष्टास्ते लोकाः सर्वे भक्षिता राक्षसेन। अथ तेषु चिरमाणेषु राजा वानरमाह—"भो यूथाधिप ! किमिति चिरयते मे परिजनः ?"

तच्छ्रुत्वा वानरः सत्वरं वृक्षमारुह्य, राजानमुवाच—"भो दुष्टनरपते ! राक्षसेनान्तःसलिलस्थितेन भक्षितस्ते परिजनः । साधितं मया कुलक्षयजं वैरम्, तद् गम्यताम् । त्वं स्वामीति मत्वा नाऽत्र प्रवेशितः । उक्तं च—

कृते प्रतिकृतं कुर्याद्धिंसिते प्रतिहिंसितम् ।
न तत्र दोषं पश्यामि, यो दुष्टे दुष्टमाचरेत् ॥ ७९ ॥

तत्त्वया मम कुलक्षयः कृतः, मया पुनस्तव" इति ।

अथैतदाकर्ण्य, राजा कोपाविष्टः पदातिरेकाकी, यथायातमार्गेण निष्क्रान्तः । अथ तस्मिन् भूपतौ गते राक्षसस्तृप्तो जलान्निष्क्रम्य सानन्दमिदमाह—

"हतः शत्रुः, कृतं मित्रं, रत्नमाला न हारिता ।
नालेन पिबता तोयं भवता साधु वानर ! ॥ ८० ॥"

अतोऽहं ब्रवीमि—"यो लौल्यात्कुरुते कर्म" इति ।

व्याख्या—प्रत्यूषसमये = प्रभातसमये ( उषःकाल में ), अत्र = सरसि ( इस तालाब में ), अर्धोदिते = अर्धोदयकालिके ( सूर्य के अर्धोदय काल में ), अन्तःप्रविष्टानां = मध्ये प्रविष्टानां ( तालाब के भीतर प्रवेश करने वाले को ), सिद्धिः = मनोरथपूर्तिः ( रत्नमालाप्राप्तिः ) ( रत्न-माला की प्राप्ति ), एकदैव = एकस्मिन्काले ( एक ही समय में ), लोकाः = जनसमुदायः ( सभी लोग ), अथ = कियत्कालानन्तरं ( कुछ काल के बाद ), तेषु = राजपरिवारेषु ( राजकुटुम्ब के सदस्यों के ), चिरमाणेषु = विलम्बायमानेषु ( अधिक देर करने पर ), चिरायते = अतिकालायते ( देर कर रहे हैं )। सत्वरं = अतिशीघ्रं ( तत्काल ), अन्तःसलिलस्थितेन = जलमध्यगतेन ( जल में रहनेवाले ), साधितं = सम्पादितं ( चुका लिया ), कुलक्षयजं = कुटुम्बक्षयेनोत्पन्नं ( कुल क्षय से उत्पन्न ), स्वामीति मत्वा = कुलप्रभुः मम पालकश्चेति विचार्य ( आप मेरे पालक तथा इस कुटुम्ब के स्वामी हैं, यह सोचकर ), अत्र = सरसि ( तालाब में ), न प्रवेशितः ( नहीं प्रवेश करने दिया )।

कृते = अपकृते ( अपकार के समय, अपकार करनेवाले व्यक्ति का ), प्रतिकृतं = प्रति-कारं ( प्रतीकार ) हिंसिते = मारणे, हते सति ( मारने के समय ), प्रतिहिंसितम् = प्रतिवधः ( मारना ), दुष्टे = दुष्टजने ( दुष्ट व्यक्ति के प्रति ), दुष्टम् = दण्डादिकं ( दुष्टता या दण्ड आदि ), तत्र = तस्मिन् कार्ये ( उस कार्य में प्रतिकार करने में ), दोष न पश्यामि ॥ ७९ ॥

त्वया = भूपतिना ( तुमने ), कुलक्षयः = कुलविनाशः ( कुल का विनाश ), मया = वानरेण ( मैंने ), कोपाविष्टः = क्रोधाभिभूतः ( क्रोधाभिभूत होकर ), पदातिः = पादचारी ( पैदल ), यथायातमार्गेण = येनायातस्तेनैव पथा ( जिस मार्ग से आये थे उसी से ), निष्क्रान्तः = गतः ( चले गये )। गते = प्रयाते ( चले जाने पर ) तृप्तः = सुतृप्तः ( तृप्त होकर आह । हतः = निहतः ( मार डाला ), कृतं मित्रं = मया सह मैत्री कृता ( मेरे मित्रता ...

कर ली ), हारिता=त्यक्त ( खोये ) हे वानर ! साधु=कुशलोऽसि इति ( तुम पूर्ण चतुर हो ) ॥ ८० ॥

हिन्दी—उषाकाल में उस तालाब के किनारे पहुँचकर वानर ने राजा से कहा—"देव ! सूर्य के अर्धोदय काल में ही इस तालाब में प्रवेश करने से अभीष्ट ( रत्नमाला ) की सिद्धि ( प्राप्ति ) होती है । अतः सभी लोग एक ही समय में प्रवेश करें तो अच्छा होगा । और आप ( अभी रुक जाइये ), मेरे साथ प्रवेश कीजियेगा, जिससे मैं पूर्व परिचित स्थान में आपको ले चलकर असंख्य रत्नमालाओं को दिखाऊँगा।"

उस तालाब में प्रवेश करते ही राजा के सम्पूर्ण परिवार को वह राक्षस खा गया। अपने परिजनों को देर करते देखकर राजा ने वानर से पूछा—"यूथाधिप ! मेरे अनुयायी लोग अभी तक बाहर नहीं निकले, उसके निकलने में देर क्यों हो रही है ?"

राजा के प्रश्न को सुनकर वह वानर तत्काल एक वृक्ष पर चढ़ गया और ऊपर से ही उत्तर दिया—"अरे नीच भूपति ! जलाशय में निवास करने वाले राक्षस ने तुम्हारे परिजनों को खा लिया है । मैंने अपने कुल के विनाश का बदला चुका लिया । तुम यहाँ से जा सकते हो । तुमको अपना पालक समझकर मैंने जलाशय में प्रवेश नहीं करने दिया । कहा भी गया है कि—अपकार के समय अपकार करने वाले व्यक्ति का अपकार करना, मारते समय मारनेवाले व्यक्ति को मारना और दुष्ट व्यक्ति के प्रति दुष्टता का आचरण करना उचित है । ऐसा करने पर दोष नहीं होता है अतः तुम्हारे प्रति किये गये आचरण को मैं दोष-युक्त नहीं समझता हूँ ॥ ७६ ॥

तुमने मेरे कुल का विनाश किया है, अतः मैंने तुम्हारे कुल का नाश कर दिया है ।

वानर के उक्त वाक्य को सुनकर राजा क्रोधाभिभूत होकर, पैदल ही जिस मार्ग से आया था वापस चला गया । राजा के चले जाने पर राक्षस ने जलाशय से बाहर निकलकर अत्यन्त प्रसन्नता के साथ कहा—कमल के नाल से जल पीने की निपुणता दिखाकर तुमने अपने शत्रु का विनाश कर दिया, मेरे साथ मित्रता भी कर ली, और रत्नमाला को कहीं खोया भी नहीं, वानरराज ! तुम्हारी बुद्धि धन्य है । वस्तुतः तुम एक चतुर वानर हो ॥ ८० ॥

एवमुक्त्वा, भूयोऽपि स चक्रधरमाह—"भो मित्र ! प्रेषय मां, येन स्वगृहं गच्छामि ।"

चक्रधर आह—"भद्र ! आपदर्थे धनमित्रसङ्ग्रहः क्रियते । तन्मामेवंविधं त्यक्त्वा क्व यास्यसि ? उक्तं च—

> यस्त्यक्त्वा सापदं मित्रं याति निष्ठुरतां वहन् ।
> कृतघ्नस्तेन पापेन नरके यात्यसंशयम्" ॥ ८१ ॥

सुवर्णसिद्धिराह—भोः, सत्यमेतद्यदि गम्यस्थाने शक्तिर्भवति । एतत्पुनर्मनुष्याणामगम्यस्थानम् । नाऽस्ति कस्याऽपि त्वामुन्मोचयितुं शक्तिः । अपरं यथा-

यथा चक्रभ्रमवेदनया तव मुखविकारं पश्यामि तथा-तथाऽहमेतज्जानामि यत्-द्राग् गच्छामि, मा कश्चिन्ममाऽप्यनर्थो भवेदिति । यतः—

यादृशी वदनच्छाया दृश्यते तव वानर ।
विकालेन गृहीतोऽसि, यः परैति स जीवति" ॥ ८२ ॥

चक्रधर आह—कथमेतत् ? सोऽब्रवीत्—

व्याख्या—प्रेषय मां = गमनायानुमतिं प्रयच्छ ( चलने की आज्ञा दो )। आपदर्थे = आपदर्थम् ( आपत्तितः परित्राणार्थमिति भावः ) ( आपत्ति के समय सहयोग के लिए ), धनमित्र-सङ्ग्रहः = धनानां मित्राणां च सञ्चयः ( धन एवं मित्र का सञ्चय ) एवंविधं = चक्राकुलं ( चक्र से पीड़ित ), क्व यास्यसि = कुत्र गच्छसि ( कहाँ जा रहे हो ) ।

अन्वयः—यः सापदं मित्रं त्यक्त्वा निष्ठुरतां वहन् याति, ( सः ) कृतघ्नः तेन पापेन असंशयं नरके याति ॥ ८१ ॥

व्याख्या—सापदं = विपद्ग्रस्तं ( विपत्ति में पड़े हुए ), त्यक्त्वा = परिहाय ( छोड़कर ), निष्ठुरतां = नैष्ठुर्यं ( निष्ठुरता ), वहन् = धारयन् ( धारण करके ), कृतघ्नः = अकृतज्ञः ( कृतं हन्तीति कृतघ्नः ) ( कृतघ्नता को प्राप्त होकर ), तेन पापेन = मित्रत्यागरूपेण पापेन, कृतघ्नतया वा ( मित्र के प्रति कृतघ्नता का व्यवहार करने से ), नरके, याति = गच्छति ॥८१॥

गम्यस्थाने = गमनयोग्ये स्थाने ( जाने योग्य स्थान में ), मोचयितुम् = उन्मोचयितुं ( छुड़ाने की ), शक्तिः = सामर्थ्यं ), मुखविकारं = वदनविकृतिं ( मुख की आकृति को ) प्राग् = त्वरितम् ( अति शीघ्र ), अनर्थः = आपत्तिः ( विपत्ति ), भवेदिति ।

अन्वयः—हे वानर ! यादृशी तव वदनच्छाया दृश्यते ( तेन ज्ञायते ) विकालेन गृहीतोऽसि, यः परैति स जीवति ॥ ८२ ॥

व्याख्या—यादृशी = यथा ( जैसी ), वदनच्छाया = मुखदीप्तिः ( मुख की कान्ति ), दृश्यते, तेन सुस्पष्टमेवेति ज्ञायते यत्—विकालेन = विकालाख्यराक्षसेन, विशेषविपत्त्या वा ( किसी आपत्ति या राक्षस से ), गृहीतोऽसि = निगृहीतोऽसि ( अभिभूत हो ), अतः—यः = पुरुषः ( जो व्यक्ति ), परैति = पलायते ( तुमसे दूर भाग जायेगा ) जीवति = जीवनं धारयिष्यति ( जीवित बच सकेगा ) ॥ ८२ ॥

हिन्दी—अतएव मैं कहता हूँ कि जो लोभ के कारण कार्य करता है...आदि । उक्त कथा को सुनाने के बाद सुवर्णसिद्धि ने पुनः चक्रधर से कहा—"मित्र ! अब मुझे जाने की अनुमति दो जिससे मैं घर जा सकूँ ।"

चक्रधर ने कहा—"भद्र ! विपत्ति काल में सहयोग करने के लिए ही धन एवं मित्र का सञ्चय किया जाता है । तुम मुझे इस स्थिति में छोड़कर कहाँ जाओगे ? क्योंकि—जो व्यक्ति आपत्ति में पड़े हुए मित्र को छोड़कर निष्ठुरतापूर्वक चला जाता है, वह कृतघ्न, उसी पाप के कारण निःसन्देह नरक का भागी बनता है" ॥ ८१ ॥

सुवर्णसिद्धि ने कहा—"तुम ठीक कहते हो। यदि इस स्थान में रहने की शक्ति होती तो मैं अवश्य रह जाता। यह स्थान मनुष्य के ठहरने योग्य नहीं है। और तुम्हें इस चक्र से छुड़ाने का सामर्थ्य किसी में नहीं है। दूसरी बात यह है कि-जैसे जैसे इस चक्र के घूमने से पीड़ा के कारण तुम्हारी बदलती हुई मुखाकृति को देखता हूँ तो, उससे मैं इस निष्कर्ष पर पहुँचता हूँ कि—मुझे यहाँ से अतिशीघ्र चला जाना चाहिये। कहीं ऐसा न हो कि मैं भी किसी आपत्ति में पड़ जाऊँ। क्योंकि—"कहा गया है—हे वानर! जैसी तुम्हारे मुख की कान्ति दिखाई पड़ती है, उससे यह स्पष्ट हो जाता है कि तुम विकाल नाम के राक्षस से अभिभूत हो चुके हो (किसी विशेष विपत्ति में पड़े हुए हो) अतः जो यहाँ से दूर भाग जायेगा वही जीवित बच सकेगा" ॥ ८२ ॥

चक्रधर ने पूछा—कैसे? सुवर्णसिद्धि ने कहा—

## १० विकाल-वानर-कथा

"कस्मिंश्चिन्नगरे भद्रसेनो नाम राजा प्रतिवसति स्म। तस्य सर्वलक्षणसंपन्ना रत्नवती नाम कन्याऽस्ति। तां कश्चिद्राक्षसो जिहीर्षति। रात्रावागत्योपभुङ्क्ते, परं कृतरक्षोपधानां तां हर्तुं न शक्नोति। साऽपि तत्समये रक्षःसांनिध्यजामवस्थामनुभवति कम्पादिभिः।

एवमतिक्रामति काले कदाचित्स राक्षसो मध्यनिशायां गृहकोणे स्थितः। साऽपि राजकन्या स्वसखीमुवाच—"सखि! पश्यैष विकालः समये नित्यमेव मां कदर्थयति। अस्ति तस्य दुरात्मनः प्रतिषेधोपायः कश्चित्?"

तच्छ्रुत्वा राक्षसोऽपि व्यचिन्तयत्—"नूनं यथाऽहं, तथाऽन्योऽपि कश्चिद्विकालनामाऽस्या हरणाय नित्यमेवागच्छति, परं सोऽप्येनां हर्तुं न शक्नोति। तत्तावदश्वरूपं कृत्वाश्वमध्यगतो निरीक्षयामि—किंरूपः सः किंप्रभावश्चेति?" एवं राक्षसोऽश्वरूपं कृत्वाऽश्वानां मध्ये तिष्ठति।

व्याख्या—सर्वलक्षणसपन्ना=सर्वलक्षणयुक्ता (सभी लक्षणों से युक्त), कन्या=पुत्री, जिहीर्षति=हर्तुमिच्छति (हरना चाहता था), उपभुङ्क्ते=तया सह कामक्रीडां करोति (दुराचार करता था), कृतरक्षोपधानां=कृतरक्षाविधानां (मन्त्रादिभिः परिरक्षितामित्यर्थः, कृतं रक्षाया उपधानं यस्याः सा ताम्) (मन्त्रादि द्वारा अभिरक्षित उस कन्या को) हर्तुं=नेतुं (हरण नहीं कर पाता था), तत्समये=राक्षसस्यागमनकाले, रतिसमये वा (रति काल में), रक्षःसांनिध्यजां=राक्षसागमनकालिकीं (राक्षस के आगमन की), कम्पादिभिः=शरीरकम्पनादिभिः (शरीर के काँपने से), अतिक्रामति=गच्छति (गुजरते हुए), मध्यनिशायाम्=

अर्धरात्रे ( अर्धरात्रि के समय ), विकालः = विकालनामा, विकरालाकृतिर्ना ( विकराल आकृति वाला ), समये = निशीथे ( रात्रि में ) कदर्थयति = पीडयति ( कष्ट देता है ), प्रतिषेधोपायः = निरोधोपायः ( रोकने का उपाय ), अन्योऽपि ( दूसरा भी कोई ), अस्याः = कन्यायाः ( कन्या का ), एनां = कन्यां ( कन्या को ), अश्वरूपं कृत्वा = घोटकरूपं विधाय ( घोड़े का रूप धारण कर ), अश्वमध्यगतः = अश्वानां मध्ये स्थितः सन् ( घोड़ों के बीच में रहकर ), निरीक्षयामि = पश्यामि ( देखता हूँ ), किंप्रभावः = किंविक्रमः ( कितनी शक्ति वाला है )।

हिन्दी—किसी नगर में भद्रसेन नामक का राजा रहता था। उसकी सभी लक्षणों से युक्त रत्नवती नाम की एक कन्या थी। उस कन्या को एक राक्षस हरना चाहता था। रात्रि में आकर वह उसके साथ कामक्रीडा किया करता था किन्तु मन्त्र-यन्त्रादि द्वारा अभिरक्षित होने के कारण उसका अपहरण नहीं कर पाता था। रात्रि के समय वह कन्या अपने शरीर के प्रकम्पन आदि से राक्षस के आगमन का आभास पा जाती थी।

इसी तरह कुछ दिन व्यतीत हो गये। एक दिन वह राक्षस आकर घर के एक कोने में बैठ गया। इसी बीच उस राजकन्या ने अपनी सखी से कहा—"हे सखि ! देखो, यह विकाल नामका राक्षस ( अत्यन्त भीषण आकृतिवाला ), नित्य रात्रि में मुझे कष्ट पहुँचाता है। क्या इस दुष्ट के प्रतिरोध का कोई उपाय हो सकता है ?"

राजकन्या के उक्त वाक्य को सुनकर राक्षस ने सोचा—"जिस प्रकार मैं इसका अपहरण करना चाहता हूँ उसी तरह जान पड़ता है कोई दूसरा भी विकाल नाम का राक्षस इसको हरने के लिये प्रतिदिन आया करता है, किन्तु वह भी इसका अपहरण नहीं कर पाता है।

मैं अश्व का रूप धारणकर घोड़ों के बीच में बैठ जाता हूँ और देखता हूँ, वह कितना सुन्दर तथा कितना प्रभावशाली है ?"

वह राक्षस अश्व का रूप धारणकर घोड़ों के बीच में खड़ा हो गया।

तथाऽनुष्ठिते निशीथसमये राजगृहे कश्चिदश्वचौरः प्रविष्टः। स च सर्वानश्वानवलोक्य, तं राक्षसमश्वतमं विज्ञायाऽधिरूढः।

अत्राऽन्तरे राक्षसश्चिन्तयामास—"नूनमेष विकालनामा मां चौरं मत्वा कोपान्निहन्तुमागतः। तत्किं करोमि ?" एवं चिन्तयन् सोऽपि तेन खलीनं मुखे निधाय, कशाघातेन ताडितः। अथाऽसौ भयत्रस्तमनाः प्रधावितुमारब्धः।

चौरोऽपि दूरं गत्वा, खलीनाकर्षणेन तं स्थिरं कर्तुमारब्धवान्। स तु वेगाद्वेगतरं गच्छति। अथ तं तथा गणितखलीनाकर्षणं मत्वा चौरश्चिन्तयामास—"अहो, नैवंविधा वाजिनो भवन्त्यगणितखलीनाः। तन्नूनमनेनाऽश्वरूपेण राक्षसेन भवितव्यम्। यद्यदि कञ्चित्पांसुलं भूमिदेशमवलोकयामि तदात्मानं तत्र पातयामि। नाऽन्यथा मे जीवितव्यमस्ति।

व्याख्या—तथाऽनुष्ठिते = तथाकृते सति, निशीथसमये = अर्धरात्रे (आधीरात में), अश्वतमं = श्रेष्ठमश्वं ( उत्तम ), मत्वा = विज्ञाय ( समझकर ), निहन्तुं = मारयितुं ( मारने के लिये ),

सोऽपि = राक्षसः ( उस राक्षस को ) तेन = चौरेण ( चोर ने ); खलीनं = कविकां ( 'कविका तु खलीनोऽस्त्री' इत्यमरः—खे = मुखे लीनं खलीनम् ) ( लगाम ), निधाय = आरोप्य ( लगाकर ), कशाघातेन = कशाप्रहारेण ( 'अश्वादेस्ताडनी कशा' ) (चाबुक से), भयत्रस्तमनाः = भययुक्तः ( भयभीत मन होकर ), प्रधावितुं = धावितुमारब्धः ( दौड़ने लगा )। खलीनाकर्षणेन = कविकाकर्षणेन ( लगाम को खींचकर ), तं = राक्षसरूपाश्वं ( राक्षसरूपी अश्वको ) सः = अश्वः (घोड़ा), वेगाद्वेगतरं = तीव्रात्तीव्रतरं ( और अधिक वेग से ) गच्छति = प्रधावति ( दौड़ने लगा ), अगणितखलीनाकर्षणं = विगणितकविकाकर्षणं ( लगाम के अवरोध को न मानने वाला ) वाजिनः = अश्वाः, पांसुलं = सिकताबहुलं ( धूसर ), जीवितव्यं = जीवनम् ( जीवन )।

हिन्दी—राक्षस के घोड़ों के मध्य में खड़ा होने के बाद, रात्रि में कोई अश्व-चोर राजा की अश्वशाला में घुसा। सम्पूर्ण घोड़ों को देखने के बाद वह राक्षस रूपी अश्व को श्रेष्ठतम समझकर उसी पर चढ़ गया। इसके बाद राक्षस सोचने लगा—निश्चय रूप से यही विकाल नाम का वह राक्षस है, जो मुझे चोर समझकर मारने के लिये आया है। तो क्या करूँ इस समय ?

अभी वह सोच ही रहा था कि उस चोर ने उसके मुख में लगाम लगाकर कोड़े से मारा। कोड़े की मार खाकर वह भयभीत हो उठा और दौड़ना प्रारम्भ कर दिया।

कुछ दूर जाने के बाद चोर लगाम को खींचकर उसे रोकने लगा। लगाम को खींचने पर वह राक्षस और भी वेग से भागने लगा। लगाम के अवरोध को न मानते हुये उसे देखकर चोर चिन्ता में पड़ गया। वह सोचने लगा—"इस प्रकार के अश्व नहीं हो सकते हैं जो लगाम के अवरोध को न मानें। जान पड़ता है यह अश्व का रूप धारण किया हुआ कोई राक्षस है। यदि कहीं पर बालूवाली जमीन मिल जाय तो मैं कूद पड़ूँ, अन्यथा मेरा प्राण बचना कठिन है।"

एवं चिन्तयत इष्टदेवतां स्मरतस्तस्य सोऽश्वो वटवृक्षस्य तले निष्क्रान्तः। चौरोऽपि वटप्ररोहमासाद्य तत्रैव विलग्नः। ततो द्वावपि तौ पृथग्भूतौ परमानन्दभाजौ, जीवितविषये लब्धप्रत्याशौ सम्पन्नौ।

अथ तत्र वटे कश्चिद्राक्षससुहृद्वानरः स्थित आसीत्। तेन राक्षसं त्रस्तमालोक्य, व्याहृतं—"भो मित्र! किमेवं पलाय्यतेऽलीकभयेन ? त्वद्भक्ष्योऽयं मानुषः, भक्ष्यताम्।"

सोऽपि वानरवचो निशम्य, स्वरूपमाधाय शङ्कितमनाः स्खलितगतिर्निवृत्तः। चौरोऽपि तं वानराहूतं ज्ञात्वा, कोपात्तस्य लाङ्गूलं लम्बमानं मुखे निधाय, चर्वितवान्।

वानरोऽपि तं राक्षसाऽभ्यधिकं मन्यमानो भयान्न किञ्चिदुक्तवान्। केवलं व्यथार्तो निमीलितनयनस्तिष्ठति। राक्षसोऽपि तं तथाभूतमवलोक्य श्लोकमेनमपठत्—

यादृशी वदनच्छाया दृश्यते तव वानर ! ।
विकालेन गृहीतोऽसि, यः परैति स जीवति ॥

इत्युक्त्वा प्रनष्टश्च ।"

व्याख्या—चिन्तयतः = चिन्तामधिरूढस्य ( चिन्ताग्रस्त ); इष्टदेवतां स्मरतः = स्वेष्टदेवतां प्रार्थयतः ( अपने इष्टदेव का स्मरण करते हुये ), तस्य = चौरस्य निष्क्रान्तः = निर्गतः (गुजरा)। वटप्ररोहं = वटवृक्षस्य जटां ( वट वृक्ष की जटा = वरोह को ), आसाद्य = धृत्वा ( पकड़ कर ) तत्रैव = वटवृक्षे, विलग्नः = प्रलग्नोऽभूत् ( लिपट गया ) । द्वौ = चोरराक्षसौ ( चोर तथा राक्षस दोनों ही ), पृथग्भूतौ = पृथग्जातौ ( विलग होकर ), जीवितविषये = स्वस्वजीवनविषये ( अपने अपने जीवने के विषय में ), लब्धप्रत्याशौ = प्राप्ताशौ ( आशान्वित हो गये ) ।

त्रस्तमालोक्य = भयग्रस्तं विलोक्य ( भयभीत देखकर ), व्याहृतं = कथितं ( कहा ), पलाय्यते = पलायनं क्रियते ( भागते हो ), अलीकभयेन = मिथ्याभयेन (झूठे भय से), भक्ष्यः = खाद्यभूतः ( खाद्य), निशम्य = श्रुत्वा ( सुनकर ), स्वरूपमाधाय = स्वकीयं रूपं गृहीत्वा ( अपना रूप धारण करके ), स्खलितगतिः = स्खलितवेगः ( मन्द गति से ), वानराहूतं = वानरेणावाहितं ( वानर द्वारा आवाहित ), कोपात् = क्रोधात् ( क्रोध के कारण ), लांगूलं = पुच्छम् ( पूँछ को) चर्वितवान् = खादितवान् ( चबा गया ), राक्षसाभ्यधिकं = राक्षसादपि बलवत्तरं ( राक्षस से भी शक्तिशाली ) व्यथार्तः = व्यथया दुःखितः सन् ( व्यथा से दुःखित होकर ), निमीलित-नयनः = निमीलितलोचनः ( आँख बन्द करके ), तथाभूतं = दुःखितं मौनं च ( दुःखित तथा मौन ), प्रनष्टः = पलायितः ( भाग गया ) ।

हिन्दी—चोर मन में अपने इष्ट देवता का स्मरण करता हुआ अभी अपने बचने का उपाय सोच ही रहा था कि वह अश्व एक वट-वृक्ष के नीचे से होकर गुजरा । चोर उसके वरोह को पकड़कर उसी से लिपट गया । इस प्रकार दोनों ही एक दूसरे से अलग होकर अत्यन्त प्रसन्न हुये और दोनों ही को अपने-अपने जीवन के विषय में कुछ-कुछ आशा का सञ्चार होने लगा ।

उस वट-वृक्ष पर उस राक्षस का मित्र एक वानर रहता था । राक्षस को भयभीत होकर भागते हुए जब उसने देखा तो उसे रोकते हुये कहा—"झूठमूठ के भय से तुम क्यों भाग रहे हो । यह तो तुम्हारा भक्ष्य मनुष्य है । इसे पकड़कर खा जाओ ।" वानर के वचन को सुनकर वह राक्षस अपना स्वरूप प्रकट करके भयग्रस्त सा धीरे-धीरे अपनी गति को रोकते हुये खड़ा हो गया । चोर भी उस राक्षस की वानर द्वारा आवाहित समझकर क्रोध के कारण उसकी लटकती हुई पूँछ को चबाने लगा । उस चोर को राक्षस से भी अधिक बलवान् समझ कर डर के मारे वानर ने कुछ कहा नहीं, केवल अपनी दोनों आँखों को बन्द करके मौन पड़ा रहा । राक्षस ने जब उसको इस प्रकार मौन देखा तो इस श्लोक को पढ़ा—"यादृशी वदनच्छाया" आदि । इस श्लोक को पढ़ने के बाद वह तत्काल वहाँ से भाग खड़ा हुआ ।

"तत्प्रेषय मां, येन गृहं गच्छामि। त्वं पुनरनुभुङ्क्ष्वाऽत्र स्थित एव लोभवृक्ष-फलम्।"

चक्रधर आह—"भोः अकारणमेतत् दैववशात्सम्पद्यते नृणां शुभाऽशुभम्। उक्तं च—

दुर्गस्त्रिकूटः, परिखा समुद्रो, रक्षांसि योधा धनदाच्च वित्तम्।
शास्त्रं च यस्योशनसा प्रणीतं, स रावणो दैववशाद्विपन्नः ॥ ८३ ॥

तथा च—

अन्धकः, कुब्जकश्चैव, त्रिस्तनी राजकन्यका।
त्रयोऽप्यन्यायतः सिद्धाः संमुखे कर्मणि स्थिते" ॥ ८४ ॥

सुवर्णसिद्धिः प्राह—"कथमेतत्?" सोऽब्रवीत्—

व्याख्या—भुङ्क्ष्व = अनुभव (अनुभव करो), दैववशात् (भाग्य से), लोभरूपवृक्षफलं = लोभरूपवृक्षफलमित्यर्थः।

अन्वयः—यस्य त्रिकूटः दुर्गः समुद्रः परिखा, योधा रक्षांसि, धनदाच्च वित्तं उशनसा प्रणीतं शास्त्रं स रावणः दैववशात् विपन्नः ॥ ८३ ॥

व्याख्या—त्रिकूटदुर्गः = त्रिकूट पर्वतः दुर्गः (त्रिकूटपर्वत ही दुर्ग था), धनदात् = कुबेरात् (कुबेर से) दैवशात् = भाग्यवशात् (भाग्य के कारण ही), विपन्नः = नष्टः (मारा गया) ॥ ८३ ॥

संमुखे = अनुकूले (अनुकूल), कर्मणि = भाग्ये (भाग्य के), स्थिते = संस्थिते (रहने के कारण), अन्यायतः = असत्कार्यं कुर्वन्तः, अन्यायं कुर्वन्तो वा (असत्कर्म करते हुए भी), सिद्धाः = स्वार्थं प्राप्ताः (अपनी अपनी कामना को प्राप्त कर लिये) ॥ ८४ ॥

हिन्दी—सुवर्णसिद्धि ने कहा—अब आज्ञा दो कि मैं घर चला जाऊँ। तुम यहीं रहकर लोभ रूपी वृक्ष का फल चखो।

चक्रधर ने कहा—मैं तुम्हारी इस बात से सहमत नहीं हूँ। भाग्य के कारण मनुष्य शुभाशुभ फल का उपभोग करता है। कहा भी गया है—

त्रिकूट पर्वत ही जिसका दुर्ग था, समुद्र खाई का काम करता था, वीर तथा प्रशिक्षित राक्षस जिसके सहायक थे, कुबेर का सम्पूर्ण धन जिसका अपना था और उशनस-प्रणीत नीति शास्त्र का जो उद्भट विद्वान् था, वह रावण भी भाग्य की प्रतिकूलता के ही कारण मारा गया ॥ ८३ ॥

और भी अन्ध, कुब्ज तथा त्रिस्तनी राजकन्या, इन तीनों ही ने असत्कार्य किया था किन्तु भाग्य की अनुकूलता से तीनों ही के मनोरथ पूर्ण हुए ॥ ८४ ॥

सुवर्णसिद्धि ने पूछा—कैसे? चक्रधर ने कहा—

## ११ अन्धक-कुब्जक-त्रिस्तनी-कथा

"अस्त्युत्तरापथे मधुपुरं नाम नगरम्। तत्र मधुसेनो नाम राजा बभूव। तस्य कदाचिद्विषयसुखमनुभवतस्त्रिस्तनी कन्या बभूव। अथ तां त्रिस्तनीं जातां श्रुत्वा, स राजा कञ्चुकिनः प्रोवाच—यत्—"भोः! त्यज्यतामियं त्रिस्तनी, गत्वा दूरेऽरण्ये यथा कश्चिन्न जानाति।"

तत् श्रुत्वा कञ्चुकिनः प्रोचुः—"महाराज! ज्ञायते यदनिष्टकारिणी त्रिस्तनी कन्या भवति। तथाऽपि ब्राह्मणा आहूय प्रष्टव्याः, येन लोकद्वयं न विरुध्यते। यतः—

> यः सततं परिपृच्छति, शृणोति, सन्धारयत्यनिशम्।
> तस्य दिवाकरकिरणैर्नलिनीव विवर्द्धते बुद्धिः ॥ ८५ ॥

तथा च—

> पृच्छकेन सदा भाव्यं पुरुषेण विजानता।
> राक्षसेन्द्रगृहीतोऽपि प्रश्नान्मुक्तो द्विजः पुरा" ॥ ८६ ॥

राजा आह—कथमेतत्? ते प्रोचुः—

व्याख्या—उत्तरापथे = उत्तरस्यां दिशि (उत्तर दिशा में), विषयसुखम् = स्त्रीसुखम (रतिसुखमित्यर्थः) (स्त्री सुख को), त्रिस्तनी = स्तनत्रययुक्ता (तीन स्तनों वाली) जाताम् = उत्पन्नां (उत्पन्न), कञ्चुकिनः = स्थापत्यान् अन्तःपुररक्षकान् वा ("सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्च ते" इत्यमरः) कञ्चुकियों से, त्यज्यताम् = दूर परित्यज्यताम् (दूर छोड़ दो), अरण्ये = वने (कानन में), अनिष्टकारिणी = कष्टकारिणी (पिता-माता को अनिष्ट करने वाली), लोकद्वयं = लोकपरलोकौ (इहलोक तथा परलोक), न विरुध्यते।

अन्वयः—यः सततं परिपृच्छति, शृणोति, अनिशं धारयति च, तस्य बुद्धिः दिवाकर-किरणैः नलिनी इव विवर्द्धते ॥ ८५ ॥

विजानता पुरुषेण सदा पृच्छकेन भाव्यं, पुरा राक्षसेन्द्रगृहीतोऽपि द्विजः प्रश्नान्मुक्तः ॥८६॥

व्याख्या—यः = यः पुरुषः (जो व्यक्ति), परिपृच्छति = पृच्छति, पृष्ट्वा कार्यं करोति (दूसरों से पूछ कर कार्य करता है), शृणोति = आकर्णयति, अन्यस्य वचनं शृणोति (दूसरों की बात को सुनता है), सन्धारयति = धारयति (दूसरों की बात को सुनकर उसपर मनन करता है और उसको कार्य में परिणत करता है), दिवाकरकिरणैः = सूर्यरश्मिभिः (सूर्य की किरणों से), नलिनी = कमलिनी इव वर्द्धते = विकसिता भवति ॥ ८५ ॥

विजानता = अवगच्छता (जानते हुए भी), सदा = सर्वदा, पृच्छकेन = परिपृच्छकेन (प्रश्नकर्त्रा), द्विजः = ब्राह्मणः, मुक्तः = उन्मुक्तो बभूव ॥ ८६ ॥

हिन्दी—उत्तर दिशा में मधुपुर नाम का नगर था। उसमें मधुसेन नाम का एक राजा राज्य करता था। एक बार उसको त्रिस्तनी नाम की एक कन्या उत्पन्न हुई। उस त्रिस्तनी कन्या के जन्म को सुनकर राजा बहुत चिन्तित हुआ। उसने कञ्चुकियों को बुलाकर कहा—"इस कन्या को ले जाकर कहीं दूर वन में छोड़ दो। और यह स्मरण रखना कि इस बात को कोई जानने न पाये।"

राजा के उस आदेश को सुनकर कञ्चुकियों ने कहा—"हम सभी लोग इस बातको जानते हैं कि त्रिस्तनी कन्या अनिष्टकारिणी होती हैं। फिर भी ब्राह्मणों को बुलाकर पूछ लेना चाहिए, जिससे इस लोक में निन्दा और परलोक में असद्गति न हो। क्योंकि—

जो व्यक्ति अन्य व्यक्तियों से परामर्श करता है, दूसरों की बात को ध्यान से सुनता है, और उसके अनुसार आचरण करता है, उसकी बुद्धि सूर्य की किरणों से खिलने वाली कमलिनी की भाँति सदा विकसित होती रहती है ॥ ८५ ॥

सब कुछ जानते हुए भी मनुष्य को पृच्छक अवश्य होना चाहिये। क्योंकि; राक्षस के द्वारा गृहीत ब्राह्मण उससे पूछने के कारण ही मुक्त हुआ था ॥ ८६ ॥

राजा ने पूछा—कैसे? उन कञ्चुकियों ने कहा—

## १२ रासभ-गृहीत-ब्राह्मणकथा

"देव! कस्मिंश्चिद्वनोद्देशे चण्डकर्मा नाम राक्षसः प्रतिवसति स्म। एकदा तेन भ्रमताऽटव्यां कश्चिद् ब्राह्मणः समासादितः। ततस्तस्य स्कन्धामारुह्य प्रोवाच—"भो! अग्रेसरो गम्यताम्।"

ब्राह्मणोऽपि भयत्रस्तमनास्तमादाय प्रस्थितः। अथ तस्य कमलोदरकोमलौ पादौ दृष्ट्वा ब्राह्मणो राक्षसमपृच्छत्—"भोः! किमेवंविधौ ते पादावतिकोमलौ?" राक्षस आह—"भोः! व्रतमस्ति, नाहमार्द्रपादो भूमिं स्पृशामि।"

ततस्तच्छ्रुत्वात्मनो मोक्षोपायं चिन्तयन् स सरः प्राप्तः। ततो राक्षसेनाऽभिहितं—"भो! यावदहं स्नानं कृत्वा, देवतार्चनाविधिं विधायागच्छामि, तावत्त्वयाऽतः स्थानादन्यत्र न गन्तव्यम्।"

व्याख्या—अटव्यां = वने (जंगल में), समासादितः = संलब्धः (पा गया), अग्रेसरः = अग्रे गन्ता (अथवा अग्रे तडागं यावदित्यर्थः) (आगे जाने वाले पथिकः, अथवा आगे के तालाब तक) तमादाय = राक्षसमादाय (राक्षस को कन्धे पर लेकर), कमलोदरकोमलौ = पङ्कजवत्कोमलौ कमलस्योदरम् = आभ्यन्तरो भागः तद्वत्कोमलौ (कमल के भीतरी भाग के सदृश कोमल), पादौ = चरणौ (पैरों को), व्रतमस्ति = प्रतिज्ञाऽस्ति (मेरी यह प्रतिज्ञा है कि),

आर्द्रपादः = जलाभिषिक्तचरणः ( भीगे हुए पैर से ), मोक्षोपायं = मोक्षस्योपायं ( मुक्ति का उपाय ) सरः = तडागः ( तालाब ), देवतार्चनं = देवतापूजां ( देवराधान ), न गन्तव्यम् = नाग्रे गन्तव्यमिति भावः ( आगे मत बढ़ना ) ।

हिन्दी—देव ! किसी वन में चण्डकर्मा नामका एक राक्षस रहता था। एक दिन वन में घूमते हुये उसने एक ब्राह्मण को देखा। वह तुरत उसके कन्धे पर चढ़कर बोला—"चलो, आगे बढ़ो ( आगे के तालाब तक चलो )।"

वह ब्राह्मण भयभीत होकर चला। कुछ दूर जाने के बाद राक्षस के कमलवत् कोमल चरणों को देखकर ब्राह्मण ने पूछा—"आपका चरण इतना कोमल क्यों है ?"

राक्षस ने उत्तर दिया—"मेरी यह प्रतिज्ञा है कि मैं भींगे हुये चरण से पृथ्वी का स्पर्श नहीं करूँगा।"

राक्षस के उक्त वाक्य को सुनकर वह ब्राह्मण अपनी मुक्ति का उपाय सोचता हुआ उस तालाब तक जा पहुँचा। राक्षस ने तालाब को देखकर कहा—"मैं स्नान करके देवताओं की पूजा कर लेता हूँ। जब तक मैं वापस न लौटूँ तब तक तुम आगे मत बढ़ना।"

तथाऽनुष्ठिते द्विजश्चिन्तयामास—"नूनं देवताऽर्चनविधेरूर्ध्वं मामेष भक्षयिष्यति। तद् द्रुततरं गच्छामि, येनैष आर्द्रपादो न मम पृष्ठमेष्यति।"

तथाऽनुष्ठिते, राक्षसो व्रतभङ्गभयात्तस्य पृष्ठं न गतः।" अतोऽहं ब्रवीमि—"पृच्छकेन सदा भाव्यम्" इति।

अथ तेभ्यस्तच्छ्रुत्वा, राजा द्विजानाहूय प्रोवाच—"भो ब्राह्मणाः ! त्रिस्तनी मे कन्या समुत्पन्ना, तत्किं तस्याः प्रतिविधानमस्ति, न वा ?"
ते प्रोचुः—"देव ! श्रूयताम्—

> हीनाङ्गी चाऽधिकाङ्गी वा या भवेत्कन्यका नृणाम्।
> भर्तुः स्यात्सा विनाशाय, स्वशीलनिधनाय च ॥ ८७ ॥
>
> या पुनस्त्रिस्तनी कन्या याति लोचनगोचरम्।
> पितरं नाशयत्येव सा द्रुतं, नाऽत्र संशयः ॥ ८८ ॥

व्याख्या—द्रुततरं = शीघ्रम् ( जल्दी से ), पृष्ठमेष्यति = अनुगमिष्यति ( पीछा करेगा ), व्रतभङ्गभयात् = प्रतिज्ञाभङ्गभयात् ( प्रतिज्ञा टूटने के भय से ), तेभ्यः = स्वापत्येभ्यः ( कञ्चुकियों से ), तस्याः = समुत्पन्नायाः ( उसके जन्म लेने का ), प्रतिविधानम् = दोषपरिहारोपायः ( निराकरण का उपाय )।

हीनाङ्गी = न्यूनावयवा ( हीन अङ्ग की ), अधिकांगी = अधिकावयवा ( अधिक अंगों वाली ), भर्तुः = स्वपतेः ( अपने पति का ) विनाशाय = नाशाय ( नाश करने वाली ) स्वशीलनिधनाय = स्वचारित्र्यभंगाय ( अपने चरित्र को गिराने वाली ) ॥ ८७ ॥

लोचनगोचरं = दृष्टिपथम् ( दृष्टि के समक्ष ), ( होती है या आती है ) द्रुतं = शीघ्रं ( शीघ्र ही ), ॥ ८८ ॥

हिन्दी—जब वह राक्षस स्नान के लिये चला तब ब्राह्मण ने सोचा "यह राक्षस पूजा से लौटने के पश्चात् निश्चय ही मुझे खा जायेगा। अतः शीघ्र यहाँ से भाग जाना चाहिये। क्योंकि भींगे हुये पैरों से यह मेरा पीछा नहीं करेगा।"

ब्राह्मण के भागने पर भी अपनी प्रतिज्ञा के टूटने के भय से राक्षस ने उसका पीछा नहीं किया। अतएव मैं कहता हूँ कि मनुष्य को प्रश्नकर्ता होना चाहिये।"

मन्त्रियों के उक्त वचन को सुनकर राजा ने ब्राह्मणों को बुलाकर कहा—"मेरे यहाँ त्रिस्तनी कन्या उत्पन्न हुई है। उसके जन्म की शान्ति का उपाय है या नहीं?" राजा के वचन को सुनकर ब्राह्मणों ने कहा—"देव!" सुनिये:—

हीन अङ्ग की या अधिक अङ्गों वाली कन्या अपने पति का विनाश करती है और अपने चरित्र को भी कलङ्कित करती है ॥ ८७ ॥

यदि त्रिस्तनी कन्या पिता के समक्ष उपस्थित होती है तो अपने पिता का शीघ्र ही विनाश करती है, इसमें सन्देह नहीं है ॥ ८८ ॥

तस्मादस्या दर्शनं परिहरतु देवः। तथा यदि कश्चिदुद्वाहयति, तदेनां तस्मै दत्त्वा, देशत्यागेन स नियोजयितव्यः इति। एवं कृते लोकद्वयाऽविरुद्धता भवति।"

अथ तेषां तद्वचनमाकर्ण्य, स राजा पटहशब्देन सर्वत्र घोषणामाज्ञापयामास—"अहो! त्रिस्तनीं राजकन्यां यः कश्चिदुद्वाहयति, स सुवर्णलक्षमाप्नोति देशत्यागञ्च।"

एवं तस्यामाघोषणायां क्रियमाणायां महान्कालो व्यतीतः। न कश्चित्तां प्रतिगृह्णाति। साऽपि यौवनोन्मुखी संजाता सुगुप्तस्थानस्थिता, यत्नेन रक्ष्यमाणा तिष्ठति।

व्याख्या—अस्याः=कन्यायाः (कन्या का), परिहरतु=वर्जयतु (बचावें) उद्वाहयति=विवाहयति (विवाह कर लेता है), देशत्यागेन (राज्य-त्याग से), नियोजयितव्यः=समायोजयितव्यः (संयोजित किया जाय, राज्य से निकाल दिया जाय), पटहशब्देन=आनकोद्घोषेण ('आनकः पटहोऽस्त्री' इत्यमरः), (नगाड़ा पीटकर), आप्नोति=प्राप्नोति (पायेगा), महान्कालः=दीर्घकालः (बहुत दिन), यत्नेन=प्रयत्नेन (प्रयत्नपूर्वक), तिष्ठति=निवसति (रहती थी)।

हिन्दी—अतएव आप इसका दर्शन न करें। यदि कोई व्यक्ति इसके साथ विवाह करना चाहे तो उसके साथ इसका विवाह करके उसको राज्य से निकाल दिया जाय। ऐसा करने से आपका दोनों लोक बना रहेगा।"

ब्राह्मणों के उक्त वचन को सुनकर राजा ने नगाड़ा पीटकर यह घोषणा करने की आज्ञा दे दी कि—"मेरी त्रिस्तनी कन्या के साथ जो व्यक्ति विवाह करेगा उसको एक लाख सुवर्ण

मुद्राएँ दो जायेंगी और साथ ही, उसको राज्य से निकाल भी दिया जायगा।" राजा की इस घोषणा के हुए बहुत दिन व्यतीत हो गये, किन्तु कोई व्यक्ति उस कन्या से विवाह करने के लिए प्रस्तुत नहीं हुआ। वह कन्या भी धीरे-धीरे युवती हो गयी। उसको गुप्त स्थान में अत्यन्त प्रयत्न के साथ सुरक्षित रखा गया था।

अथ तत्रैव नगरे कश्चिदन्धस्तिष्ठति। तस्य च मन्थरकनामा कुब्जोऽग्रेसरो यष्टिग्राही। ताभ्यां तं पटहशब्दमाकर्ण्य, मिथो मन्त्रितं—स्पृश्यतेऽयं पटहः। यदि कथमपि दैवात्कन्या लभ्यते, सुवर्णप्राप्तिश्च भवति, तदा सुखेन सुवर्णप्राप्त्या कालो व्रजति। अथ यदि तस्य दोषतो मृत्युर्भवति, तदा दारिद्र्योपात्तस्याऽस्य क्लेशस्य पर्यन्तो भवति। उक्तं च—

लज्जा स्नेहः स्वरमधुरता बुद्धयो यौवनश्रीः,
कान्तासङ्गः स्वजनममता दुःखहानिर्विलासः।
धर्मः शास्त्रं सुरगुरुमतिः शौचमाचारचिन्ता,
पूर्णे सर्वं जठरपिठरे प्राणिनां सम्भवन्ति॥ ८९॥

एवमुक्त्वाऽन्धेन गत्वा, स पटहः स्पृष्टः। उक्तं च—"भोः, अहं तां कन्यामुद्वाहयामि, यदि राजा मे प्रयच्छति।"

ततस्तै राजपुरुषैर्गत्वा, राज्ञे निवेदितं—"देव! अन्धेन केनचित्पटहः स्पृष्टः। तदत्र विषये देवः प्रमाणम्।"

राजा प्राह—

"अन्धो वा बधिरो वाऽपि कुष्ठी वाप्यन्त्यजोऽपि वा।
प्रतिगृह्णातु तां कन्यां सलक्षां स्याद्विदेशगः"॥ ९०॥

व्याख्या—अग्रेसरः = अग्रगः (आगे चलने वाला), यष्टिग्राही = यष्टिग्रहीता (लाठी को पकड़ने वाला), मिथः = परस्परम् (आपस में), मन्त्रितं = विचारितं (विचार किया), कालो व्रजति = कालो यास्यति (दिन कट जायगा), तस्याः = कन्यायाः (कन्या के), मृत्युः = मरणं (मृत्यु), दारिद्र्योपात्तस्य = दारिद्र्यजनितस्य (दरिद्रता के), क्लेशस्य = दुःखस्य (दुख की), पर्यन्तः = अवसानम् (समाप्ति)।

लज्जा = ह्रीः; स्नेहः = अनुरागः (स्नेह), स्वरमधुरता = प्रियभाषित्वं (प्रियभाषण), यौवनश्रीः = युवावस्था (जवानी), कान्तासङ्गः = स्त्रीप्रसङ्ग (स्त्री का साथ), सुरगुरुमतिः = देवगुरुषु पूज्यत्वबुद्धिः (देवताओं और गुरुओं के प्रति पूजा की भावना), शौचं = पवित्रत्वं (पवित्रता), आचारचिन्ता = आचरणविचारः (आचार की भावना), जठरपिठरे = उदरभाण्डे ('पिठरः स्थाल्युखा कुण्डमि'त्यमरः) (पेट रूपी बर्तन के), पूर्णे = पूरिते (पूर्ण होने पर), संभवन्ति = संपद्यन्ते (होती हैं)॥ ८९॥

प्रयच्छति = ददाति (प्रदान कर दें), राजपुरुषैः = राजभृत्यैः (सिपाहियों ने) सलक्षां =

लक्षमुद्रासहितां (एक लाख अशर्फियों से युक्त), विदेशगः=परदेशगः (विदेश चला जाय) ॥ ८६ ॥

हिन्दी—उसी नगर में एक अन्धा भी रहता था। मन्थरक नाम का एक कुब्ज व्यक्ति उसका मित्र था जो उसकी लाठी को पकड़कर आगे-आगे चलता था। उन दोनों ने राजा की घोषणा को सुना तो, आपस में विचार किया—"चलो पटह को छू लिया जाय। संयोग से राजकन्या मिल गयी तो एक लाख सुवर्णमुद्राएँ भी मिल जायेंगी। उनसे हम लोगों का समय आनन्द से व्यतीत होगा। यदि भाग्यवश ऐसा नहीं हो सका और कन्या के दोष से हमलोगों की मृत्यु ही हो गयी, तब भी हमलोगों के इस दुःखमय जीवन का अन्त हो जायगा। क्योंकि—

लज्जा, प्रेम, प्रियभाषिता, बुद्धि, युवावस्था, कामिनी जन समागम, प्रिय व्यक्तियों का मोह, दुःखहानि, विलास, धर्म, विद्या गुरुजनों के प्रति श्रद्धा, आचार, पवित्रता आदि का प्रादुर्भाव मनुष्य के मन में तभी होता है, जब उसका उदर-भाँण्ड भरा रहता है। पेट के खाली रहने पर कोई भी बात अच्छी नहीं लगती है ॥ ८९ ॥

इस प्रकार आपस में विचार-विमर्श करने के पश्चात् अन्धे ने जाकर पटह को पकड़ लिया और कहा—"यदि महाराज प्रस्तुत हों, तो मैं उस कन्या के साथ विवाह करना चाहता हूँ।"

राजपुरुषों ने राजा के पास जाकर इस समाचार को सुनाते हुए निवेदन किया—"देव! एक अन्धे ने पटह को पकड़ लिया है। इस विषय में आपका जो आदेश हो उसका हमलोग पालन करें।"

सिपाहियों के वचन को सुनकर राजा ने कहा—"चाहे वह अन्धा हो, बहिरा हो, कोढ़ी हो या अन्त्यज हो, मैं उसके साथ इस कन्या का विवाह करने को प्रस्तुत हूँ। वह एक लाख स्वर्णमुद्राओं के साथ इस कन्या को ग्रहण कर सकता है, केवल शर्त यह है कि उसे तत्काल यह राज्य छोड़ देना होगा॥" ९० ॥

अथ राजादेशात्तै राजपुरुषैस्तं नदीतीरे नीत्वा सुवर्णलक्षेण समं विवाहविधिना त्रिस्तनीं तस्मै दत्त्वा, जलयाने निधाय कैवर्ताः प्रोक्ताः—"भो! देशान्तरं नीत्वा कस्मिंश्चिदधिष्ठानेऽन्धः सपत्नीकः, कुब्जकेन सह मोचनीयः"।

तथाऽनुष्ठिते विदेशमासाद्य, कस्मिंश्चिदधिष्ठाने कैवर्तदर्शिते; त्रयोऽपि मूल्येन गृहं प्राप्ताः सुखेन कालं नयन्तिस्म। केवलमन्धः पर्यङ्के सुप्तः तिष्ठति, गृहव्यापारं मन्थरकः करोति। एवं गच्छता कालेन त्रिस्तन्याः कुब्जकेन सह विकृतिः समपद्यत। अथवा साध्विदमुच्यते—

"यदि स्याच्छीतलो वह्निश्चन्द्रमा दहनात्मकः।
सुस्वादुः सागरः स्त्रीणां तत्सतीत्वं प्रजायते" ॥ ९१ ॥

व्याख्या—तम्=अन्धम् (अन्धे को), तस्मै=अन्धाय। जलयाने=नौकायाम् (नाव में), कैवर्ताः=धीवराः (के=जले वर्तन्ते इति कैवर्ताः) (केवटों से), मोचनीयः=परि-

त्याज्यः ( छोड़ दिया जाय ), पर्यङ्के = मञ्चके ( चारपाई पर ), गृहव्यापारं = गृहप्रबन्धं ( घर का प्रबन्ध ), विकृतिः = मनोविकारः, पापसम्बन्धः ( व्यभिचार का सम्बन्ध ), समपद्यत ।

**अन्वयः**—यदि वह्निः शीतलः, चन्द्रमा दहनात्मकः, सागरः सुस्वादुः स्यात् तत् स्त्रीणां सतीत्वं प्रजायते ॥ ९१ ॥

**व्याख्या**—वह्निः = अग्निः, दहनात्मकः = उष्ण, शीतलः = ठंढा ( ठंढा हो जाय ), सुस्वादुः = सुपेयः, क्षारत्वरहितः ( मधुर ), तत् = तर्हि, सतीत्वं = पातिव्रत्यं ( सतीत्व ), प्रजायते ॥ ९१ ॥

**हिन्दी**—राजा की आज्ञा से सिपाहियों ने नदी के किनारे ले जाकर यथाविधि अन्धे के साथ उस त्रिस्तनी का विवाह कर दिया और एक लाख स्वर्ण मुद्राएँ उसको दे दीं । पुनः उनको नाव में बैठाकर केवटों को आदेश दिया—"अन्य देश में ले जाकर इनको किसी नगर में छोड़ जाओ ।"

राजपुरुषों की आज्ञा से वे तीनों, केवटों द्वारा प्रदर्शित किसी दूसरे नगर में जाकर मकान खरीद लिये और सुख पूर्वक रहने लगे । अन्धा रात दिन चारपाई पर पड़ा रहता था और और घर का सम्पूर्ण प्रबन्ध कुब्ज मन्थरक करता था । इस प्रकार कुछ दिन व्यतीत हो जाने के बाद त्रिस्तनी का कुब्ज मन्थरक के साथ अवैध सम्बन्ध हो गया । अथवा, ठीक ही कहा गया है कि—

अग्नि यदि अपनी स्वाभाविक उष्णता को छोड़कर शीतल हो जाय, चन्द्रमा शीतलता को छोड़कर उष्ण हो जाय और समुद्र सुपेय ( मधुर ) हो जाय तो कदाचित् स्त्री अपने सतीत्व का पालन कर सकती है ॥ ९१ ॥

अथाऽन्येद्युस्त्रिस्तन्या मन्थरकोऽभिहितः—"भो सुभग ! यद्येषोऽन्धः कथञ्चिद् व्यापाद्यते, तदावयोः सुखेन कालो याति । तदन्विष्यतां कुत्रचिद्विषम्, येनाऽस्मै तत्प्रदाय सुखिनी भवामि ।"

अन्यदा कुब्जकेन परिभ्रमता, मृतः कृष्णसर्पः प्राप्तः । तं गृहीत्वा, प्रहृष्टमना गृहमभ्येत्य, तामाह—"सुभगे ! लब्धोऽयं कृष्णसर्पः । तदेनं खण्डशः कृत्वा, प्रभूतशुण्ठ्यादिभिः, संस्कार्यास्मै विकलनेत्राय मत्स्यामिषं भणित्वा प्रयच्छ, येन द्रागिवनश्यति । यतोऽस्य मत्स्यामिषं सदा प्रियम् ।" एवमुक्त्वा मन्थरको बहिर्गतः ।

**व्याख्या**—अन्येद्युः = एकस्मिन्नन्यस्मिन् दिने ( किसी दिन ), व्यापाद्यते = हन्यते ( मार-डाला जाता ) प्रदाय = दत्वा ( देकर ), सुखिनी = चिन्तारहित, विगतभया ( निश्चिन्त ), अन्यदा = द्वितीयदिने ( दूसरे दिन ), अभ्येत्य = आगत्य ( आकर ), शुण्ठ्यादिभिः = शुण्ठीमरीच्यादिभिः ( सोंठ, मरीच आदि से ), संस्कार्य = संसाध्य ( छौंक लगाकर ), विकलनेत्राय = दृष्टिशून्याय ( अन्धे को ), आमिषं = मांसम् ( मांस ), भणित्वा = कथयित्वा ( कह कर ) द्राक् = झटिति ( तत्काल ), बहिर्गतः = बहिर्निर्गतः ( बाहर चला गया ) ।

हिन्दी—एक दिन त्रिस्तनी ने मन्थरक से कहा—"प्रिय ! यदि यह अन्धा किसी प्रकार मर जाता तो हम दोनों आनन्द से जीवन का सुख लेते। तुम कहीं से विष खोजकर ले आओ जिससे इसको विष खिलाकर निश्चिन्त हो जाऊँ।"

दूसरे दिन विष की खोज में घूमते हुये मन्थरक को एक मृत काला सर्प मिल गया। उसको लेकर वह प्रसन्नतापूर्वक घर लौटा और त्रिस्तनी से बोला—"प्रिये ! यह काला सर्प ले आया हूँ। इसको काटकर सोंठ, मरिच नमक आदि से खूब बढ़िया बनाओ और मछली का मांस बताकर इसे अन्धे को खिला दो इससे यह तत्काल मर जायगा। क्योंकि यह मछली का मांस खाने में विशेष रुचि रखता है !"

यह कहकर मन्थरक कहीं बाहर चला गया।

साऽपि प्रदीप्ते वह्नौ कृष्णसर्पं खण्डशः कृत्वा तक्रस्थाल्यामाधाय गृहव्यापाराकुला तं विकलाऽक्षं सप्रश्रयमुवाच "आर्यपुत्र ! तवाऽभीष्टं मत्स्यमांसं समानीतम्। यतस्त्वं सदैव तत्पृच्छसि। ते च मत्स्या वह्नौ पाचनाय तिष्ठन्ति। तद्यावदहं गृहकृत्यं करोमि, तावत्त्वं दर्वीमादाय क्षणमेकं तान्प्रचालय।"

सोऽपि तदाकर्ण्य हृष्टमनाः सृक्कणी परिलिहन् द्रुतमुत्थाय, दर्वीमादाय प्रमथितुमारब्धः। अथ तस्य मत्स्यान्मथ्नतो विषगर्भबाष्पेण संस्पृष्टं नीलपटलं चक्षुर्भ्यामगलत्। असावप्यन्धस्तं बहुगुण मन्यमानो, विशेषान्नेत्राभ्यां बाष्पग्रहणमकरोत्।

व्याख्या—प्रदीप्ते वह्नौ = प्रज्वलिताग्नौ ( जलते हुए अग्नि पर ), तक्रस्थाल्यां = तक्रभाण्डे ( मट्ठे के बर्तन में ), विकलाक्षं = दृष्टिशून्यम् ( अन्धे से ), सप्रश्रयं = सस्नेहम् ( स्नेह पूर्वक ), तवाभीष्टं = तव वाञ्छितं तव प्रियं वस्तु ( तुम्हारी प्रिय वस्तु ), पाचनाय = पाकाय ( पकने के लिए ); दर्वीं = खजाकाम् ( कलछी चम्मच को ) प्रचालय = मन्थय ( चलाओ ); सृक्कणी = ओष्ठप्रान्तौ ( ओठों को ), परिलिहन् = जिह्वया परिलिहन् ( जीभ से चाटते हुए ), प्रमथितुम् = परिचालयितुम् ( चलाने लगा ), मथ्नतः = परिचालयतः ( चलाते हुए ), विषगर्भबाष्पेण = गरलमिलितबाष्पेण ( विषमिश्रितवाष्प से ), नीलपटलं = नीलमावरणम् ( मोतियाबिन्द ) ( झिल्ली ), अगलत् = अस्रवत् ( गलकर गिरने लगा ), बहुगुणं = लाभप्रदं ( लाभदायक )।

हिन्दी—त्रिस्तनी ने उस सर्प को टुकड़े-टुकड़े काटकर छाँछ की हँड़िया पर रख दिया, और उसे अग्नि पर चढ़ाकर गृहकार्य की व्यस्तता के कारण स्नेहपूर्वक उस अन्धे से कहा—"आर्यपुत्र ! आपकी अभिलषित वस्तु मछली मँगायी गयी है, क्योंकि आप उसके विषय में बराबर पूछा करते हैं। उन मछलियों को पकने के लिये मैंने आग पर चढ़ा दिया है। आप चम्मच लेकर इसको चलाइये तब तक मैं घर का अन्य कार्य कर लेती हूँ।"



उसकी बात को सुनकर अन्धे ने प्रसन्नतापूर्वक अपने दोनों ओठों को जीभ से चाटते हुए चम्मच को लेकर उसको चलाना प्रारम्भ कर दिया। मछली को चलाते समय उसके नेत्रों में

विष-मिश्रित वाष्प के लगने से आँख का मोतियाबिन्द गलकर गिरने लगा। वाष्प के प्रिय लगने के कारण अन्धे ने भी अपनी आँखों को खूब सेका।

ततो लब्धदृष्टिर्जातो यावत्पश्यति, तावत्तक्रमध्ये कृष्णसर्पखण्डानि केवलान्येवाऽवलोकयति। ततो व्यचिन्तयत्—"अहो, किमेतत्? मम मत्स्यामिषं कथितमासीदनया। एतानि तु कृष्णसर्पखण्डानि। तत्तावद्विजानामि सम्यक् त्रिस्तन्याश्चेष्टितं, किं मम वधोपायक्रमः कुब्जस्य वा। उताहो अन्यस्य वा कस्यचित्।" एवं विचिन्त्य स्वाकारं गूहन्नन्धवत्कर्म करोति, यथा पुरा।

अत्रान्तरे कुब्जः समागत्य, निःशङ्कतयालिङ्गनचुम्बनादिभिस्त्रिस्तनीं सेवितुमुपचक्रमे। सोऽप्यन्धस्तमवलोकयन्नपि यावन्न किञ्चिच्छस्त्रं पश्यति, तावत्कोपव्याकुलमनाः पूर्ववच्छयनं गत्वा, कुब्जं चरणाभ्यां सङ्गृह्य, सामर्थ्यात्स्वमस्तकोपरि भ्रामयित्वा त्रिस्तनीं हृदये व्यताडयत्।

अथ कुब्जप्रहारेण तस्यास्तृतीयः स्तन उरसि प्रविष्टः। तथा बलान्मस्तकोपरि भ्रामणेन कुब्जः प्राञ्जलतां गतः।

अतोऽहं ब्रवीमि अन्धकः कुब्जकश्चैव इति।

सुवर्णसिद्धिराह—"भोः! सत्यमेतत्। दैवाऽनुकूलतया सर्वं कल्याणं सम्पद्यते। तथाऽपि पुरुषेण सतां वचनं कार्यम्। न पुनरेवमेव वर्तितव्यम्। अथ एवमेव यो वर्तते, स खलिव विनश्यति। तथा च—

> एकोदराः पृथग्ग्रीवा अन्योन्यफलभक्षिणः।
> असंहता विनश्यन्ति, भारुण्डा इव पक्षिणः॥" ९२॥

चक्रधर आह—"कथमेतत्?" सोऽब्रवीत्—

व्याख्या—अनया = त्रिस्तन्या ( त्रिस्तनी ने ), विजानामि = विस्तरेणावगच्छामि ( पूर्ण रूप से समझ लूँ ), चेष्टितं = कृत्यम् ( कार्य ), स्वाकारं = ( अपने वास्तविक रूप को ), गूहयन् = अप्रकटयन् ( छिपाते हुए ), सेवितुं = रमितुं ( रमण करना ), व्याकुलमनाः = आकुलचित्तः ( अभिभूत होकर ), सङ्गृह्य = धृत्वा ( पकड़ कर ), सामर्थ्यात् = पूर्णशक्तितः ( पूर्ण शक्ति से ), हृदये = उरसि ( छाती पर ) प्राञ्जलतां = सरलतां सामान्यस्वरूपतां इति यावद् ( सीधा ), सतां = सज्जनानां ( सज्जन व्यक्तियों का ), कार्यम् = विधेयम् ( कहा हुआ करना चाहिये )।

अन्वयः—असंहताः एकोदराः, पृथग्ग्रीवा अन्योन्यफलभक्षिणः भारुण्डाः पक्षिण इव विनश्यन्ति॥ ९२॥

व्याख्या—असंहताः = असंमिलिताः ( एक मत नहीं रहने वाले जन ), एकोदराः = अभिन्नकुक्षयः ( एकमुदरं येषां, ते ) ( एक पेट वाले ), पृथग्ग्रीवाः = भिन्नकण्ठाः ( भिन्न कण्ठ वाले ), अन्योन्यफलभक्षिणः = परस्परविषमफलाशिनः ( परस्पर विरुद्ध फल खाने वाले ), पक्षिणः = खगा इव ( पक्षियों की तरह ), विनश्यन्ति॥ ९२॥

